M-२७४८

| शिर्षक | ग्रंथकार | विषय | विस्तार (पुर्ण/ अपूर्ण) | टिकाकार | आकार | पृष्ठे | लिपी | सामग्री | Lines per page | Letters per line | Condition & age (शके/विक्रम सवंत) | Additional Particulars / Remark |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| व्रतराज | काशीशिव | पुराण | पूर्ण | - | 3/9 | 832 | संस्कृत | कागद | 11 | 49 | शके 1785 | |

श्रीगणेशायनमः श्रीगुरुभ्योनमः ॐकारविघ्नेशगुरून्सरस्वतींगौरीशसूर्यौच्चहरिंचभैरवं प्रणम्यदेवान्कुरुतेहिग्रंथंदैवज्ञश
र्माजगतोहिताय १ विष्ण्वर्चनंदानशिवार्चनंचउत्सर्गधर्मव्रतनिर्णयंच वेदात्पुराणात्स्मृतितश्चतदुद्धृतोक्तसिद्धांतविधिंविधत्ते
२ संगृह्यसर्वस्यमतंपुराणसिद्धांतवाक्यंमुनिभिःप्रणीतम् लोकोपकारायकृतोनिबंधोव्रतप्रकाशःसुधियांमुदेस्यात् ३ यावं
तोब्राह्मणालोकेधर्मशास्त्रविशारदाः तावंतःकृपयायुक्ताःकुर्वंतुग्रंथशोधनम् ४ विज्ञाप्यंतेमयासर्वेपंडितागुणमंडिताः प्र
चारणीयोग्रंथोयंबालवृद्धालकस्यमे ५ रामांकमुनिभूसंख्ये १७९३ वस्विषुगेंदुसंख्यके १६५८ वर्षेशाकेशुक्लपक्षेपंचम्यांत
पसःशुभे ६ विलोक्यविविधान्ग्रंथांल्लिख्यतेज्ञजनायवै तन्निमित्तोमयारंभःकिमज्ञानंमनीषिणः ७ चित्तपावनजातीयःशांडिल्य
कुलमंडनः गोपालात्मजदैवज्ञःसंगमेश्वरसंज्ञितः ८ दुर्गाघाटेवसन्काश्यांनत्वापितृपितामहान् कुर्वेवैविश्वनाथोहंव्रतराजंसुविस्त
रम् ९ अथव्रतराजप्रारंभः अत्रचस्वकर्तव्यविषयोनियतःसंकल्पोव्रतमिति तत्रअग्निहोत्रंसंध्यावंदनादिविषयेसंकल्पेअतिप्र
सक्तेःकृताभियुक्तव्रतप्रसिद्धिविषयः संकल्पविशेषःसएवव्रतम् नचव्रतंसंकल्पयेदित्यनन्वयइतिवाच्यम् पाकंपचतिदानंद
द्यादितिवद्व्रतस्यानुग्रहार्थप्रयोगोत्पत्तिरितिवक्तव्या अत्रव्रतकालमाह हेमाद्रौगार्ग्यः अस्तगेचगुरौशुक्रेबाल्येवृद्धेमलिम्लु
चे उद्यापनमुपारंभंव्रतानांनैवकारयेत् १ तथैववृद्धमनुबृहस्पती अग्न्याधानंप्रतिष्ठांचयज्ञदानव्रतानिच मांगल्यमभिषेकंच

मलमासेविवर्जयेत बालेवार्यदिवावृद्धेशुक्रेचास्तंगतेगुरौ मलमासेचएतानिवर्जयेद्देवदर्शनम् लल्लः नीचस्थेवक्रसंस्थेप्यति
चरणागतेबालवृद्धास्तगेवासन्यासोदेवयात्राव्रतनियमविधिः कर्णवेधस्तुदीक्षा मौंजीबंधोथचूडापरिणयनविधिर्वास्तुदेवप्रति
ष्ठावर्ज्याःसद्भिःप्रयत्नात्त्रिदशपतिगुरौसिंहराशिस्थितेचेति नीचस्थोमकरस्थः कल्पतरौदेवीपुराणे सिंहसंस्थंगुरुंशुक्रंस
र्वारंभेषुवर्जयेत प्रारब्धंनचसिध्येतमहाभयकरंभवेत् पुत्रमित्रकलत्राणिहन्याच्छीघ्रंनसंशयः देवारामतडागेषुव्रतोद्यानगृ-
हेषुच सिंहस्थंमकरस्थंचगुरुंयत्नेनवर्जयेत वसिष्ठः सिंहस्थेतुमघासंस्थंगुरुंयत्नेनवर्जयेत् अन्यत्रसिंहभागेतुसिंहस्थोपि
नदुष्यति सिंहस्थगुरोर्वर्जनीयत्वंनर्मदोत्तरभागएव अन्यत्रतुसिंहांशएववर्ज्यः तथाचमदनरत्नादिधृतकालविधाने सिंहस्थि
तःक्रूरगुरुर्यदिनर्मदायास्तंवर्जयेत्सकलकर्मसुसौम्यभागे विंध्यस्यदक्षिणदिशिप्रवदंतिचार्याःसिंहांशकेमृगपतावपिव
र्जनीयः सिंहांशस्तुपूर्वाफल्गुन्याःप्रथमःपादः मृगपतौमकरस्थेगुरौदेशविशेषमाह लल्लः नर्मदापूर्वभागेतुशोणस्योत्तरदक्षिणे
गंडक्याःपश्चिमेभागेमकरस्थोनदोषभाक् केषांचित्स्त्रीकर्तृकाणामन्येषांचव्रतानामगस्त्योदयेप्यारंभनिषेधइति हेमाद्रौलौगाक्षिः
उद्यानिकाशिवपवित्रकमेघपूजादूर्वाष्टमीफलविरूढकजागराणि स्त्रीणांव्रतानिनिखिलान्यपिवार्षिकाणिकुर्यादगस्त्यउदितेनशु
भानिलिप्सुरिति उद्यानिकाव्रतविशेषः शिवपवित्रकंआषाढ्यामथवामाघ्यांविहितंशिवपवित्रारोपणं मेघपूजाव्रतविशेषः दूर्वा

ष्टमीभाद्रशुक्लाष्टमी फलविरूढकंभाद्रपदशुक्लचतुर्दश्यांपालीव्रतंकदलीव्रतापरनामकं जागरंआश्विनपौर्णिमास्यांकोजागरव्रतम्
कार्त्तिकशुक्लचतुर्दश्यांविहितंजागरव्रतंवा अत्रोभयत्रागस्त्योदयस्यावश्यंभावित्वेनविधेरनवकाशापत्तेर्विकल्पोज्ञेयः वार्षिकाणी
त्यत्रवर्षासुभवानिवार्षिकाणिइत्येवव्युत्पत्तिर्नतुवर्षेभवानीतितथासतिशरदादिग्रीष्मपर्यंतंअगस्त्योदयानुवृत्तेस्तन्मध्येविहितानां-
स्त्रीव्रतानांसर्वथानारंभएवापद्यतइति अगस्त्योदयकालश्च दिवोदासीये उदेतियाम्यांहरिसंक्रमाद्रवेरेकाधिकेविंशतिमेह्न्यगस्त्यः सस
प्तमेस्तंवृषसंक्रमाच्च प्रयातिगर्गादिभिरित्यभाणि व्रतारंभसमाप्त्योस्तिथिंविशिनष्टिहेमाद्रौसत्यव्रतः उदयस्थातिथिर्याहिनभवे
द्दिनमध्यभाक् साखंडानव्रतानांस्यादारंभश्चसमापनम् एतद्व्यतिरिक्तायामखंडायांप्रारंभमाह तत्रैववृद्धवसिष्ठः अखंडव्या
पिमार्तंडायद्यखंडाभवेत्तिथिः व्रतप्रारंभणंतस्यामनस्तगुरुशुक्रयोरिति अनस्तमितगुरुशुक्रायांतिथौव्रतप्रारंभणीयमित्य
र्थः रत्नमालायाम् सोमसौम्यगुरुशुक्रवासराःसर्वकर्मसुभवंतिसिद्धिदाः भानुभौमशनिवासरेषुचप्रोक्तमेवखलुकर्मसिध्यति
विरुद्धसंज्ञाइहयेचयोगास्तेषामनिष्टःखलुपादआद्यः सवैधृतिस्तुव्यतिपातनामासर्वोप्यनिष्टःपरिघस्यचार्धं तिस्रस्तुयोगेप्रथमेस
वज्रेव्याघातसंज्ञेनवपंचशूले गंडेतिगंडेच्चषडेवनाड्यः शुभेषुकार्येषुविवर्जनीयाः दर्शसंक्रांतिपातोपरिघसुखदलंवैधृतिंपात
योगंविष्कंभाद्यत्रिनाडीःशुभकृतिषुचषट्गंडयोःपंचशूले व्याघातेवज्रकेंकाःपित्रमृतिदिवसोनाधिमासात्कुहोरांजह्याज्जन्मोत्थ-

मासोर्द्धतिथिरवलुप्ततिथिंव्युत्क्रमांश्चक्रमांच ब्रह्मयामले दिनभद्रायदारात्रौरात्रिभद्रायदादिवा नत्याज्याशुभकार्येषुप्राहुरेवंपु-
रातनाइति अथवेदव्यासः सर्वेशिलोच्चयाः पुण्याः सागराः सरितस्तथा अरण्यानिचपुण्यानिविशेषान्नैमिषंतथा देवीपुरा
णे देशोनदीगयाशैलगंगानर्मदपुष्करम् वाराणसीकुरुक्षेत्रंप्रयागंजंबुकेश्वरम् केदारंवामपादंचकुडवंपुष्कराह्वयम् सोमे
श्वरंमहापुण्यंतथाचामरकंटकम् कालंजरंतथाविंध्यंयत्रवासोगुहस्यच गुहःस्वामिकार्तिकेयः मनुः सरस्वतीदृषद्वत्योर्देव
नद्योर्यदंतरम् तंब्रह्मनिर्मितंदेशंब्रह्मावर्तंप्रचक्षते यस्मिन्देशेयआचारःपारंपर्यक्रमागतः वर्णानांसांतरालानांससदाचारउ
च्यते कुरुक्षेत्रंचमत्स्याश्चपांचालाःशूरसैनिकाः एषब्रह्मर्षिदेशोवैब्रह्मावर्तादनंतरः मत्स्यः विराटः पांचालः कान्यकुब्जः
शूरसैनिकाः मथुरादेशाः अनंतरः समः हिमवद्विंध्ययोर्मध्येयत्प्राग्विनशनादपि प्रत्यगेवप्रयागाच्चमध्यदेशउदाहृतः वि
नशनंकुरुक्षेत्रं आसमुद्रात्तुवैपूर्वादासमुद्रात्तुपश्चिमात् तयोरेवांतरंगीर्‍युर्त्व्यार्यावर्तंविदुर्बुधाः सिंधुनदीपश्चिमनीरव्याप्र
त्यर्थमित्याह कृष्णसारस्तुचरतिमृगोयत्रस्वभावतः सज्ञेयोयज्ञियोदेशोम्लेच्छदेशस्ततःपरः एतान्द्विजातयोदेशान्संश्रयेर
न्प्रयत्नतः याज्ञवल्क्योपि यस्मिन्देशेमृगःकृष्णस्तस्मिन्धर्मान्निबोधत अथव्रताधिकारिणःस्कांदे निजवर्णाश्रमाचारनिर
तःशुद्धमानसः अलुब्धःसत्यवादीचसर्वभूतहितेरतः व्रतेष्वधिकृतोराजन्नन्यथाविफलःश्रमः श्रद्धावान्पापभीरुश्चमदद-

भावविवर्जितः पूर्वंनिश्चयमाश्रित्ययथावत्कर्मकारकः अवेदनिंदकोधीमानधिकारीव्रतादिषु निजवर्णाश्रमाचारेत्यनेनचतुर्वर्णा
नामधिकारोगम्यते अतएवकौर्मे ब्राह्मणाःक्षत्रियावैश्याःशूद्राश्चैवद्विजोत्तम अर्चयंतिमहादेवंयज्ञदानसमाधिभिः व्रतोप
वासनियमैर्होमस्वाध्यायतर्पणैः तेषांवैरुद्रसायुज्यंसामीप्यंचातिनिर्मलम् सलोकताचसारूप्यंजायतेतत्प्रसादतः देवलोपि
व्रतोपवासनियमैःशरीरोत्तापनैस्तथा वर्णाःसर्वेविमुच्यंतेपातकेभ्योनसंशयः अत्रअधिकारिविशेषणस्यपुंस्त्वस्याविवक्षि
तत्वात्स्त्रीणामप्यधिकारः भारते मासुपाश्रित्यकौंतेययेपिस्युःपापयोनयः स्त्रियोवैश्यास्तथाशूद्रास्तेपियांतिपरांगतिम्
क्वचिन्म्लेच्छानामप्यधिकारोहेमाद्रौ देवीपुराणे स्नातैःप्रमुदितैर्हृष्टैर्ब्राह्मणैःक्षत्रियैर्नृभिः वैश्यैःशूद्रैर्भक्तियुक्तैर्म्लेच्छैरन्यैश्च
मानवैः स्त्रीभिश्चकुरुशार्दूलतद्विधानमिदंशृणु वैश्यशूद्रयोस्तुद्विरात्राधिकोपवासोनभवति वैश्याःशूद्राश्चयेमोहादुपवासं
प्रकुर्वते त्रिरात्रंपंचरात्रंवातेषांव्युष्टिर्नविद्यते इतिप्राच्यलिखितनिषेधात् व्युष्टिःफलं सभर्तृकाणांस्त्रीणांभर्त्राज्ञांविनानाधि
कारः तथाचमदनरत्ने मार्कंडेयपुराणे यानारीत्वननुज्ञाताभर्त्रापित्रासुतेनवा निष्फलंतुभवेत्तस्यायत्करोतिव्रतादिकम्
भर्त्राज्ञयासर्वव्रतेष्वधिकारः भार्याभर्तुर्मृतेनैवव्रतादीन्याचरेत्सदेतिकात्यायनोक्तेः तथाच पत्यौजीवतियानारीत्वुपवासव्रतं
चरेत् आयुष्यंहरतेभर्तुःसानारीनरकंव्रजेत् इतिविष्णुवचनात् तद्भर्तुरननुज्ञापरम् यत्तुकश्चित् नास्तिस्त्रीणांपृथग्यज्ञोन

व्रतेनाप्युपोषणम् भर्त्तुःशुश्रूषयैवैनांल्लोकानिष्टान्व्रजंतिताः यद्देवेभ्योयच्चपित्रादिकेभ्यःकुर्याद्भर्त्ताभ्यर्चनंसत्क्रियांच तस्यत्वर्द्धं
साफलंनान्यचित्तानारीभुंक्तेभर्तृशुश्रूषयैव इतिस्कांदात् तस्मात्सभर्तृकाणामेकादश्याद्युपवासादावनधिकारइति नन्न तस्या
पिपृथक्स्वातंत्र्येणभर्त्रननुज्ञापरत्वात् अतएवव्यासः कामंभर्त्तुरनुज्ञानाव्रतादिष्वधिकारिणीति शंखोपि कामंभर्त्तुरनुज्ञया
व्रतोपवासनियमाः स्त्रीधर्माइति नचानुज्ञयाव्रतेष्विवयज्ञेपिपृथगधिकारापत्तिरितिशंक्यम् तस्याःश्रुत्यध्ययनानधिकारात्
यद्वास्कांदे भर्त्तुःशुश्रूषायास्तावत्कृत्वेनाप्युपपन्नत्वादिति नचभर्त्तुरनुज्ञयैवाधिकारसिद्धेःविधवायाः व्रतेअधिकारापत्तिरिति
वाच्यम् नारीखल्वननुज्ञाताभर्त्रापित्रासुतेनवा विफलंतद्भवेत्तस्यायत्करोत्यौर्ध्वदैहिकम् इतिमार्कंडेयोक्तेः पित्राद्याज्ञयातस्या
अधिकारइतिहेमाद्रिः स्त्रीणांव्रतग्रहणेविशेषोहेमाद्रौहरिवंशे स्नानंचकार्यंशिरसस्ततःफलमवाप्नुयात् स्नात्वास्त्रीप्रातरु-
त्थायपतिंविज्ञापयेत्सती अथव्रतधर्माः व्रतसंकल्पविधिर्भारते गृहीत्वौदुंबरंपात्रंवारिपूर्णमुदङ्मुखः उपवासंतुगृण्हीया
द्यद्वासंकल्पयेद्बुधः औदुंबरंताम्रमयं औदुंबरंस्मृतंताम्रमितिविश्वोक्तेः यद्वान्यन्नक्तव्रतादिकंकल्पयेदितिकल्पतरुः श्री
दत्तस्तु कल्पतरुमतेवाकारस्यार्थैतेनायमर्थः यस्तुनक्तादिकर्तुमिच्छेत्तदपिउक्तविधिनैवगृह्णीयादितितन्मतंपरिष्कृत्यवाका
रस्योपवासपदस्यचवैयर्थ्यापत्तेः यत्संकल्पयेत्तद्गृण्हीयादित्यनेनैवोपपत्तेरित्यदूषयत् ताम्रपात्राद्यभावेहस्तेनापिजलं

गृहीत्वासंकल्पयेदित्युक्तम् अतएवानंतभट्टाः वर्षेवधारयेदितिपाठः मदनरत्नेदेवलवाक्येतुयथासंकल्पयेदितिपाठः
यथाकामंफलसुद्धिरेवेदित्यर्थः अतएवमार्कंडेयः संकल्पंचयथाकुर्यात्स्नानदानव्रतादिके अनंतरंकृत्यमाह मदनरत्नेदेवलः
अभुक्त्वाप्रातराहारंस्नात्वाचम्यसमाहितः सूर्यायदेवताभ्यश्चनिवेद्यव्रतमाचरेत् अत्रप्रातर्व्रतमाचरेदित्येवान्वयः प्रधान
क्रियान्वयस्याभ्यर्हितत्वात् अभुक्त्वेतितुअशक्तस्याभ्यनुज्ञातेस्वादिभक्षणापवादः केचित्तु व्रतदिनेप्रातराहारं अभु-
क्त्वाव्रतमाचरेदित्याहुः अत्रउपवासोव्रतेकार्यइत्यनेनैवाभुक्तवतोधिकारस्यप्राप्तत्वादेतस्यवैयर्थ्यापत्तेः अन्येतुपूर्वदिने-
प्रातराहारमभुक्त्वा अर्थादेकभक्तंकृत्वास्नात्वाचम्यव्रतादिकंकुर्यादित्याहुः परेतुसर्वत्रपूर्वेद्युरेवसायंसंध्योत्तरंव्रतंग्रा
ह्यंवारव्रतादौबहुशस्तथादृष्टत्वात् प्रातःस्नात्वेतिचान्वयइत्याहुः सामान्यधर्माहेमाद्रौभविष्ये क्षमासत्यंदयादानंशौच
मिंद्रियनिग्रहः देवपूजाग्निहवनंसंतोषस्तेयवर्जनम् सर्वव्रतेष्वयंधर्मःसामान्योदशधास्थितः देवपूजायद्दैवत्यंव्रतंतस्यपू
जाअग्निहवनंपूज्यदेवतोद्देशेनहोमः उपक्रमादेतच्चसप्तमीव्रतेसूर्यपूजाअग्निहवनं नवमीव्रतेदुर्गापूजा अनुक्तदेवताव्र
तेइष्टदेवतापूजाहवनंव्याहृतिहोमइतिकेचित् अत्रक्षमादीनांस्वातंत्र्येणचतुर्वर्गसाधनत्वेनविहितानांव्रतांगतयाविधानं
स्वादिरंवीर्यकामस्ययूपंकुर्यादितिवत्संयोगपृथक्त्वादुपपन्नमितिहेमाद्रिः सर्वव्रतेष्वित्यत्रसर्वव्रतपदंभविष्यपुराणोक्त

सर्वंव्रतपरमतेव्रतानांनरैर्विध्यंतरंसएवहोमादीनामंगत्वंनान्यथा अतएवएकादशीव्रतादौशिष्टानांहोमाद्यनाचरणमितिकेचित् ये
त्वेवपुराणांतरोक्तव्रतेषुहोमादिविधिरस्तितद्विषयकमेवसर्वपदमन्यथातदितरपरत्वेनसंकोचापत्तेरित्याहुः पृथ्वीचंद्रोदयेऽग्निपुराणे
स्नात्वाव्रतवतासर्वव्रतेषुव्रतमूर्तयः पूज्याःसुवर्णमय्याद्याःशक्त्यावैभूमिशायिना जपोहोमश्चसामान्यंव्रतांतेदानमेवच चतु
र्विंशद्द्वादशवापंचवात्रयएववा विप्राःपूज्यायथाशक्तितेभ्योदद्याच्चदक्षिणाम् व्रतमूर्तयःतद्देवप्रतिमाः देवलः ब्रह्मचर्यमहिं-
साचसत्यमामिषवर्जनम् व्रतेष्वेतानिचत्वारिचरितव्यानिनित्यशः स्त्रीणांतुप्रेक्षणात्स्पर्शात्ताभिःसंकथनादपि नश्यतेब्र-
ह्मचर्यंचनदारेष्वृतुसंगमात् स्वदारेष्वृतुसंगमादितिक्वचित्पाठः आमिषंमांसंआमिषमतिपानीयंगोवर्जक्षीरमामिषं म
सूरमामिषंसस्येफलेजंबीरमामिषम् आमिषंशुक्तिकाचूर्णंआरनालंतथामिषम् इतिस्मृत्यंतरोक्तम् व्रताद्यारंभेवृद्धिश्राद्धं
कार्यं तदाहशातातपः नानिष्ट्वातुपितॄन्श्राद्धेकर्मकिंचित्समारभेत् गृहीतव्रतानाचरणेमदनरत्नेछागलेयः पूर्वंव्रतंगृही
त्वायोनाचरेत्काममोहितः जीवन्भवतिचांडालोमृतेचश्वाभिजायते काममोहितइतिविशेषणाद्व्याध्यादिनानाचरणेनदोषः
तथाचहेमाद्रौस्कांदे सर्वभूतभयंव्याधिप्रमादोगुरुशासनम् अव्रतघ्नानिपठ्यंतेसकृदेतानिशास्त्रतः सर्वेभ्योभूतेभ्यःस
काशाद्भूतकर्तुर्भयादितिहेमाद्रिः मदनरत्नेतु सर्वभूतभयंव्याधिरपरिचिन्तत्वाद्व्याख्यातः सर्वभूतभयंभूतेभ्यःसर्पादिभ्य

व्र·रा·
५

यान्व्रतांगवैकल्यने व्रतहानिर्भवतीत्यर्थः गुरुशासनंगुरोराज्ञासकृदुक्तिसकृत्यागेप्रायश्चित्तं नदुक्तंस्कांदगारुडयोः क्रोधात्प्र
मादाल्लोभाद्वाव्रतभंगोभवेद्यदि दिनत्रयंनभुंजीतमुंडनंशिरसोथवा नचान्यप्रायश्चित्तोक्तेःअतिक्रांतव्रतानाचरणमितिवाच्यम्
प्रायश्चित्तमिदंकृत्वापुनरेवव्रतीभवेत् इतिस्कांदात् अथोपवासधर्माः तत्रोपवासस्वरूपंकात्यायनवृद्धवसिष्ठाभ्यांदर्शितम्
उपावृत्तस्यपापेभ्योयस्तुवासोगुणैःसह उपवासःसविज्ञेयःसर्वभोगविवर्जितः गुणैरिति तज्जाप्ययजनध्यानतत्कथा-
श्रवणादयः उपवासकृतामेतेगुणाःप्रोक्तामनीषिभिः दयाचसर्वभूतेषुक्षांतिरनसूयाशौचमनायासोकार्पण्यंचमांगल्यमस्पृ
हेतिविष्णुधर्मोत्तरगौतमादिप्रतिपादिताः तच्छब्देनोपास्यादेवताव्रतदेवतावा एवंचपापानिवृत्यागुणानुष्ठानसहितोनिराहा
रस्यवासोवस्थानमुपवासइत्युक्तंभवति एवंचफलसाधनस्योपवासस्यस्वरूपमुक्तम् उपवासपदार्थस्तुस्मृतिपुराणे व्यवहा
रेरूढ्यानिराहारावस्थानमात्रम् वृद्धवसिष्ठः उपवासेतथाश्राद्धेनकुर्याद्दंतधावनम् काष्ठैरितिशेषः अतएवतान्निंदंति दं
तानांकाष्ठसंयोगोहंतिसप्तकुलानिचेतिवाक्यशेषाद्विधेरिवनिषेधस्यापिविशेषपरतायुक्तैवतेन अलाभेवानिषेधेवाकाष्ठा
नांदंतधावने पर्णादिनाविशुध्येतजिह्वोल्लेखःसदैवहि इतिपैठीनसिवचनात् अलाभेदंतकाष्ठानांनिषिद्धायांतथातिथौ
अपांद्वादशगंडूषैर्विदध्याद्दंतधावनम् इतिव्यासवचनंदेवलः असकृज्जलपानाच्चसकृत्तांबूलचर्वणात् उपवासःप्रणश्येत-

परिभा·
५

दिवास्वापाच्चमैथुनात् अशक्तौतुतैनैवजलपानमभ्यनुज्ञानम् अत्ययेचांबुपानेननोपवासःप्रणश्यति अत्ययेजलपानंविनाश
णात्यये विष्णुधर्मे असकृज्जलपानंचदिवास्वापंचमैथुनं तांबूलचर्वणंमांसंवर्जयेद्व्रतवासरे असकृदुक्त्यासकृज्जलपाने
नदोषः अत्रपारणांतंव्रतंज्ञेयंव्रतांतेविप्रभोजनम् असमाप्तेव्रतेपूर्वंकुर्यान्नैवव्रतांतरंइति तस्यापिव्रतवासरत्वान्मांसनि
षेधः पारणादिनेएवंउपवासप्रसक्त्यभावात् अतएवनिर्णयामृतेव्यासः वर्जयेत्पारणेमांसंव्रताहेप्यौषधंसदा अष्टैतान्य
व्रतघ्नानिआपोमूलंफलंपयः हविर्ब्राह्मणकाम्याचगुरोर्वचनमौषधम् इतिस्कांदवचनात् प्रसक्तमौषधरूपमपिमांसंव्र-
ताहेवर्जयेदित्यर्थः विष्णुपुराणे स्मृत्यालोकनगंधादिस्वादनंपरिकीर्तनम् अन्नस्यवर्जयेत्सर्वंग्रासानांचाभिकांक्षणम् गा
त्राभ्यंगंशिरोभ्यंगंतांबूलंचानुलेपनम् व्रतस्थोवर्जयेत्सर्वंयच्चान्यद्बलरागकृत् इतिहारितः पतितपाखंडादिनास्तिकादि-
संभाषणानृताश्लीलादिकमुपवासादिषु वर्जयेत् अन्नादिपदेनयत्पुरुषार्थतयासर्वदानिषिद्धंतदपिक्रत्वर्थतयासंगृह्यते
अतएवव्रताधिकारेस्मृतंतुः विहितस्याननुष्ठानमिंद्रियाणामनिग्रहः निषिद्धसेवनंनित्यंवर्जनीयंप्रयत्नतः पतितादेर्दर्शनंतुवि
ष्णुपुराणे तस्यावलोकनात्सूर्यंपश्येतमतिमान्नरः स्पर्शादौविष्णुधर्मे संस्पर्शेचनरःस्नात्वाशुचिरादित्यदर्शनात् संभाष्य
तान्शुचिपदंचिंतयेदच्युतंबुधः योगयाज्ञवल्क्यः यदिवाग्यमलोपःस्याद्व्रतदानक्रियादिषु व्याहरेद्वैष्णवंमंत्रंस्मरेद्वाविष्णुम-

व्ययम् यमः मानसेनियमेज्जुप्तेस्मरेद्विष्णुमनामयम् बृहन्नारदीये रजस्वलांचचांडालंमहापातकिनंतथा सूतिकांपति
तंचैवउच्छिष्टंरजकादिकम् व्रतादिमध्येशृणुयाद्यद्येषांध्वनिमुत्तमः अष्टोत्तरसहस्रंतुजपेद्वेदमातरम् वेदमातागाय
त्री मिताक्षरायांदक्षः संध्याहीनोशुचिर्नित्यमनर्हःसर्वकर्मसु यदन्यत्कुरुतेकिंचिन्नतस्यफलमश्नुते अत्रप्रातःसंध्यैव-
अन्यांगमित्याहुः अविशेषात्तत्संध्योत्तरभाविनिकर्मादौसांगमितियुक्तंआहुःप्राज्ञाः व्रतादिकालः संकल्पस्तुप्रातःसंध्यां
कृत्वैवकार्यःसंध्यामादौबुधःकृत्वासंकल्पंततआचरेत् इतिगौडनिबंधेध्रुवस्मृतेः मार्कंडेयपुराणे सूर्योदयंविनानैवस्न
तदानादिकःक्रमइति क्रमइतिउपक्रमः स्नानदानादिकाःक्रियाः सूर्योदयशब्देनउषःकालोप्रशस्यते तंविनारात्रौस्ना-
नादिकंनकार्यमितिकल्पतरौ छंदोगपरिशिष्टे सदोपवीतिनाभाव्यंसदाबद्धशिखेनच विशिखोव्युपवीतोच्चयत्करोति
नतत्कृतम् पित्र्यमंत्रानुद्रवणेआत्मालंभेअवेक्षणे अधोवायुसमुत्सर्गेप्रहारेनृतभाषणे मार्जारमूषकस्पर्शआक्रोशे
क्रोधसंभवे निमित्तेष्वेषुसर्वत्रकर्मकुर्वन्नपःस्पृशेत् मार्कंडेयपुराणे शिरःस्नातश्चकुर्वीतदैवंपित्र्यमथापिवा वराहपु
राणे स्नानसंध्यातर्पणादिजपोहोमःसुरार्चनम् उपवासवताकार्यंसायंसंध्याहुतीर्विना भगवद्गीतायाम् तस्मादोमि
त्युदाहृत्ययज्ञदानतपःक्रियाः प्रवर्ततेविधानोक्ताःसततंब्रह्मवादिनाम् तैत्तिरीये त्रिमात्रस्तुप्रयोक्तव्यःकर्मारंभेषुसर्व

शः इतिसामान्यपरिभाषा विस्तृताचेयंसामान्यपरिभाषा आचारमयूखेद्रष्टव्या अत्रस्त्रीणांविशेषोहेमाद्रौपाद्मे ग-
र्भिणीसूतिकादिश्चकुमारीचाथरोगिणी यदाशुद्धातदान्येनकारयेत्प्रयतास्वयम् प्रयताशुद्धास्वयंकुर्यादित्यर्थः पुं
सोप्येषविधिर्लिंगस्याविवक्षितत्वादितिहेमाद्रिः एवंस्त्रीभीरजोदर्शनेपिकार्यम् तथाचसत्यव्रतः प्रारब्धदीर्घतपसां
नारीणांचेद्रजोभवेत् नचतत्रव्रतस्यस्यादुपरोधःकथंचन व्रतस्यउपवासस्येत्यर्थः पूजादिकंतुअन्येनकारयेत् तथाचम
दनरत्नेमात्स्ये अंतरातुरजस्पर्शेपूजामन्येनकारयेत् सूतकेप्येवम् तथाचतत्रैव पूर्वसंकल्पितंयच्चव्रतंसुनियतव्रतैः
तत्कर्तव्यंनरैःशुद्धंदानार्चनविवर्जितम् अन्येनकारयेदित्यपेक्षायांतत्रैवपैठीनसिः भार्यापत्युर्व्रतंकुर्याद्भार्यायाश्चपतिर्व्रतम्
असामर्थ्येपरस्ताभ्यांव्रतभंगोनजायते तत्रैववायुपुराणे उपवासेत्वशक्तस्तुआहिताग्निरथापिवा पुत्राद्वाकारयेदन्या
ब्राह्मणाद्वापिकारयेत् उपवासंप्रकुर्वाणःपुण्यंशतगुणंभवेत् नारीचपतिमुद्दिश्यएकादश्यामुपोषिता पुण्यंशतगुणं
प्रोक्तमित्याहगालवोमुनिः मातामहादीनुद्दिश्यएकादश्यामुपोषणे कृतेचभक्तितोविप्राःसमग्रंफलमाप्नुयुः प्रोक्षव्रते
प्रतिनिधिःतथाचमंडनः काम्येप्रतिनिधिर्नास्तिनित्यनैमित्तिकेनच काम्येप्युपक्रमादूर्ध्वंकेचित्प्रतिनिधिंविदुः नस्यात्प्रति
निधिर्मंत्रस्वामिदेवाग्निकर्मसु सुदेशकालयोःशब्देनारणेःपुत्रभार्ययोः नापिप्रतिनिधातव्यंनिषिद्धंवस्तुकुत्रचित् अ

थव्रतेहविष्याणि हेमाद्रौछंदोगपरिशिष्टेकात्यायनः हविष्येषुयवामुख्यास्तदनुव्रीहयःस्मृताः माषकोद्रवगौरादीन्स
र्वाभावेपिवर्जयेत् तत्रैवअग्निपुराणे व्रीहिचणकमुद्गाश्चकलायाःसलिलंपयः श्यामाकाश्चैवनीवारागोधूमाद्याव्रतेहिताः कू
ष्मांडालाबुवृंताकपालक्यंज्योत्स्निकास्त्यजेत् चरुभैक्ष्यंसक्तुकणाःशाकंदधिघृतंमधु श्यामाकाःशालिनीवाराःयावकंमू
लतंदुलं हविष्यंव्रतनक्तादावग्निकार्यादिकेहितं मधुमांसंविहातव्यंसर्वैश्चव्रतिभिस्तथा पालकीपाथरीज्योत्स्निका-
कोशातकी तत्रैवभविष्ये हैमंतिकंसितास्विन्नंधान्यंमुद्गायवास्तिलाः कलायकंगुनीवारावास्तुकंहिलमोचिका षष्टि
काकालशाकंचमूलकंकेमुकेतरत् कंदःसैंधवसामुद्रेगव्येचदधिसर्पिषी पयोदधिघृतंचैवपनसाम्रहरीतकी पिप्पलीजी
रकंचैवनागरंगकर्तिंतिणी कदलीलवलीधात्रीफलान्यगुडमैक्षवम् अतैलपक्वंमुनयोहविष्याणिप्रचक्षते लवणेमधुस
र्पिषीइतिक्वचित्पाठः हैमंतिकंधान्यंकलमाः तदपिसितंश्वेतं अस्विन्नं हविष्यंकालापाःसंतिनारपर्यायाः मठरइतिप्रसि-
द्धाः वाटानेइतिदक्षिणप्रसिद्धावास्तुकंबथुवाइतिख्यातः शाकः हिलशाकंमोचयतिइतिक्षीरस्वामी शकासारोहिलसा
रइतिप्रसिद्धःशाकःजलोद्भवः गौडदेशेहेलांचलेइतिप्रसिद्धाकालशाकउत्तरदेशेकालिकेतिप्रसिद्धं केमुकंकेपुत्राइतिपूर्व
देशेप्रसिद्धं नागरंनारिंगऐरावतोनागरिंगोनादेयीभूमिजंबुकेत्यमरात् नागरंचैवेतिपाठेनागरंशुंठी लवलीरायआ

वळी इतिमहाराष्ट्रभाषयोच्यमानंफलं हरफररेवडीइतिमध्यदेशभाषया अनैलपक्वंइत्यनत्कथितहविष्याणामेवविशेष
णम् मनुः उत्पन्नानिपयः सोमोमांसंयच्चानुपस्कृतं अक्षारलवणंचैवप्रकृत्याहविरुच्यते अनुपस्कृतंअपक्वं अथव्रताद्यु
पयुक्तानिवस्तूनि तत्रपंचरत्नानिआदित्यपुराणे कनकंरजतंमुक्ताराजावर्तंप्रवालकं रत्नपंचकमाख्यातंशेषंवस्तुप्र-
वीम्यहं कनकंकुलिशंनीलंपद्मरागंचमौक्तिकं एतानिपंचरत्नानिरत्नशास्त्रविदोविदुः इतिमेघप्रदीपधृतकालिकापुरा
णोक्तानिवा कुलिशंहीरकं स्मृत्यंतरे अभावेसर्वरत्नानांहेमसर्वत्रयोजयेत् विष्णुधर्मोत्तरे मुक्ताफलंहिरण्यंचवैडूर्यं
पद्मरागकं पुष्परागंचगोमेदंनीलंगारुत्मकंतथा प्रवालयुक्तान्युक्तानिमहारत्नानिवैनव हेमाद्रौब्रह्मांडपुराणे अश्वत्-
त्थोदुंबरप्लक्षचूतन्यग्रोधपल्लवाः पंचभंगाइतिख्याताःसर्वकर्मसुशोभनाः पंचभंगाःपंचपल्लवाः पंचगव्यंचनत्रैव-
स्कांदे गोमूत्रंगोमयंक्षीरंदधिसर्पिर्यथाक्रमम् विष्णुधर्मे गोमूत्रंभागतश्चार्द्धंसकृत्क्षीरस्यचत्रयम् द्वयंदध्नोघृतस्यैक
मेकश्चकुशवारिजः गोमूत्रप्रमाणंतुमाषश्चिन्तमयूरेवज्ञेयम् विष्णुधर्मे गायत्र्यादायगोमूत्रंगंधद्वारेतिगोमयं आप्याय
स्वेतिक्षीरंचदधिक्राव्णोथवैदधि शुक्रमसीतिआज्यंचदेवस्यत्वाकुशोदकं एभिस्तुमंत्रराजैस्तुपंचगव्यंप्रचक्षते पं-
चामृतंतुहेमाद्रौशिवधर्मे पंचामृतंदधिक्षीरसितामधुघृतंस्मृतं अन्यत्र पयोदधिघृतंचैवशर्करामधुसंयुतं पंचामृत

भितिरव्यातंभाषितंसुनयोविदुः मदनरत्नेकात्यायनः आज्यंक्षीरंमधुतथामधुरत्रयमुच्यते मधुरोम्लश्चलवणःकषाय-
स्तिक्तएवच कटुकश्चेतिराजेंद्ररसाःषट्कमुदाहृतं चंदनंतुगारुडे कस्तूरिकायाद्वौभागौचत्वारश्चंदनस्यच कुंकुमस्यत्रय
श्चैवशशिनःस्याच्चतुष्टयं कुंकुमंकेशरं शशीकर्पूरः कर्पूरंचंदनंदर्पंकुंकुमंचसमांशकं सर्वगंधमितिप्रोक्तं समस्तसुरभू-
षणं दर्पःकस्तूरिकातथा कस्तूरीत्वगुरुश्चैवकर्पूरश्चंदनंतथा कंकोलंचभवेदेभिःपंचभिर्यक्षकर्दमः अथसर्वौषधीः
कुष्टंमांसीहरिद्रेद्वेमुराशैलेयचंदनं वचाचंपकमुस्तंचसर्वौषध्योदशस्मृताः पाद्मे इक्षवस्तृणराजंचनिष्पावाजाजिधान्य
कं विकारवच्चगोक्षीरंकुसुमंकुंकुमंतथा लवणंचाष्टमंतत्रसौभाग्याष्टकमुच्यते तृणराजस्तालः अजाजिजीरकं आपः
क्षीरंकुशाग्राणिदध्यक्षततिलास्तथा यवाःसिद्धार्थकाश्चेतित्यर्घ्योष्टांगःप्रकीर्तितः पंचरात्रेरजांसिपंचवर्णानिमंडला-
र्थेहिकारयेत् शालितंडुलचूर्णेनशुक्लंवायवसंभवम् रक्तंकुसुंभसिंदूरगैरिकादिसमुद्भवम् हरितालोद्भवंपीतंरजनीसं
भवंतथा कृष्णंदग्धंचहरितंपीतकृष्णाविमिश्रितं रजनीहरिद्रा कौतुकसंज्ञानिभविष्ये दूर्वायवांकुराश्चैववालकंचूतप
ल्लवाः हरिद्राद्वयसिद्धार्थशिखिपत्रोरगत्वचः कंकणौषधयश्चैताःकौतुकाख्यादशस्मृताः अथसप्तमृदोमात्स्ये गजाश्व
रथवल्मीकसंगमात्ह्रदगोकुलात् मृदमानीयकुंभेषुप्रक्षिपेच्चत्वरात्तथा गोकुलावधिसप्तचत्वरेणसहाष्टौमृदोभवेयुरितिहे

माद्रौभविष्ये सुवर्णंरजतंताम्रमारकूटंतथैवच लोहंत्रपुतथासीसंधातवःसप्तकीर्तिताः आरकूटंपित्तलं तत्रैवषट्त्रिंशन्मते
यवगोधूमधान्यानितिलाःकंगुश्चमुद्गकाः श्यामाकंचीनकंचैवसप्तधान्यमुदाहृतं सप्तदशधान्यानिमार्कंडेयपुराणे व्रीहयश्च
यवाश्चैवगोधूमाःकंगुकास्तिलाः प्रियंगवःकोविदाराःकोरदूषाःसतीनकाः माषामुद्गामसूराश्चनिष्पावाःसकुलित्थकाः आढ-
क्यश्चणकाश्चैवयावनालास्तथास्मृताः क्रमादेवंविजानीयाद्धान्याःसप्तदशस्मृताः कोरदूषाःकोद्रवाः सतीनकाःकलापाःमठर
इति अष्टदशधान्यानिस्कांदे व्रीहियवास्तिलाश्चैवयावनालास्तथैवच सतीनकाःकुलित्थाश्चकंगुकाःकोरदूषकाः माषमुद्गामसू
राश्चनिष्पावाःश्यामसर्षपाः गोधूमाश्चणकाश्चैवनीवाराढक्यएवच एवंक्रमेणजानीयाद्धान्यान्यष्टादशानिच हेमाद्रौक्षीरस्वा
मी मूलपत्रकरीराग्रफलकांडाधिरूढकाः त्वक्पुष्पंकवचंचेतिशाकंदशविधंस्मृतं करीरंवंशांकुरः अग्रंपल्लवः कांडंनालंकवचं
छत्राकं कलशाउक्ताविष्णुधर्मे हेमराजतताम्राश्चमृन्मयालक्षणान्विताः यात्रोद्वाहप्रतिष्ठादौकुंभास्युरभिषेचने पंचाशांगु
लवैपुल्याउत्सेधेषोडशांगुलाः द्वादशांगुलमूलास्युर्मुखमष्टांगुलंभवेत् पंचच आशाश्चपंचाशाः आशादश पंचाशदंगुलानि
वैपुल्यमित्यर्थः केचित्तुपंचदशांगुलवैपुल्यमित्याहुः प्रतिमाद्रव्ययोःपरिमाणम् हेमाद्रौभविष्ये अनुक्तद्रव्यतत्संख्यादेवताप्रति
मान्नृप सौवर्णीराजतीताम्रीवृक्षजामार्त्तिकीतथा चित्रजापिष्टलेपोत्थानिजवित्तानुरूपतः आमाषात्पलपर्यंताकर्तव्याशक्ति

संभवे अंगुष्ठपर्वमारभ्यवितस्त्यवधिकास्मृता मात्स्येतुविशेषः अंगुष्ठपर्वादारभ्यवितस्त्यवधि देवता गृहेतुप्रतिमाकार्या
नाधिकाशस्यतेबुधैः आषोडशात्तुप्रासादेकर्तव्यानाधिकाततः इत्यधिकंकल्पतरौप्रतिष्ठाकांडेज्ञेयम् तथा अनुक्तसंख्याहोमे-
स्याच्छतमष्टोत्तरंस्मृतं मात्स्ये होमोग्रहादिपूजायांशतमष्टोत्तरंभवेत् अष्टाविंशतिरष्टौवायथाशक्तिविधीयते मदनरत्ने
ब्राह्मे यथोक्तवस्त्वसंपत्तौग्राह्यंतदनुकारियत् यवाभावेचगोधूमाव्रीह्यभावेचतंदुलाः आज्यंद्रव्यमनादेशेजुहुयात्तुयथावि
धि मंत्रस्यदेवतायाश्चप्रजापतिरितिस्थितिः मंत्रस्यदेवतायाश्चविधानेनप्रजापतिर्देवतासमस्तव्याहृतिर्मंत्रःस्मृत्यंतरेपि
नव्याहृत्यासमेहुतइतिगारुडे प्रणवादिनमोंतंचचतुर्थ्यंतंचसत्तम देवतायाःस्वकंनाममूलमंत्रःप्रकीर्तितः द्रव्याभावेप्रतिनि
धिःदध्यलाभेपयोग्राह्यंमध्वलाभेतथागुडः घृतेप्रतिनिधिःकार्यःपयोवादधिवानृप तत्रैवमैत्रायणीयपरिशिष्टे दर्भा-
भावेकाशाः पैठीनसिःसर्वाभावेयवाः आज्यहोमेषुसर्वेषुगव्यमेवभवेद्धुतं तदभावेमाहिष्यास्तुआज्यमाविकमेवतु तद
भावेतुतैलंस्यात्तदभावेतुजार्तिलं तदभावेतुकौसुंभंतदभावेतुसार्षपं अथपवित्रं अनंतर्गर्भितंसाग्रंकौशंद्विदलमेवच
प्रादेशमात्रंविज्ञेयंपवित्रंयत्रकुत्रचित् अथेध्माः पलाशाश्वत्थखदिरवटोदुंबरमेवच अथधूपाः अगरुश्चंदनंमुस्तासि-
ल्हकंवृषणंतथा समभागंतुकर्तव्योधूपोयममृताह्वयः सिल्हकंसिल्हादइतिप्रसिद्धः वृषणंकस्तूरीषड्भागकुष्ठंद्विगुणोग

रुश्चलाक्षात्रयंपंचनरवस्यभागाः हरीतकीसर्जरसःसमांसिभागैकमेकंत्रिवलंशिलाजं घनस्यचत्वारिपुरस्यचैकोधूपोदशांगः
कथितोमुनींद्रैःसर्जरसः राळइति मांसीजटामांसी त्रिवलंत्रिभागंघनः कर्पूरःपुरंगुग्गुलः सुवर्णमानमाहयाज्ञवल्क्यः जा
लसूर्यमरीचिस्थंत्रसरेणूरजःस्मृतम् तेऽष्टौलीक्षास्तुतास्तिस्रोराजसर्षपउच्यते गौरस्तुतेत्रयःषट्तेयवोमध्यस्तुतेत्रयःकृष्ण
लःपंचतेमाषस्तेसुवर्णस्तुषोडश पलंसुवर्णाश्चत्वारःपंचवापिप्रकीर्तितं रजतमानमाह द्वेकृष्णलेरूप्यमाषोधरणंषोडशै
वते शतमानंतुदशभिर्धरणैःपलमेवतु निष्कंसुवर्णाश्चत्वारइतिताम्रमानमाह कार्षिकःताम्रिकः पणइतिपलचतुर्थांशेनकर्षे
णोन्मितः कार्षिकस्ताम्रसंबंधीपणोभवतिकर्षसंज्ञश्च नियंटौतेषोडशाक्षः कर्षोस्त्रीपलंकर्षचतुष्टयमितितेषोडशमाषाःअ
क्षः हेमाद्रौनारदः अक्षः सचकर्षइत्यर्थः धरणस्यैवपुराणे संज्ञांतरं तेषोडशस्याद्धरणंपुराणश्चैवराजतमितिमिताक्षरायां
स्मृतेः शतमानेपलेपर्यायेसुवर्णचतुष्टयसमतोलितंरूप्यंराजतोनिष्कइत्यर्थः सुवर्णनिष्कस्तुचतुःसौवर्णिकोनिष्कोविज्ञेय-
स्तुप्रमाणतइति सचपलसमानएवकोत्रकार्षापणइत्यपेक्षायांदेशभेदेनकार्षापणोभिन्नइतिआह हेमाद्रौनारदे कार्षाप-
णोदक्षिणस्यांदिशिरौप्यःप्रवर्तते पणैर्निबद्धः पूर्वस्यांदिशिषोडशस्यैवपणाः अष्टौद्रम्मकाःकार्षापणः पूर्वस्यामित्यर्थः ता
वतालभ्यंरूप्यंदक्षिणस्यांसइतिद्वैतनिर्णयेपितामहचरणाः लीलावत्यां वराटकानांदशकद्वयंयत्साकाकिणीताश्चपणश्च

नरुः तेषोडशद्रम्यइहावगम्योद्रम्यैस्तथाषोडशभिश्चनिष्कः अथधान्यमानंभविष्ये पलद्वयंतुप्रसृतंद्विगुणंकुडवंमतं चतुर्भिः
कुडवैःप्रस्थःप्रस्थाश्चत्वारआढकः आढकैस्तैश्चतुर्भिश्चद्रोणस्तुकथितोबुधैः कुंभोद्रोणद्वयंशूर्पःखारीद्रोणास्तुषोडश द्रोणद्वय
स्येवशूर्पइतिसंज्ञा पलंचकुडवःप्रस्थआढकोद्रोणएवच धान्यमानेषुबोद्धव्याःक्रमशोमीचतुर्गुणाः द्रोणैःषोडशभिःखारीविं
शत्याकुंभउच्यते कुंभैस्तुदशभिर्वाहोधान्यसंख्याःप्रकीर्तिताः विंशत्येत्यत्रापिद्रोणैरितिसंबध्यते तथाच कुंभोद्रोणद्वयमिति
पक्षाद्विंशतिद्रोणमितः कुंभइतिपक्षांतरंद्रोणाढकयोःपरिमाणांतरमुक्तं पराशरेण वेदवेदांगविद्विप्रैर्धर्मशास्त्रानुपालकैः
प्रस्थाद्वात्रिंशतिद्रोणमितोद्विप्रस्थआढकइति एतेषट्न्यूनाधिकपक्षाणांशक्तिदेशकालाद्यपेक्षयाव्यवस्थाज्ञेया अथहोमद्र
व्यमानंसिद्धांतशेखरे होमद्रव्यप्रमाणानिवक्ष्यंतेतुयथाक्रमं कर्षप्रमाणमाज्यंस्यान्मधुक्षीरंचतत्समं तंडुलानांशुक्तिमात्रं-
पायसंप्रसृतेःसमं कर्षमात्राणिभक्ष्याणिलाजासुष्टिमितामताः अन्नंग्रासससमंप्राह्वंशाकंग्रासार्धमात्रकं मूलानांतुत्रिभागःस्या
त्कंदानामष्टमोंशकः इक्षुःपर्वप्रमाणंस्यादंगुलद्वितयंलता प्रादेशमात्राःसमिधोव्रीहीणांचांजलिःसमः तिलसक्तुकणादीनां
मृगीमुद्राप्रमाणतः पत्रपुष्पफलादीनांप्रमाणाहुतिरिष्यते चंद्रश्रीखंडकस्तूरीकुंकुमागरुकर्दमाः हरिमंथसमाःप्रोक्तागुगु-
लुर्बदरोपमः हरिमंथश्चणकः आहुतीनामिदंमानंकथितंवेदवेदिभिः स्यात्रिमुद्रामृगीमुद्राहोमेसर्वफलप्रदा मानांतरंशारदा

तिलकटीकायांपदार्थादर्शे कर्षमात्रमिदंहोमशुक्तिमात्रंपयःस्मृतं उक्तानिपंचगव्यानिशुक्तिमात्राणिसाधुभिः तत्समंमधुदुग्धान्नं
ग्रासमात्रमुदाहृतं दधिप्रसृतिमात्रंस्याल्लाजाःस्युर्मुष्टिसंमिताः पृथुकास्तत्प्रमाणाःस्युःसक्तवोपितथाविधाः पलार्धंगुडमानंचशर्क
रापितथाविधा ग्रासार्धमात्रमन्नानामिक्षुःपर्वप्रमाणतः एकंस्यात्पत्रपुष्पंचतथाधूपादिकल्पयेत् मातुलिंगंचतुःखंडंपनसंद
शधाकृतं अष्टधानारिकेलंचचतुर्धाकदलीफलं त्रिधाकृतंफलंबैल्वंकपित्थंखंडितंद्विधा व्रीहयोमुष्टिमानाःस्युर्मुद्गामाषायवास्त-
था तंडुलाःस्युस्तदर्धांशाःकोद्रवामुष्टिसंमिताः लवणंशुक्तिमात्रंस्यान्मरीचान्येकविंशतिः घृतस्यकार्षिकोहोमःक्षीरस्यमधुनस्त
था शुक्तिमात्राहुतिर्दध्नःप्रसृतिःपायसस्यच खंडत्रयंतुमुलानांफलानांस्वप्रमाणतः ग्रासमात्रंतुहोतव्याइतरेषांचतंदुलाः अक्षताः
स्तुयवाःप्रोक्ताअभावेव्रीहयःस्मृताः तदभावेचगोधूमानतुखंडिततंडुलाः येषांकेषांचिदन्येषांद्रव्याणामप्यसंभवे सर्वत्राज्यमुपा
देयंभरद्वाजमुनेर्मतात् सर्वप्रमाणमाहुत्यापंचांगुलग्रहीतयेति संपूर्णानिचसर्वत्रसूक्ष्माणिपंचपंचच इक्षूणांपर्वकंमानंलतानां
मंगुलद्वयं चंद्रचंदनकाश्मीरकस्तूरीयक्षकर्दमान् कलापसंमितानेतान्गुग्गुलंबदरास्थिवत् द्रवःस्रुवेणहोतव्यःपाणिनाकठि
नंहविः स्रुवपूर्णाद्रवाःप्रोक्ताःकठिनाग्रासमात्रकाः व्रीहयोयवगोधूमप्रियंगुतिलशालयः स्वरूपेणैवहोतव्याइतरेषांचतंदुलाःअ
थकुलिग्वरणं हेमाद्रौपाद्मे बालाग्निहोत्रिणांविप्रंस्वरूपंचगुणान्वितं सपत्नीकंचसंपूज्यभूषयित्वाचभूषणैः पुरोहितंमुख्य

नस्त्र: तेषोडशद्रम्य इहावगम्योद्रम्यैस्तथाषोडशभिश्चनिष्कः अथधान्यमानंभविष्ये पलद्वयंतुप्रसृतंद्विगुणंकुडवंमतं चतुर्भिः
कुडवैःप्रस्थःप्रस्थाश्चत्वारआढकः आढकैस्तैश्चतुर्भिश्चद्रोणस्तुकथितोबुधैः कुंभोद्रोणद्वयंशूर्पःखारीद्रोणास्तुषोडश द्रोणद्वय
स्यैवशूर्पइतिसंज्ञा पलंचकुडवःप्रस्थआढकोद्रोणएवच धान्यमानेषुबोद्धव्याःक्रमशोमीचतुर्गुणाः द्रोणैःषोडशभिःखारीविं
शत्याकुंभउच्यते कुंभैस्तुदशभिर्वाहोधान्यसंख्याःप्रकीर्तिताः विंशत्येत्यत्रापिद्रोणैरितिसंबध्यते तथाच कुंभोद्रोणद्वयमिति
पक्षाद्विंशतिद्रोणमितः कुंभइतिपक्षांतरंद्रोणाढकयोःपरिमाणांतरमुक्तं पराशरेण वेदवेदांगविद्विप्रैर्धर्मशास्त्रानुपालकैः
प्रस्थाद्द्वात्रिंशतिद्रोणमितोद्विप्रस्थआढकइति एतेषट्न्यूनाधिकपक्षाणांशक्तिदेशकालाद्यपेक्षयाव्यवस्थाज्ञेया अथहोमद्र
व्यमानंसिद्धांतशेखरे होमद्रव्यप्रमाणानिवक्ष्यंतेतुयथाक्रमं कर्षप्रमाणमाज्यंस्यान्मधुक्षीरंचतत्समं तंदुलानांशक्तिमात्रं-
पायसंप्रसृतेःसमं कर्षमात्राणिभक्ष्याणिलाजामुष्टिमितामताः अन्नंग्राससमंप्रोक्तंशाकंग्रासार्धमात्रकं मूलानांतुत्रिभागःस्या
त्कंदानामष्टमोंशकः इक्षुःपर्वप्रमाणंस्यादंगुलद्वितयंलता प्रादेशमात्राःसमिधोव्रीहीणांचांजलिःसमः तिलसक्तुकणादीनां
मृगीमुद्राप्रमाणतः पत्रपुष्पफलादीनांप्रमाणाहुतिरिष्यते चंद्रश्रीखंडकस्तूरीकुंकुमागरुकर्दमाः हरिमंथसमाःप्रोक्तागुग्गु-
लुर्बदरोपमः हरिमंथश्चपाकः आहुतीनामिदंमानंकथितंवेदवेदिभिः स्यात्त्रिमुद्रामृगीमुद्राहोमेसर्वफलप्रदा मानांतरंशारदा

तिलकटीकायांपदार्थादर्शे कर्षमात्रमिदंहोमशुक्तिमात्रंपयःस्मृतं उक्तानिपंचगव्यानिशुक्तिमात्राणिसाधुभिः तत्समंमधुदुग्धान्नं
ग्रासमात्रमुदाहृतं दधिप्रसृतिमात्रंस्याल्लाजाःस्युर्मुष्टिसंमिताः पृथुकास्तत्प्रमाणाःस्युःसक्तवोपितथाविधाः पलार्धगुडमानंचशर्क
रापितथाविधा ग्रासार्धमात्रमन्नानामिक्षुःपर्वप्रमाणतः एकंस्यात्पत्रपुष्पंचतथाधूपादिकल्पयेत् मातुलिंगंचतुःखंडंपनसंद
शधाकृतं अष्टधानारिकेलंचचतुर्धाकदलीफलं त्रिधाकृतंफलंबैल्वंकपित्थंखंडितंद्विधा व्रीहयोमुष्टिमानाःस्युर्मुद्गमाषायवास्त-
था तंडुलाःस्युस्तदर्धांशाःकोद्रवामुष्टिसंमिताः लवणंशुक्तिमात्रंस्यान्मरीचान्येकविंशतिः घृतस्यकार्षिकोहोमःक्षीरस्यमधुनस्त
था शुक्तिमात्राहुतिर्दध्नःप्रसृतिःपायसस्यच खंडत्रयंतुमुलानांफलानांस्वप्रमाणतः ग्रासमात्रंतुहोतव्याइतरेषांचतंडुलाः अक्षताः
स्तुयवाःप्रोक्ताअभावेव्रीहयःस्मृताः तदभावेचगोधूमानतुखंडिततंडुलाः येषांकेषांचिदन्येषांद्रव्याणामप्यसंभवे सर्वत्राज्यमुपा
देयंभरद्वाजमुनेर्मतात् सर्वप्रमाणमाहुत्यापंचांगुलगृहीतयोनि संपूर्णानिचसर्वत्रसूक्ष्माणिपंचपंचच इक्षूणांपर्वकंमानंलतानां
मंगुलद्वयं चंद्रचंदनकाश्मीरकस्तूरीयक्षकर्दमान् कलापसंमितानेतान्गुग्गुलंबदरास्थिवत् द्रवःस्रुवेणहोतव्यःपाणिनाकठि
नंहविः स्रुवपूर्णाद्रवाःप्रोक्ताःकठिनाग्रासमात्रकाः व्रीहयोयवगोधूमप्रियंगुतिलशालयः स्वरूपेणैवहोतव्याइतरेषांचतंडुलाःअ
थकृत्विग्वरणं हेमाद्रौपाद्मे बालाग्निहोत्रिणांविप्रंसुरूपंचगुणान्वितं सपत्नीकंचसंपूज्यभूषयित्वाचभूषणैः पुरोहितंमुख्य

तस्य: तेषोडशद्रम्य इहावगम्योद्रम्यैस्तथाषोडशभिश्चनिष्कः अथधान्यमानंभविष्ये पलद्वयंतुप्रस्तंद्विगुणंकुडवंमतं चतुर्भिः
कुडवैःप्रस्थःप्रस्थाश्चत्वारआढकः आढकैस्तैश्चतुर्भिश्च द्रोणस्तुकथितोबुधैः कुंभोद्रोणद्वयंशूर्पःखारीद्रोणास्तुषोडश द्रोणद्वय
स्यैवशूर्पइतिसंज्ञा पलंचकुडवःप्रस्थआढकोद्रोणएवच धान्यमानेषुबोद्धव्याःक्रमशोमीचतुर्गुणाः द्रोणैःषोडशभिःखारीविं
शत्याकुंभउच्यते कुंभैस्तुदशभिर्वाहोधान्यसंख्याःप्रकीर्तिताः विंशत्येत्यत्रापिद्रोणैरितिसंबध्यते तथाच कुंभोद्रोणद्वयमिति
पक्षाद्विंशतिद्रोणमितः कुंभइतिपक्षांतरंद्रोणाढकयोःपरिमाणांतरमुक्तं पराशरेण वेदवेदांगविद्विप्रैर्धर्मशास्त्रानुपालकैः
प्रस्थाद्द्वात्रिंशतिद्रोणमितोद्विप्रस्थआढकइति एतेषट्न्यूनाधिकपक्षाणांशक्तिदेशकालाद्यपेक्षयाव्यवस्थाज्ञेया अथहोमद्र
व्यमानंसिद्धांतशेखरे होमद्रव्यप्रमाणानिवक्ष्यंतेतुयथाक्रमं कर्षप्रमाणमाज्यंस्यान्मधुक्षीरंचतत्समं तंदुलानांशक्तिमात्रं-
पायसंप्रस्तृतेःसमं कर्षमात्राणिभक्ष्याणिलाजामुष्टिमितामताः अन्नंग्रासंसमंप्रोक्तंशाकंग्रासार्धमात्रकं मूलानांतुत्रिभागःस्या
त्कंदानामष्टमोंशकः इक्षुःपर्वप्रमाणंस्यादंगुलद्वितयंलता प्रादेशमात्राःसमिधोव्रीहीणांचांजलिःसमः तिलसक्तुकणादीनां
मृगीमुद्राप्रमाणतः पत्रपुष्पफलादीनांप्रमाणाद्दुतिरिष्यते चंद्रश्रीखंडकस्तूरीकुंकुमागरुकर्दमाः हरिमंथसमाःप्रोक्ताःगुग्गु-
लुर्बदरोपमः हरिमंथश्चणकः आहुतीनामिदंमानंकथितंवेदवेदिभिः स्यात्रिमुद्रामृगीमुद्राहोमेसर्वफलप्रदा मानांतरंशारदा

तिलकटीकायांपदार्थादर्शे कर्षमात्रमिदंहोमशुक्तिमात्रंपयःस्मृतं उक्तानिपंचगव्यानिशुक्तिमात्राणिसाधुभिः तत्समंमधुदुग्धान्नं
ग्रासमात्रमुदाहृतं दधिप्रसृतिमात्रंस्याल्लाजाःस्युर्मुष्टिसंमिताः पृथुकास्तत्प्रमाणाःस्युःसक्तवोपितथाविधाः पलार्धंगुडमानंचशर्क
रापितथाविधा ग्रासार्धमात्रमन्नानामिक्षुःपर्वप्रमाणतः एकंस्यात्पत्रपुष्पंचतथाधूपादिकल्पयेत् मातुलिंगंचतुःखंडंपनसंद
शधाकृतं अष्टधानारिकेलंचचतुर्धाकदलीफलं त्रिधाकृतंफलंबैल्वंकपित्थंखंडितंद्विधा व्रीहयोमुष्टिमानाःस्युर्मुद्गामाषायवास्त-
था तंडुलाःस्युस्तदर्धांशाःकोद्रवामुष्टिसंमिताः लवणंशुक्तिमात्रंस्यान्मरीचान्येकविंशतिः घृतस्यकार्षिकोहोमःक्षीरस्यमधुनस्त
था शुक्तिमात्राहुतिर्दध्नःप्रसृतिःपायसस्यच खंडत्रयंतुमुलानांफलानांस्वप्रमाणतः ग्रासमात्रंतुहोतव्याइतरेषांचतंडुलाः अक्षताः
स्युर्यवाःप्रोक्ताअभावेव्रीहयःस्मृताः तदभावेचगोधूमानतुखंडिततंडुलाः येषांकेषांचिदन्येषांद्रव्याणामप्यसंभवे सर्वत्राज्यमुपा
देयंभरद्वाजमुनेर्मतात् सर्वप्रमाणमाहुत्यापंचांगुलगृहीतयोनि संपूर्णानिचसर्वत्रसूक्ष्माणिपंचपंचच इक्षूणांपर्वकंमानंलतानां
मंगुलद्वयं चंद्रचंदनकाश्मीरकस्तूरीयक्षकर्दमान् कलापसंमितानेतान्गुग्गुलंबदरास्थिवत् द्रवःस्रुवेणहोतव्यःपाणिनाकठि
नंहविः स्रुवपूर्णाद्रवाःप्रोक्ताःकठिनाग्रासमात्रकाः व्रीहयोयवगोधूमप्रियंगुतिलशालयः स्वरूपेणैवहोतव्याइतरेषांचतंडुलाः अ
थऋत्विग्वरणं हेमाद्रौपाद्मे बालाग्निहोत्रिणांविप्रंसुरूपंचगुणान्वितं सपत्नीकंचसंपूज्यभूषयित्वाचभूषणैः पुरोहितंमुख्य

तमेवंकृत्वान्यांश्चतथर्त्विजः चतुर्विंशद्गुणोपेतान्सपत्नीकान्निमंत्रितान् अहतांबरसंछन्नान्स्रग्विणःशक्तिभूषितान् अंगुलीय
कानिचतथाकर्णभूषान्प्रदापयेत् तत्रैवलैंगे वस्त्रयुग्मंतथोष्णीषंकुंडलेकंठभूषणं अंगुलीभूषणंचैवमणिबंधस्यभूषणं एता
निचैवसर्वाणिप्रारंभेधर्मकर्मणां पुरोहितायदत्वाथऋत्विग्भ्यःसंप्रदापयेत् पूर्वोक्तभूषणंसर्वंसोष्णीषंवस्त्रसंयुतं दद्यादेतत्स्व
योकृभ्य आच्छादनपदंतथा व्रतानांमधुपर्कमाह विश्वामित्रःसंपूज्यमधुपर्केणऋत्विजःकर्मकारयेत् अपूज्यकारयेत्कर्मकि
ल्बिषेणाचयुज्यते ऋत्विजांसंख्यामाहमात्स्ये हेमालंकारिणःकार्याःपंचविंशतिऋत्विजः तोषयेच्चसमंसर्वानाचार्यंद्विगुणंभ
वेत् दक्षिणयातोषयेदित्यर्थः अथसर्वतोभद्रमंडलंहेमाद्रौस्कांदे प्रागुदीच्यागतारेखाःकुर्यादेकोनविंशतिं खंडेंदुस्त्रिप
दःकोणेशृंखलापंचभिःपदैः एकादशपदावल्लीभद्रंतुनवभिःपदैः चतुर्विंशत्पदावापीविंशत्यापरिधिःपदैः मध्येषोडशभिः
कोष्ठैःपद्ममष्टदलंस्मृतं श्वेतेंदुःशृंखलाःकृष्णावल्लीर्नीलेनपूरयेत् भद्रारुणासितावापीपरिधिःपीतवर्णकः बाह्यांतरदलश्वे
ताकर्णिकापीतवर्णका परिध्यावेष्टितंपद्मंबाह्येसत्वंरजस्तमः तन्मध्येस्थापयेद्देवान्ब्रह्माद्यांश्चसुरेश्वरान् इतिसर्वतोभ
द्रपीठं अथलिंगतोभद्रं चतुर्विंशतिरालेख्यारेखाःप्राग्दक्षिणायताः कोणेषुशृंखलाःपंचपदावल्यस्तुपार्श्वतः पदैर्नवभि-
रालेख्याश्चतुर्भिर्लघुशृंखलाः लघुवल्यःपदैःषड्भिस्ततोष्टादशभिःपदैः कृत्वालिंगानिवाप्यःस्युस्त्रयोदशभिरंतरा ततोवीथी

द्वयेनैवपीठंकुर्याद्विचक्षणः तस्यपदाःपंचपद्मद्वाराण्यपितथैवच एकाशीतिपदंमध्येपदंस्वस्तिकमुच्यते कोणेषुश्शृंखलाः
कार्याःपदैस्त्रिभिस्ततःपरं पदैश्चतुर्भिर्दिक्षुस्युर्भद्राण्येषांसमंततः एकादशपदावल्योमध्येष्टदलमालिखेत् पद्मंनवपदंत्वे
वंलिंगतोभद्रमुच्यते शृंखलाःकृष्णवर्णेनवल्लीर्नीलेनपूरयेत् रक्तेनशृंखलालक्ष्मीर्वल्लीःपीतेनपूरयेत् लिंगानिकृष्णवर्णानि
श्वेतेनाप्यथवापिकाः पीठंसपादंश्वेतेनपीतेनद्वारपूरणम् मध्येस्युःशृंखलारक्तावल्लीर्नीलेनपूरयेत् भद्राणिपीतवर्णा-
निपीतापंकजकर्णिका दलानिश्वेतवर्णानियद्वाचित्राणिकल्पयेत् निस्त्रोरेखाबहिःकार्याःसितारक्तासिताःक्रमात् अथ
चतुर्लिंगोद्भवंलिंगे रेखास्त्वष्टादशप्रोक्ताश्चतुर्लिंगसमुद्भवे कोणेंदुस्त्रिपदःश्वेतस्त्रिपदैःकृष्णाश्शृंखलाः वल्लीसप्तपदा
नीलाभद्रंरक्तंचतुष्पदं भद्रपार्श्वेमहारुद्रंकृष्णमष्टादशैःपदैः शिवस्यपार्श्वतोवापीकुर्यात्पंचपदांसितां पदमेकंतथापीतं-
भद्रवाप्योस्तुमध्यतः शिरसिश्शृंखलायाश्चकुर्यात्पीतंपदत्रयं लिंगानांस्कंधतःकोष्ठाविंशतीरक्तवर्णकाः परिधिःपीतवर्णै
स्तुपदैःषोडशभिःस्मृतः पदैस्तुनवभिःपश्चाद्रक्तंपद्मंसकर्णिकं अथद्वादशलिंगोद्भवं प्रागुदीच्यायतारेखाःषट्त्रिंशद्धि
प्रकल्पयेत् पदानिद्वादशशतंपंचविंशतिरेवच खंडेंदुस्त्रिपदःकोणेश्शृंखलाःषट्पदैःस्मृताः त्रयोदशपदावल्लीभद्रंतुनव-
भिःपदैः त्रयोदशपदावापीलिंगमष्टादशांस्मृतं लिंगत्रयस्यपंक्तौतुशोभाकोष्ठाश्चतुर्दश तेषामुपरिपंक्तौतुकोष्ठाःसप्तदश

वत्तु पूजापंक्तिस्तुविज्ञेयोपरितःपरिकीर्तिता पूजापंक्त्यंतरापंक्तोकोष्टद्यशीतिसंख्यया परिधिःसचविज्ञेयोमंडलेत्थंतराद्वयोः प
रिध्यंतरकोष्ठेषुसर्वतोभद्रमालिखेत् विशेषश्चात्रविज्ञेयोशृंखलाषट्पदाभवेत् त्रयोदशपदावल्लीभद्रंतुनवभिःपदैः पंचविंश
त्पदावापीपरिधिःषोडशात्मकः मध्येनवपदंपद्मंकर्णिकाकेसरान्वितं सत्वंरजस्तमोवर्णाःपरितोमंडलस्यतु त्रयःपरिधयः-
कार्या स्तत्रद्वाराणिकारयेत् सितेंदुःशृंखलाकृष्णावल्लीनीलाप्रकीर्तिता भद्रंचैवारुणंज्ञेयंवापीस्याच्छ्वेतकर्णिका लिंगानि
कृष्णवर्णानिपार्श्वतोद्वादशैवतु परिधिःपीतवर्णःस्यात्कमलंपंचवर्णकं इतिसर्वतोभद्रलिंगतोभद्रादिमंडलानि अ
थसर्वतोभद्रमंडलविधिरुच्यते शिवव्रतंविनासर्वव्रतोद्यापनेषुसर्वतोभद्रमंडलंकारयेत् तत्रकारिका बाहुमात्रांयदा
वेदींकुर्याच्छुद्धस्तदाबुधः तद्वेद्यांसर्वतोभद्रमंडलंविलिखेत्ततः विलिखेत्सर्वतोभद्रंवेदिकायांतुसुंदरं तत्रैवशिवव्रतेषुलिंग
तोभद्रंलिखेत् तन्मध्येस्थापयेद्देवान्ब्रह्माद्यांश्चेश्वरान् अथमंडलदेवतारंभः तन्मध्येब्रह्माणं ब्रह्मजज्ञानंगौत
मोवामदेवोब्रह्मात्रिष्टुप् मध्येब्रह्मावाहनेविनियोगः ॐब्रह्मजज्ञानंप्रथमंपुरस्ताद्विसीमतःसुरुचोवेनआवः सबुध्नियाउपमा
अस्यविष्ठाःसतश्चयोनिमसतश्चविवः भोब्रह्मन्इहागच्छइहतिष्ठपूजांगृहाणममसंमुखःसुप्रसन्नोवरदोभव इत्येवंप्रकारे
णसर्वत्रदेवतानांज्ञेयम् ततःउदीचीमारभ्यवायवीपर्यंतंसोमाद्योवाय्वंताष्टौलोकपालाःस्थापनीयाः१ तत्रआप्यायस्वराहू

गणोगौनमः सोमोगायत्री उत्तरेसोमावाहनेविनियोगः ॐ आप्यायस्वसमेतुतेविश्वतःसोमवृष्ण्यं भवावाजस्यसंगथे २ अभि-
त्वाजीगर्तिःशुनःशेपईशानोगायत्री ईशान्यांईशानावा० अभित्वादेवसवितरीशानंवार्याणां सदावन्भागमीमहे ३ इंद्रंवोमधुच्छं
दाइंद्रोगायत्री पूर्वेइंद्रावा० ॐ इंद्रंवोविश्वतस्परिहवामहेजनेभ्यः अस्माकमस्तुकेवलः ४ अग्निंदूतंकाण्वोमेधातिथिरग्नि
र्गायत्री आग्नेय्यांअग्न्यावा० ॐ अग्निंदूतंवृणीमहेहोतारंविश्ववेदसं अस्ययज्ञस्यसुक्रतुं ५ यमायसोमंवैवस्वतोयमोनुष्टुप्
दक्षिणेयमावा० ॐ यमायसोमंसुनुतयमायजुहुताहविः यमंहयज्ञोगच्छत्यग्निदूतोअरंकृतः ६ मोषुणोघोरःकण्वोनिर्ऋतिर्गाय
त्री नैर्ऋत्यांनिर्ऋत्यावाहने० ॐ मोषुणःपरापरानिर्ऋतिर्दुर्हणावधीत् पदीष्टतृष्णयासह ७ तत्वायामिशुनःशेपोवरुणस्त्रिष्टुप्
पश्चिमेवरुणावा० ॐ तत्वायामिब्रह्मणावंदमानस्तदाशास्तेयजमानोहविर्भिः अहेळमानोवरुणेहबोध्युरुशंसमानआयुःप्रमोषीः ८
वायोशतंवामदेवोवायुरनुष्टुप् वायव्यांवाय्वावा० ॐ वायोशतंहरीणांयुवस्वपोष्याणां उतवातेसहस्रिणोरथआयातुपाजसा ९
वायुसोमयोर्मध्येअष्टौवसवः ज्मयाअत्रमैत्रावरुणोवसवस्त्रिष्टुप् वायुसोमयोर्मध्येवस्वावा० ॐ ज्मयाअत्रवसवोरंतदेवा
उरावंतरिक्षेमर्जयंतशुभ्राः अर्वाक्पथउरुज्रयःकृणुध्वंश्रोतादूतस्यजग्मुषोनोअस्य १० आरुद्रासःश्यावाश्वएकादशरुद्रा
जगती सोमेशानयोर्मध्येएकादशरुद्रावा० ॐ आरुद्रासइंद्रवंतःसजोषसोहिरण्यरथाःसुविनायगंतन इयंवोअस्मत्प्रतिह

मरुत्तोयस्यांहिक्षयेपाथादिवोविमहसः सस्फुगोपानमोजनः २९ स्योनापृथिवीकाण्वोमेधातिथिर्भूमिर्गायत्री ब्रह्मणःपादमूलेकर्णिका
धःपृथिव्यावा॰स्योनापृथिविभवान्तृक्षरानिवेशनी यच्छानःशर्मसप्रथः ३० इमंमेगंगेसिंधुक्षित्प्रैयव्यमेधोगंगादिनद्योजगती तत्रैव-
गंगादिनद्यावा॰ ॐ इमंमेगंगेयमुनेसरस्वतिशुतुद्रिस्तोमंसचतापरुष्ण्या असिक्न्यामरुद्वृधेवितस्तयार्जीकीयेशृणुह्यासुषोमया
३१ धाम्नोगौतमोवामदेवःसप्तसागरानुष्टुप् तत्रैवसप्तसागरावा॰ ॐ धाम्नोधाम्नोराजन्नितोवरुणनोमुंच यदापोअघ्न्याइतिवरुणे
तिशपामहेततोवरुणनोमुंच मयिवापोमोषधीर्हिंसीरतोविश्वव्यचाप्मूस्त्वेनोवरुणनोमुंच ३२ तदुपरिमेरुंनाममंत्रेणपूजयेत् तदु
परिमेरवेनमः मेरुंआ॰ ततोमंडलाद्बहिःसोमादिसन्निधौआयुधान्यावाहयेत् सोमसमीपेगदां इशानसमीपेत्रिशूलं इंद्रसमी
पेवज्रं अग्निसमीपेशक्तिं यमसमीपेदंडं निर्ऋतिसमीपेखड्गं वरुणसमीपेपाशं वायुसमीपेअंकुशं ८ तद्बाह्येउत्तरेगौतमाय
नमः गौतमंआवा॰ ईशान्यांभरद्वाजं पूर्वेविश्वामित्रं आग्नेय्यांकश्यपं दक्षिणेजमदग्निं नैर्ऋत्यांवसिष्ठं पश्चिमेअत्रिं वाय-
व्यांअरुंधतीं तद्बाह्येपूर्वादिक्रमेण ऐंद्रीं·कौमारीं·ब्राह्मीं·वाराहीं·चामुंडां·वैष्णवीं·माहेश्वरीं·वैनायकीं·इत्यष्टौशक्तीः ८ प्रतिष्ठा
प्यप्रत्येकंसहवावाहयेत्पूजयेच्च इतिमंडलदेवताः अथलक्षपूजनोद्यापनविधिरुच्यते अद्येत्यादिपूर्वोच्चारितएवंगुणविशेष
णविशिष्टायांपुण्यतिथौ॰ मयाकृतस्यअमुकदेवताप्रीत्यर्थंलक्षसंख्यामुकपूजनकर्मणःसांगतासिद्ध्यर्थंतदुद्यापनंकरिष्ये त

दंगत्वेनस्वस्तिवाचनंआचार्यवरणंचकरिष्ये तत्रादौनिर्विघ्नतासिध्यर्थंगणपतिपूजनंकरिष्ये अस्यलक्षपूजनोद्यापनकर्मणःपुण्या
हंभवंतोब्रुवंतु अस्तुपुण्याहं एवंस्वस्तिभवंतोब्रुवंतु आयुष्मतेस्वस्ति ऋद्धिंभवंतोब्रुवंतु ऋध्यतां श्रीरस्त्विति भवंतोब्रुवंतु अ
स्तुश्रीः लक्ष्मीनारायणौप्रीयेतां तत्रगोत्रनामोच्चारणपूर्वकं असुकगोत्रअसुकशर्माअहंयजमानः असुकगोत्रंअसुकशर्माणंस्व
शाखाध्यायिनंब्राह्मणंअस्मिन्लक्षपूजनोद्यापनाख्येकर्मणिआचार्यंत्वामहंवृणे आचार्यत्वेनवृतोस्मि यथाज्ञानेनकर्मकरिष्या
मि आचार्यस्तुयथास्वर्गेशक्रादीनांबृहस्पतिः तथात्वंममयज्ञेस्मिन्नाचार्योभवसुव्रत गंधादिनाआचार्यपूजनं तथैवब्राह्मणं
वृणुयात् यथाचतुर्मुखोब्रह्मास्वर्गेलोकेपितामहः तथात्वंममयज्ञेस्मिन्ब्रह्माभवद्विजोत्तम अस्ययागस्यनिष्पत्तौभवंतोभ्यर्थि
तामया सुप्रस० आचार्यःआचम्यप्राणानायम्यअसुककर्मकरिष्ये कर्माधिकारार्थंआत्मनःशुध्यर्थंचपुरुषसूक्तजपमहंक०
पृथ्वीत्यस्यमंत्रस्य मेरुपृष्ठऋषिः कूर्मोदेवता सुतलंछंदः आसनोपवेशनेविनियोगः पृथ्वित्वयाधृतालोका० पुरुषसूक्तजपां
तेकलशपूजनंसर्वतोभद्रेलिंगतोभद्रेवाब्रह्मादीनावाहयेत् ततःमूर्तौअग्न्युत्तारणं अस्यांमूर्तौअवघातादिदोषपरिहारार्थंअग्न्यु
त्तारणंदेवतासान्निध्यार्थंप्राणप्रतिष्ठांचकरिष्ये अग्निःसप्तिमितिसूक्तंअग्निपदरहितंसहितंचपठेत् अग्निःसप्तिंवाजंभरंददा
त्यग्निर्वीरंश्रुत्यंकर्मनिष्ठां अग्नीरोदसीविचरत्समंजन्नग्निर्नारींवीरकुक्षिंपुरंधिं अग्नेरप्नसःसमिदस्तुभद्राअग्निर्महीरोदसीआविवे

श अग्निरेकंचोदयत्समत्स्वग्निर्वृत्राणिदयतेपुरूणि अग्निर्हत्यंजरतःकर्णमावाग्निरद्भ्योनिरदहज्जरूथं अग्निरत्रिंघर्मउरुष्यदंतरग्नि
र्नृमेधंप्रजयासृजत्सं अग्निर्दाद्द्रविणंवीरपेशाअग्निर्ऋषिंयःसहस्रासनोति अग्निर्दिविहव्यमाततानाग्नेर्धामानिविभृतापुरुत्रा अ
ग्निंसुकैथैर्ऋषयोविह्वयंतेग्निंनरोयामनिबाधितासः अग्निंवयोअंतरिक्षेपतंतोग्निःसहस्रापरियातिगोनां अग्निंविशईळतेमानुषी
र्याअग्निंमनुषोनहुषोविजाताः अग्निर्गांधर्वींपथ्यामृतस्याग्नेर्गव्यूतिर्घृतआनिषत्ता अग्नयेब्रह्मऋभवस्ततक्षुरग्निंमहामवोचा
मासुवृक्तिं अग्नेप्रावजरितारंयविष्ठाग्नेमहिद्रविणमायजस्व इतिअग्न्युत्तारणम् अथषोडशोपचारपूजनं सहस्रशीर्षेत्या
वाहनं पुरुषएवेदमित्यासनम् एतावानस्येतिपाद्यं त्रिपादूर्ध्वइत्यर्घ्यं तस्माद्विराळेत्याचमनीयं यत्पुरुषेणेतिस्नानं तंयज्ञ
मितिवस्त्रं तस्माद्यज्ञादित्युपवीतं तस्माद्यज्ञात्सर्वहुतऋचइतिगंधं तस्मादश्वेतिपुष्पं यत्पुरुषंव्यदधुरितिधूपम् ब्राह्म
णोस्येतिदीपम् चंद्रमामनसइतिनैवेद्यं नाभ्याआसीदितिप्रदक्षिणाः सप्तास्येतिनमस्कारान् यज्ञेनयज्ञमितिमंत्रपुष्पांजलिम्
इतिषोडशोपचारपूजा व्रीह्यादिधान्ययवतिलैःत्रिकूटंकृत्वातत्रमहीद्यौरित्यादिनाअव्रणंकलशंसंस्थाप्य कलशोपरिउपपा
त्रंसंस्थाप्य तस्योपरित्र्यंबकमंत्रेणउमयासहत्र्यंबकंवाविष्णुमंत्रेणलक्ष्म्यासहविष्णुंसिद्धिबुद्धिसहितंगणेशंअथवापत्न्यासहि
तंसूर्यंवाभवानींतत्तन्मंत्रेणआवाह्य शिवस्यदक्षिणेलक्ष्म्यासहविष्णुंआवाहयेत् शिवस्यउत्तरेसावित्र्यासहब्रह्माणं एवंवि

ष्यवादीनामपि देवेप्राणप्रतिष्ठांकृत्वा अस्यश्रीप्राणप्रतिष्ठामंत्रस्यब्रह्मविष्णुमहेश्वराऋषयः ऋग्यजुःसामाथर्वाणिच्छंदांसि
क्रियामयवपुःप्राणाख्यादेवता आंबीजंह्रींशक्तिः क्रौंकीलकं अस्यांमूर्तौप्राणप्रतिष्ठापनेविनियोगः ॐआंह्रींक्रौंअंयंरंलंवंशं
षंसंहंळंक्षंअः क्रौंह्रींआंहंसः सोहंअस्यांमूर्तौप्राणइहप्राणाःतिष्ठंतु ॐआंह्रीमित्यादिपुनःअस्यांमूर्तौजीवइहस्थित ःपुनः॰
अस्यांमूर्तौसर्वेंद्रियाणि वाङ्मनस्त्वक्चक्षुश्रोत्रजिह्वाघ्राणपाणिपादपायूपस्थानीहागत्यस्वस्तिसुखंचरंतिष्ठंतुस्वाहा ॐअ
स्मीनेपु॰यानस्वस्ति गर्भाधानादिपंचदशसंस्कारसिध्यर्थंपंचदशप्रणवावृत्तिंकरिष्ये प्रणवंपंचदशवारंजप्त्वा रक्ताम्भोधिस्थ
पोतोल्लसदरुणसरोजाधिरूढाकराब्जैःपाशंकोदंडमिक्षूद्भवमथगुणमप्यंकुशंपंचबाणान् बिभ्राणासृक्कपालंत्रिनयनलसिता
पीनवक्षोरुहाढ्यादेवीबालार्कवर्णाभवतुसुखकरीप्राणशक्तिःपरानः षोडशोपचारैः पंचामृतैश्चवैदिकमंत्रैःपुराणोक्तमंत्रैःसंपू
ज्य रात्रौजागरणंकुर्यात् प्रातःनित्यकृत्यंविधायतस्यलक्षपूजनस्यवाव्रताचरितस्यसांगतासिध्यर्थंपूजनदशांशेनतिलयव
व्रीहिभिःपायसादिभिर्वाहोमंकरिष्ये होमस्तुवेदोक्तेनमूलमंत्रेणपौराणोक्तेनवाकुर्यात् अथाग्निमुखं आचम्यतिथ्यादिसंकी
र्त्यएवंगुणविशेषणविशिष्टायांपुण्यतिथौअमुककर्मांगतयाविहितंअमुकहवनमहंकरिष्ये शुद्धमृदाईशानीमारभ्यउदक्सं
स्थंचतुरंगुलोन्नतंचतुर्दिक्षुमिलितंकृत्वाहस्तसत्यंगुलंपरिधिकंफलितमष्टादशांगुलविस्तृतंहोमानुसारेणतदधिकंवानतुततो

न्यूनंमध्योन्नतंस्थंडिलंकुर्यात् तदंगंस्थंडिलेउल्लेपनउल्लेखनाग्निप्रतिष्ठापनंकरिष्ये गोमयादिलिप्तेशुद्धेदेशेस्थंडिलंकुर्यात् स्थं
डिलंतद्गोमयेनप्रदक्षिणमुपलिप्य दक्षिणेप्रेउदीच्यांद्वेप्रतीच्यांचतुःप्राच्यामर्धमित्यंगुलानित्यक्त्वादक्षिणोपक्रमामुदक्सं-
स्थांप्रादेशमात्रामेकांलेखांतस्यादक्षिणोत्तरयोःप्रागायतेपूर्वरेखायाअसंस्पृष्टेप्रादेशसंमितेद्वेलेखेलिखित्वातयोर्मध्येपरस्परम
संस्पृष्टाउदक्संस्थाःप्रागायताःप्रादेशसंमितास्तिस्रःइतिषड्लेखायज्ञियशकलमूलेन दक्षिणहस्तेनोल्लिख्यलेखाःकृतच्छकल
मुदगग्रंनिधायस्थंडिलमद्भिरभ्युक्ष्यशकलमाग्नेयांनिरस्यपाणिंप्रक्षाल्यवाग्यतोभवेत् तैजसादिपात्रेपिधानसहितमग्निमानीयस्थं
डिलादाग्नेयांदिशिनिधाय जुष्टोदमूनाआत्रेयोवसुश्रुतोग्निस्त्रिष्टुप् अग्न्यावा॰ ॐ जुष्टोदमूनाअतिथिर्दुरोणइमंनोयज्ञमुपयाहिवि
द्वान् विश्वाअग्नेअभियुजोविहत्याशत्रूयतामाभराभोजनानि एत्वग्नइत्यस्यमंत्रस्यराहूगणोगोतमऋषिः अग्निर्देवता त्रिष्टुप्
छंदः अग्न्यावा॰ ॐ एत्वग्नइहहोतानिषीदादब्धःसुपुरएताभवानः अवतांत्वारोदसीविश्वमिन्वेयजामहेसौमनसायदेवान् इत्यक्षतै
रावाह्य आच्छादनंदूरीकृत्य समस्तव्याहृतीनांपरमेष्ठीप्रजापतिःप्रजापतिर्बृहती अग्निप्रतिष्ठापनेवि॰ ॐ भूर्भुवःस्वरोमित्यग्निं
प्रतिष्ठाप्य चत्वारिशृंगेतिगोतमोवामदेवोग्निस्त्रिष्टुप् अग्निमूर्तिध्यानेवि॰ ॐ चत्वारिशृंगात्रयोअस्यपादाद्वेशीर्षेसप्तहस्तासोअ-
स्य त्रिधाबद्धोवृषभोरोरवीतिमहोदेवोमर्त्यांआविवेश सप्तहस्तश्चतुःशृंगःसप्तजिह्वोद्विशीर्षकः त्रिपात्प्रसन्नवदनःसुखासीनः

शुचिस्मितः स्वाहांतुदक्षिणेपार्श्वेदेवींवामेस्वधांतथा बिभ्रद्दक्षिणहस्तैस्तुशक्तिमन्नंस्रुचंस्रुवं तोमरंव्यजनंवामैर्घृतपात्रंचधारय
न आत्माभिमुखमासीनएवंरूपोहुताशनः एषहिदेवःप्रदिशोनुसर्वाःपूर्वोहिजातःसउगर्भेअंतः सविजायमानःसजनिष्यमा-
णःप्रत्यङ्मुखस्तिष्ठतिविश्वतोमुखः अग्नेवैश्वानरशांडिल्यगोत्रमेषध्वजप्राङ्मुखममसंमुखोवरदोभव ततोन्वाधानं देश
कालौसंकीर्त्यश्रीपरमेश्वरप्रीत्यर्थंक्रियमाणेअमुकव्रतोद्यापनहोमेदेवतापरिग्रहार्थमन्वाधानंक॰ अस्मिन्नन्वाहितेग्नौजातवेदस
मग्निमिध्मेनप्रजापतिंप्रजापतिंचाघारदेवतेआज्येनाग्नीषोमौचक्षुषीआज्येनात्रप्रधानदेवताःअमुकहोमद्रव्येणब्रह्माद्यावाहित-
देवताश्चनाममंत्रेणएकैकयाज्याहुत्यायक्ष्ये शेषेणस्विष्टकृतमग्निमिध्मसन्नहनेनरुद्रमयासमग्निंदेवान्विष्णुंअग्निंवायुंसूर्यंप्रजा
पतिंचएताःप्रायश्चित्तदेवताआज्यद्रव्येण ज्ञाताज्ञानदोषपरिहारार्थंत्रिवारमग्निंसकृतमरुतश्चाज्येनांगदेवताःप्रधानदेवताः
सर्वाःसन्निहिताःसंतुएवंसांगोपांगेनकर्मणासमिद्भिःसद्योयक्ष्ये व्याहृतीनांप्रजापतिःप्रजापतिरग्निर्वायुःसूर्यःप्रजापतिर्देवताः
गायत्र्युष्णिगनुष्टुप्बृहत्यश्छंदांसि अन्वाधानसमिद्धोमेवि॰ ॐभूर्भुवःस्वःस्वाहा प्रजापतयइदं॰ इध्माबर्हिषोश्चसन्नहनं परि
समूहनं ३ अग्नेःषोडशभिर्दर्भैःप्राच्यादिषुपरिस्तृतिः परिस्तरणं पर्युक्षणं पवित्रकरणंपात्रासादनं चरुस्थालीप्रोक्षण्योदर्वीस्रु
वौ प्रणीताआज्यपात्रेइध्माबर्हिषी एतानासादयामि प्रोक्षणीपात्रमुत्तानंकृत्वाप्रादेशमात्रेद्वेपवित्रेनिधाय अद्भिःपूरयित्वा गंध

पुष्पाक्षतान्निक्षिप्य अंगुष्ठोपकनिष्ठिकाभ्यांउदगग्रे पृथक्पवित्रेधृत्वाऽपस्त्रिरुत्पूय पात्राण्युत्तानानिकृत्वा इध्मंचविस्रस्य सर्वाणि-
पात्राणिभिः प्रोक्षेत् ताअपः किंचित्कमंडलौक्षिपेदित्येके प्रणीतापात्रमग्नेः प्रत्यग्भूमौनिधाय तत्रतेपवित्रेनिधाय उदकेनपूरयित्वा गंध
पुष्पाक्षतान्निक्षिप्य अस्मिन्कर्मणिब्रह्मत्वेनत्वामहंवृणे पाणिनापाणिंस्पृष्ट्वा ततोब्रह्मावृतोस्मिइत्युक्त्वा आचम्याग्नेर्दक्षिणतस्ति
ष्ठन् ततोब्रह्मणेइदमासनं निरस्तःपरावसुः इदमहमर्वावसोःसदनेसीदामि ॐ ब्रह्मन्नपःप्रणेष्यामि बृहस्पतिर्ब्रह्माब्रह्मसदन-
आशिष्यतेबृहस्पतेयज्ञंगोपायसयज्ञंपाहिसयज्ञपतिंपाहिसमांपाहि ॐ भूर्भुवःस्वर्बृहस्पतिप्रसूतः ॐप्रणय यदिब्रह्मानभवेत्त
दास्वयमेवतत्प्रणीतापात्रंनासिकासमीपंनीत्वा उत्तरतोग्नेर्निधाय अन्यैर्दर्भैराच्छादयेत् ततःपवित्रंआज्यपात्रेनिधाय ततोप
रिस्तरणाद्बहिरुत्तरतोंगारानपोह्यतदुपरिआज्यपात्रंनिधाय विलीनाज्यंनिक्षिप्य वामहस्तेदर्भाग्रद्वयंधृत्वा एकेनैवोल्मुकेनाव
ज्वल्य दर्भाग्रद्वयंनिक्षिप्य उल्मुकेनप्रधानद्रव्यसहितंत्रिः पर्यग्निकृत्वाउल्मुकंनिरस्यांगारानग्नौप्रक्षिपेत् अंगुष्ठोपकनिष्ठिका-
भ्यांपवित्रेगृहीत्वा सवितुष्ट्वेतिमंत्रस्यहिरण्यगर्भस्तूपऋषिः सवितादेवता पुरउष्णिक्छंदः आज्यस्योत्पवनेविनियोगः ॐसवि
तुष्ट्वाप्रसवउत्पुनाम्यच्छिद्रेणपवित्रेणवसोःसूर्यस्यरश्मिभिः प्रागुत्पुनाति सकृन्मंत्रेणद्विस्तूष्णींतेपवित्रेअद्भिःप्रोक्ष्य अग्नौप्रहरे
त् स्कंदायस्वाहा स्कंदायेदंनमम ततआत्मनोग्रतोभूमिंप्रोक्ष्य तत्रबर्हिःसन्नहनींरज्जुमुदगग्रांप्रसार्य ततोबर्हिरास्तरणं तदुपरि

आज्यपात्रंनिधाय कुशान्स्रुक्स्रुवौचदक्षिणहस्तेवामहस्तेचगृहीत्वा अग्नौप्रताप्यदर्वींनिधाय स्रुवंवामहस्तेगृहीत्वा स्रुवबिलंदर्भा
ग्रेणत्रिःसंमृज्य तथैवस्रुवपृष्ठंदर्भाग्रेणआत्माभिमुखंत्रिःसमृज्य कुशमूलेनपश्चादारभ्यबिलपर्यंतंत्रिस्त्रिःसंमृज्य प्रोक्ष्यप्रताप्यघृ
तादुत्तरतःस्थापयेत् पुनस्तथैवस्रुचिंसंमृज्यप्रोक्ष्यप्रताप्यस्रुवोत्तरतःस्थापयेत् दर्भान्संमृज्य अग्नौप्रहरेत् स्रुवेणाज्यंगृहीत्वा
होमद्रव्यमभिघार्य उदगुद्वास्य अग्न्याज्ययोर्मध्येननीत्वा आज्याद्दक्षिणतोबर्हिषिसांतरमासाद्य तन्मध्येएकपात्रंनिधाय अग्निमलं
कृत्य ॐ विश्वानिनइत्यनयोर्वसुश्रुतोग्निस्त्रिष्टुप् द्वाभ्यामर्चनेअंत्योपस्थानेवि० ॐ विश्वानिनोदुर्गहाजातवेदःसिंधुंननावादुरिता
तिपर्षि अग्नेअत्रिवन्नमसागृणानो३स्माकंबोध्यविताननूनां यस्त्वात्हृदाकीरिणामन्यमानोमर्त्यंमर्त्योजोहवीमि जातवेदोयशोअ
स्मासुधेहिप्रजाभिरग्नेअमृतत्वमश्यां यस्मैत्वंसुकृतेजातवेदउलोकमग्नेकृणवस्योनं अश्विनंसपुत्रिणंवीरवंतंगोमंतंरयिंनशतेस्व
स्ति अष्टदिक्षुगंधपुष्पादिभिरायतनं आत्मानंचालंकृत्य एकयोपस्थाय ततोपाणिनाइध्ममादाय मूलमध्याग्रेषुत्रिरभिघार्य अ
यंतइध्मेत्यस्यमंत्रस्यवामदेवऋषिः जातवेदोग्निर्देवता त्रिष्टुप्छंदः इध्महवनेविनियोगः ॐ अयंतइध्मआत्माजातवेदस्तेनेध्यस्व
वर्धस्वचेद्धवर्धयचास्मान्प्रजयापशुभिर्ब्रह्मवर्चसेनान्नाद्येनसमेधयस्वाहा अग्नयेजातवेदसेइदंनमम स्रुवेणाज्यंगृहीत्वावायवी
दिशमारभ्यआग्नेयीदिक्पर्यंतंआज्यधारांजुहुयात् प्रजापतयेमनसाध्यायन् स्वाहेतिजुहुयात् स्वाहेतिमुखेनजुहुयात् तथैवनि

ऋर्तिदिशमारभ्यईशानदिक्पर्यंतंजुहुयात् उभयत्रप्रजापतयइदं॰ उत्तरेअग्नयेस्वा॰ अग्नयइदं॰दक्षिणेसोमायस्वाहा सोमायेदं अथप्र
धानहोमंकुर्यात् ब्रह्मादिदेवतानाममंत्रेणएकैकयाज्याहुत्या॰ ब्रह्मणे॰ सोमाय॰ ईशानायस्वा॰ इंद्रायस्वा॰ अग्नयेस्वा॰ यमाय॰ निर्ऋत
ये॰ वरुणाय॰ वायवे॰ अष्टौवसुभ्यः॰ एकादशरुद्रेभ्यः द्वादशादित्येभ्यः॰ अश्विभ्यां॰ विश्वेभ्योदेवेभ्यः॰ सप्तयक्षेभ्यः॰ भूतनागेभ्यः॰
गंधर्वाप्सरोभ्यः॰ स्कंदाय॰ नंदीश्वराय॰ शूलाय॰ महाकालाय॰ दक्षादिसप्तगणेभ्यः॰ दुर्गायै॰ विष्णवे॰ स्वधायै॰ मृत्युरोगाभ्यां॰ गणप
तये॰ अद्भ्यः॰ मरुद्भ्यः॰ पृथिव्यै॰ गंगादिनदीभ्यः॰ सप्तसागरेभ्यः॰ मेरवेस्वा॰ गदायै॰ त्रिशूलाय॰ वज्राय॰ शक्तये॰ दंडाय॰ खड्गाय पाशा
य॰ अंकुशाय॰ गौतमाय॰ भरद्वाजाय॰ विश्वामित्राय॰ कश्यपाय॰ जमदग्नये॰ वसिष्ठाय॰ अत्रये॰ अरुंधत्यै॰ ऐन्द्र्यै॰ कौमार्यै ब्राह्म्यै॰ वा
राह्यै॰ चामुंडायै॰ वैष्णव्यै॰ माहेश्वर्यै॰ वैनायक्यै॰ स्वाहांतं अथस्विष्टकृद्धोमः यदस्यकर्मणोइत्यस्यमंत्रस्यहिरण्यगर्भऋषिः अग्नि
र्देवता अतिधृतिच्छंदः स्विष्टकृद्धोमेवि॰ ॐ यदस्यकर्मणोत्यरीरिचंयद्वान्यूनमिहाकरं अग्निष्टत्स्विष्टकृद्विद्वान्सर्वंस्विष्टंसुहुतंकरो
तुमे अग्नयेस्विष्टकृतेसुहुतहुतेसर्वप्रायश्चित्ताहुतीनांकामानांसमर्धयित्रेसर्वान्नःकामान्समर्द्धयःस्वाहा अग्नयेस्विष्टकृतइदं॰
त्रिसंधानं रुद्रायपशुपतयेस्वाहा रुद्रायपशुपतयेदं॰ अपउपस्पृश्य स्रुवेणप्रायश्चित्ताज्याहुतीःसप्तजुहुयात् तत्रमंत्राः अ
याश्चेत्यस्यमंत्रस्यविमदऋषिः अयाळग्निर्देवता पंक्तिच्छंदः सर्वप्रायश्चित्ताज्यहोमेवि॰ ॐ अयाश्चाग्नेस्यनभिशस्तीश्चसत्यमि

त्वमयाअसि अयासावयसाकृतोयासन्हव्यमूहिषेयानोधेहिभेषजंस्वा॰ अयसेअग्नयइदं॰ अतोदेवाइतिद्वयोः काण्वोमेधातिथिर्ऋषिः
आद्यादेवादेवताद्वितीयाविष्णुर्देवता गायत्रीछंदः प्रायश्चित्ताज्याहुतिहोमेवि॰ ॐ अतोदेवाअवंतुनोयतोविष्णुर्विचक्रमे पृथिव्याः
सप्तधामभिःस्वाहा देवेभ्यइ॰ ॐ इदंविष्णुर्विचक्रमेत्रेधानिदधेपदं समूळ्हमस्यपांसुरेस्वा॰ विष्णवइ॰ व्यस्तसमस्तव्याहृतीनांवि
श्वामित्रजमदग्निभरद्वाजभृगवऋषयः अग्निवायुःसूर्यप्रजापतयोदेवताः गायत्र्युष्णिगनुष्टुप्बृहत्यश्छंदांसि सर्वप्रायश्चित्ताज्य
होमेवि॰ ॐ भूःस्वाहा अग्नयइदं ॐ भुवःस्वाहा वायवइ॰ ॐ स्वःस्वाहा सूर्यायेदं ॐ भूर्भुवःस्वःस्वाहा प्रजापतयइदं ततोब्रह्माकर्ता
रंपरीत्याग्नेर्वायव्यदेशेनिषण्णेनाएवसप्ताहुतीर्जुहुयात् त्यागःयजमानःअत्रकुर्यात् अनाज्ञातमितिमंत्रद्वयस्यहिरण्यगर्भऋषिः
अग्निर्देवता त्रिष्टुप्छंदः ज्ञाताज्ञातदोषपरिहारार्थंप्रायश्चित्ताज्यहोमेवि॰ ॐ अनाज्ञातंयदाज्ञातंयज्ञस्यक्रियतेमिथु अग्नेतदस्यक
ल्पयत्वंहिवेत्थयथातथंस्वाहा अग्नयइदं ॐ पुरुषसंमितोयज्ञोयज्ञःपुरुषसंमितः अग्नेतदस्यकल्पयत्वंहिवेत्थयथातथं
स्वाहा अग्नयइदं यत्पाकत्रेत्यस्यमंत्रस्यआप्तस्त्रितऋषिः अग्निर्देवता त्रिष्टुप्छंदः न्यूनातिरिक्तदोषपरिहारार्थंप्रायश्चित्ताज्य
होमेवि॰ ॐ यत्पाकत्रामनसादीनदक्षानयज्ञस्यमन्वतेमर्त्तासः अग्निष्टद्धोताक्रतुविद्विजानन्यजिष्ठोदेवांऋतुशोयजातिस्वाहा अ
ग्नयइदं यद्वोदेवाइत्यस्यअभितपाऋषिः मरुतोदेवताः त्रिष्टुप्छंदः मंत्रविपर्यासादिनिमित्तकप्रायश्चित्ताज्यहोमेविनियोगः ॐ य

ह्वो देवा अनिपातयानिवाचाच्चप्रयुतीदेवहेळनं अरायोअस्मांअभिदुच्छुनायतेन्यत्रास्मिन्मरुतस्तंनिधेतनस्वाहा मरुद्भ्यइदं प्रजास्विष्टं
नवाहुत्याबलिंपूर्णाहुतिंचरेत् श्रेयःसंपाद्यदानंचअभिषेकोविसर्जनं पूर्णाहुतिमुत्तमाहुतिंजुहोति सर्वंवैपूर्णाहुतिः सर्वमेवाप्नोति अ
थोइयंवैपूर्णाहुतिः अस्यामेवप्रतितिष्ठति इदमग्नयेवैश्वानरायप्रातऋतवेसप्तवतेअद्भ्यश्चनमम वसोर्धारांकुर्यात् धामंतेवाम
देवआपोजगती पूर्णाहुतिहोमेवि० ॐ धामंतेविश्वंभुवनमधिश्रितमंतःसमुद्रेहृद्यं१तरायुषि अपामनीकेसमिथेयआभृतस्त
मश्यामधुमंतंतऊर्मिंस्वा० अद्भ्यइदं० बर्हिषिपूर्णपात्रंनिनयेत् ॐ पूर्णमसिपूर्णंमेभूयाःसुपूर्णमसिसुपूर्णंमेभूयाःसदसिसन्मे
भूयाःसर्वमसिसर्वंमेभूयाःअक्षितिरसिमामेक्षेष्ठाः ॐ प्राच्यांदिशिदेवाऋत्विजोमार्जयंतां दक्षिणस्यांदिशिमासाःपितरोमार्ज
यंतां प्रतीच्यांदिशिग्रहाःपशवोमार्जयंतां उदीच्यांदिश्यापओषधयोवनस्पतयोमार्जयंतां ऊर्ध्वायांदिशियज्ञःसंवत्सरःप्रजापति
र्मार्जयंतां आपोअस्मानित्यस्यदेवश्रवाआपस्त्रिष्टुप् मार्जनेवि० ॐ आपोअस्मान्मातरःशुंधयंतुघृतेननोघृतप्वःपुनंतु विश्वंहि
रिप्रंप्रवहंतिदेवीरुदिदाभ्यःशुचिरापूतएमि इदमापःप्रवहतयत्किंचदुरितंमयि यद्वाहमभिदुद्रोहयद्वाशेपउतानृतं सुमित्र्या
नआपओषधयःसंतु दुर्मित्र्यास्तस्मैसंतु योस्मान्द्वेष्टियंचवयंद्विष्मस्तंहन्मीतिनिर्ऋतिदेशेकुशाग्रैरपःक्षिपेत् ॐ माहंप्रजांपरा-
सिंचंयानःसयावरीस्थन समुद्रेवोनिनयानःस्वंपाथोअपीथ शांतिःपुष्टिस्तुष्टिश्चास्तु आग्नेय्याभिमुखस्तिष्ठन् अग्निपूजनम्

विश्वानिनोदुर्गहाजातवे॰ अग्न्युपस्थानंजस्वा ॐअग्नेनयसुपथारायेअस्मान्विश्वानिदेववयुनानिविद्वान् युयोध्य १ स्मज्जुहुराणमे
नोभूयिष्ठांतेनमउक्तिंविधेम बोधानोअस्यवचसोयविष्ठमंहिष्ठस्यप्रभृतस्यस्वधावः पीयतित्वोअनुत्वोगृणातिवंदारुस्तेतनुवंवंदे-
अग्ने नमस्कारः मानस्तोकेतिमंत्रस्य कुत्सऋषिः रुद्रोदेवता जगतीछंदः विभूतिग्रहणेवि॰ ॐमानस्तोकेतनयेमानआयोमानो
गोषुमानोअश्वेषुरीरिषः वीरान्मानोरुद्रभामितोवधीर्हविष्मंतःसदमित्वाहवामहे त्र्यायुषंजमदग्नेरितिललाटे कश्यपस्यत्र्यायुष
मितिकंठे अगस्त्यस्यत्र्यायुषमितिनाभौ यद्देवानांत्र्यायुषमितिदक्षिणस्कंधे तन्मेअस्तुत्र्यायुषमितिवामस्कंधे सर्वमस्तुशतायुष-
मितिशिरसि इतिविभूतिधारणं परिस्तरणान्युत्तरेविसृजेत् परिसमुह्य ३ पर्युक्ष्य ३ ओंचमेस्वरश्चमेयज्ञोपचतेनमश्च यत्तेन्यू
नंतस्मैतउपयत्तेतिरिक्तंतस्मैतेनमः स्वस्तिश्रद्धांमेधांयशःप्रज्ञांविद्यांबुद्धिंश्रियंबलं आयुष्यंतेजआरोग्यंदेहिमेहव्यवाहन यस्यस्मृ-
त्याचनामोक्त्यातपोयज्ञक्रियादिषुन्यूनंसंपूर्णतांयातिसद्योवंदेतमच्युतं प्रमादात्कुर्वतांकर्मप्रच्यवेताध्वरेषुयत् स्मरणादेवतद्विष्णोः
संपूर्णंस्यादितिश्रुतिः अनेनकर्मणाश्रीपरमेश्वरःप्रीयतां गच्छगच्छसुरश्रेष्ठस्वस्थानेपरमेश्वर यत्रब्रह्मादयोदेवास्तत्रगच्छहु-
ताशन होमंसंपाद्य उत्तरपूजांकृत्वा आचार्यंसंपूज्यगांदद्यात् यज्ञसाधनभूतायाविश्वस्याघौघनाशिनी विश्वरूपधरोदेवः
प्रीयतामनयागवा ब्राह्मणभोजनंसंकल्प्य यांतुदेवगणाःसर्वेपूजामादायपार्थिवात् इष्टकामप्रसिध्यर्थंपुनरागमनायच इ

तिर्अग्निमुखं अथमुद्रालक्षणं हेमाद्रौ संमुखीकृत्यहस्तौद्वौकिंचित्संकुचितांगुली मुकुलीतुसमाख्यातापंकजमस्तनैवसा पू
र्वोक्तामुकुलीयाचमादेश्योनिःसृतांगुलिः व्याकोशामुद्रामुकुलापद्ममुद्रामदर्शयेत् अंगुष्ठौकुंचितांतौतुस्वकीयांगुलिवेष्टितौ
उच्चौवाभिमुखौहस्तौयोजयित्वातुनिष्ठुरा तर्जन्यौकुंचितेकृत्वातथैवचकनीयसी अधोमुखौहृष्टनखास्थितामध्येकरस्यतु च
तस्रश्चोत्थिताःपृष्ठेअंगुष्ठावेकतःकुरु नालंव्यवस्थितौद्वौतुव्योममुद्रामकीर्तिता तंत्रांतरेसर्वदेवतापूजनसाधारण्येनषण्मुद्रा
उच्यते देवताननसंतुष्टासर्वदासंमुखीभवेत् अंगुष्ठौनिक्षिपेत्सेयंमुद्रात्वावाहनीमता संयंश्च्यानिक्षिपेत्सेयंमुद्रात्वावाहनीस्मृता
अधोमुखीत्वियंचेत्स्यात्स्थापनीमुद्रिकामता उच्छ्रिताङ्गुच्छ्रितौकुर्यात्संमुखीकरणीभवेत् प्रसृतांगुलिकौहस्तौमिथःश्लिष्टौतुसंमुखौ
कुर्यात्स्वहृदयंसेयंमुद्राप्रार्थनसंज्ञिका इत्येवंसर्वदेवानांपूजनेषट्प्रदर्शयेत् शिवपूजनेलिंगमुद्रा उच्छ्रितंदक्षिणांगुष्ठंवामांगुष्ठे
नबंधयेत् वामांगुलीदक्षिणाभिरंगुलीभिश्चवेष्टयेत् लिंगमुद्रेतिविख्याताशिवसान्निध्यकारिणी श्रीकामःश्रीर्षिकुर्वीतराज्य
कामस्तुनेत्रयोः मुखेत्वन्नादिकामस्तुग्रीवायांरोगशांतिकृत् हृदयेसर्वकामोचज्ञानार्थीनाभिमंडले राज्यकामस्तुगुल्येचराष्ट्रका
मस्तुपादयोः रामपूजनेसप्तदशमुद्राः तथाचरामार्चनचंद्रिकायांअगस्त्यः आवाहनीस्थापनीचसंनिधीकरणीतथा सुसंनिरो
धिनीमुद्रासंमुखीकरणीतथा संकलीकरणीचैवमहामुद्रातथैवच शंखचक्रगदापद्मधेनुकौस्तुभगारुडाः श्रीवत्सवनमालेचयो

निमुद्रांप्रदर्शयेत् एताभिःसप्तदशाभिर्मुद्राभिस्तुविचक्षणः योरामंमर्चयेन्नित्यंमोदयेत्ससुरेश्वरं द्रावयेदपिविघ्नेंद्रततःप्रार्थि
नमाप्नुयात् मूलाधाराद्द्वादशांतमानीतःकुसुमांजलिः त्रिस्थानगततेजोभिर्विनीतःप्रतिमादिषु आवाहनीचमुद्रास्याद्देवार्चन-
विधौमुने एषैवाधोमुखीमुद्रास्थापनेशस्यतेपुनः उन्नतांगुष्ठयोगेनमुष्टीकृतकरद्वयं सन्निधीकरणीमुद्रादेवार्चनविधौमु
ने अंगुष्ठगर्भिणीसैवमुद्रास्यात्संनिरोधिनी उत्तानमुष्टीयुगलासंमुखीकरणीमता अंगैरेवांगविन्यासःसंकलीकरणीभ
वेत् अन्योन्यांगुष्ठसंलग्नविस्तारितकरद्वयं महामुद्रेयमाख्यातान्यूनाधिकसमापनी कनिष्ठानामिकामध्यांतस्थांगुष्ठानद
ग्रतः गोपितांगुष्ठमूलेनसन्निधामुकुलीकृता करद्वयेनमुद्रास्याच्छुरवाख्येयंसुरार्चने अन्योन्याभिमुखस्पर्शांव्यत्ययेनतु
वेष्टयेत् अंगुलीभिःप्रयत्नेनमंडलीकरणंमुने चक्रमुद्रेयमाख्यातागदामुद्राततःपरं अन्योन्याभिमुखाश्लिष्टाततःकौस्तुभ
संज्ञका कनिष्ठेन्योन्यसंलग्नेभिमुखेंहिपरस्परं वामस्थतर्जनीमध्येमध्यानामिकयोरपि वामानामिकसंस्पृष्टातर्जनीमध्यशो
भिता पर्यायेणाननांगुष्ठद्वयीकौस्तुभलक्षणा कनिष्ठान्योन्यसंलग्नाविपरीतंतुयोनितः अधस्तात्स्थापितांगुष्ठामुद्रागरुडसं
ज्ञिता तर्जन्यंगुष्ठमध्यस्थामध्यमानामिकाद्वयी कनिष्ठानामिकामध्यामुष्टिरुन्नततर्जनी परिभ्रांनाशिरस्युच्चैस्तर्जनीभ्यां
दिवौकसः योनिमुद्रासमाख्याताद्योतत्करद्वयाश्रिता तर्जन्याकृष्टमध्यांतोस्थितानामिकयुग्मिका मध्यस्थलस्थितांगुष्ठासे-

यंशस्तासुनेर्चने इतिमुद्रालक्षणं अथोपचाराः पदार्थादर्शेज्ञानमालायां अष्टत्रिंशत्सोडशवाद्शपंचोपचारकाः तान्विभज्यप्रव
क्ष्यामिकेनैतैश्चकूलैश्चकिं अर्घ्यपाद्यमाचमनंमधुपर्कमुपस्पृशम् स्नानंनीराजनंवस्त्रंआचमंचोपवीतकम् पुनराचमभूषेचद
र्पणालोकनंततः गंधपुष्पेधूपदीपौनैवेद्यंचततःक्रमात् पानीयंतोयमाचामंहस्तवासस्ततःपरं हस्तवासःकरोद्वर्तनं तांबूल
मनुलेपंचपुष्पदानंततःपुनः गीतंवाद्यंतथानृत्यंस्तुतिंचैवप्रदक्षिणाः पुष्पांजलिनमस्कारावष्टत्रिंशत्समीरिताः इत्यष्टत्रिंशदुप
चाराः अन्यच्च आसनंस्वागतंचार्घ्यंपाद्यमाचमनीयकं मधुपर्कासनस्नानवसनाभरणानिच स्रुगंधःस्रुमनोधूपोदीपमन्नेनभो-
जनम् माल्यानुलेपनेचैवनमस्कारविसर्जने इतिषोडशउपचाराः अर्घ्यंपाद्यंचाचमनंस्नानंवस्त्रनिवेदनम् गंधादयोनैवेद्यांताउ
पचारादशक्रमात् शारदातिलकेषोडशोपचाराउक्ताः तथाच आसनस्नानवस्त्राणिभूषणंचविवर्जयेत् रात्रौदेवार्चनेनैतेश्चप
दार्थैर्द्वादशैःक्रमात् पूजनंकपिलेनोक्तंतत्सर्वंचविसर्जयेत् गंधतैलमथोदद्याद्देवस्याग्रेनिमंततः दूर्वाचविष्णुक्रांताचश्यामा
कंपद्ममेवच पाद्यांगानिचचत्वारिकथितानिसमासतः कर्पूरमगरुंपुष्पंद्रव्याण्याचमनीयके सिद्धार्थमक्षतंचैवदूर्वांचतिल-
मेवच यवगंधफलंपुष्पंअष्टांगलर्घ्यमुच्यते स्नानेवस्त्रेतथाभक्षेदद्यादाचमनीयकं उद्वर्तनमपितत्रैव रजनीसहदेवीचशिरी
षंलक्षणापिच सहाभद्राकुशाग्राणिउद्वर्तनमिहोच्यते मंत्रतंत्रप्रकाशे अक्षतागंधपुष्पाणिस्नानपात्रेतथात्रयम् दूर्व्याभावेप्रदा

तव्याः क्षालितास्तंडुलाः शुभाः तत्रैवोक्तं अगस्त्यसंहितायां तथाचमनपात्रेपि दद्याज्जातीफलं सुने लवंगमपि कंकोलं शस्तमाचम
नीयकं द्रव्याभावे तंत्रांतरेउक्तं तंदुलान्प्रक्षिपेत्तेषु द्रव्याभावेतु तत्स्मरन् प्रयोगपारिजाते व्यासः प्रतिमापटयंत्राणां नित्यं स्नानंन
कारयेत् कारयेत्पर्वदिवसे यदावामलधारणं ज्ञानमालायां नाक्षतैरर्चयेद्विष्णुं नतुलस्यागणाधिपं नदूर्वयायजेद्देवीं बिल्वप
त्रैश्चभास्करं उन्मत्तमर्कपुष्पंचविष्णोर्वर्जं सदाबुधैः अक्षतास्तुयवाः प्रोक्ताः इतिपदार्थादर्शे उक्तत्वाद्यवानामेवायंप्रतिषेधोन
तंदुलानां तंत्रांतरे महाभिषेकं सर्वत्र शंखेनैवप्रकल्पयेत् सर्वत्रैवप्रशस्तोब्जः शिवसूर्यार्चनेविना अथव्रतोद्यापनानुक्तौ पृथ्वी
चंद्रोदये नंदिपुराणे कुर्यादुद्यापनंतस्य समाप्तौयदुदीरितं उद्यापनविनायत्तु तद्व्रतंनिष्फलंभवेत् यत्रचोद्यापनंनोक्तं व्रतानुगुणत-
श्चरेत् वित्तानुसारतोदद्यादनुक्तोद्यापनेव्रते गांचैवकांचनंदद्याद्व्रतस्यपरिपूर्तये समाप्तावुद्यापनमनुक्तोद्यापनविषयंउक्तोद्याप
नेतु आदौमध्येतथाप्यंतेव्रतस्योद्यापनंभवेत् तद्व्रतोद्यापनंकार्यं संपूर्णफलमाप्नुयात् अथव्रतभंगेसंपूर्णतायांविधिः हेमाद्रौ
भविष्ये युधिष्ठिरउवाच संपूर्णतामनुष्ठानं व्रतानांनंदनंदन कुरुप्रसादंयुत्थ्यार्थं मेनन्मेवक्तुमर्हसि श्रीकृष्णउवाच साधुसाधुम-
हाबाहो कुरुराजयुधिष्ठिर रहस्यानांरहस्यंतेकथयामिव्रतेतव संपूर्णताव्रतायत्रतत्रसम्यक्फलप्रदम् यच्चीर्णंनवनारीभिर्भवेत्सं
पूर्णकारकं अवश्यंतच्चकर्तव्यं संपूर्णफलकांक्षिभिः किंचिद्भग्नंप्रमादेनयद्व्रतंव्रतिनांस्थितं तत्संपूर्णंभवेत्सर्वंव्रतेनानेनपांडव

उपद्रवैर्बहुविधैर्महामोहाच्चपांडव यद्व्रतं किंचिदेवस्याद्व्रतंविघ्नविनाशनं तत्संपूर्णंभवेत्पार्थसत्यंसत्यंनसंशयः कांचनंरू-
प्यकंरूपंशिल्पिनातुघटापयेत् भग्नंव्रतस्ययोदेवस्तस्यरूपंविनिर्दिशेत् व्रतंस्त्रीपुरुषयोः पार्थप्रारब्धंयत्कृतंकिल नचनिष्पादितंकिंचि
द्दैवात्सर्वंतथास्थितं द्विभुजंपंकजारूढंसौम्यंप्रहसिताननं निष्पादितंशिल्पिनाचतस्मिन्नेवदिनेपुनः तन्मानेतुमनःप्राप्तेब्राह्मणै
र्विधिनागृहे स्नापयेत्पयसादध्नाघृतक्षौद्ररसांबुभिः वस्त्रचंदनपुष्पैश्चपूजांकुर्यात्समाहितः तोयपूर्णस्यकुंभस्यप्रसुरवेविन्यस्यदेव
तां धूपदीपाक्षतैर्वस्त्रैरत्नैर्बहुप्रकारकैः अर्घ्यंप्रदद्यात्तंनाम्नामंत्रेणानेनपांडव उपासनस्यदानस्यमायश्छिन्नंकृतंजले शरणंवःप्रपन्ना
स्मःकुरुध्वाद्यदयांमम व्रतच्छिद्रंतपश्छिद्रंयच्छिद्रंव्रतकर्मणि तत्सर्वंत्वत्प्रसादेनसंपूर्णंजायतांमम कुरुप्रसादंसंपूर्णंव्रतंसंजायतां
मम पूर्वदक्षिणपश्चात्सुउत्तरेचबलिंहरेत् उपर्यधस्तात्सर्वेभ्योदिक्पालेभ्योनमोनमः इदमर्घ्यमिदंपाद्यंतेभ्यस्तेभ्योनमोनमः
पादौचजानुनीचैवकटीशीर्षकवक्षसी कुक्षिंतुहृदयंपृष्ठंवाकूचक्षुश्चशिरोरुहान् पूजयित्वातुदेवस्यततःपश्चात्क्षमापयेत् पू
जितस्त्वंयथाशक्त्यानमस्तेस्तुसुरोत्तम ऐहिकामुष्मिकींदेवकार्यसिद्धिंदिशस्वमे एवंक्षमापयित्वातुप्रणामेच्चप्रयत्नतः तन्मूर्तिंच
द्विजातिभ्योविधिवत्प्रतिपादयेत् स्थित्वापूर्वंप्रसुरवोविप्रोगृह्णीयाद्दर्भपाणिना विप्रहस्तेप्रयच्छेच्चदातावाचैवोत्तरामुखः मंत्रेणानेन
कौंतेयसोपवासःप्रयत्नतः इदंव्रतंमयाखंडंकृतमासीत्सुराद्विज तत्सर्वंपूर्णमेवास्तुतवमूर्तिप्रदानतः ब्राह्मणोपिप्रयच्छेतमंत्रेणा

नेननद्भुतं वाक्यंपूर्णमतः पूजाव्रतेनानेननेसुरा संपूर्णंस्यात्प्रसादेनतव पूर्णामनोरथाः ब्राह्मणायत्प्रभाषंतेतन्मन्यंतेदिवौकसः

सर्वदेवमयाविप्रानतद्वचनमन्यथा जलधिःक्षारतांनीतः पावकः सर्वभक्षतां सहस्रनेत्रः शक्रोपिकृतोविप्रैर्महात्मभिः ब्राह्मणानां

तुवचनाद्ब्रह्महत्याविनश्यति अश्वमेधफलंसाग्र्यंलभतेनात्रसंशयः व्यासवाल्मीकिवचनात्पराशरवसिष्ठयोः गर्गगौतमधौम्या

त्रिवामदेवपुलस्त्ययोः वचनान्नारदादीनांपूर्णंभवतुमेव्रतं एवंविधिविधानेनगृहीत्वाब्राह्मणोव्रजेत् दातानप्रेषयेत्सर्वंब्राह्मण

स्यगृहंस्वयं ततः पंचमहायज्ञान्कृत्वावैभोजनादिकं एवंयः कुरुतेभक्त्याव्रतमेतंनरोत्तम तस्यसंपूर्णतांयातितद्व्रतंयत्पुराकृतं

खंडंसंपूर्णतांयातिप्रसन्नेव्रतदैवते भग्नानियानिमदमोहवशाद्गृहीत्वाजन्मांतरेष्वपिनरेणसवत्सरेण संपूर्णपूजनपरस्यपुराभ

वंतिसर्वव्रतानिपरिपूर्णफलप्रदानि अथसर्वव्रतेषुसामान्यतः पूजाविधिः सहस्रशीर्षेत्यावाहनं १ आगच्छागच्छदेवेशतेजो

राशेजगत्पते क्रियमाणांमयापूजांगृहाणसुरसत्तम पुरुषएवेदमित्यासनं २ नानारत्नसमायुक्तंकार्तस्वरविभूषितं आसनंदेव

देवेशप्रीत्यर्थंप्रतिगृह्यतां एतावानस्येतिपाद्यं ३ गंगादिसर्वतीर्थेभ्योमयाप्रार्थनयाहृतं तोयमेतत्सुखस्पर्शंपाद्यार्थंप्रतिगृह्यतां

त्रिपादूर्ध्वइत्यर्घ्यं ४ नमस्तेदेवदेवेशनमस्तेधरणीधर नमस्तेकमलाकांतगृहाणार्घ्यंनमोस्तुते तस्माद्विराळित्याचमनीयं ५ कर्पूर

वासितंतोयंमंदाकिन्याः समाहृतं आचम्यतांजगन्नाथमयादत्तंहिभक्तितः यत्पुरुषेणेतिस्नानं ६ गंगाचयमुनाचैवनर्मदाचसरस्व

ती कृष्णाचगौतमीवेणीक्षिप्राशिंधुस्तथैवच तापीपयोष्णीरेवाचताभ्यःस्नानार्थमाहृतं तोयमेतत्सुखस्पर्शंस्नानार्थंप्रतिगृह्यतां०
पंचामृतस्नानंपंचमंत्रैः ५ पृथक्कुर्यात्स्नानं तंयज्ञंभितिवस्त्रं सर्वभूषाधिकेसौम्येलोकलज्जानिवारणे मयोपपादितेतुभ्यंवाससीप्र
ति० वस्त्रंचसोमदेवत्यंलज्जायास्तुनिवारणं मयोपपादितेतुभ्यंवाससीप्र० वस्त्रं० तस्माद्यज्ञादितियज्ञो० दामोदरनमस्तेस्तुत्राहिमां
भवसागरात् ब्रह्मसूत्रंसोत्तरीयंगृहाणपुरुषोत्तम उपवीतं० तस्माद्यज्ञात्सर्वहुतइतिगंधं श्रीखंडंचंदनंदिव्यंगंधाढ्यंसुमनोहरं
विलेपनंसुरश्रेष्ठप्रीत्यर्थंप्रतिगृह्यतां अक्षताश्चसुरश्रेष्ठाःकुंकुमाक्ताःसुशोभनाः मयानिवेदिताभक्त्यागृहाणपरमेश्वर तस्मा
द्श्वेतिपुष्पं माल्यादीनिसुगंधीनीमा० यत्पुरुषंव्यदधुरितिधूपं वनस्पतिरसोद्भूतो० ब्राह्मणोस्येतिदीपं० साज्यंचवर्तिसंयुक्तंवह्निना
योजि० चंद्रमामनसइतिनैवेद्यं० अन्नंचतुर्विधंस्वादुरसैःषड्भिःसमन्वितंभक्ष्यभोज्यसमायुक्तंनैवेद्यंप्रतिगृह्यतां सप्तास्येतिप्रदक्षि०
हिरण्यगर्भगर्भस्थंहेमबीजंविभावसोः अनंतपुण्यफलदमतःशांतिंप्रयच्छमे चंद्रादित्यौचधरणीविद्युदग्निस्तथैवच त्वमेवसर्व
ज्योतींषिआर्तिक्यंप्रतिगृह्यतां नीराजनं यज्ञेनयज्ञमितिपुष्पांजलिः नमस्तेपुंडरीकाक्षनमस्तेत्वमरप्रिय नमस्तेकमलाकांत-
वासुदेवनमोस्तुते यानिकानिचपापानिब्रह्महत्यासमानिच तानितानिविनश्यंतिप्रदक्षिणपदेपदे प्रदक्षिणाः नमःसर्वहितार्थाय



जगदाधाररहेतवे साष्टांगोयंप्रणामोस्तुप्रणयेनमयाकृतः इतिनमस्कारः इतिसामान्यपूजाविधिः इतिश्रीव्रतराजेपरिभाषासमा०

अथादौ प्रतिपदादितिथिव्रतानि लिख्यंते मात्स्ये वर्जयित्वा मधौ यस्तु दधिक्षीरघृतेक्षवं दद्याद्वस्त्राणि सूक्ष्माणि रसपात्रैश्च तानि च
रसपात्रैर्दर्व्यादिपात्रैः संपूज्य विप्रमिथुनं गौरी मे प्रीयतामिति हेमाद्रौ पाद्मे च अर्चयेच्चैत्रमासे तु यस्तु गंधानुलेपनैः शुक्लं गंधभृतां दद्या
द्विप्राय श्वेतवाससी भक्त्या तु दक्षिणां दद्यात्सर्वकामार्थसिद्धये गंधवस्त्रदानमंत्रः चंदनावासगंधानां सुरवृंदारकार्चित चंदन-
त्वं प्रसादेन सौख्यानंदप्रदो भव शरण्यं सर्वलोकानां लज्जाया रक्षणं परम् सुवेषधारि त्वं यस्माद्वासः शांतिं प्रयच्छ मे इति मंत्राभ्यां गं-
धवाससी दद्यात् अथ चैत्रशुक्लप्रतिपदि संवत्सरारंभविधिर्ब्राह्मे अत्र प्रतिपत्सूर्योदयव्यापिनी ग्राह्या श्रीभगवानुवाच चै
त्रे मासि जगद्ब्रह्मा ससर्ज प्रथमेऽहनि शुक्लपक्षे समग्रं तु तदा सूर्योदये सति इति वचनात् दिनद्वये व्याप्तावव्याप्तौ वा पूर्वैव वत्स
रादौ वसंतादौ बलिराज्ये तथैव च पूर्वविद्धैव कर्तव्या प्रतिपत्सर्वदा बुधैः वसिष्ठवचनादिति बहवः युक्तं तु दिनद्वये उदयसंबंधा-
भावे संवत्सरारंभप्रयुक्तकार्यलोपप्रसक्तौ यत्नवचनं पूर्वयुतामात्यताविधायकं दिनद्वये तत्संबंधे तु संपूर्णत्वादेव पूर्वाप्राप्तेः क
दा कार्यमित्याकांक्षाविरहात्पूर्वयुतत्वविरहाच्चैवैतद्वचनात् पूर्वेति ब्राह्मे प्रवर्तयामास तथा कालस्य गणनामपि ग्रहानब्दानृ
तून्मासान्पक्षान्संवत्सराधिपान् ददौ स भगवान्ब्रह्मा सर्वदेवसमागने ब्राह्म्यां सभायां ब्रह्माणमनिर्देश्य तत्तुं ततः यथोक्तेन
मस्यं ततस्तु वंतश्चाप्युपासने ततस्ते कृतशुश्रूषा गत्वा चैव हिमालयम् स्वानि स्वान्यथ कर्माणि तेन युक्ताश्च चक्रिरे ब्राह्मी सभा का

ब्र·रा
२४

मरूपाविशेषेणतदानघ धारयंत्यमलंरूपमनिर्देश्यंमनोहरं ततःप्रभृतियोधर्मैःपूर्वैःपूर्वतरैःकृतः अद्यापिरूढःसुतरांसकर्तव्यः
प्रयत्नतः तत्रकार्यामहाशांतिःसर्वकल्मषनाशिनी सर्वोत्पातप्रशमनीकलिदुःस्वप्ननाशिनी आयुःप्रदावृद्धिकरीधनसौभाग्य
वर्धनी मंगल्याचपवित्राचलोकद्वयसुखावहा तस्यामादौतुसंपूज्योब्रह्माकमलसंभवः पाद्यार्घ्यपुष्पधूपैश्चवस्त्रालंकारभूषणैः
होमैर्बलिसूपहारैश्चतथाब्राह्मणभोजनैः ततःक्रमेणदेवेभ्यःपूजाकार्यापृथक्पृथक् कृत्वोंकारवषट्कारौकुशोदकतिलाक्षतैः पु
ष्पधूपप्रदीपाद्यैर्भोजनैश्चयथाक्रमम् मंत्रैसंपूजनार्थंतुब्रह्मरूपंपरिस्पृशेत् मंत्रमितिधानाचेत्येकवचनं बहुरूपंमंत्रंनानारू
पान्मंत्रान्परिस्पृशेत् परिगृह्णीयादित्यर्थः तेन ॐनमोब्रह्मणइत्यादिविष्णवेपरमात्मनेनम इत्येवंमंत्रवाक्यवं देतन्नदेवना-
शब्दाश्चतुर्थ्यंताःप्रणवादयोनमोंतामंत्रत्वेनग्राह्याः प्रार्थनामंत्राः ॐनमोब्रह्मणेतुभ्यंकामायचमहात्मने नमस्तेस्तुनिमेषाय
त्रुटयेचनमोस्तुते लवायचनमस्तुभ्यंनमस्तेस्तुक्षणायच नमोनमस्तेकाष्ठायैकलायैतेनमोस्तुते नाडिकायैसुषुम्नायैसुहूर्ता
यैनमोनमः नमोनिशाभ्यःपुण्येभ्योदिवसेभ्यश्चनित्यशः पक्षाभ्यांचाथमासेभ्योऋतुभ्यश्चनमोनमः अष्टाविंशतिसंख्येभ्यो
नक्षत्रेभ्योनमोनमः प्रतिवर्षाधिपेभ्यश्चाविज्ञातेभ्योनमःसदा नमोस्तुकुलनागेभ्योसानुयात्रेभ्यएवच सानुयात्रेभ्यःसानुचरे-
भ्यः नमोस्तुसर्वदिग्भ्यश्चदिक्पालेभ्योनमोनमः नमःपुरंदरेभ्यश्चतत्संख्येभ्योनमोनमः पंचाशतेनमोनित्यंदक्षकन्याभ्यएव-

च नमोदेव्यैस्कंभद्रायैजयायैचाथसर्वदा कुशास्त्रायनमस्तुभ्यंसर्वास्त्रजनकायच नमस्तेबहुपुत्रायपत्नीभिःसहितायच नमोबु
ध्यैतथावृत्त्यैनिद्रायैधनदायच नमःकुबेरपुत्रायगुह्यकस्वामिनेनमः नमोस्तुशंखपद्मेभ्योनिधिभ्योमेथनित्यशः भद्रकाल्यैन
मस्तुभ्यंस्कंदरयैचनमोनमः वेदवेदांगवेदांतविद्यासंस्थेभ्यएवच नागयक्षसुपर्णेभ्योनमोस्तुगरुडायच सप्तभ्यश्चसमुद्रेभ्यः
सागरेभ्यश्चसर्वदा उत्तरेभ्यःकुरुभ्यश्चनमोमेरुगतायच भद्राश्वकेतुमालेभ्योनमःसर्वत्रसर्वदा इलावृतायचनमोहरिवंशाय
चैवहि नमःकिंपुरुषेभ्यश्चभरतायनमोनमः नमोभारतभेदेभ्योमहद्भ्यश्चाथसर्वदा पातालेभ्यश्चसप्तभ्योनरकेभ्योनमोन
मः कालाग्निरुद्रशैवेभ्योहरयेक्रोधरूपिणे सप्तभ्यस्त्वथलोकेभ्योमहाभूतेभ्यएवच नमःसंबुद्धयेचैवनमःप्रकृतयेतथा पुरु
षायाभिमानायनमोस्तुव्यक्तमूर्तये हिमवत्प्रमुखेभ्यश्चपर्वतेभ्योनमस्त्वथ पौराणीभ्यश्चगंगाभ्यःसप्तभ्यश्चनमोनमः नमो
स्त्वाद्रिमुनिभ्यश्चसप्तभ्यश्चाथसर्वदा नमोस्तुपुष्करादिभ्यस्तीर्थेभ्यश्चपुनःपुनः निम्नगाभ्योनमोनित्यंवितस्तादिभ्यएवच च
तुर्दशभ्योदीर्घेभ्योधरणीभ्योनमोनमः नमोधात्रेविधात्रेचछंदोभ्यश्चनमोनमः स्करभ्यैरावणाभ्यांचनमोभूयोनमोनमः नमस्त
थोच्चैःश्रवसेध्रुवायचनमोनमः नमोस्तुधन्वंतरयेशस्त्रास्त्राभ्यांनमोनमः विनायककुमारायविद्याभ्यश्चनमःसदा शाखाय
चविशाखायनैगमेयायवैनमः नमःस्कंदग्रहेभ्यश्चस्कंदमातृभ्यएवच ज्वरायरोगपतयेभस्मप्रहरणायच ऋषिभ्योवालखि

ल्येभ्यः केशवायनमः सदा अगस्तयेनारदायव्यासादिभ्योनमोनमः अप्सरोभ्यः सोमपेभ्योदेवेभ्यश्चनमोनमः असोमपेभ्यश्चनम
स्तुषितेभ्योनमः सदा आदित्येभ्योनमोनित्यंद्वादशभ्यश्चसर्वदा एकादशभ्योरुद्रेभ्यस्तपस्विभ्योनमोनमः नमोनासत्यदस्रा
भ्यामश्विभ्यांनित्यमेवहि साध्येभ्योद्वादशभ्यश्चपौराणेभ्योनमः सदा एकोनपंचाशतेभ्योमरुद्भ्यश्चनमोनमः शिल्पाचा-
र्यायदेवायनमस्तेविश्वकर्मणे अष्टभ्योलोकपालेभ्योसानुगेभ्यश्चसर्वदा आयुधेभ्योवाहनेभ्योचर्मभ्यश्चनमः सदा आस
नेभ्योदुंदुभिभ्योदेवेभ्यश्चनमः सदा दैत्यराक्षसगंधर्वपिशाचेभ्यश्चनित्यशः पितृभ्यः सप्तभेदेभ्यः प्रेतेभ्यश्चनमः सदा क्रूरसूक्ष्म
भ्यश्चदेवेभ्योभावगम्येभ्यएवच नमस्तेबहुरूपायविष्णवेपरमात्मने अथकिंबहुनोक्तेनमंत्रेणानेनवार्चयेत् प्राङ्मुखोदङ्मु
खोविप्रान्देवानुद्दिश्यपूर्ववत् अथवाकिमत्रविस्तरेणब्राह्मणानेवदेवतोद्देशेनपूजयेदित्यर्थः पूर्ववन्मंत्रोक्तक्रमेणअर्चेत्पुष्पैश्च
धूपैश्चवस्त्रमाल्यैः स्रक्टष्टकं सरामंः समर्चयेदित्यर्थः धनधान्यानुविभवैर्दक्षिणाभिश्चसर्वदा इतिहासपुराणानांप्रवक्तृंश्चद्वि
जोत्तमान् कालज्ञान्वेदवेदज्ञान्भृत्यान्संबंधिबांधवान् अनेनैवतुमंत्रेणस्वाहांतेनपृथक्पृथक् प्रतिष्ठायामग्नयेहोमः कर्तव्यः
सर्वतृप्तये वेदविच्चक्षुषीदत्वास्थानेप्राधानिकेसदा प्रतिष्ठायांचेष्टा वेदविद्वेदोक्तविधिज्ञः मदनरत्नेतुवेदवित्इतिपठित्वा
वेदोक्तविधिनेतिव्याख्यातम् चक्षुषीआज्यभागौ प्राधानिकेस्थाने प्रधानहोमारंभे होमारंभेनततः कुर्यान्मंगलालंभनंनरः स

दूनरत्ने शालाशोभांततः कुर्यान्मंगलालंभनंततः इतिपठेत् भोजयित्वाद्विजान्सर्वान् सुहृत्संबंधिबांधवान् विशेषेणचभोक्त
व्यंकार्यश्चापिमहोत्सवः नवसंवत्सरारंभः सर्वसिद्धिप्रवर्तकः इतिसंवत्सरारंभविधिः अथअत्रैवविष्णुधर्मोत्तरोक्तं आरोग्यप्र
तिपद्व्रतम् पुष्करउवाच संवत्सरावसानेतुपंचदश्यामुपोषितः प्रातःप्रतिपदिस्नातःकुर्याद्व्रतमनन्यधीः पूजयेद्भास्करंदेवंवर्ण
कैःकमलेकृते वर्णकैरक्तनीलश्वेतपीतादिभिः शुद्धेनगंधमाल्येनचंदनेनसितेनच तथाकुंदुरुधूपेनघृतदीपेनभार्गव कुंदुरुसल्ल
कीनिर्यासः अपूपैःसैकतैर्दध्नापरमान्नेनभूरिणा सैकतैःशर्कराविकारैः ओदनेनचभक्तेनसनालवणसर्पिषा सताउत्तमेन
क्षीरेणचफलैःशक्तैर्बहुब्राह्मणतर्पणैः पूजयित्वाजगद्धामदिनभागेचतुर्थके आहारंप्रथमंकुर्यात्सघृतंमनुजोत्तम सर्वंचमनुज
श्रेष्ठघृतहीनंविवर्जयेत् भुक्त्वासकलदेवान्नमाहारंश्चसमाचरेत् पानीयपानंकुर्वीतब्राह्मणानुमतेपुनः प्रथमंआहारंप्रथम
ग्रासम् सर्वंप्रथमंचआहारं एकमेवग्रासंभक्षयित्वाऽवशिष्टमन्नंत्यजेत् ब्राह्मणानुमत्याभुंजानोपिघृतहीनंनभुंजीतघृतहीनंविव
र्जयेदितिनिषेधात् संवत्सरमिदंकृत्वानतश्चसत्रयोदशं पूजनंदेवदेवस्यतस्मिन्नहनिभार्गव संवत्सरंशक्रप्रतिपत्सत्रयोदश
भिर्निलिंगदर्शनात् सवस्त्रंसहिरण्यंचततोदद्याद्द्विजातये पूजनंपूजोपकरणं प्रतिपद्व्रतेनानेनधर्मज्ञोरोगमेवंव्यपोहति आरो
ग्यमाप्नोतिगतिंतथाग्र्यांयशस्तथाग्र्यान्विपुलांश्चभोगान् व्रतेनसम्यक्पुरुषोथनारीसंपूजयेद्यस्तुजगत्प्रधानम् जगत्प्रधानंसू-

र्यम् इतिचैत्रशुक्लप्रतिपदिआरोग्यदायकव्रतम् अस्यामेवोक्तंविद्याव्रतम् मदनरत्नेविष्णुधर्मे मार्कंडेयउ० अष्टपत्रंतुकमलंविन्य
सेद्वर्णकैःशुभैः ब्रह्माद्यांकर्णिकायांतुतस्यसंपूजयेद्विभुम् ऋग्वेदंपूर्वपत्रेतुयजुर्वेदंतुदक्षिणे पश्चिमेसामवेदंतुउदक्चाथर्वणंत
था आग्नेयेचतथांगानिधर्मशास्त्राणिनैर्ऋते पुराणंचैववायव्यामीशान्यांन्यायविस्तरं एवंविन्यस्यधर्मज्ञःसोपवासस्तुपूजयेत्
चैत्रशुक्लमथारभ्यसोपवासोजितेंद्रियः सदाप्रतिपदंप्राप्यशुक्लपक्षस्ययादव संवत्सरंमहाराजशुक्लगंधानुलेपनैः भूषणैःपरमा
न्नेनधूपदीपैरतंद्रितः संवत्सरांतेगांदद्याद्व्रतेचीर्णेनरोत्तम इदंव्रतंयस्तुकरोतिराजन्सवेदवित्स्याद्बुविधर्मनिष्ठः कृत्वासदाद्वाद-
शवत्सराणिविरिंचिलोकंपुरुषःप्रयाति इतिविद्याप्रतिपद्व्रतम् अथात्रैवभविष्योक्तंतिलकव्रतम् श्रीकृष्णउ० वसंतेकिंशुकाशो
कशोभिनेप्रतिपत्तिथिः शुक्लानस्यांप्रकुर्वीतस्नानंनियममाश्रितः नारीनरोवाराजेंद्रसंतर्प्यपितृदेवताः नद्यास्तीरेतडागेवागृहेवा
तदलाभतः पिष्टातकेनविलिखेद्वत्सरंपुरुषाकृतिम् पिष्टातकःपटवासकोगंधः इतिचूर्णविशेषः ततश्चंदनचूर्णेनपुष्पधूपादिना
र्चयेत् मासर्तुनामभिःपश्चान्नमस्कारैस्तथार्चितैः मासर्तुनामभिश्चैत्रवसंताद्यैश्चनामभिः पूजयेद्ब्राह्मणोविद्वान्मंत्रैर्वेदोदितैः
शुभैः संवत्सरंपठन्मंत्रंतथावेदोदितंद्विजः नमस्कारेणमंत्रेणशूद्रोपीत्थंप्रपूजयेत् शूद्रोपीत्यनेनस्त्रीणांपरिग्रहः तासांवि
शेषविध्यभावेवैदिकमंत्राधिकारात् संवत्सरोसिपरिवत्सरोसीत्यादियजुर्वेदप्रसिद्धामंत्राः नमस्कारेणमंत्रेणसंवत्सरायतेन

म् इत्यादिनाएवमभ्यर्च्यवासोभिः पश्चात्तमभिवेष्टयेत् कालोद्भवैर्मूलफलैर्नैवेद्यैर्मोदकादिभिः ततस्तंपूजयेत्सार्थीपुरस्थित्वाकृ
तांजलिः भगवंस्त्वत्प्रसादेनवर्षंक्षेममिहास्तुमे संवत्सरोपसर्गामेविलयंयांतुशेषतः एवमुक्त्वायथाशक्त्यादत्वाविप्रायदक्षि
णां ललाटपट्टेतिलकंकुर्याच्चंदनपंकजं ततःप्रभृत्यनुदिनेतिलकालंकृतंसुखं धार्यंसंवत्सरंयावच्छशिनेवनभस्तलं एवंनरोवा
नारीवाव्रतमेतत्समाचरेत् सदेवपुरुषव्याघ्रभोगान्प्राप्यविभुनक्त्यसौ भूतप्रेतपिशाचाद्येदुर्वारावैरिणोग्रहाः निरर्थकाभवंत्ये
तेतिलकंवीक्ष्यतत्क्षणात् निरर्थकाःप्रयोजनशून्याःअनिष्टकरणेअसमर्थाइत्यर्थः अत्रवसंतेप्रतिपत्तिथिः शक्राज्ञानस्यांप्रकुर्वीतेति
वसंतशक्राज्ञामितिपल्लब्ध्वा तयाव्रतमिदंचैत्रेगृहीतंद्विजसन्निधौ इत्यग्रेनेनचैत्रस्यैवेतिविज्ञायते पूर्वमासीन्महीपालोनाम्नाशत्रुज
योजयी चित्रलेखेतितस्याभूद्भार्याचातिविभूषणा तयाव्रतमिदंभक्त्यागृहीतंद्विजसन्निधौ वत्सरंपूजयित्वातुध्यात्वादेवंजनार्दनं
हंतुंवाक्षेमकामोवासमागच्छतियःपुनः प्रयातिसप्रियंकृत्वादृष्ट्वातुतिलकंनरः सपत्नीहर्षप्रहरावशीकृतमहीतला भर्तृत्वदृष्टाप्रत्य
क्षासासुखमास्तेनिराकुला पावकेनाभिभूतस्तुभर्तापुत्रःसवेदनः शिरोर्त्तिनासंप्रयातःकृत्तदांसुखदायकः शिरोर्तिनाशिरोवे
दनायुक्तः धर्मराजपुरींप्रासःसर्वतापकरींततः तस्मिन्क्षणेमहाराजधर्मराजस्यकिंकराः तस्याद्वारमनुप्रासाःप्रविष्टागृहमंज-
सा शत्रुंजयंसमानेतुंकालमृत्युःपुरःसराः पार्श्वेस्थितांचित्रलेखांतिलकालंकृताननाम् दृष्ट्वाप्रनष्टसंकल्पाःपरावृत्यगताःपुनः गते

षुतेषुसनृपः पुत्रेणसहभारत भूभृजांबुभुजेभोगान्पूर्वैकर्मार्जितान्शुभान् अक्रूरेणसमाख्यातंममपूर्वंयुधिष्ठिर एतत्त्रिलोकति
लकाख्यविभूषितंचपुण्यव्रतंसकलदुष्टहरंपरंच इत्थंसमाचरतियःसकृदेवविद्वांस्तस्यमर्त्यैःमयातिपदमच्युतमिंदुमौलेः इतितिलकव्रतम्
अस्यामेवनवरात्रारंभः तत्रपरयुतायाह्या अमायुक्तानकर्तव्याप्रतिपच्चंडिकार्चने मुहूर्तमात्राकर्तव्याद्वितीयायांगुणान्विता अत्रैव
प्रपादानमुक्तं अतीतेफाल्गुनेमासिप्राप्तेचैवमहोत्सवे पुण्येऽह्निविप्रकथितंप्रपादानंसमारभेत् ततस्त्वोत्सर्जयेद्विद्वान्मंत्रेणानेनमान
वः प्रपेयंसर्वसामान्यभूतेभ्यःप्रतिपादिता अस्याःप्रदानात्पितरस्तृप्यंतुहिपितामहाः अनिवार्यंततोदेयंजलंमासचतुष्टयम् प्र
पादातुमशक्तेनविशेषाद्धर्ममीप्सुना प्रत्यहंधर्मघटकोवस्त्रसंवेष्टिताननः ब्राह्मणस्यगृहेदेयःशीतामलजलःशुचिः एषधर्मघटो
दत्तोब्रह्मविष्णुशिवात्मकः अस्यप्रदानात्सकलाममसंतुमनोरथाः अनेनविधिनायस्तुधर्मकुंभंप्रयच्छति प्रपादानफलंसोपिप्राप्नो
तीहनसंशयः इतिप्रपादानम् अथश्रावणशुक्लप्रतिपदिसोमवारमारभ्याचारप्राप्तंरोटकव्रतम् अथसर्वेशिवव्रतेषुपूजाविधिः
ममेहजन्मनिसमस्तसौभाग्यप्राप्त्यर्थंधनपुत्रप्राप्तिकामःसार्धमासत्रयात्मकंरोटकाख्यंसोमेश्वरप्रीत्यर्थंबिल्वव्रतंकरिष्ये तत्रसोमेश्वर
पूजनम् कार्तिकशुक्लचतुर्दश्यांउद्यापनम् मयाअनुष्ठितस्यसार्धमासत्रयात्मकबिल्वव्रताख्यस्यकर्मणःसांगतासिद्ध्यर्थंबिल्वरोट
काव्रतोद्यापनंकरिष्ये तंडुलैरष्टदलंकृत्वा तत्रसप्तमात्दल्लोकपालांश्चपूजयेत् मध्येसोमेश्वरम् आयाहिभगवान्शंभोशर्वलिंग

रिजापते प्रसन्नोभवदेवेशनमस्तुभ्यंहिशंकर त्रिपुरांतकरंदेवंचंद्रचूडंमहाद्युतिम् गजचर्मपरीधानंसोममावाहयाम्यहं आवाहनं
बंधूकसन्निभंदेवंत्रिनेत्रंचंद्रशेखरं त्रिशूलधारिणंदेवंचारुहासंसुनिर्मलं कपालधारिणंदेवंवरदाभयहस्तकं उमयासहितंशंभुं
ध्यायेत्सोमेश्वरंसदा ध्यानं विश्वेश्वरमहादेवराजराजेश्वरप्रिय आसनंदिव्यमीशानदास्येहंतुभ्यमीश्वर आसनं महादेव
महेशानमहादेवपरात्पर पाद्यंगृहाणमद्दत्तंपार्वतीसहितेश्वर पाद्यं त्र्यंबकेशसदाचारजगदादिविधायक अर्घ्यंगृहाणदेवेश-
सांबसर्वार्थदायक अर्घ्यं त्रिपुरांतकदीनार्तिनाशश्रीकंठशाश्वत गृहाणाचमनीयंचपवित्रोदककल्पितं आचमनीयं क्षीरमाज्यं
दधिमधुशर्करा चामृतंपयः प्रकल्पितंमयोमेशगृहाणेदंजगत्पते पंचामृतं गंगागोदावरीरेवापयोष्णीयमुनातथा सरस्वत्यादितीर्थानिस्नानार्थंप्रतिगृह्यतां स्नानं वस्त्राणिपट्टकूलानिविचित्राणिनवानिच मयानीतानिदेवेशप्रसन्नोभवशंकर वस्त्रं सौवर्णराजतंताम्रंकार्पासस्यतथैवच उपवीतंमयादत्तंप्रीत्यर्थंप्रतिगृह्यतां उपवीतं सर्वेश्वरजगद्वंद्यदिव्यासनसमस्थित गंधंगृहाणदेवे-
शचंदनंप्रतिगृह्यतां गंधं गंधोपरिशुभ्राक्षतान् अक्षताश्चसुरश्रेष्ठाः शुभ्राधूताश्चनिर्मलाः मयानिवेदिताभक्त्यागृहाणपर-
मेश्वर अक्षतान् माल्यादीनि॰ पुष्पाणि वनस्पतीतिधूपं॰ आज्यंचेतिदीपं॰ अपूपानिचपक्वानिमंडकावटकानिच पायसंसूप
मन्नंचनैवेद्यंप्रतिगृ॰ नैवेद्यं मध्येपानीयं करोद्वर्तनं कूष्मांडंमातुलिंगंचनारीकेरफलानिच गृहाणपार्वतीकांतसोमेशप्रतिगृ॰

फलं पूगीफलैर्युतंताम्बूलं हिरण्यगर्भेतिदक्षिणां अग्निर्ज्योतिरविर्ज्योतिर्ज्योतिर्नारायणोविभुः नीराजयामिदेवेशंपंचदीपैःस्मरे-
श्वरं नीराजनं हेतवेजगतामेवसंसारार्णवसेतवे प्रभवेसर्वविद्यानांशंभवेगुरवेनमः नमस्कारः यानिकानिचेतिप्रदक्षिणाः हर
विश्वाखिलाधारनिराधारनिराश्रय पुष्पांजलिंगृहाणेशसोमेश्वरनमोस्तुते पुष्पांजलिं बिल्वपत्रंसुवर्णेनत्रिशूलाकारमेवच मया
र्पितंतुतच्छंभोबिल्वपत्रंगृहाणमे बिल्वपत्रार्पणम् अथकथा युधिष्ठिरउ॰ हृषीकेशमयाकारिव्रतदानान्यनेकधा श्रोतुमिच्छामि
देवेशव्रतंसंपत्तिदायकम् येनव्रतेनदेवेशपुराराज्यंलभामहे तथाव्रतंतुमेब्रूहियादवानांकृपाकर श्रीभगवानुवाच वदामिशुभ-
दंपार्थलक्ष्मीवृद्धिप्रदायकम् धर्मार्थकाममोक्षाणांनिदानंपरमंव्रतम् युधिष्ठिरउ॰ येनचादौपुराचीर्णंमर्त्येकेनप्रकाशितं विधिना
केनकर्तव्यंतत्सर्वंब्रूहिकेशव श्रीभगवानु॰ आसीत्सौम्यपुरेराजासोमनामेतिविश्रुतः क्षात्रधर्मेतिकुशलःप्रजापालनतत्परः त-
स्यराज्येप्रजाःसौम्याःसर्वधर्मपरायणाः तस्यराज्ञस्तुचामात्यःसोपिसौम्यःशुभावहः तस्मिन्सरस्तुसौम्यंचसदासौम्यांबुनाप्लुतम्
अभूत्सोमेश्वरोदेवोलोकानांपालनायच तत्राभवत्सोमशर्माब्राह्मणोवेदपारगः वेदार्थविच्छास्त्रविच्चशुद्धाचारोतिदुर्लभः त-
स्यभार्याशुभाचारापुरंध्रीचारुभाषिणी भर्तृशुश्रूषणरताकल्याणीप्रियवादिनी सोकरोच्चकुटुंबार्थंकणयज्ञंदिनेदिने नलभ्यतेधि
कंतेनधनंधान्यंतथैवच अतीवखेदखिन्नस्तुविचार्यचपुनःपुनः किंकरोमिक्वगच्छामिसभार्योहंमहीतले केनकर्मविपाकेनकीदृशंल-

प्स्यतेफलं अथवार्थकरंधर्मंदेवपूजादिकंशुभं ससोमेशेकरोद्भक्तिं दैन्यनाशायपार्थिव कदाचिद्दीनखिन्नःसन्सजगामसरोवरं अभू-
त्सोमेशःप्रत्यक्षस्तस्मिन्सौम्यसरोवरे वृद्धब्राह्मणरूपेणकृपयापरयायुतः तेनासौदुःखितोदृष्टःसोमशर्माद्विजोत्तमः किमर्थंक्रियतेदुः
खंत्वयाविद्यावरेणच किंचिद्वृत्तंनास्तिपूर्वंनदर्थमीदृशीदशा तस्यतद्वचनंश्रुत्वाब्राह्मणस्त्विदमब्रवीत् भोभोविप्रवरश्रेष्ठव्रतमेकंवदा
मितं तेनादिष्टव्रतंचेदंपूर्णसंपत्तिदायकम् सोमशर्मोवाच भोभोब्राह्मणशार्दूलव्रतंतद्वदमेप्रभो यस्यानुष्ठानमात्रेणलक्ष्मीवृद्धिःप्रजायते
कस्मिन्मासेचकर्तव्यंकिंदानंकस्यभोजनम् धनलाभायकर्तव्यंकस्यदेवस्यपूजनं कैस्तुपुष्पैःप्रकर्तव्यापूजाचारुतराशुभा नैवेद्यंकीदृ
शंदेयंअर्घ्यंकैस्तुफलैर्भवेत् यदितुष्टोसिविप्रेंद्रतत्सर्वंब्रूहिमेप्रभो ब्राह्मणउ० साधुत्वयाविप्रदृष्टंव्रतंवृद्धिप्रदायकं विधानंतस्यव-
क्ष्यामिसर्वसिद्धिप्रदायकं श्रावणेचसितेपक्षेप्रथमेसोमवासरे प्रकर्तव्यंव्रतंविप्रशुभंनियमपूर्वकं सार्धमासत्रयंविप्रकर्तव्यंविधिपू
र्वकं बिल्वपत्रैरखंडैश्चपूजनंचदिनेदिने पंचसप्तत्रिभिश्चैवपूजनंविधिपूर्वकं परिपूर्णंतुकर्तव्यंचतुर्दश्यांतुकार्तिके व्रतारंभेतुकर्तव्यो
नियमस्तुविचक्षणैः अद्यारंभेव्रतंदेवरोटकाख्यंमनोहरम् करोमिपरयाभक्त्यापाहिमांजगतांगुरो दिनेदिनेप्रकर्तव्यापूजादेवस्य-
शूलिनः कथांविनानभोक्तव्यंमत्यहंचपुनःपुनः उपोषणंचतुर्दश्यांकर्तव्यंविधिपूर्वकं शुचिर्भूत्वादिनेतस्मिन्कर्तव्यंरोटकाव्रतम्
अथउपोषणप्रार्थनामंत्रः चतुर्दश्यांनिराहारःस्थित्वाचैवपरेहनि भोक्ष्यामिपार्वतीनाथसर्वसिद्धिप्रदायक कृत्वामाध्यान्हिकंकर्मस्था

पयेदव्रणंघटं पंचरत्नसमायुक्तंपुष्पादिभिरलंकृतं वेष्टितंश्वेतवस्त्रेणसर्वाभरणभूषितं तस्योपरिन्यसेत्पात्रंताम्रंचैवाथवैणवं विर
च्याष्टदलंतत्रपूजयेदुमयाशिवं कृत्वासायाह्निकंकर्मनित्यपूजादिकंतथा तस्यांरात्रौतुकर्तव्यापूजादेवस्यशूलिनः शुभेचैवप्रदेशेतुक
र्तव्यःपुष्पमंडपः पूज्यस्तत्रशिवोदेवोधर्मकामार्थसिद्धये क्षीरादिस्नापनंकुर्याच्चंदनादिविलेपनं कृष्णागरुंचकर्पूरमृगनाभिवि-
मिश्रितं पुष्पैर्नानाविधैरम्यैःपूज्योदेवोमहेश्वरः धनकामेनकर्तव्यापूजादेवस्यशूलिनः बिल्वपत्रैरखंडैश्चतुलसीपत्रकैस्तथा
नीलोत्पलैश्चारुतरैःकर्तव्यापुण्यवर्धिनी कल्हारकमलैश्चैवकुमुदैश्चातिशोभनैः चंपकैर्मालतीपुष्पैर्मुचकुंदैःशुभावहैः मंदारैश्चा
र्कपुष्पैश्चपूजार्हैश्चशिवप्रियैः अन्यैर्नानाविधैःपुष्पैर्ऋतुकालोद्भवैस्तथा धूपैर्नानाविधैःपार्थपुण्यवर्धनसाधकैः दीपास्तत्रप्रकर्त-
व्याघृतपूर्णामनोरथाः लेह्यपेयैस्तथाभोज्यैःस्वादुभिश्चशिवप्रियैः अन्यैर्नानाविधैरम्यैस्तथाविप्रवरैस्ततः नैवेद्यंतुप्रकुर्वीतरोट-
कानांविशेषतः कर्तव्यारोटकाःपंचपुरुषाहारमानकाः शालितंदुलपिष्टेनसमभागेनवापुनः द्वौतुविप्रायदातव्यौद्वाभ्यांवैभोजनं-
शुभम् एकोदेवायदातव्योनैवेद्यार्थंसदाबुधैः महेशायचदातव्यंतांबूलंसुमनोहरं अर्घ्यदानंप्रकर्तव्यंधनसंपत्तिदायकं पनसंना
रिकेरंचपूगीजंबीरपूरकं खर्जूरीचशुभाद्राक्षामातुलिंगंमनोहरम् अक्षोडानिचदाडिंबंनारिंगानिशुभानिच कर्कटीचशुभाप्रोक्ता
अर्घ्यदानेमनोहरा अन्यैर्नानाविधैःपार्थऋतुकालोद्भवैःशुभैः यःकरोत्यर्घ्यदानंचतस्यपुण्यंवदाम्यहं इलांचसागरैर्युक्तांरत्नैश्चान्यै

र्मनोहरैः दत्वायत्फलमाप्नोतितेनतत्फलमाप्नुयात् अनेनैवविधानेनतत्कार्यंव्रतसिद्धये पंचवर्षेतुकर्तव्यमतुलंधनमीप्सुभिः पश्चादु-
द्यापनंकुर्याद्रोटकाख्यव्रतस्यच उद्यापनेतुकर्तव्यौहेमरूप्यौतुरोटकौ बिल्वपत्रंसुवर्णस्यसोमेशप्रीतयेशुभं रात्रौजागरणंकुर्यात्पूज्यो
देवोमहेश्वरः पूर्णेनविधिनाविप्रकर्तव्यंचशिवप्रियम् दारिद्र्यनाशनंपुण्यंलक्ष्मीवृद्धिप्रदायकं कर्तव्यंविधिवद्भक्त्याश्रोतव्यंतुकथान
कं गीतवाद्यादिसहितंकुर्याज्जागरणंनिशि ततःप्रभातेविमलेस्नात्वापूजांसमापयेत् पूर्वोक्तविधिनानेनकर्तव्यंशिवपूजनं तत्सर्वं
दापयेद्भक्त्याब्राह्मणायकुटुंबिने विप्रायवेदविदुषेवस्त्रालंकारभोजनैः गुरुंसपत्निकंपूज्यततोभक्त्याक्षमापयेत् यन्मयाकृतसंकल्पो
व्रतेस्मिन्ब्राह्मणप्रभो तत्सर्वंपूर्णतांयातुयुष्मद्दृष्टिविलोकनात् एवंयःकुरुतेपार्थशास्त्रोक्तंरोटकव्रतम् अनायासेनसिध्यंतितद्धृघाः
सर्वेमनोरथाः सभर्तृकामहानारीकरोतिविधिवद्व्रतम् पतिव्रतासाकल्याणीजायतेनात्रसंशयः मयाअनुष्ठितस्यसार्धमासत्रया
त्मकस्यबिल्वव्रताख्यस्यकर्मणःसांगतासिद्ध्यर्थंब्राह्मणायएतद्दायनप्रदानंकरिष्ये ब्राह्मणंसंपूज्य विप्रायवेदविदुषेश्रोत्रियायकु
टुंबिने नरकोत्तारणार्थायशंकरःप्रीयतांनमः इतिदानमंत्रः इतिशिवपुराणेबिल्वरोटकसोमनाथव्रतकथोद्यापनम् अथाश्वि
नशुक्लप्रतिपदिदौहित्रेणमातामहश्राद्धंकार्यम् तदुक्तंहेमाद्रौ जातमात्रोपिदौहित्रोजीवत्यपिचमातुले कुर्यान्मातामहश्राद्धंप्रति-
पद्याश्विनेसिते इयंचसंगवव्यापिनीग्राह्येतिनिर्णयदीपेउक्तम् प्रतिपद्याश्विनेशुक्लेदौहित्रस्त्वेकपार्वणं श्राद्धंमातामहंकुर्यात्सपि

व्र-रा-
३०

नासंगवेसति जातमात्रोपिदौहित्रोजीवत्यपिहिमातुले प्रातःसंगवयोर्मध्येयाश्वयुक्प्रतिपद्भवेत् अत्रापिताइतिविशेषणात् जीव-
त्पितृकएवाधिकारी अतएवपिंडरहितंकुर्यात् मुंडनंपिंडदानंचप्रेतकर्मचसर्वशः नजीवत्पितृकःकुर्याद्गुर्विणीपतिरेवच अत्रैव
नवरात्रारंभः तत्रपरविद्धाग्राह्या तदुक्तं गोविंदार्णवेमार्कंडेयपुराणदेवीपुराणयोः पूर्वविद्धातुयाशुक्लाभवेत्प्रतिपदाश्विनी
नवरात्रव्रतंतस्यांनकार्यंशुभमिच्छता देशभंगोभवेत्तत्रदुर्भिक्षंचोपजायते नंदायांदर्शयुक्तायांयत्रस्यान्मंत्रपूजनं तथादेवीपुरा
णे नदर्शकलयायुक्ताप्रतिपच्चंडिकार्चने उदयेद्विमुहूर्तापिग्राह्यासोदयकारिणी यदापूर्वदिनेशुद्धाभूत्वापरदिनेपिच वर्धतेच
तदाभूत्वासंपूर्णत्वादमांविना यानितुद्वितीयायोगनिषेधपराणिवचनानिश्रुतानितानिश्राद्धादिपराण्येव परदिनेप्रतिपदोसत्वेतु
अमायुक्तापिग्राह्या अमायुक्ताप्रकर्तव्येतिनृसिंहप्रसादोदाहृतवचनान्यपिएतद्विषयाण्येव अत्रदेवीपूजाप्रधानम् अष्टम्यांचन
वम्यांचजगन्मातरमंबिकां पूजयित्वाश्विनेमासिविशोकोजायतेनरः यतीचब्रह्मचारीचविधवाचरजस्वला नवरात्रंचोपवासमे-
कभुक्तमयाचितम् चैत्रावैधृतियुक्ताचेत्प्रतिपच्चंडिकार्चने तयोरंतेविधातव्यंकलशस्थापनंध्रुवं प्रतिपद्याश्विनेमासिभवेद्वैधृ
तिचित्रयोः आद्यपादौपरित्यज्यप्रारंभेन्नवरात्रकं चित्रावैधृतिसंयुक्ताप्रतिपत्तुभवेन्नृप वैधृत्यावापियुक्तास्यात्तदामध्यंदिने
रवौ त्याज्याअंशास्त्रयस्त्वाद्यास्तुरीयांशेतुपूजनम् नरात्रौस्थापनंकार्यंनचकुंभाभिषेचनम् भास्करोदयमारभ्ययावत्तुदश

प्र०
१

३०

नाडिकाः मानःकालइतिप्रोक्तः स्थापनारोपणादिषु आद्याःषोडशनाडीस्तुत्यक्त्वायःकुरुतेनरः कलशस्थापनंतत्रअरिष्टंजायतेध्रुवं
वृद्धौसमाप्तिरष्टम्यांह्रासेनप्रतिपन्निशि प्रारंभोनवचंड्यास्तुनवरात्रमतोर्थवत् तिथिवृद्धौतिथिह्रासेनवरात्रमपार्थकं घटस्थाप
नविधिः प्रतिपदिप्रातरभ्यंगंकृत्वादेशकालौसंकीर्त्यममेहजन्मनिदुर्गाप्रीतिद्वारासर्वापच्छांतिपूर्वकदीर्घायुर्विपुलधनपुत्रपौत्राद्यन
वच्छिन्नसंततिवृद्धिस्थिरलक्ष्मीकीर्तिलाभशत्रुपराजयसदभीष्टसिध्यर्थंशारदनवरात्रेप्रतिपदिविहितंकलशस्थापनंदुर्गापूजांकु-
मारिपूजादिकरिष्ये इतिसंकल्प्य तदंगंगणपतिपूजनंपुण्याहवाचनंमातृकापूजनंनांदीश्राद्धंऋत्विग्वरणंचकरिष्ये ततोमहीद्यौरिति
भूमिंस्पृष्ट्वा ओषधयःसंवदंतेइतियवान्निक्षिप्य आकलशेष्वितिकुंभंसंस्थाप्य इमंमेगंगेइतिजलेनापूर्य गंधद्वारामितिगंधं ओषध-
यइतिसर्वौषधीः कांडात्कांडादितिदूर्वाः अश्वत्थेवइतिपंचपल्लवान् स्योनापृथिवीतिसप्तमृदः याःफलिनीरितिफलं सहिरत्नानी
तिपंचरत्नानि हिरण्यरूपइतिहिरण्यंक्षिप्त्वा युवासुवासाइतिवस्त्रेणसूत्रेणवावेष्ट्य पूर्णादर्वीतिपूर्णपात्रंकलशोपरिनिधाय तत्र
वरुणंचसंपूज्य जीर्णायांनूतनायांवाप्रतिमायांदुर्गामावाह्यपूजयेत् नूतनमूर्तिकरणेग्न्युत्तारणंकुर्यात् अथपूजा आगच्छवरदेदे
विदैत्यदर्पनिषूदनि पूजांगृहाणसुमुखिनमस्तेशंकरप्रिये सर्वतीर्थमयंवारिसर्वदेवसमन्वितं इमंघटंसमागच्छतिष्ठदेविगणैःस
ह दुर्गादेविसमागच्छसान्निध्यमिहकल्पय बलिंपूजांगृहाणत्वमष्टभिःशक्तिभिःसह इतिआवाह्य शंखचक्रगदाहस्तेशुभ्रवर्णे

शुभासने ममदेविवरंदेहिसर्वैश्वर्यप्रदायिनि सहस्रशीर्षा॰ हिरण्यवर्णां॰ इत्यावाहनं नानाप्रभासमाकीर्णंनानावर्णविचित्रितं आसनं
कल्पितंदेविप्रीत्यर्थंतवगृह्यतां पुरुषएव॰ तांमआ॰ इत्यासनं गंगादिसर्वतीर्थेभ्यआनीतंतोयमुत्तमं पाद्यंतेहंप्रदास्यामिगृहाणपर-
मेश्वरि एतावा॰ अश्वपूर्वां॰ पाद्यं गंधाक्षतैश्चसंयुक्तंफलपुष्पयुतंतव अर्घ्यंगृहाणदत्तंमेप्रसीदपरमेश्वरि त्रिपादूर्ध्व॰ कांसोस्मितां॰
अर्घ्यं गंगागोदावरीचैवयमुनाचसरस्वती मयाआचमनीयार्थमानीतंतोयमुत्तमं तस्माद्विरा॰ चंद्रांप्र॰ आचमनीयं पंचामृतंमया
नीतंपयोदधिसमन्वितं घृतंमधुशर्करयाप्रीत्यर्थंप्रतिगृ॰ श्रुतिमंत्राः आप्यायस्व॰ दधिक्राव्णोअ॰ घृतंमिमिक्षे॰ मधुवाताऋतृ॰ ख
स्वादुःपवस्वेति पंचभिर्मंत्रैःपंचामृतस्नानं ज्ञानसूर्तेभद्रकालिदिव्यमूर्तेसुरेश्वरि स्नानंगृहाणदेवित्वंनारायणिनमोस्तुते यत्पुरु-
षेण॰ आदित्यवर्णे॰ स्नानं सूक्ष्मतंतुविनिर्मितंनानावर्णविचित्रितं वस्त्रंगृहाणमेदेविप्रीत्यर्थंप्रति॰ तस्माद्यज्ञा॰ क्षुत्पिपासा॰ उत्त
रीयं अलंकारान्महादिव्यान्नानारत्नविनिर्मितान् गृहाणदेवदेवित्वंप्रसीदपरमेश्वरि अलंकारान्स॰ मलयाद्रिसमुद्भूतकर्पूराग
रुवासितं मयानिवेदितंभक्त्याचंदनंप्रतिगृ॰ तस्माद्यज्ञा॰ गंधद्वारां॰ गंधं अक्षताश्चसुरश्रेष्ठाःकुंकुमेनसमन्विताः मयानिवेदि-
ताभक्त्याप्रीत्यर्थंप्रतिगृ॰ अक्षतान् मंदारपारिजाताश्चपाटलीकेतकीतथा मारुतंमोगरंचैवशतपत्राणिचंपकं तस्मादश्वा॰ म
नसःकाम॰ पुष्पाणि अहिरिवभोगैः ऋक् परिमलद्रव्याणि अथांगपूजा दुर्गायैनमः पादौपूजयामि महाकाल्यै॰ गुल्फौपू॰

मंगलायै॰ जानुनी पू॰ कात्यायिन्यै॰ उरू पू॰ भद्रकाल्यै॰ कटी॰ कमलायै॰ नाभिं पू॰ शिवायै॰ उदरं॰ क्षमायै॰ हृदयं॰ स्कंदायै॰ कंठं॰ महिषासुरम
र्दिन्यै॰ नेत्रे॰ उमायै॰ शिरः पू॰ विंध्यवासिन्यै॰ सर्वांगं पूजयामि दशांगं गुग्गुलं धूपं चंदनागरुसंयुतं मयानिवेदितं भक्त्या गृहाण परमेश्वरि
यत्पुरुषं॰ कर्दमेनप्रजा॰ धूपं॰ आज्यं च वर्तिसंयुक्तं वह्निना योजितं मया दीपं गृहाण देवि त्वं प्रीत्यर्थं प्रतिगृह्यतां ब्राह्मणोस्य॰ आपस्रजं॰
दीपं॰ अन्नं चतुर्विधं स्वादुरसैः षड्भिः समन्वितं भक्ष्यभोज्यसमायुक्तं प्रीत्यर्थं प्रतिगृह्यतां चंद्रमाम॰ आर्द्रां पुष्क॰ नैवेद्यं॰ आचमनीयं॰ म
लयाचलसंभूतं कस्तूर्यादिसमन्वितं करोद्वर्तनकं देवि गृहाण परमेश्वरि करोद्वर्तनं॰ इदं फलं मया देवि स्थापितं पुरतस्तव तेन मे सफ-
लावाप्तिर्भवेज्जन्मनि जन्मनि नाभ्या॰ आर्द्रां यः करिणीं॰ फलं॰ पूगीफलं महद्दिव्यं नागवल्यादलैर्युतं कर्पूरैलासमायुक्तं तांबूलं प्रतिगृ॰
तांबूलं॰ हिरण्यगर्भेति दक्षिणां यज्ञेन यज्ञ॰ यः शुचिः प्र॰ मंत्रपुष्पांजलिं अश्वदायै गोदायै इत्यादि प्रार्थयेत् श्रियेजातः नीराजनं॰ श्री
सूक्तं संपूर्णं पठित्वा पुष्पांजलिः मंत्रहीनं क्रियाहीनं भक्तिहीनं सुरेश्वरि यत्पूजितं मया देवि परिपूर्णं तदस्तु मे महिषघ्नि महामाये चा-
मुंडे मुंडमालिनि यशो देहि धनं देहि सर्वान्कामांश्च देहि मे नमस्कारः ततो क्षत्रिय वरणं अथ कुमारीपूजा एकवर्षा तु या कन्या पू
जार्थं तां विवर्जयेत् गंधपुष्पफलादीनां प्रीतिस्तस्या न विद्यते मंत्राक्षरमयीं लक्ष्मीं मातृणां रूपधारिणीं नवदुर्गात्मिकां साक्षात्क-
न्यामावाहयाम्यहं द्विवर्षकन्यामारभ्य दशवर्षांतविग्रहां पूजयेत्सर्वकार्येषु यथाविध्युक्तमार्गतः कुमारिका द्विवर्षा तु त्रिवर्षा तु त्रिमू

व्र.रा.
३२

र्निका चतुर्वर्षातुकल्याणीपंचवर्षातुरोहिणी। षष्ठवर्षातुकालीस्यात्सप्तवर्षातुचंडिका अष्टवर्षाशांभवीचदुर्गाचनवमेस्मृता दशव
र्षासुभद्रोक्तनामतःपरिपूजयेत् प्रातःकालेविशेषेणकृत्वाभ्यंगंसमाहितः आवाहयेत्ततःकन्यांमंत्रैरेभिःपृथक्पृथक् जगत्पूज्येज
गद्वंद्येसर्वशक्तिस्वरूपिणि पूजांगृहाणकौमारिजगन्मातर्नमोस्तुते प्रतिपदमारभ्यदशमीपर्यंतंकन्यांपूजयेत् प्रतिपदिकन्यापू
जामंत्रः त्रिपुरांत्रिगुणाधारांत्रिमार्गज्ञानरूपिणीं त्रैलोक्यवंदितांदेवींत्रिमूर्तिंपूजयाम्यहं द्वितीयायां कलात्मिकांकलातीतांका
रुण्यहृदयांशिवां कल्याणजननींनित्यांकल्याणींपूजयाम्यहं तृतीयायां अणिमादिगुणाधारामकाराद्यक्षरात्मिकाम् अनंतश
क्तिभेदांतांरोहिणींपूजयाम्यहं चतुर्थ्यां कामचारींकामरात्रिंकालचक्रस्वरूपिणीम् कामदांकरुणाधारांकालिकांपूजयाम्यहं पंचम्यां
उग्रध्यातांचोग्ररूपांदुष्टसंरनिर्बाहिणीं चार्वंगींचंडिकांलोकेपूजितांपूजयाम्यहं षष्ठ्याम् सदानंदकरींशांतांसर्वदेवनमस्कृतां सर्व-
भूतात्मिकांलक्ष्मींशांभवींपूजयाम्यहं सप्तम्यां दुर्गमेदुस्तरेयुद्धेभयदुःखविनाशिनीं पूजयामिसदाभक्त्यादुर्गांदुर्गार्तिनाशिनीम्
अष्टम्यां सुंदरींस्वर्णवर्णाभांसर्वसौभाग्यदायिनीं सुभद्रजननींदेवींसुभद्रांपूजयाम्यहं नवम्यां इतिकुमारीपूजनं अष्टरात्रेनदो
षोयंनवरात्रेतिथिक्षये सूतकेपूजनंप्रोक्तंजपदानंविशेषतः देवीमुद्दिश्यकर्तव्यंतत्रदोषोनविद्यते रजस्वलांतथाशौचेब्राह्मणेश्च
सुपूजयेत् गंधालंकारतांबूलपुष्पमालानुलेपनैः उपवासंनदुष्यंतिदंतधावनमंजनम् इतिआश्विनशुक्लप्रतिपत्कृत्यं अथकार्ति

प्र०
१
३२

कशुक्लप्रतिपत्सापूर्वायात्या पूर्वविद्धाप्रकर्तव्याशिवरात्रिर्बलेर्दिनम् वत्सरादौवसंतादौबलिराज्येतथैवच तैलाभ्यंगमकुर्वाणोनरकंप्र
तिपद्यते प्रातर्गोवर्धनःपूज्योद्यूतंचापिसमाचरेत् पूजनीयास्तथागावस्त्याज्यंदोहनमंजसा अथकथा वालखिल्याऊचुः प्रतिपद्यु
दयेभ्यंगंकृत्वानीराजनंततः सुवेषःसत्कथागीतैर्दानैश्चदिवसंनयेत् शंकरस्तुतदाद्यूतंससर्जसुमनोहरं कार्तिकेशुक्लपक्षेतुप्रथमे-
हनिसत्यवत् प्रत्युवाचवचश्चेदंदेवींप्रतिसदाशिवः कालक्षेपायकेषांचित्केषांचिद्धनहेतवे केषांचिद्धननाशायपश्यद्यूतंकृतंमया तस्य
त्वंकौतुकंपश्यभुवनंलापयाम्यहं ऊच्येत्यंक्रीडितंताभ्यांभवान्याचजितंतदा पुनर्द्वितीयंभुवनंलापितंनिर्जितंतया पुनस्तृतीयंभुवनं
लापितंनिर्जितंतया पुनर्वृषंपुनश्चर्मपुनःपन्नगबंधनम् शशिलेखांडमरुकंसर्वंतस्याप्यजीजयत् निर्गतस्तुहरोगेहाच्चीरवल्कलधारकः
गंगातीरंसमागत्यतस्थौचिंतासमन्वितः तस्मिन्क्षणेकार्तिकेयःखेलितुंचगतःक्वचित् गंगातीराद्ययौगेहमपश्यत्सपिशंकरं ईषत्कु
द्धंविरक्तंचननामचरणौपितुः तेनापिमूर्ध्निचाघ्रातःपुत्रयाहिगृहंसुखं तवमात्राजितश्चाहंगच्छामिगहनंवनं स्कंदउवाच कथंमा
त्राजितोदेवोवनंकस्माच्चगच्छति अहमप्यागमिष्यामित्वत्पादौसेवयाम्यहं शिवउवा० विजित्यतवमात्रातुक्षणंनस्थेयमत्रवै म
मलोकेनथेत्युक्त्वाक्वचिद्गच्छाम्यहंततः स्कंदउ० मागच्छत्वंमहादेवद्यूतमार्गंप्रदर्शय आनीयतेमयाजित्वासर्वंतवधनादिकं शिवेना
पितथेत्युक्त्वाद्यूतमार्गःप्रदर्शितः स्कंदोपिगृहमागत्यपार्वतींवाक्यमब्रवीत् स्कंदउवा० देविदेवोगतःक्वासौवृषभोत्रैवसंस्थितः

शीर्षेचनविधुःकस्मान्मातःसत्यंवदाद्यमे देव्युवाच स्वयमेवकृतंद्यूतंस्वयमेवपराजितः स्वयमेवगतःक्रोधात्प्रार्थ्यमानांसकथं मया स्कंदउ॰
मयासहक्रीडितव्यंकथंतत्क्रीडनंत्विति देव्यक्रीडत्तेनसार्द्धंततःस्कंदेननिर्जितं मयूरेणवृषस्तस्याःशक्त्यापन्नगबंधनं वृषेणेंदुस्ततो
र्धगंगंतत्सर्वंतेननिर्जितं कौपीनंनिर्जितंचर्मसंगृहीत्वातदुपाययौ गंगातीरेयत्रशिवस्तत्रागत्यन्यवेदयत् ततोदेवीसमीपेतुविघ्नराजःस
माययौ किमर्थंम्लानवदनादेविजानासितद्वद देव्युवा॰ मयाजितोमहादेवःसतुगेहाद्विनिर्गतः आयास्यतिवृषाद्यर्थमितिसंचिंत्यसं-
स्थितं नवभ्रात्रानुनज्जित्वासर्वंतस्मैनिवेदितं नायास्यत्यधुनादेवइतिचिंतापरास्म्यहं गणेशउ॰ देविशिक्षयमंद्यूतंजेष्यामिभ्रा
तरंहरम् आनयिष्यामिसामग्रींयद्यहंस्यांसुतस्तव इतिपुत्रवचःश्रुत्वातस्मैद्यूतमशिक्षयत् संगृहीत्वापाशयुगंसारिकाःशीघ्रमाय
यौ पृच्छापृच्छायत्रदेवःस्कंदोयत्रव्यवस्थितः गणेशउवाच मयानीनाविमौपाशौसारिकाःपटएवच क्रीडत्वंतुमयासा-
र्द्धंदेवस्याग्रेममाग्रज इतिभ्रातृवचःश्रुत्वाद्युभाभ्यांक्रीडितंतदा मूषकेणबलीवर्दंमयूरंचाप्यजीजयत् शिवस्यसर्वंविषयंस्कं-
दस्यचतथैवच गृहीत्वासतुविघ्नेशस्तत्कालेपार्वतींययौ पार्वत्यपिचसंतुष्टागणेशंवाक्यमब्रवीत् सम्यक्कृतंत्वयापुत्रनानीतो
सौमहेश्वरः सामदानादिकंकृत्वाआनयात्रमहेश्वरम् तथेत्युक्त्वागणेशोसौसमारुह्यचमूषकं त्वरितंचाययौतत्र गृहेनतुमहेश्व
रम् ईश्वरस्तुसमुत्थायहरिद्वारंसमागतः नारदेरितवृत्तांतोविष्णुस्तत्रसमागतः विष्णुरुवा॰ व्यक्षांविद्यांकुरुशिवएकाक्षोहं

भवाम्यहं एकश्चासावक्षःपाशकइतिविग्रहेपिपशिनिष्ठितरूपत्वात्काणोभवेतिशब्दच्छलम् रावणेनतथेत्युक्तंकाणोभवजनार्दन वि
ष्णुरुवा० ओतुवत्सश्यसेमांत्वंतस्मादोतुर्भविष्यसि नारदउवा० देवसिद्धंमहत्कार्यमायातिसगणेश्वरः ज्ञातुमत्रभवद्वृत्तंमूषकस्त
स्यधर्षितां इतिश्रुत्वानारदस्यवचनंरावणोग्रतः कुर्वन्मार्जारवच्छब्दंमूषकोसौपलायितः मूषकंत्यज्यगणपःशनैःशनैरुपाययौ
जातोविष्णुःपाशइतिदूरतस्तद्विलोकितम् प्रणिपत्यमहादेवंविनयाननतकंधरः गणेशउ० आगम्यतांदेवगेहंदेवीमानपुरःसरं
यदिनायासिगेहंत्वंप्राणांस्त्यक्ष्यतिचांबिका त्वय्यागतेमयासर्वंकार्यमेतदुपायनम् महादेवउवा० एषाप्यक्षामयाविद्याऽधुनागण
पनिर्मिता अनयाक्रीडनेदेवीआगमिष्येगृहंतदा गणेशउवा० सर्वथैवक्रीडितव्यंदेव्यानास्त्यत्रसंशयः आगम्यतांगृहंदेवप्रत्यासा
हिहिमाव्रज इतितस्यवचःश्रुत्वाईश्वरःसगणोययौ नारदोपिगतस्तत्रमहोतुरपिचागतः उपविष्टास्तुकैलासेदेवास्तत्रसमागताः
दृष्ट्वादेवींप्रहस्यादौमहेशोवाक्यमब्रवीत् अक्षविद्यामहादेविगंगाद्वारेविनिर्मिता अनयाजयसेत्वंचतदात्वंसत्यभाषिणी देव्युवा०
वृषादितवसामग्रीमयेयंत्वापिताशिव त्वयाकिंत्वाप्यतेब्रूहिदर्शयस्वसदोगतां इतिश्रुत्वावचस्तस्याःप्रेक्षताधोमुखंहरः तस्मिन्क्ष
णेनारदेनस्वकौपीनंसमर्पितं वीणादंडश्चोपवीतमनेनमीयतांमिति सदाशिवःप्रसन्नोभूत्क्रीडनंसमचक्रतुः यद्यद्याचयतेरुद्रस्तथा
विष्णुःप्रजायते यद्यद्याचयतेदेवीविपरीतःपतत्यसौ स्वकीयाभरणाद्यंचमहादेवेननिर्जितं स्कंदालंकारिकंसर्वंपुनरासंहरेणच

ततोगणेशः प्रोवाच वाक्यंसदसिगर्वितः नक्रीडितव्यंहेमातः पाशोलक्ष्मीपतिःस्वयम् कृतोहरेणसर्वस्वंतेहरिष्यतिमत्पिता इतिपुत्र
वचःश्रुत्वापार्वतीक्रोधमूर्छिता तथाविधायमालोक्यरावणोवाक्यमब्रवीत् रावणउ॰ पापिष्ठेनाद्यशासोस्मिदुर्दुरूहेनविष्णुना
अधर्मोयंनकर्तव्यइत्युक्तेनमयायतः देव्युवाच सर्वान्शपिष्येवत्साहंधूर्तानेतान्महाबलान् सामर्थ्यंपश्यमेपुत्रधर्मत्यागफलंतथा
देवयस्मात्दबलयाकपटंचकृतंत्वया तस्मात्तदास्तुतेमूर्धागंगाभारप्रपीडितः इतस्ततःकुचेष्टांत्वंयतःशिक्षयसेसुने त्वमेपितेस्रु
रवंस्त्रीणांनकदापिभविष्यति यतःकृतात्वबलयासहमायात्वयाहरे एषवैरीरावणोयंतवभार्यांनयिष्यति एषवैरीभवितायः अ
यंपुनस्तवभार्यांनयिष्यतिसबंधद्व्यादेनदिदंप्रयोगोदुष्टः हित्वामांमातरंपुत्रबालकत्वंत्वयाकृतं अतस्त्वंनयुवावृद्धोबालएवभ
विष्यसि गणेशउ॰ अनेनचोतुरूपेणमूषकोयंपलायितः मध्येमार्गंकृतंविघ्नंशापेनंराक्षसाधमम् देव्युवाच यस्माद्विघ्नंत्वयादुष्ट
कृतंमद्बालकस्यतु तस्मादयंनवारिपुर्विष्णुस्त्वांघातयिष्यति इतिदेव्यावचःश्रुत्वासर्वेसंक्रुद्धमानसाः देवीशापेमनश्चक्रुर्नारदोवा-
क्यमब्रवीत नारदउ॰ कोपंकुर्वंतुमादेवानेयंशाप्याकदाचन सर्वेषामादिमायेयंयथायोग्यफलप्रदा नायंशापइयंदेवीस्मर्तव्यातु
विचक्षणैः गंगासदातिष्ठतुरुद्रमस्तकेबलाद्रमांवानयतुक्षपाचरः जायाहरस्याथयथोचितामृतिश्चानंगतृष्णारहितःकुमारः –
अहंभ्रमामिधरिणींनस्थातव्यंतपोधनैः सम्यग्देवित्वयाप्रोक्तंशृणिवदानींवचोमम सर्वक्रोधापनुत्यर्थंननर्तमुनिपुंगवः कस्माना

दंचकारोच्चैर्हाहाहीहीनिचाब्रवीत् तस्यचेष्टांविलोक्याथसर्वेहर्षमवाप्नुयुः देव्युवाच भोभोविदूषकश्रेष्ठकृतकृत्योसिनारद विदू
षकविनोदकृत्व वरंवरयभद्रंतेयद्यन्मनसिरोचते नारदउवा॰ याचयंतुवरंसर्वेकोवाकिंयाचयिष्यति सर्वेतेयाचयिष्यंतियथाश्रेष्ठंब्रुवं
तुतत् शिवउवा॰ सर्वेसंक्षम्यतांदेविजितंयद्वृषभादिकं तन्मयातुद्यूतशतैर्नैशात्यंजगदंबिके देव्युवाच मास्तुत्वयासमंनाथस्वप्ने
पिममत्वांतरं एतद्देववरंमन्येक्रोधोमाभून्ममोपरि कार्त्तिकेश॰ कृष्णपक्षेतुप्रथमेहनिसत्यवत् जयोलब्धोमयात्वत्तःसत्येनैवमहेश्वर त
स्माद्यूतंप्रकर्तव्यंप्रभातेतत्त्वमानवैः तस्मिन्द्यूतेजयोयस्यतस्यसंवत्सरंजयः विष्णुरुवा॰ अहंयंयंकरिष्यामिश्रेष्ठंवाल्लघुमेववा त
थात्तथाभवतुतद्दूरमेनंवदाम्यहं स्कंदउवा॰ सदामनस्तपस्यायांममतिष्ठतुदेवताः कदापिविषयेमास्तुदेयएषवरोमम गणेशउ॰
संसारेयानिकार्याणितदादौममपूजनं यांतुसिद्धिंममद्रूपांविनासित्थ्यंतुमाक्वचित् रावणउ॰ वेदव्याख्यानसामर्थ्यंममशीघ्रंभव
त्विति सदाशिवेसदाचास्तुभक्तिर्मेव्यभिचारिणी नारदउ॰ क्रुद्धाक्रुद्धाश्चयेकेचिन्मूर्खामूर्खाश्चयेजनाः मद्वाक्यंसत्यमित्येवमानयंतु
सदासुराः इत्युक्त्वांतर्हिताःसर्वेदेवारुद्रपुरोगमाः तस्मात्प्रतिपदिद्यूतंकुर्यात्सर्वोपिवैजनः द्यूतंनिषिद्धंसर्वत्रहित्वाप्रतिपदंबुधाः
स्वस्योद्यमादिज्ञानायकुर्याद्यूतमतंद्रितः विशेषवच्चभोक्तव्यंसुहृद्भिर्ब्राह्मणैःसह पक्वान्नादिविशेषमित्यर्थः योषिताभिश्चस-
हितंनेयासाचभवेन्निशा ततःसंपूजयेन्मानैरंतःपुरसुवासिनीः पदातिजनसंघातान्ग्रैवेयैःकटकैःशुभैः स्वनामांकैःस्वयंराजा

तोषयेत्स्वजनान्पृथक् वृषभान्माहिषांश्चैवयुद्ध्यमानान्परैःसह गजानश्वांश्चयोधांश्चपदातीन्समलंकृतान् मंचारूढःस्वयंपश्येन्नट
नर्तकचारणान् सुधापतेत्रासयेच्चगोमहिष्यादिकंतथा ततोपरार्धसमयेपूर्वस्यांदिशिकाश्यप मार्गपालींप्रबध्नीयात्तुंगेस्तंभेष्वपि-
पादपे पालींकुशमयींदिव्यांलंबकैर्बहुभिर्नयेत् दर्शयित्वागजानश्वान्सायमश्वारूतेनयेत् कृतहोमैर्द्विजेंद्रैश्चबध्नीयान्मार्गपा
लिकां मार्गपालिनमस्तेस्तुसर्वलोकसुखप्रदे विधेयैःपुत्रदाराद्यैःपुनरेहिव्रतस्यमे नीराजनंचतत्रैवकार्यंराष्ट्रजयप्रदम् मार्गपालीं
समुल्लिख्यनीरुजास्तुसुखान्विताः तस्मादेतत्प्रकुर्वीतद्यूताद्यंविधिपूर्वकं इतिसनत्कुमारसंहितायांद्यूतविधिः तत्रैवबलिख्रि
ल्याऊचुः पूर्वविद्धाप्रकर्तव्याप्रतिपद्बलिपूजने वर्धमानतिथिर्नंदायदासार्धत्रयात्मिका द्वितीयावर्धगामित्वादुत्तरातत्रैवोच्यते
बलिमालिख्यदैत्येंद्रंवर्णकैःपंचरंगकैः गृहमध्यमशालायांविंध्यावल्यासहासितं जिह्वाचार्वक्षिणीप्रांतेकरयोःपादयोस्तले रक्त
वर्णेनास्यकेशाःकृष्णेनेवसमालिखेत् सर्वांगंपीतवर्णेनशस्त्राद्यंनीलवर्णकैः वस्त्रंचश्वेतवर्णेनयथाशोभंप्रकल्पयेत् सर्वा
भरणशोभाढ्यंद्विभुजंतद्वपचिह्नयुक् लोकोलिखेद्गृहस्यांतःशय्यायांशुक्लतंडुलैः मंत्रेणानेनसंपूज्यःषोडशैरुपचारकैः बलिरा
जनमस्तुभ्यंदैत्यदानवपूजित इंद्रशत्रोमरारातेविष्णुसान्निध्यदोभव बलिमुद्दिश्ययदीयंतेदानानिमुनिपुंगवाः यान्यहान्यक्ष
याण्याहुर्मयैतत्संप्रदर्शितं कौमुदीनिर्बलेयस्माद्दीयतेस्यांयुधिष्ठिर पार्थिवैर्द्वैर्मुनिवरास्तेनेयंकौमुदीस्मृता योयादृशेन-

भावेनतिष्ठत्यस्यांयुधिष्ठिर हर्षदैन्यादिरूपेणतस्यवर्षंप्रयातिवै बलिपूजांविधायैवपश्चाद्गोक्रीडनंचरेत् गवांक्रीडादिनेयत्ररात्रौदृ
श्यतेचंद्रमाः सोमोराजापशून्हंतिसुरभिःपूजकांस्तथा प्रतिपद्दर्शसंयोगेक्रीडनंचगवांमतं परविद्धेषुयःकुर्यात्पुत्रदारधनक्ष
यः अलंकार्यास्तदागावोग्रासाद्यैश्चसुरर्चिताः गीतवादित्रनिर्घोषैर्नीयैन्नगरबाह्यतः आनीयचगृहंपश्चात्कुर्यान्नीराजनंवि-
धिं अथचेत्प्रतिपत्स्वल्पानारीनीराजनंचरेत् द्वितीयायांतदाकुर्यात्सायंमंगलमालिकां एवंनीराजनंकृत्वासर्वपापैःप्रमुच्यते प्र
तिपत्पूर्वविद्धैवयष्टिकाकर्षणेभवेत् कुशकाशमयींकुर्याद्यष्टिकांसुदृढांनवाम् देवद्वारेनृपद्वारेथवानेयाच्चतुष्पदे तामेकतोराज
पुत्राहीनवर्णास्तथैकतः गृहीत्वाकर्षयेयुस्तांयथाचारंमुहुर्मुहुः समसंख्याद्वयोःकार्यासर्वेपिबलवत्तराः जयोत्रहीनजातीनांज
योराज्ञस्तुवत्सरम् उभयोःपृष्ठतःकार्यारेखारेखाकरोपरि रेखांतेयोनयेत्तस्यजयोभवतिनान्यथा जयचिह्नमिदंराजाविदधी
तप्रयत्नतः सनत्कुमारसंहितायां वालखिल्याऊचुः कार्तिकस्यसितेपक्षेअन्नकूटंसमाचरेत् गोवर्धनोत्सवश्चैवश्रीविष्णुः
प्रीयतामिति ऋषयऊचुः कोसौगोवर्धनोनामकस्मात्तंपरिपूजयेत् कस्मात्तदुत्सवःकार्यःकृतेकिंचफलंभवेत् वालखिल्याऊ०
एकदाभगवान्कृष्णोगतोगोपालकैःसह गृहीत्वागाःप्रतिपदिकार्तिकस्यगतोवने तत्रनानाविधालोकागोप्यश्चापिसहस्रशः गो
वर्धनसमीपेतुकुर्वंत्युत्सवमादरात् खाद्यंलेह्यंचचोष्यंचपेयंनानाविधंकृतं कृतानगास्तथानानानृत्यंतिचपुरेजनाः नानापता-

काः संगत्यकेचिद्धावंतिचाग्रतः केचिद्गोपाः प्रनृत्यंतिस्तुवंतिचतथापरे इतस्ततोवितानानितोरणानिसहस्रशः दृष्ट्वेतत्कौतुकंकृष्णो
वाक्यमेतदुवाचह कृष्णउ० उत्सवः क्रियतेकस्यदेवताकाचपूज्यते पक्वान्नखादनार्थायकल्पितोवोत्सवोधुना नभक्षयंतियेदेवास्ते
भ्योन्नंनैवदीयते दृष्ट्वेदृशींभवद्बुद्धिंगोपालावेधसाकृताः गोपालाऊचुः एवंमावदकृष्णत्वंवृत्रहंतुर्महोत्सवः वार्षिकः क्रियतेस्मा
भिर्देवेंद्रस्यचतुष्टये इमंपूजयभद्रंतेभविष्यतिनसंशयः अद्यकुर्वंतिदेवेंद्रमहोत्सवमिमंनरः कुर्वेइतिप्रतिजानातीतिशेषः इलो
पआर्षः नरइतिराज्ञोलक्षणम् दुर्भिक्षंचतथावृष्टिर्देशेनस्यनजायते तस्मात्त्वमपिकृष्णात्रकुरूत्सवमनेकधा कृष्णउ० अयंगोवर्ध
नः साक्षाद्दृष्टिसौभिक्ष्यकारकः मथुरास्थैर्व्रजस्थैश्चपूर्वैश्चायंप्रपूजितः हित्वेतंपूज्यतेलोकेवृथेंद्रः पूज्यतेकथं उत्सवंक्रियमाणंच
प्रत्यक्षोयंभक्षतिकिंच करिष्यतिकृषिंसम्यगुपसर्गाद्धनिष्यति यदायदासंकटंमेमहदागत्यजायते तदातदापूजयामिदृश्यंगोवर्ध
नंगिरिं श्रवणेश्रवणेगोपावार्तांकुर्वंतिकिंत्विदं तेषांमध्येकैश्चिदुक्तंकृष्णोक्तंक्रियतामिति यदाखादतिचान्नंचेत्तगोगोवर्धन
स्तदा तदाकृष्णोक्तमखिलंसत्यमेवभविष्यति सर्वएवतदागोपाविनिश्चित्यचनंदजं वचनंप्राहुरित्थंचेन्निश्चयोस्तितदाकुरु
सर्वेषामग्रणीर्भूत्वागोवर्धनमहोत्सवम् ततः कृष्णस्तथेत्युक्त्वाउत्सवेकृतनिश्चयः नानासामग्रिकंचक्रुर्यथोक्तंनंदसूनुना नानाव
स्त्राणिपात्राणिविस्तृतानिनगाग्रतः तत्रदत्तान्नपुंजस्तुयथागोवर्धनोमहान् भक्तंसूपानिशाकाश्चकांजिकंवटकांस्तथा रोटकाः

पूरिकाद्यंचलड्डुकान्मंडकादिकं दुग्धंदधिघृतंक्षौद्रंलेह्यंचोष्यंतथामिषं कथिकाद्यंसर्वमर्पितत्रदत्वावचोब्रवीत् कृष्णउ० मंत्रंपठित्वागो
पालानेत्रेसंमील्यंतुच गोवर्धनेनभोक्तव्यंसर्वमन्नंनसंशयः कृष्णउ० गोवर्धनधराधारगोकुलत्राणकारक बहुबाहुकृतच्छायगवां
कोटिप्रदोभव लक्ष्मीर्यालोकपालानांधेनुरूपेणसंस्थिता घृतंवहतियज्ञार्थेममपापंव्यपोहतु पठंत्विदंमंत्रयुगंसर्वेमुद्रितलोचनाः
कृष्णोगोवर्धनंविश्यसर्वमन्नमभक्षयत् भक्षणावसरेकैश्चिज्जनैर्दृष्टोगिरिस्तदा अतीवाभ्भूत्तदाश्चर्यंतच्चेतसिमुनीश्वराः ततो-
नाडीद्वयात्कृष्णोगोपान्वाक्यमुवाचसः अहोगोवर्धनेनान्नभक्षणाद्भुक्तमिदंस्फुटम् पश्यंतुसर्वेगोपालाःप्रत्यक्षोयंनसंशयः यद्य-
स्तिसुखवांछावःकुर्वंत्वस्यमहोत्सवम् इतिश्रुत्वावचस्तस्यसर्वेविस्मितमानसाः गोवर्धनोत्सवंचक्रुरिंद्राच्छतगुणंततः इंद्रोत्सवं
द्रष्टुकामःसमागच्छत्तनारदः गोवर्धनोत्सवंदृष्ट्वादेवेंद्रस्यसभांययौ देवेंद्रेणकृतातिथ्योवारंवारंप्रणोदितः नोवाचवचनंकिंचिद्दे
वेंद्रःप्रत्यभाषत इंद्रउवा० युष्माकंकुशलंविप्रवर्ततेवानवेतिवा मदग्रेकथ्यतांदुःखंमुनीश्वरहराम्यहं नारदउ० अस्माकंकिंमु-
नींद्राणामिंद्रदुःखस्यकारणम् परंगोवर्धनःशैलःशक्रोजातोविलोक्यते त्वदुत्सवेपूज्यतेसौगोपालैर्गोकुलेगिरिः अतःपरंयज्ञ
भागान्नग्रहिष्यतिसएवहि इंद्रासनंतथेंद्राणींक्रमात्सैवग्रहिष्यति यस्यवीर्यंचशस्त्रंचतस्यराज्यंप्रजायते किमस्माकंमुनींद्रा-
णांयएवेंद्रासनेवसेत् वर्षद्वामासषट्काद्वाद्रष्टव्योसौसभागतः इत्युक्त्वाचदेवेंद्रंप्रययौनारदोमुनिः इत्यंनारदवाक्यंतच्छ्रु

त्वाशक्रोऽभ्यभाषत अहोआवर्तसंवर्त्तौद्रोणनीलकपुष्कराः सर्वेमेघाजलंगृह्य करकाभिःसमन्वितं प्रयांतुगोकुलेशीघ्रंमारयंतुचगो
पकान् गोवर्धनंस्फोटयंतुवज्रपातैरनेकशः पातयंतुचगाश्चापिगृहाण्युच्चाटयंतुच ततोघनघटाघोषोगोकुलेभूत्मुनीश्वराः जातआ
रादंधकारोमध्याह्नसमयेतदा कुपितास्तुतदागोपाःकिमकांडमुपस्थितं ववर्षुर्बहुपानीयंकरकाभिस्तदाघनाः गोपाऊ॰ हाकृष्णाकृष्णा
हेकृष्णाकिमिदानींविधीयतां मृताःस्मसर्वेगोपालाःकुपितोयंहिवासवः कृष्णउ॰ निमील्याक्षीणिभोगोपाध्येयोगोवर्धनोगिरिः र
क्षाकर्तासएवास्तिनान्योस्तिजगतीतले इत्युक्त्वोत्पाट्यतंशैलंतत्तलेस्थापितास्तुते ततःप्रोवाचवचनंगोपान्प्रतिबलाग्रजः श्रीकृ-
ष्णउ॰ अहोगोवर्धनेनैतत्स्थलंदत्तंव्रजंव्रज अन्यःकोस्तिस्थलंदातुंप्रत्यक्षोयंनगोत्तमः एवंसप्तदिनंतोयंवृष्टंमुसलधारया नाना
देशाययुर्नाशंनगोपाःशरणंययुः गोवर्धनस्यनाम्नैवकृष्णोनित्यंप्रयच्छति पक्वान्नानिचगोपेभ्यस्तत्रतेसुखमावसन् इत्येवंकौतुकं
दृष्ट्वासत्यलोकंययौमुनिः ब्रह्मन्त्वंकिंप्रसुप्तोसिजायतेसृष्टिनाशनं तस्माच्छीघ्रंगोकुलेत्वंगत्वावृष्टिंनिवारय ब्रह्मोवाच किमर्थं
जायतेवृष्टिःकथंसृष्टिविनाशनं कश्चिद्दैत्यःसमुत्पन्नः सर्वमाख्याहिमेमुने नारदउ॰ नोत्पन्नोदैत्यराट्कश्चित्त्यक्तःशक्रोत्सवो-
भुवि गोपालैरितिसंक्रुद्ध इंद्रएवंप्रवर्षति इतितस्यवचःश्रुत्वाहंसमारुह्यवैविधिः आगतोयत्रशक्रोस्तिक्रोधाद्देवःप्रवर्षति
ब्रह्मोवा॰ कथंव्यवसिताबुद्धिरीदृशीतेसुरेश्वर त्रैलोक्यनाथोभगवान्निर्जितव्यःकथंत्वया एकयैवकरांगुल्यापश्यगोवर्धनोधृ

नः ईर्ष्याकथंतेनसाकंत्वयाशक्रविधीयते इतिब्रह्मवचःश्रुत्वामेघान्संस्तभ्यवासवः प्रणिपत्यचतंकृष्णंशक्रोवचनमब्रवीत् क्षंतव्या
मत्कृतिर्विष्णोदासोहंशरणागतः यद्दोचतेतत्सदेयमपराधापनुत्तये कृष्णउ॰ अज्ञात्वातवसामर्थ्यंगोपालैरचितंत्विदम् एषांदंड
स्तुयोग्योयंसम्यगेवत्वयाकृतः अहंकनीयान्तेभ्रातातवाज्ञापरिपालकः शरणागतजातीनांरक्षणंतुमयाकृतं यदिप्रसन्नोदेव
शउत्सवोयंप्रदीयतां गोवर्धनायगिरयेगोकुलंरक्षितंयतः शक्रोपिचतथेत्युक्त्वातत्रैवांतरधीयत गतेशक्रेगिरींद्रंतंसंस्थाप्यहरि
रब्रवीत् कृष्णउ॰ गोपाःपश्यंतुमाहात्म्यमद्भुतंशैलजंतुयत् अद्यारभ्यप्रकर्तव्योमहान्गोवर्धनोत्सवः गोवर्धनेनशैलेननिखिला
तुधराधृता एतत्सारमजानद्भिः कथंसंक्रीडितंपुरा अद्यपर्वतराजंतुसर्वेबूतमभाग्यतः एतत्सेवाप्रभावेनबलंलब्धंमयामहत् प्र
तिसंवत्सरंतस्मादन्नकूटंविधीयतां गवांभवतिकल्याणंपुत्रपौत्रादिसंततिः ऐश्वर्यंचसदासौख्यंभवेद्गोवर्धनोत्सवात् कृतंयत्का
र्तिकेस्नानंजपहोमार्चनादिकं सर्वंनिष्फलतांयातिनोकृतेपर्वतोत्सवे एवमुक्तास्तुतेगोपाःसत्यंसर्वममन्यत यशुःकृष्णादयःस
र्वैनवमेहनिगोकुले बालखिल्याऊचुः इत्येतत्सर्वमाख्यातमस्माभिस्तुमुनीश्वराः श्रीकृष्णस्यतुसंतुष्ट्यैत्वद्यन्नकूटंविधीयताम्
नानाप्रकारशाकादिदेशकालोद्भवानिच पक्वान्नानिविचित्राणिकुर्याच्छक्त्यनुसारतः सर्वान्नपर्वतंकुर्याच्छ्रीकृष्णायनिवेदयेत्
गोवर्धनस्वरूपायमंत्रोकृष्णोदितोपठन् यत्कृष्णोरूपंकृतेतिमंत्रो एवंयःकुरुतेमर्त्योविष्णुलोकेमहीयते इतिश्रीसनत्कुमार

संहितायांप्रतिपत्कृत्यम् अथद्वितीयाव्रतानि कार्तिकशुक्लद्वितीयायामद्वितीया साअपराण्हव्यापिनीग्राह्या ऊर्जेशुक्लद्वितीया
यामपराण्हेर्च्चयेद्यमम् स्नानंकृत्वाभानुजन्यांयमलोकंनपश्यति ऊर्जेशुक्लद्वितीयायांपूजितस्तर्पितोयमः वेष्टितःकिन्नरैर्हृष्टैस्तस्मैय
च्छतिवांछितं इतिस्कांदात् दिनद्वयेअपराण्हव्याप्तौवापरैवेतियुग्मवाक्यात् प्रथमेश्रावणेमासितथाभाद्रपदेपरा तृतीयाश्व-
युजेमासिचतुर्थीकार्तिकीभवेत् श्रावणेकलुषानाम्नीतथाभाद्रेचनिर्मला आश्विनेप्रेतसंचाराकार्तिकेयाम्यतामतेति चतस्रो-
द्वितीयाउपक्रम्यप्रथमायांकिंचित्स्नायाश्विने द्वितीयायांसरस्वतीपूजा तृतीयायांश्राद्धंकर्तव्यं चतुर्थ्यांयमपूजनं कार्तिकेशुक्लप
क्षेतुद्वितीयायांयुधिष्ठिर यमोयमुनयापूर्वंभोजितःस्वगृहेर्च्चितः अतोयमद्वितीयेयंत्रिषुलोकेषुविश्रुता अस्यांनिजगृहेपार्थ
नभोक्तव्यमतोनरैः यत्नेनभगिनीहस्ताद्भोक्तव्यंपुष्टिवर्धनं दानानिचप्रदेयानिभगिनीभ्योविशेषतः स्वर्णालंकारवस्त्रान्नपूजा
सत्कारभोजनैः सर्वाभगिन्यःसंपूज्याअभावेप्रतिपन्नकाः तत्स्थानेनमाता पितृव्यभगिनीहस्तात्प्रथमायांयुधिष्ठिर मातुल
स्यसुताहस्ताद्द्वितीयायांयुधिष्ठिर पितुर्मातुःस्वसुश्चैवतृतीयायांतयोःकरात् भोक्तव्यंसहजायाश्चभगिन्याहस्ततःपरम् सर्वा
सुभगिनीहस्ताद्भोक्तव्यंबलवर्धनम् धन्यंयशस्यमायुष्यंधर्मकामार्थसाधकम् तस्यांतिथौयमुनयायमराजदेवःसंभोजितोनिज
करात्स्वसृसौहृदेन तस्यांस्वसाकरतलादिहयोभुनक्तिप्राप्नोतिरत्नधनधान्यमनुत्तमंसः इतिहेमाद्रौभविष्येयमद्वितीयाविधिः

अथकथा वालखिल्याऊचुः कार्तिकस्यासितेपक्षेद्वितीयायमसंज्ञिता तत्रापराण्हेकर्तव्यंसर्वथैवयमार्चनं भ्रत्यहंयमुनाभ्रत्ययमम
प्रार्थयत्पुरा भ्रातर्ममगृहेयाहिभोजनार्थंगणावृतः अद्यश्वोवापरश्वोवाभ्रत्यहंवदतेयमः कार्यव्याकुलचित्तत्वादवकाशोनजायते
तदैकदायमुनयाबलात्कारान्निमंत्रितः सगतःकार्तिकेमासिद्वितीयायांमुनीश्वराः नारकीयजनान्मुक्त्वागणैःसहरवेःसुतः कृ
तातिथ्योयमुनयानानापाकाःकृतास्तथा कृताभ्यंगोयमुनयातैलैर्गंधमनोहरैः उद्वर्तनंलापयित्वास्नापितःसूर्यनंदनः ततोलंकारि
कंदत्तंनानावस्त्राणिचंदनं माल्यानिचप्रदत्तानिमंचोपरिउपाविशत् पक्वान्नानिविचित्राणिकृत्वासास्वर्णभाजने यमंचभोजयामा
सयमुनाप्रीतमानसा भुक्त्वायमोपिभगिनीमलंकारैःसमर्चयत् नानावस्त्रैस्ततःप्राहवरंवरयभामिनि इतितद्वचनंश्रुत्वायमुनावाक्य
मब्रवीत् यमुनोवाच प्रतिवर्षंसमागच्छभोजनार्थंतुमद्गृहे अद्यसर्वेमोचनीयाःपापिनोनरकाद्यम येचैवभगिनीहस्तात्करिष्यंतिचभोज
नं तेषांसौख्यप्रदोहित्वमेतदेववृणोम्यहं यमउवाच यमुनायांतुयःस्नात्वासंतर्प्यपितृदेवताः भुनक्तिभगिनीगेहेभगिनींपूजयेदपि
कदाचिदपिमद्द्वारंनसपश्यतिभानुजे वीरेशेशानदिग्भागेयमतीर्थंप्रकीर्तितं तत्रस्नात्वार्चाविधिवत्संतर्प्यपितृदेवताः पठेदेतानिनामा
निआमध्याह्नंनरोत्तमः सूर्यस्याभिमुखोमौनीदृढचित्तःस्थिरासनः यमोनिहंतापितृधर्मराजोवैवस्वतोदंडधरश्चकालः भूताधिपोदत्त
कृतानुसारीकृतांतमेतद्दशभिर्जपंति एतानिचदशशतैःनामदशकेन ततोयमेश्वरंपूज्यभगिनीगृहमाव्रजेत् मंत्रेणानेनचयथाभोजितः

पूर्णिमादरात् भ्रातस्तवानुजानाहंभुंक्ष्वभक्ष्यमिदंशुभम् प्रीनयेयमराजस्ययमुनायाविशेषतः ततःसंतोष्यभगिनींवस्त्रालंकरणादिभिः
स्वर्गेपियमलोकस्यभविष्यतिनदर्शनं नृपैःकारागृहेयेचस्थापितामममवासरे अवश्यंतेप्रेषणीयाभोजनार्थंस्वसृगृहे विमोक्तव्यामया
पापानरकेभ्योद्यवासरे यद्येवंधिक्करिष्यंतितेदंड्यामम सर्वथा कनीयाभगिनीनास्तितदाज्येष्ठागृहंव्रजेत् तदभावेसपत्नायाःपैतृ
व्यास्तदभावतः तदभावेमातृशील्याइतिमातृसमशीलायाः मातुर्भगिन्यावामातुलस्याथवा तथा सापत्नगोत्रसंबंधैःकल्पयेदयथा
क्रमम् सर्वाभावेमाननीयाभगिनीकाचिदेवहि गोनद्यायथवातस्याअभावेसतिकारयेत् तदभावेप्यरण्यादिकल्पयित्वासहोद
रां अस्यांनिजगृहेदेविनभोक्तव्यंकदाचन येभुंजंतिदुराचाराःनरकेतेपतंतिच स्नेहेनभगिनीहस्ताद्भोक्तव्यंपुष्टिवर्धनं दानानिचप्रदे
यानिभगिनीभ्योविशेषतः श्रावणेतुपितृव्यस्य कन्याहस्तेनभोजयेत् मातुलस्यसुताहस्ताद्भुंजीयाद्भाद्रमासके पितुर्मातुःस्वसुः
कन्येआश्विनेतुतयोःकरात् पितृष्वस्रेयीमातृष्वस्रेयीच अवश्यंकार्तिकेमासिभोक्तव्यंभगिनीकरात् एवमुक्त्वाधर्मराजोययौ
संयमिनींततः तस्माद्दृषिवराःसर्वेकार्तिकव्रतकारकाः भुंजंतुभगिनीहस्तात्सत्यंसत्यंनसंशयः यमद्वितीयायांयःप्राप्यभगिनीगृह
भोजनं नकुर्याद्वर्षजंपुण्यंनश्यतीतिरवेःसुतात् यातुभोजयतेनारीभ्रातरंयुग्मकेतिथौ अर्चयेच्चापितांबूलैर्नसावैधव्यमाप्नुया
त् भ्रातुरायुःक्षयोनूनंनभवेत्तर्हिकर्हिचित् अपराण्हव्यापिनीसाद्वितीयाभ्रातृभोजने अज्ञानाद्यदिवामोहान्नभुक्तंभगिनीगृहे

प्रवासिनावाभावाद्वाज्वरितेनाथबंदिना एतदाख्यानकंश्रुत्वाभोजनस्यफलंलभेत् इतिश्रीसनत्कुमारसंहितायांयमद्वितीयाऽख्या
नकंसंपूर्णम् अत्रैवभ्रातृद्वितीयाविधिर्लिख्यते यमंचचित्रगुप्तंचयमदूतांश्चपूजयेत् अर्घ्यश्चात्रप्रकर्तव्यायमायसहजद्वि
यैः भ्रातृभगिनीभिःसह अर्चनमंत्रस्तु एह्येहिमार्तंडजपाशहस्तयमांतकालोककरामरेश भ्रातृद्वितीयांकृतदेवपूजांगृहाण-
चार्घ्यंभगवन्नमस्ते धर्मराजनमस्तुभ्यंनमस्तेयमुनाग्रज त्राहिमांकिंकरैःसार्धंसूर्यपुत्रनमोस्तुते लैंगयात्तुभोजयेनेनारीभ्रातरं
युग्मकेतिथौ अर्चयेच्चापितांबूलैर्नसावैधव्यमाप्नुयात् स्कांदे कार्तिकेतुद्वितीयायांशुक्लायांभ्रातृपूजनं यानकुर्याद्विनश्यंतिभ्रात
रःसप्तजन्मसु पाद्मे उत्तरखंडे भद्रेभ्रातृभिनिभोभामत्वदंघ्रिसरसीरुहम् श्रेयसेधनमस्तुभ्यमागतोहंतवालयम् मृदुवाक्यं
ततःश्रुत्वासत्वरंक्रियतेनदा अद्यभ्रातृमतीभ्रातस्त्वयाधन्यास्मिमानद भोक्तव्यंतद्यमद्गेहेस्वायुषेममसानद कार्तिकेशुक्ल-
पक्षस्यद्वितीयायांसहोदरः यमोयमुनयापूर्वंभोजितःस्वगृहेर्चितः यस्मिन्दिनेयमेनात्रनारीवापुरुषोपिवा अपविद्धाकर्मपा
शैःस्वेच्छयायेपचंतिहि पापेभ्योविप्रमुख्यास्तेमुक्ताःकर्मनिबंधनात् तेषांमहोत्सवोवृत्तोयमराष्ट्रेसुखावहः तस्माद्द्वितीयात्रमद्गेहे
भोजनंकुरुकार्तिके आशिषःप्रतिगृह्याथनमस्कृत्यसमर्चयेत् सर्वाभगिन्यःसंपूज्याज्येष्ठाउभयतःस्मृताः वस्त्रादिनानम
स्कुर्यान्निजवृत्तानुसारतः भ्रातुरायुष्यवृद्ध्यर्थंभगिनीभिर्यमस्यवै पूजनीयाःप्रयत्नेनप्रतिमाश्चविधानतः मार्कंडेयोबलिर्व्यासो

हनूमांश्चबिभीषणः कृपोद्रोणिः परशुरामोअष्टैतेचिरजीविनः मार्कंडेयमहाभागसप्तकल्पांतजीविन चिरंजीवीयथात्वंहितथामेभ्व
तरंकुरु इतिष्मात्दृद्वितीया अथतृतीयाव्रतानि तत्रचैत्रशुक्लतृतीयायांसौभाग्यशयनव्रतं मात्स्ये मत्स्यउवाच वसंतमा
समासाद्यतृतीयायांजनप्रिय सौभाग्यायसदास्त्रीभिः कार्यंपुत्रसुखेप्सुभिः शुक्लपक्षस्यपूर्वाण्हेतिलैःस्नानंसमाचरेत् तस्मिन्न
हनिसादेवीकिलविश्वात्मिकासती पाणिग्रहणकेमेरुमारूढावरवर्णिनी तयासहैवदेवेशंतृतीयायांसमर्चयेत् फलैर्नानाविधैर्धू
पैर्दीपैर्नैवेद्यसंयुतैः प्रतिमांपंचगव्येनतथागंगोदकेनच पंचामृतैःस्नापयित्वागौरीशंशंकरसंयुतं नमोस्तुपाटलायैचपादौदेव्याः
शिवस्यतु शिवायेतिचसंकीर्त्यजयायैगुल्फयोस्तथा त्रिगुणायेतिरुद्रस्यभवान्यैजंघयोर्युगं शिवंरुद्रेशिवायेतिजयायैइतिजा
नुनी संकीर्त्यहरिकेशायतथोरूवरदेनमः ईशायैतिकटिंरत्यैशंकरायेतिशंकरम् कुक्षिद्वयेचकोटय्यैशूलिनःशूलपाणये
मंगलायैनमस्तुभ्यमुदरंचापिपूजयेत् सर्वात्मनेनमोरुद्रईशान्यैचकुचद्वयं शिवंवेदात्मनेतद्वदिंद्राण्यैकंठमर्चयेत् त्रिपुर-
घ्नायतिविश्वेशमनंतायकरद्वयं त्रिलोचनायेतिहरंत्वाहुःकालानलप्रिये सौभाग्यभवनायेतिभूषणादिसमर्चयेत् नमोर्ध
नारीशहरंप्रतितांगीतिनासिकां नमउग्रायलोकेशललितेतिपुनर्भ्रुवौ शर्वायपुरहंतारंवसुदेव्यैतथालकं नमःश्रीकंठनाशायशिवं-
केशांस्तथार्चयेत् भीमोग्रसौम्यरूपिण्यैशिरःसर्वात्मनेनमः शिवमभ्यर्च्यविधिवत्सौभाग्याष्टकमित्यतः स्थापयेद्घृतनिष्पा

तंकुसुंभंक्षीरजीरकंतृणराजेक्षुलवणंकुस्तुंबुरुमथाष्टमं दत्तंसौभाग्यकृद्यस्मात्सौभाग्याष्टकमित्यतः एवंनिवेद्यतत्सर्वंमहृतंशिवयोः
पुरः चैत्रेश्रृंगोदकंप्राश्यस्वपेद्भूमावरिंदम पुनःप्रभातेचतथाकृतःस्नानजपःशुचिः संपूज्यद्विजदंपत्यंमाल्यवस्त्रविभूषणैः —
सौभाग्याष्टकसंयुक्तंसुवर्णप्रतिमाद्वयं प्रीयतामत्रललिताब्राह्मणायनिवेदयेत् एवंसंवत्सरंयावत्तृतीयायांसदामुने प्राशनेदा
नमंत्रेचविशेषंहिनिबोधमे गोश्रृंगोदकमाद्येस्याद्वैशाखेगोमयंपुनः ज्येष्ठेमंदारकुसुमंबिल्वपत्रंशुचौस्मृतं माघेकृष्णातिलास्त-
द्वत्पंचगव्यंचफाल्गुने ललिताविजयाभद्राभवानीकुमुदाशिवा वासुदेवीतथागौरीमंगलाकमलासती उमाचदानकालेतुप्रीयता
मितिकीर्तनात् मल्लिकाशोककमलकुसुमोत्पलमालती कुब्जकंकरवीरंचबाणमम्लानकुंकुमं बाणंनीरकुरंटः सिंदुवारंचसर्वे
षुमासेषुक्रमशःस्मृतम् जपाकुसुमकौसुंभमालतीशतपत्रिका यथालाभप्रशस्तानिकरवीरंचसर्वदा एवंसंवत्सरंयावदुपोष्यवि
धिवन्नरः स्त्रीवाभक्त्याकुमारीवाशिवामभ्यर्च्यशक्तितः व्रतांतेवायनंदद्यात्सर्वोपस्करसंयुतं उमामहेश्वरंहैमंवृषभंचगवासह
स्थापयित्वाचशयनेब्राह्मणायनिवेदयेत् अन्यान्यपियथाशक्त्यामिथुनान्यंबरादिभिः धान्यालंकारगोदानैरभ्यर्च्यधनसंचयैः
वित्तशाठ्येनरहितःपूजयेद्गतविस्मयः एवंकरोतियासम्यक्सौभाग्यशयनव्रतम् सर्वान्कामानवाप्नोति पदमानंत्यमश्नुते फल
कस्यचसर्वांगमेतत्कुर्वन्समाचरेत् यत्रकीर्तिसमाप्नोतिप्रतिमासंनराधिप सौभाग्यारोग्यरूपायुर्वस्त्रालंकारभूषणैः नवियु

क्षाभवेद्राजन्नब्दानांचशतत्रयम् यस्तुद्वादशवर्षाणिसौभाग्यशयनव्रतम् करोतिसप्तचाष्टौवाश्रीकंठभवनेमरैः पूज्यमानोवसेत्स
म्यक्कल्पावत्कल्पायुतत्रयम् नारीवाकुरुतेभक्त्याकुमारीवानरेश्वर सापितत्फलमाप्नोतिदेव्यानुग्रहलालिता इतिमत्स्यपुराणेसौ-
भाग्यशयनव्रतम् अत्रैवगौर्यादोलोत्सवः तदुक्तंहेमाद्रौ देवीपुराणे चैत्रशुक्लतृतीयायांगौरीमीश्वरसंयुताम् संपूज्यदोलो
त्सवकंकुर्यान्नारीशुभेप्सका तथाचनिर्णयामृते तृतीयायांयजेद्देवींशंकरेणसमन्वितां कुंकुमागरुकर्पूरमणिवस्त्रैरगर्हिताम्
सुगंधिपुष्पधूपैश्चदमनेनविशेषतः आंदोलंदोलयेद्वत्सशिवोमातुष्टयेसदा रात्रौजागरणंकुर्यात्प्रातर्दद्यात्तुदक्षिणा सौभाग्याय
सदास्त्रीभिःकार्यापुत्रसुखेप्सुभिः इयंचपराग्राह्या मुहूर्तमात्रसत्वेपिदिनेगौरीव्रतंपरे इतिमाधवोक्तेः इयंचमन्वादिः कृतंश्रा
द्धविधानेनमन्वादिषुयुगादिषु हायनानिद्विसाहस्रंपितॄणांतृप्तिदंभवेत् अधिमासेपिइदंकर्तव्यं अत्रपिंडदानंनास्ति अथचै
त्रशुक्लतृतीयायांमनोरथतृतीयाव्रतम् ईश्वरउ० साधुकृतंत्वयादेविकृतवत्यापरिग्रहम् अस्येहधर्मपीठस्यमनोरथकृतः-
सति तएवविश्वभोक्तारोविश्वमान्यास्तएवहि येत्वांविश्वभुजामत्रपूजयिष्यंतिमानवाः विश्वेविश्वभुजेविश्वस्थित्युत्पत्ति
लयप्रदे नरास्त्वदर्चकाश्चात्रभविष्यंत्यमलात्मकाः मनोरथतृतीयायांयस्तेभक्तिंविधास्यति तन्मनोरथसंसिद्धिर्भवित्रीमदनु
ग्रहात् नारीवापुरुषोवापित्वद्व्रताचरणात्प्रिये मनोरथानिहप्राप्यज्ञानमंतेचलप्स्यते देव्युवाच मनोरथतृतीयायांव्रतंकीदृक्कृ-

थानकं किंफलंकिंकृतेनानाथकथयैतत्कृपांकुरु ईश्वरउ॰ शृणुदेवियथापूर्वंभवत्याभवतारणम् मनोरथव्रतंचैतद्धृत्वाप्युत्पनरंपरम्
पुलोमतनयापूर्वंततापपरमंतपः कंचिन्मनोरथंप्राप्तुंनचापतपसःफलम् अपूपुजत्ततोमासंभक्त्यागौरीमहेश्वरम् गीतेनसरहृ
स्येनकलकंठीरवेनहि तद्गानेनातिसंतुष्टोमृदुनामधुरेणच कृतालेनस्वरंगेणधातुमात्रकलावता प्रावाचचवरंशूलीप्रसन्नोस्मिपुलो
मजे अनेनत्वत्स्वर्गीतेनतत्वनयालिंगपूजया पुलोमजोवाच यदिप्रसन्नोदेवेशतदायोमेमनोरथः तंपूरयमहादेवमहादेव्याःप्रियंव
द सर्वदेवेषुयोमान्यःसर्वदेवेषुसुंदरः यायजूकेषुसर्वेषुयःश्रेष्ठःसोस्तुमेपतिः यथाभिलषितंरूपंयथाभिलषितंस्वरं यथाभिलषि
तंचायुःप्रसन्नोदेहिमेभव यदायदाचपत्यामेसंगःस्याच्चस्वरेच्छया तदातदाचतंदेहंत्यक्त्वान्यंदेहमाप्नुयां सदाचदेवपूजायांममभ
क्तिरस्तुनमा ममपूजाभगवतिजरामरणहारिणी भर्तुर्व्ययेतिवैधव्यंक्षणमात्रमपीहन ममभाविमहादेवपातिव्रत्यंचयातुमां ई
श्वरउ॰ पुलोमकन्येयच्चैषत्वयाकारिमनोरथः लप्स्यसेव्रतचर्यायांतत्कुरुष्वजितेंद्रिया मनोरथतृतीयायाऽऽचरणेनभविष्यति
तत्प्रासयेव्रतंवक्ष्येतद्विधेहियथोदितं तेनव्रतेनचीर्णेनमहासौभाग्यदेनतु अवश्यंभविनाबालेतवचैवमनोरथः पुलोमकन्यो
वा॰ कारुण्यवारिधेशंभोप्रणतार्तिहरप्रिय किंनामचाथकाभक्तिःकापूज्यातत्रदेवता कदाचसाविधातव्याइतिकर्तव्यताचका
इत्याकर्ण्यशिवोवाक्यंतांतुप्रीत्याजगादह ईश्वरउ॰ मनोरथतृतीयायांव्रतंपौलोमितच्छृणु पूज्याविश्वभुजागौरीचतुर्भुजविशालि

नी वरदोभयहस्तश्चसाक्षसूत्रःसमोदकः देव्याःपुरस्ताद्व्रतिनापूज्यआशाविनायकः चतुर्भुजश्चारुनेत्रःसर्वसिद्धिकरःप्रभुः चैत्रशु
क्लतृतीयायांकृत्वावैदंतधावनं सायंतनींचनिवर्त्यनानितृप्याभ्राजिक्रियाम् नियमंचेतिगृह्णीयाज्जितक्रोधोजितेंद्रियः संत्यक्त्वास्व
श्रयसंसारंशुचिस्तद्गतमानसः प्रातर्व्रतंचरिष्यामिमातर्विश्वभुजेनघे विधेहितत्रसान्निध्यंमन्मनोरथसिद्धये नियमंचेतिसंगृह्य
स्वपेद्रात्रौशुभंस्मरन् प्रातरुत्थायमेधावीविधायावश्यकंविधिं शौचमाचमनंकृत्वादंतकाष्ठंसमाहरेत् अशोकवृक्षस्यशुभंसर्वशो
कविनाशनं नित्यंतनंचसंपाद्यविधिंविधिविदांवरः स्नात्वाशुद्धांबरःसायंगौरीपूजांसमाचरेत् आदौविनायकंपूज्यघृतापूपान्नि
वेदयेत् ततोर्चयेद्विश्वभुजामशोककुसुमैःशुभैः अशोकवर्तिनैवेद्यंधूपैश्चागरुसंभवैः कुसुमेनानुलिप्यादौएककभक्तंततश्चरे
त् अशोकवर्तिसहितंर्घृतपूरैर्मनोहरैः एवंचैत्रतृतीयायांव्रतीनायांपुलोमजे चैत्रादिफाल्गुनांतासुतृतीयासुव्रतंचरेत् कुसुमे
णदंतकाष्ठानिकथयामितवानघे अनुलेपनवस्तूनिकुसुमानितथैवच नैवेद्यादिगजास्यस्यदेव्याश्चापिशुभव्रते अन्नानिचै-
कभक्तस्यशृणुनानिफलान्यये जंब्वपामार्गखदिरजातीचूतकदंबकाः प्लक्षोदुंबरखर्जूरीबदरीदाडिमीतथा दंतकाष्ठद्रुमाएते
व्रतिनःसमुदाहृताः सिंदूरागरुकस्तूरीचंदनंरक्तचंदनं गोरोचनंदेवदारुपद्माक्षंचनिशाद्वयं प्रीत्यानुलेपनंबालेयक्षकर्दमसं
भवम् सर्वेषामप्यलाभेचप्रशस्तोयक्षकर्दमः कस्तूरिकायाद्वौभागौद्वौभागौकुंकुमस्यच चंदनस्यत्रयोभागाःशशिनस्त्वेकए

वहि यक्षकर्दमइत्येषसमस्तसुरवल्लभः अनुलिप्याथकुसुमैरर्चयेद्दक्षिणान्यपि पाटलीमल्लिकापद्मकेतकीकरवीरकैः उत्पलैराजचंपैश्च
नंद्यावर्तैश्चराजभिः कुमारीभिःकर्णिकारैरलाभेतच्छदैःसह सुगंधीभिःप्रसूनाद्यैःसर्वालाभेपिपूजयेत् करंभोदधिभक्तंचसचूतरस
मंडकः फेणिकावटकाश्चैवपायसंचसशर्करं समुद्गंसघृतंभक्तंकासंकेविनिवेदयेत् उदीरिकाश्चलड्डूकामाघेलंपसिकाशुभा मुष्टि-
काःशर्करागर्भाःसर्पिषापरिसाधिताः निवेद्यफाल्गुनेदेव्यैसार्धंविसर्जितामुदा निवेदयेद्यदन्नंहिएकभक्तेपितत्स्मृतं अनिवेद्यनसं
भूढोभुंजानोन्यथनेदधः प्रतिमासंतृतीयायामेकमाराध्यवत्सरं व्रतसंपूर्तयेकुर्यात्स्थंडिलेग्निसमर्चनं जातवेदसमंत्रेणतिलाज्य
द्रविणेनच शतमष्टाधिकंहोमंकारयेद्विधिनाव्रती सदैवनक्तेपूजोक्तानदानक्तेतुभोजनं नक्तएवहिहोमोयंनक्तएवक्षमापनं गृहाणपू
जांमेभक्त्यामातर्विसर्जितासह नमोस्तुतेविश्वभुजेपूरयाशुमनोरथम् नमोविघ्नकृतेतुभ्यंनमआशाविनायक त्वंविश्वभुजयासा
र्धंमसदेहिमनोरथम् एतौमंत्रौसमुच्चार्यपूज्यौगौरीविनायकौ व्रतक्षमापनेदेव्याःपर्यंकस्तूलिकान्वितः आचार्यंचसपत्नीकंपर्यंकेउ
पवेश्यच व्रतीसमर्चयेद्वस्त्रैःकरकर्णविभूषणैः दद्यात्पयस्विनींगांचव्रतस्यपरिपूर्तये मनोरथतृतीयायांव्रतमेतन्मयाकृतं न्यूनाति
रिक्तंसंपूर्णमेतदस्तुभवद्गिरा इत्याचार्यंसमागच्छेनथेत्युक्तश्चतेनवै मातश्चतुर्थ्यांसंपूज्यवटुरश्चकुमारकान् एवंसंपूर्णतांयातिव्रत
मेतत्सुनिर्मलं चिंतितंलभतेकामंव्रतस्यास्यनिषेवणात् इतिश्रीस्कंदपुराणेचैत्रशुक्लतृतीयायांमनोरथव्रतोद्यापनंसंपूर्णम् अथ

चैत्रशुक्लप्रतिपदमारभ्यत्रिरात्रपूर्वकंतृतीयायांअरुंधतीव्रतम् तत्रस्त्रीणामेवाधिकारः अवैधव्यादिफलश्रवणात् तत्रादौसंकल्पः मम
इहजन्मांतरेवाबालवैधव्यनाशार्थंअनेकसौभाग्यपुत्ररूपसंपत्तिसमृद्ध्यर्थंअरुंधतीव्रतमहंक॰ निर्विघ्नतासिद्ध्यर्थंगणपतिपूजनंस्वास्ति
वाचनंआचार्यवरणंचक॰ पश्चात्पूजादिआचार्येणकारयेत् वैशाखेश्रावणेमासिमाघेवाकार्तिकेतथा प्रतिपत्प्रातरुत्थायस्नात्वाशुक्ल
तिलामलकैः प्रतिपदिदिनेनक्तंद्वितीयायामयाचितम् तृतीयायामुपोष्यंचआचार्येणततःसह रात्रौअधिवासनम् सुवर्णनिर्मितांदि
व्यांद्विभुजांप्रतिमाद्वयं अरुंधतींवसिष्ठंचध्रुवंचैवपृथक्न्यसेत् शिलोपरिसर्वतोभद्रस्थापनं कलशंधातुमयंतदुपरिताम्रपात्रंप्रति
मायांअग्न्युत्तारणंकृत्वा तदुपरिअरुंधतींवसिष्ठंध्रुवंचस्थापयेत् कुंकुमाक्षतैःपूजयेत् अथअरुंधतीपूजा अष्टकर्णिकयायुक्तेमं
डलेपूजयेत्तुताम् अरुंधतींमहादेवींवसिष्ठसहितांसतीं आवाहनं अरुंधतिमहादेविसर्वसौभाग्यदायिनि दिव्यंसुचारुवेषंचआस-
नंप्रतिगृ॰ आसनं सुचारुशीतलंदिव्यंनानागंधसुवासितं पाद्यंगृहाणदेवेशिअरुंधतिनमोस्तुते पाद्यं अरुंधतिमहाभागेवसिष्ठ-
प्रियवादिनि अर्घ्यंगृहाणकल्याणिभर्त्रासहपतिव्रते अर्घ्यं गंगातोयंसमानीतंसुवर्णकलशेस्थितं आचम्यतांमहाभागेवसिष्ठ
सहितेनघे आचमनीयं गंगासरस्वतीरेवापयोष्णीनर्मदाजलैः स्नापितासिमयादेवितथाशांतिंकुरुष्वमे स्नानं नानारंगसमुद्भूतं
दिव्यंचारुमनोहरम् वस्त्रंगृहाणदेवेशिअरुंधतिनमोस्तुते वस्त्रं कंचुकीमुपवस्त्रंचनानारत्नैःसमन्वितं गृहाणत्वंमयादत्तंअरुंध

तिनमोस्तुते उपवस्त्रं कर्पूरकुंकुमैर्युक्तंहरिद्राद्विसमन्वितं कस्तूरिकासमायुक्तंचंदनंप्रति० चंदनं हरिद्राकुंकुमंचैवसिंदूरंकज्ज
लान्वितं मयानिवेदितंभक्त्यागृहाणपरमेश्वरि सौभाग्यद्रव्या० माल्यादीनिस० पुष्पं वनस्पतिरसोद्भूतो० धूपं आज्यंचवर्ति० दीपं
अन्नंचतुर्विधंस्वादुरसैःषड्भिःसमन्वितं नैवेद्यंगृह्यतांदेविप्रसीदपरमेश्वरि नैवेद्यं पूगीफलंमहद्दिव्यंनागवल्यादलैर्युतं कर्पूरैलास
मायुक्तंतांबूलंप्रतिगृ० तांबूलंस० इदंफलंमयादेविस्थापितंपुरतस्तव तेनमेसफलावाप्तिर्भवेज्जन्मनिजन्मनि फलं हिरण्यगर्भ०
दक्षिणां पुत्रान्देहिधनंदेहिसौभाग्यंदेहिसुव्रते अन्यांश्चसर्वकामांश्चदेहिदेविनमोस्तुते प्रार्थनां अरुंधतिमहाभागेवसिष्ठप्रि
यवादिनि सौभाग्यंदेहिमेदेविधनंपुत्रांश्चसर्वदा उत्तरार्घ्यं हिमकुंजांचारुसर्वांगींसाक्षसूत्रकमंडलुं प्रतिमांकांचनींकृत्वानामभिःप
रिपूजयेत् ॐदेववंद्यायैनमः पादौपूजयामि लोकवंद्यायै० जानुनीपू० संपत्तिदायिन्यै० कटीपू० गंभीरनाभ्यै० नाभिंपू० लोकधात्र्यै० स्तनौपू
जगद्धात्र्यैन० कंठंपू० शांत्यैन० बाहूपू० वरप्रदायै० हस्तौपू० धृत्यै० मुखंपू० अरुंधत्यै० शिरःपूज० सकलप्रियायै० शिखांपू० वसिष्ठप्रियायै० वसि
ष्ठध्रुवसहितायै० सर्वांगंपू० नमोदेव्याइतिनीराजनं पुष्पांजलिं वायनंदद्यात् वंशपात्रेस्थितंपूर्णंवाणकंघृतसंयुतं अरुंधतीप्रीयतांच
ब्राह्मणायददाम्यहं वायनं सुवर्णमूर्तिसंयुक्तांवसिष्ठध्रुवसंयुतां अरुंधतींसोपचारांब्राह्मणायददाम्यहं मूर्तिदानमंत्रः गच्छदेवियथा
स्थानंसर्वालंकारभूषिता अरुंधतिनमस्तुभ्यंदेहिसौभाग्यमुत्तमं इतिविसर्जनं इतिपूजनं अथकथा स्कंदउवाच पुरावृत्तमिदंवि

प्रा॰ श्रृणुध्वंव्रतमुत्तमं आसीत्कश्चित्पुराविप्रः सर्वशास्त्रविशारदः तस्यैकाकन्यकाजातारूपेणाप्रतिमाभुवि ततोविवाहसम्यग्वैपितान-
स्याःकृतोद्विजः कुलशीलवतेदत्तासाकन्यावरवर्णिनी अचिरेणैवकालेनभर्तातस्यामृतोद्विजः बालरंडातुसाजातानिर्वेदादगमद्गृहात् य
मुनातीरमासाद्यचकारविपुलंतपः एकभक्तनक्तादिकैश्चैवकृच्छ्रचांद्रायणैस्तथामासोपवासनियमैरात्मानंपावयेत्सती कदाचिदागतस्तत्रभ्र
मन्गौर्यासदाशिवः यमुनातीरमासाद्यवनितांतांददर्शसा कृपयाचशिवागौरीमहादेवमुवाचसा देवकेनदृशीप्राप्ताबालवैधव्यताद्दशा
म् वदमांकृपयादेवरूपांकुरुदयानिधे महादेवउ॰ अयंविप्रःपुरागौरिकुलशीलयुतोभुवि तेनकन्यापरीणीतासुरूपायुवतीसती सत्वां
विवाह्यतरुणींविदेशमगमद्द्विजः ततोबहुतिथंकालंसापश्यद्भर्तुरागमं नागतस्तुतदाविप्रोयावज्जीवंगतोद्विजः तस्याजन्मगतंसर्वंवि
फलंपतिनाविना तेनपापेनविप्रोसौनारीत्वंप्राप्तवान्शिवे स्वनारींयःपरित्यज्यनिर्दोषांकुलसंभवाम् यातिदेशांतरंचाथअंधाइवमहा
र्णवे परदाररतोवास्यादन्यांवाकुरुतेस्त्रियम् सोन्यजन्मनिदेवेशिस्त्रीभूत्वाविधवाभवेत् यानारीतुपतिंत्यक्त्वामनोवाक्कायकर्मभिः
रहःकरोतिवैजारंगत्वावापुरुषांतरं भोगान्भुक्त्वाचयायोषिन्मदेनप्रमदासती तेनकर्मविपाकेनसानारीविधवाभवेत् स्वपत्नींकुलसंभू
तांपतिव्रतरतांसतीं अनुकूलांपरित्यज्यपरांयोयातिस्वेच्छया सपापीजायतेन्यस्मिन्स्त्रीहीनोविप्रजन्मनि अनेनसदृशंदेविलोकेस्मि
न्नास्तिपातकं नवैधव्यात्परोव्याधिर्नवैधव्यात्परोज्वरः नवैधव्यात्परःशोकोनवैधव्यात्परोंकुशः निरयोनचवैधव्यात्कष्टंवैधव्यतान्नृषु

तेनपापेनबहुनाजायतेबालरंडका इतितस्यवचःश्रुत्वासागौरीविस्मिताभवत् पप्रच्छतंमहादेवंगौरीसाकरुणान्विता केनेदृशंमहत्पापं
बालवैधव्यदायकं नश्यतेकर्मणादेवतन्मांवदकृपांकुरु महादेवउ० शृणुदेविप्रवक्ष्यामिबालवैधव्यनाशनं अरुंधतीव्रतंपुण्यंनारीसौभा
ग्यदायकं यत्कृत्वाबालवैधव्यान्मुच्यतेनात्रसंशयः श्रुतमेतत्तदाविप्रागौर्याःशंकरतोव्रतम् यमुनातीरमासाद्यउपदिष्टंतदाद्विजाः तस्यैना
र्यैमहादेव्याकारितंव्रतमुत्तमं तेनपुण्येनमहताव्रतजेनमुनीश्वराः सानारीचागमत्स्वर्गंमुक्त्वावैधव्यतांतदा इत्थंव्रतंश्रुतंसम्यगुपदिष्टं
मुनीश्वराः कृतमन्यैश्चबहुभिस्तेपिमुक्तामुनीश्वराः अरुंधतीव्रतमिदंसदाकार्यंमुनीश्वराः नारीवैधव्यतोमुच्येत्सौभाग्यंप्राप्नुयात्परम्
इतिश्रीस्कंदपुराणेअरुंधतीव्रतं अथउद्यापनम् युधिष्ठिरउ० उद्यापनविधिंब्रूहिअरुंधत्याःसुरेश्वर भक्तितःश्रोतुमिच्छामिव्रतसंपू
र्णहेतवे कृष्णउ० अरुंधतीव्रतंवक्ष्येनारीसौभाग्यदायकं येनचीर्णेनवैसम्यक्नारीसौभाग्यमाप्नुयात् जायतेरूपसंपन्नापुत्रपौत्रसम
न्विता वसंतेतुसमासाद्यतृतीयायांयुधिष्ठिर माघेवामाधवेचैवश्रावणेकार्तिकेथवा स्नानंकृत्वातुवैसम्यक्त्रिरात्रोपोषितासती मिथु
नानिचचत्वारिसमाहूयपतिव्रता पूजयेत्पुष्पतांबूलैश्चंदनैश्चतथाक्षतैः कुंकुमागरुकस्तूरीकर्पूरमृगनाभिभिः शिलापट्टेचसंस्थाप्य-
जीरकंलवणान्वितं लोष्टकेनसमायुक्तंवस्त्रयुग्मेनवेष्टितम् आवाहयेदरुंधतींवसिष्ठप्राणसंमितां पतिव्रतानांसर्वासांमुख्यांवैदेवभा
मिनीं द्विभुजांचारुसर्वांगींसाक्षसूत्रकमंडलुं प्रतिमांकांचनींकृत्वानामभिःपरिपूजयेत् वसिष्ठंचध्रुवंचैवप्रतिमांपूजयेद्व्रती देववंद्यो

नमःपादौजानुनीलोकवंदिते कटिंसंपूजयेत्तस्याःसर्वसंपत्तिदायिनीं नाभिंगंभीरनाभ्यैतुलोकधात्र्यैतथास्तनौ जगद्धात्र्यैतथास्कंधौबाहू
शांत्यैनमस्तथा हस्तौतुवरदायैतुसुखंधृत्यैनमःपुनः अरुंधत्यैतथापूज्यंशिरस्तुसकलप्रियम् एवंसंपूज्यतांदेवींगंधपुष्पोपचारकैः पूज
यित्वासतींदेवींततश्चार्घ्यंप्रदापयेत् अरुंधतिमहाभागेवसिष्ठप्रियवादिनि सौभाग्यंदेहिमेदेविधनपुत्रांश्चसर्वदा पुत्रान्देहिधनंदेहिसौ
भाग्यंदेहिसुव्रते अन्यांश्चसर्वकामांश्चदेहिदेविनमोस्तुते सुवासिन्योयसंपूज्याःसमाप्तिदिवसेतदा शुभगंधाक्षतैःपुष्पैर्दद्याच्छूर्पणभक्ष्यका
न् होमंचैवतदाकुर्यात्समिद्भिश्चतिलैःपृथक् अष्टोत्तरशतंसंख्याप्रार्थनामंत्रतःसुधीः मिथुनानिचसंपूज्यभूषणाच्छादनादिभिः नानावि
धोपचारैश्चचतुर्विंशतिसंख्यया आचार्यायचगांदद्याद्वस्त्राण्याभरणानिच शय्यांसोपस्करांदद्यात्कांस्यपात्रंसदीपकं आदर्शंचामरंचैव
अश्वंदद्यात्सुशोभनं यथावद्भोजयित्वाथस्त्रियःशूर्पान्समोदकान् मोदकान्कांचनंचैवतथावस्त्रंयथाविधि पोलिकाघृतपूपांश्चपूरिका
श्चविशेषतः सोहालिकाश्चदातव्याएकैकंद्विगुणंतथा भोजनद्वयपर्याप्तंदीनानाथांश्चपूजयेत् अनेनैवविधानेनभामिनीकुरुतेव्रतम्
अवैधव्यत्वमाप्नोतितथाजन्मसहस्रकं पुत्रपौत्रसमायुक्ताधनधान्यगुणावृता जीवेद्वर्षशतंसाग्रंसहभर्त्रामहाव्रता एवमभ्यर्चयि
त्वातुपदंगच्छेदनामयम् देवभार्यायथास्वर्गेऋषिभार्यातथैवच राजतेचमहाभागासर्वकामसमृद्धिभिः इतिश्रीस्कंदपुराणेअरुंध
तीव्रतोद्यापनंसंपूर्णम् अथवैशाखशुक्लतृतीयायांभविष्योत्तरोक्तमक्षय्यतृतीयाव्रतम् तीर्थेवैतद्दिनेस्नानंतिलैश्चपितृतर्पणम्

दानंधर्मघटादीनांमधुसूदनपूजनं माधवेमासिकुर्वीतमधुसूदनतुष्टिदं तुलामकरमेषेषुप्रातःस्नानंविधीयते हविष्यंब्रह्मचर्यंचमहापात
कनाशनं वैशाखस्नाननियमंब्राह्मणानामनुज्ञया मधुसूदनमभ्यर्च्यकुर्यात्संकल्पपूर्वकं वैशाखंसकलंमासंमेषसंक्रमणेरवेः प्रातःसनि
यमेनाथप्रीयतांमधुसूदनः मधुसूदनसंतोषाद्ब्राह्मणानामनुग्रहात् निर्विघ्नमस्तुमेपुण्यंवैशाखस्नानमन्वहं माधवेमेषगेभानौमुरारि
र्मधुसूदनः प्रातःस्नानेनमेनाथफलदःपापहाभव यदानज्ञायतेनामतस्यतीर्थस्यभोद्विजाः तत्रउच्चारणंकार्यंविष्णुतीर्थमिदंस्ति
ति अपिसम्यग्विधानेननारीवापुरुषोपिवा प्रातःस्नातःसनियमःसर्वपापैःप्रमुच्यते वैशाखेविधिवत्स्नात्वाभोजयेद्ब्राह्मणान्दश ह
त्स्नशःसर्वपापेभ्योमुच्यतेनात्रसंशयः इतिवैशाखस्नानविधिर्भविष्ये इयमेवतृतीयापरशुरामजयंती साचप्रदोषव्यापिनीग्राह्या
तदुक्तंभार्गवार्चनदीपिकायांस्कंदभविष्ययोः वैशाखस्यसितेपक्षेतृतीयायांपुनर्वसौ निशायाःप्रथमेयामेरामाख्यःसमयेहरिः रेणुका
यास्तुयोगर्भादवतीर्णोविभुःस्वयम् दिनद्वयेतथाव्याप्तौअंशतःसमव्याप्तौचपरा शुक्लतृतीयांवैशाखेशुद्धोपोष्यादिनद्वये निशायांपूर्व
यामेचेदुत्तरान्यत्रपूर्विका तत्रैववैशाखतृतीयायाअक्षय्यतृतीयासाचपूर्वाह्णव्यापिनीग्राह्या दिनद्वयेतद्व्याप्तौतुपरैवेति इयंयुगादिर-
पि यामन्वाद्यायुगाद्याश्चतिथयस्तासुमानवः स्नात्वाहुत्वाचजप्त्वाचदत्वानंतफलंलभेत् श्राद्धेपिपूर्वाह्णव्यापिनीग्राह्या पूर्वाह्णेतु
सदाकार्याःशुक्लामनुयुगादयः दैवेकर्मणिपैत्र्येचकृष्णेचैवापराह्णिका वैशाखस्यतृतीयांचपूर्वविद्धांकरोतिवै हव्यंदेवानगृह्णंति

कव्यंचपितरस्तथेति वैशाखस्यतृतीयायांश्रीसमेतंजगद्गुरुं नारायणंपूजयेच्चपुष्पधूपविलेपनैः योस्यांददातिकरकान्वारिव्यजनसंयु
तान् सयातिपुरुषोवीरलोकान्वैहेममालिनः वैशाखशुक्लपक्षेतुतृतीयायांतथैवच गंगातोयेनरःस्नात्वामुच्यतेसर्वकिल्बिषैः
श्रीकृष्णउ॰ बहुनात्रकिमुक्तेनकिंबह्वक्षरमालया वैशाखस्यसितामेकांतृतीयामक्षयांशृणु तस्यांस्नानंतपोहोमःस्वाध्यायःपितृतर्प
णं दानंचक्रियतेतस्यांतत्सर्वस्यादिहाक्षयं आदिःकृतयुगस्येयंयुगादिस्तेनकथ्यते सर्वपापप्रशमनीसर्वसौख्यप्रदायिनी पुरामहोदये
पार्थवणिगासीत्सुनिर्धनः प्रियंवदःसत्यव्रतोदेवब्राह्मणपूजकः पुण्याख्यानैकचित्तोभूत्कुटुंबीव्याकुलोपिसन् तेनश्रुतावाच्यमाना-
तृतीयारोहिणीयुता यदास्याद्बुधसंयुक्तातदासातुमहत्फला यस्यांयद्दीयतेकिंचित्तदक्षयंस्यात्तदेवहि इतिश्रुत्वाचगंगायांसंतर्प्यपितृदेव
ताः गृहमागत्यकरकान्सान्नानुदकसंयुतान् अन्नपूर्णान्बृहत्कुंभान्जलेनविमलेनच यवगोधूमलवणान्सक्तुदध्योदनंतथा इक्षुक्षीरवि
कारांश्चसहिरण्यांश्चशक्तितः शुचिःशुद्धेनमनसाब्राह्मणेभ्योददौवणिक् भार्ययावार्यमाणोपिकुटुंबासक्तचित्तया तावत्तस्थौस्थिरे
सत्वेमत्वासर्वविनश्वरं धर्मासक्तमतिःपार्थकालेनबहुनाततः जगामपंचत्वमसौवासुदेवमनुस्मरन् ततःसक्षत्रियोजातःकुशावत्यांयु
धिष्ठिर बभूवचाक्षयातस्यसमृद्धिर्धर्मसंयुता ईजेसचमहायज्ञैःसमाप्तवरदक्षिणैः सददौगोहिरण्यादिदानान्यन्यान्यहर्निशं बुभु
जेकामतोभोगान्दीनांधांस्तर्पयच्चधनैः तथाप्यक्षयमेवास्यांक्षयंयातिनतद्धनं श्रद्धापूर्वंतृतीयायांयद्दत्तंविभवंविना इत्येतच्चस

माख्यानं श्रूयतामत्र योविधिः तृतीयायां समाख्यातः स्नात्वा संतर्प्य देवताः एकभक्तं तदा कुर्याद्वासुदेवं प्रपूजयेत् तस्यां कार्यो यवैर्होमो यवैर्विष्णुं समर्चयेत् यवान्दद्याद्विजातिभ्यः प्रयतः प्राशयेद्विजान् उदकुंभान्सकरकान्सान्नान्सर्वरसैः सह यवगोधूमचणकान्सक्तुदध्योदनं तथा ग्रैष्मकं सर्वमेवात्र सस्यकं दाने प्रशस्यते तृतीयायां तु वैशाखे रोहिण्यृक्षे प्रपूज्य च उदकुंभप्रदानेन शिवलोके महीयते तत्र मंत्रः एष धर्मघटो दत्तो ब्रह्मविष्णुशिवात्मकः अस्य प्रदानात्तृप्यंतु पितरोपि पितामहाः गंधोदकतिलैर्मिश्रं सान्नं कुंभं सदक्षिणं पितृभ्यः संप्रदास्यामि अक्षय्यमुपतिष्ठतु छत्रोपानत्प्रदानं च गोभूकांचनवाससाम् यद्यदिष्टं केशवस्य तद्देयमविशंकया एतत्ते सर्वमाख्यातं किमन्यच्छ्रोतुमिच्छसि अनाख्येयं न मे किंचिदस्ति स्वल्पं तु तेनय नास्यां तिथौ क्षयमुपैति हुतं न दत्तं तेनाक्षयेति कथिता मुनिभिस्तृतीया उद्दिश्य दैवतपितॄन्क्रियते मनुष्यैस्तच्चाक्षयं भवति भारत सर्वमेव इति श्रीभविष्ये अक्षय्यतृतीयाव्रतम् अस्यामेव विष्णुधर्मोत्तरेपि उक्तं वैशाखशुक्लपक्षे तु तृतीयायामुपोषितः रात्रौ भुंक्ते वत्सरे तु मन्वादिषु युगादिषु अभिस्वर्दृष्टिं मंत्रं च अष्टोत्तरशतं जपेत् कृतोपवासाः सलिलं ये युगादिदिनेषु च दास्यंत्यन्नादिसहितं तेषां लोका महोदयाः अक्षय्यफलमाप्नोति सर्वस्य सुकृतस्य च तथा साक्षतकोपेता विशेषेण च पूजिता तत्र जप्तं हुतं दत्तं सर्वमक्षय्यमुच्यते अक्षय्या सा तिथिस्तस्मात्तस्यां सुकृतमक्षयम् अक्षतैः पूज्यते विष्णुस्तेन साप्यक्षया स्मृता अक्षतैस्तु नरः स्नातो विष्णोर्दत्वा तथाक्षतान् सक्तूंश्च संस्कृतांश्चैव हु-

स्तान्वभृगुनंदन एकास्वक्षय्यतृतीयायांसर्वासांतुफलंलभेत् अत्रैवपरशुरामजयंतीदोलोत्सवश्चहेमाद्रौभविष्ये इतिअक्षय्यतृतीयाव्रतं
संपूर्णं अथज्येष्ठशुक्लतृतीयायांरंभाव्रतम् तदुक्तंमाधवीयेभविष्ये कृष्णउ॰ भद्रेकुरुष्वयत्नेनरंभाख्यंव्रतमुत्तमं ज्येष्ठशुक्लतृती-
यायांस्नात्वानियमतत्परा पूर्वविद्धातिथिर्ग्राह्यातत्रैवव्रतमाचरेत् बृहत्तपातथारंभासावित्रीवटपैतृकी कृष्णाष्टमीचभूताचकर्तव्या
संमुखीतिथिः इतिरंभाव्रतनिर्णयः अथश्रावणशुक्लतृतीयायांमधुस्रवाख्यागुर्जरेषुप्रसिद्धा सापरयुताग्राह्या अथाचारप्रा
प्तंश्रावणशुक्लतृतीयायांस्वर्णगौरीव्रतं तच्चकर्नाटकदेशेभाद्रपदशुक्लतृतीयायांप्रसिद्धं तत्रसंकल्पः ममइहजन्मनिजन्मांतरेच
अक्षय्यसौभाग्यप्राप्तिकामायाःपुत्रपौत्रादिधनधान्यैश्वर्यप्राप्त्यर्थंश्रीपरमेश्वरप्रीत्यर्थंस्वर्णगौरीव्रतमहंक॰ तत्रपूजा देवदेविस-
मागच्छप्रार्थयेहंजगत्पते इमांमयाकृतांपूजांगृहाणसुरसत्तमे आवाहनं भवानित्वंमहादेविसर्वसौभाग्यदायके अनेकरत्नसंयुक्त
मासनंप्रतिगृह्यतां आसनं सुचारुशीतलंदिव्यंनानागंधसुवासितं पाद्यंगृहाणदेवेशिमहादेविनमोस्तुते पाद्यं श्रीपार्वतिमहा
भागेशंकरप्रियवादिनि अर्घ्यंगृहाणकल्याणिभर्त्रासहपतिव्रते अर्घ्यं गंगातोयंसमानीतंसुवर्णकलशेस्थितं आचम्यतांमहा
भागेभवेनसहितेनघे आचमनं गंगासरस्वतीरेवाकावेरीनर्मदाजलैः स्नापितासिमयादेवितथाशांतिंकुरुष्वमे स्नानं सर्वभू
षाधिकेसौम्येलोकलज्जानिवारणे मयोपपादितेतुभ्यंवाससीप्रतिगृह्यताम् वस्त्रं कंचुकीं आचमनीयं कर्पूरकुंकुमैर्युक्तं-

हरिद्रादिसमन्वितं कस्तूरिकासमायुक्तंचंदनंप्रतिगृह्यतां चंदनं हरिद्राकुंकुमंचैवसिंदूरंकज्जलंतथा सौभाग्यद्रव्यसंयुक्तंगृहाण
परमेश्वरि सौभाग्यद्रव्यं माल्यादीनीतिपुष्पं देवद्रुमरसोद्भूतःकृष्णागरुसमन्वितः आघ्रेयनामयंधूपोभवानिघ्राणतर्पणः धूपं
आज्यंचेतिदीपं अन्नंचतुर्विधंस्वादुरसैःषड्भिःसमन्वितं भक्ष्यभोज्यसमायुक्तंनैवेद्यंप्रतिगृह्य नैवेद्यं आचमनं कर्पूरैलालवंगादितां
बूलीदलसंयुतं क्रमुकादिफलंचैवतांबूलंप्रतिगृह्य तांबूलं इदंफलंमयादेविस्थापितंपुरतस्तव तेनमेसफलावाप्तिर्भवेज्जन्मनिजन्मनि
फलं हिरण्यगर्भेतिदक्षिणा नीराजनं नमस्कारः प्रदक्षिणा पुष्पांजलिः पुत्रान्देहिधनंदेहिसौभाग्यंदेहिसुव्रते अन्यांश्चसर्वका
मांश्चदेहिदेविनमोस्तुते इतिप्रार्थना भवान्याश्चमहादेव्याव्रतसंपूर्णहेतवे प्रीतयेद्विजवर्यायवायनंप्रददाम्यहं स्वलंकृताःसुवा
सिन्यःपातिव्रत्येनभूषिताः ममकामसमृद्ध्यर्थंप्रतिगृह्णंतुवायनं इतिस्वर्णगौरीपूजा अथकथा पुराकैलासशिखरेसिद्धगंध
र्वसेविते उमयासहितंस्कंदःपप्रच्छशिवमव्ययं स्कंदउ० करुणासागरेशानलोकानांहितकाम्यया व्रतंकथयदेवेशपुत्रपौत्रप्रव
र्धनं शंकरउ० साधुपृष्टंमहाभागकथयामिषडानन स्वर्णगौरीव्रतंनामसर्वसंपत्करंनृणां पुरासरस्वतीतीरेविमलाख्यामहापुरी
तत्रचंद्रप्रभोनामराजाभूद्धनदोपमः महादेवीविशालाक्षीभार्येबालमृगेक्षणे तयोःप्रियतराज्येष्ठातस्यासीन्नृपतेर्मृता सकदा
चिद्वनंभेजेमृगयासक्तमानसः तत्रशार्दूलवाराहवनमाहिषकुंजरान् हत्वाबभ्रामतृष्णार्तोददर्शसुमहत्सरः चकोरचक्रकारं

डरवंजरीकुशताकुलं उत्फुल्लकल्हारोद्दामकुमुदोत्पलमंडितं अपूर्वमवनीशोसौददर्शाप्सरसांगणं समासाद्यसरस्तीरंपीत्वाजलमनुत्त
मं भक्त्यागौरीमर्चयंतंददर्शाप्सरसांगणं किमेतदिति पप्रच्छराजाराजीवलोचनः स्वर्णगौरीव्रतमिदंक्रियतेस्माभिरुत्तमं सर्वसंपत्क
रंनृणांतत्कुरुष्वनृपोत्तम राजोवाच विधानंकीदृशंब्रूतकिंफलंव्रतचारणात् ताऊचुर्योषितःसर्वानभेमासितृतीयके प्रारब्धव्यंव्रतमि
दंगौर्याःषोडशवत्सरान् तच्छ्रुत्वासोपिजग्राहव्रतंनियतमानसः गुणैःषोडशसंयुक्तंदोरकंदक्षिणेकरे बबंधानेनमंत्रेणकरिष्येहंव्रतं
तव ततःकृत्वाव्रतंदेव्याअगमन्निजमंदिरे विशालाक्ष्यांततोदृष्टोराजागौर्याःप्रपूजकः बद्धंतंदोरकंहस्तेदृष्ट्वाचपतिकोपना नकर्त
व्यंनकर्तव्यंमितिराजावदत्यपि त्रुटित्वासाचनिक्षेपवात्यशुष्कतरूपरि तेनसंस्पृष्टमात्रेणतरुःपल्लवतांगतः तद्द्वितीयाततोदृष्ट्वाविस्म
याल्लज्जिताभवत् तन्मूलेदोरकंछिन्नंगृहीत्वासाबबंधह ततस्तद्व्रतमाहात्म्यात्सातिप्रियतराभवत् देवीव्रतापचारेणसात्यक्तादुः-
खितावने प्रययोसामहादेवींध्यायंतीनित्यमन्विता मुनीनामाश्रमेपुण्येनिवसंतीत्यपिक्वचित् निवारितामुनिवरैर्गच्छपापेयथा
सुखं धावंतीविपिनंघोरंगणाध्यक्षंददर्शह तेनदृष्टापिसागौरीरक्षाम्यहमुपोषितां ततोददर्शाग्रतरुंगच्छंतीचसरोवरं ततोवन
श्रियंचाग्रेसर्वाभरणभूषिता पश्यंतीशानकैस्तद्वद्व्रजंतीचैवमानुषी तैस्तैर्निराकृतादृष्ट्वानिर्विण्णानिषसादह ततस्तत्कृपयागौरी
प्रादुरासीन्महासती तान्दृष्ट्वादंडवद्भूमौनत्वास्तुत्वानृपप्रिया जयदेविनमस्तुभ्यंजयभक्तवरप्रदे जयशंकरसर्वांगेमंगलेसर्वमंग

ले ततोलब्ध्वावरंभक्त्यागौरीमभ्यर्च्यतद्व्रतं चक्रेदेवीपदंतस्यैददौसौभाग्यसंपदः इतितस्याःप्रसादेनसर्वान्भोगानवाप्यच अंतेशिवपुरमा
सःकांताभिःसहितोनृपः यश्चोभनंव्रतमिदंकथितंशिवायाःकुर्यान्नमप्रियतरोभविताचगौर्याः प्राप्यश्रियश्चसततंभुविशत्रुसंघान्नि-
र्जित्यनिर्मलपदंसहसामयाति इतिश्रीस्कंदपुराणेगौरीखंडेस्वर्णगौरीव्रतकथा अथोद्यापनं युधिष्ठिरउ॰ उद्यापनविधिंब्रूहितृती-
यायाःसुरेश्वर भक्तितःश्रोतुमिच्छामिव्रतसंपूर्तिहेतवे कृष्णउ॰ उद्यापनविधिंवक्ष्येसावधानेनवैशृणु त्रिंशद्धस्तप्रमाणेनप्रमितंदक्षि
णोत्तरे मत्स्यकूर्मागमपिराजेंद्रनवगोचर्ममिष्यते गोचर्ममात्रंसंलिप्यगोमयेनविचक्षणः मंडपंकारयेत्तत्रनानावर्णैःसुशोभनं ग्रहमंडलपा
र्श्वेतुपद्ममष्टदलंलिखेत् तन्मध्येस्थापयेत्कुंभमव्रणंमृन्मयंशुभं ताम्रपात्रंप्रकुर्वीतपलैःषोडशभिस्तथा तदर्धार्धेनवाकुर्याद्वित्तशाठ्यं
विवर्जयेत् कर्षमात्रसुवर्णेनप्रतिमांकारयेद्बुधः तदर्धमध्यमंप्रोक्तंतदर्धंतुकनिष्ठकं कृत्वारूपंप्रयत्नेनपार्वत्याश्चहरस्यच अथताम्रम
येपात्रेप्रतिमांतत्रविन्यसेत् श्वेतवस्त्रयुगच्छन्नंश्वेतयज्ञोपवीतिनं भाजनंचतिलैःपूर्णंकलशोपरिविन्यसेत् पार्वत्यास्तुयुगंदद्यात्स्था
पयित्वाविधानतः वेदोक्तेनप्रतिष्ठाचकर्तव्यातुयथाविधि पंचामृतेनस्नपनंकृत्वादेवस्यचोत्तमं स्नानंचकारयेत्पश्चात्ततःपूजांसमा
चरेत् चंदनेनसुगंधेनसुपुष्पैश्चप्रपूजयेत् धूपंचकल्पयेद्भूपंचंदनागरुसंयुतं नानाप्रकारैर्नैवेद्यंतथादीपंचकारयेत् अर्चयेत्पूजये
द्भक्त्यागंधपुष्पैःफलाक्षतैः आवाहनादिकर्तव्यंपुराणांगमसमुद्भवैः कार्याविधानतःपूजाभक्तिश्रद्धासमन्वितः देवदेवसमागच्छप्रार्थ

येहंजगत्पते इमांमयाकृतांपूजांगृहाणसुरसत्तम एवंपूजाप्रकर्तव्यारात्रौजागरणंततः गीतनृत्यादिसंयुक्तंकथाश्रवणपूर्वकं अर्च
येत्पूर्ववद्देवंपश्चाद्धोमंसमाचरेत् स्वगृह्योक्तविधानेनकृत्वाग्निस्थापनंततः आरभेच्चततोहोमंनवग्रहपुरःसरं तिलांश्चयवसंमिश्राना
ज्येनचपरिप्लुतान् संकर्षणेनमंत्रेणगौरीमंत्रेणवाशिवम् एवंसमाप्यहोमंतुतत्राचार्यंप्रपूजयेत् अर्घ्यपुष्पप्रदानैश्चवस्त्रालंका
रभूषणैः शक्त्यासदक्षिणांदद्यात्पश्चाद्गौरीगोधिकांमतां धेनुंसदक्षिणांदत्वासुशीलांचपयस्विनीं स्वर्णशृंगींरौप्यखुरांकांस्यदोहन
संयुताम् रत्नपुच्छांवस्त्रयुतांताम्रपृष्ठामलंकृतां सवत्सामव्रणांभद्रांधेनुंदद्यात्प्रयत्नतः सुवर्णेनसमोपेतामाचार्यायचसाधवे षो
डशभिःप्रकारैश्चपक्वान्नैःप्रीणयेत्सदा षोडशप्रमितैर्दद्याद्ब्राह्मणेषुप्रयत्नतः वंशपात्रस्थितैःपश्चात्पक्वान्नवायनैःशुभैः अन्येभ्योब्रा
ह्मणेभ्यश्चदक्षिणांचप्रयत्नतः बंधुभिःसहभुंजीतनियतश्चपरेहनि एवंकृतेभवेत्पार्थपरिपूर्णव्रतीयतः इ
तिश्रीस्कंदपुराणेकृष्णयुधिष्ठिरसंवादेस्वर्णगौरीव्रतोद्यापनंसमाप्तम् अथकृष्णतृतीयाविधिरुच्यते श्रावणश
कृष्णतृतीयायांकृष्णव्रतम् सामध्याह्नव्यापिनीग्राह्या शौनकउ० सर्वकामप्रदानानिव्रतानिकथितानिवै व्रतंकथययत्नेनयेनप्रेयो
हमाप्नुयाम् सूतउ० साधुसाधुमहाभागलोकानांहितकारक कथयामिव्रतंदिव्यंयोषितांफलदायकम् कृष्णस्यावरजासाध्वीसुभ
द्रानामविश्रुता रूपलावण्यसंपन्नासुभगाचारुहासिनी गांडीवधन्वनश्चासौयोषितांचवरप्रिया त्रैलोक्याधिपतिःकृष्णस्तस्या

हंभगिनीप्रिया इतिगर्वसमाविष्टानकिंचिदकरोच्छुभं कालोपियस्यआज्ञांवैशिरसाधारयत्सदा समेभ्रातासखाकृष्णोदनुजानांनिहं-
तनः इतिसंचिंत्यमनसिनकिंचित्साकरोत्तदा सर्वज्ञानंतदानेनदेवदेवेनशार्ङ्गिणा इतिसंचिंत्यमनसिभ्रातृत्वान्ममगौरवात् भवाब्धि
तारणंकिंचिन्मूढत्वान्नकरिष्यति ध्यात्वामुहूर्तंमनसिश्रीकृष्णोभक्तवत्सलः सुभद्रानिकटेगत्वावचनंचेदमब्रवीत् परलोकजिगीषा-
र्थंनकिंचिदपितेकृतं व्रतंकुरुष्वमनसासर्वान्कामानवाप्स्यसि सुकृतंतारकंलोकेलोकानांहितकारकम् यत्कृत्वासर्वपापेभ्योमुच्य-
तेनात्रसंशयः भुक्तिमुक्तिप्रदंचापिसर्वसौभाग्यदायकम् व्रतंकुरुष्वचाद्यैवसुकृतस्यफलाप्तये कालोहंसर्वलोकेषुवृक्षरूपेणसं-
स्थितः धर्मस्तस्यचमूलंहिऋतवःस्कंधएवच मासाद्वादशसंख्याकाश्चोपशाखात्वनुक्रमात् षष्ट्याधिकंत्रिशतंफलानिसम-
जायत पर्णानिघटिकाःप्रोक्ताकालोहंवृक्षरूपकः तस्मात्फलानांप्राप्त्यर्थंव्रतंकुरुष्वशोभने नभसिमासेसंप्राप्तेशुक्लपक्षेचभामि-
नि तृतीयाहस्तसंयुक्ताव्रतंकार्यमिदंशुभम् प्रातश्चैवसमुत्थायदंतधावनपूर्वकम् स्नानंकुर्याद्यथान्यायंहरिद्राभिःसमन्वितम्
मध्याह्नेचैवसंप्राप्तेकृत्वागोमयमंडलं चतुर्द्वारेणसहितंमंडपंतत्रकारयेत् वेदिंविरच्यधवलांहस्तमात्रांविशेषतः तन्मध्येष्टद-
लंपद्ममक्षतैःपरिकल्पयेत् पीठमांचोपरिस्थाप्यक्षीराब्धितनयासह उपचारैःषोडशभिःपूजयेद्भक्तिसंयुतः षष्ट्याधिकंचत्रिश-
तंसुकृतस्यफलानिवै गोधूमस्यचूर्णफलंशर्कराभिःसमन्वितं औदुंबरस्यवृक्षस्यफलाकारंचकारयेत् वेणुपात्रेचसंस्थाप्यवाण

व्र॰रा॰ ५०

कंचद्द्विजातये सहिरण्यंसताम्बूलंदद्याच्चैवयथाविधि वायनमंत्रः पुत्रपौत्रसमृद्ध्यर्थंसौभाग्यावाप्तयेतथा वायकंवैप्रदास्यामिव्रतसंपूर्तिहे
तवे पिष्टस्यचफलानांवैपायसंपरिकल्पयेत् भ्रातृस्वरूपिणंमांत्वभोजयित्वायथाविधि इतिकृत्वाचविधिवत्समाप्यचततःपरम् तृतीये-
वत्सरेप्राप्तेउद्यापनविधिंचरेत् आचार्यंवरयेद्भक्त्यावेदवेदांगपारगं सुशीलंसर्वधर्मज्ञंशांतंदांतंकुटुंबिनं स्वस्तिवाच्यद्विजैःसार्कंनांदीश्रा
द्धंविधायच हैमींचप्रतिमांकुर्यान्निष्कनिष्कार्धसंख्यया क्षीराब्धितनयासार्कंमांप्रतिष्ठाप्यभक्तितः नवीनंकलशंताम्रंपिधानेनसम
न्वितं पल्लवैश्चहिरण्यैश्चवस्त्रयुग्मेनवेष्टितम् तन्मध्येमांप्रतिष्ठाप्यउपचारैःप्रपूजयेत् ततःपुष्पांजलिंदद्यात्समाप्यचपुनःपुनः वा
यकंहिप्रदद्याच्चव्रतसंपूर्तिहेतवे लक्ष्मीनारायणोदेवोत्वस्मात्संसारसागरात् रक्षेद्देसकलात्पापादिहसर्वंददातुमे अच्युतःप्रतिगृह्णा
तिअच्युतोवैददातिच अच्युतस्तारकोभाभ्यामच्युतायनमोनमः रात्रौजागरणंकुर्याद्गीतवादित्रमंगलैः पुराणश्रवणेनैवरात्रिशेषंन
नोनयेत् प्रभातेविमलेस्नात्वानित्यकर्मसमाप्यच विष्णोर्नुकंसत्कुर्भिवहोममंत्रद्वयंस्मृतं अष्टाधिकद्विशतंचतिलैर्होमंतुकारयेत्
कलशंप्रतिमायुक्तमाचार्यायनिवेदयेत् गांदद्यात्कपिलांचैवसालंकारांसदक्षिणां आचार्यंपूजयेद्भक्त्यावस्त्रैराभरणैरपि ब्राह्मणा
न्भोजयेत्पश्चाच्चतुर्विंशतिसंख्यकान् आशिषोवैगृहीत्वाथस्वयंभुंजीतभक्तितः इतितस्यवचःश्रुत्वातत्सर्वंहिचकारसा भु
क्त्वाभोगान्यथाकाममंतेस्वर्गंजगामसा इतिश्रीभविष्योत्तरपुराणेसकृत्तव्रतोद्यापनम् अथभाद्रपदशुक्लतृतीयायांशिष्टप

तृ॰ ३

५०

रिरहीतंहरितालिकाव्रतम् तच्चपरविद्धायांकार्यम् मुहूर्तमात्रसत्वेपिदिनेगौरीव्रतंपरेइतिमाधवोक्तेः हरितालिकाव्रतसत्वेपुरस्कारेण।
पिपरविद्धाग्रहणवचनाद्दिवोदासीयेउदाहृतत्वाच्च तत्रव्रतविधिः भाद्रपदशुक्लतृतीयायांप्रातस्तिलामलककल्केनस्नात्वापट्टवस्त्रं
परिधाय मासपक्षाद्युल्लिख्यममसमस्तपापक्षयपूर्वकसप्तजन्मराज्या खंडितसौभाग्यादिविवृद्धये उमामहेश्वरप्रीत्यर्थंहरि
तालिकाव्रतमहंकरिष्ये तत्रादौगणपतिपूजनंकरिष्ये गौरीयुक्तंमहेश्वरंपूजयेत् अथपूजा पीतकौशेयवसनांहेमाभांकमलास
नां भक्तानांवरदांनित्यंपार्वतींचिंतयाम्यहं मंदारमालाकुलितालकायैकपालमालांकितशेखराय दिव्यांबरायैचदिगंबरायनमः
शिवायैचनमःशिवाय उमामहेश्वराभ्यांनमः ध्यायामि देवदेवसमागच्छप्रार्थयेहंजगन्मये इमांमयाकृतांपूजांगृहाणसुर
सत्तम उमामहेश्वराभ्यांनमः आवाहनं भवानित्वंमहादेविसर्वसौभाग्यदायिके अनेकरत्नसंयुक्तमासनंप्रतिगृ० आसनं सुच्वा
रुशीतलंदिव्यंनानागंधसमन्वितं पाद्यंगृहाणदेवेशिमहादेविनमोस्तुते पाद्यं श्रीपार्वतिमहाभागेशंकरप्रियवादिनि अर्घ्यंगृहा-
णकल्याणिभर्त्रासहपतिव्रते अर्घ्यं गंगाजलंसमानीतंसुवर्णकलशेस्थितम् आचम्यतांमहाभागेरुद्रेणसहितेनघे आचमनं गंगासर
स्वतीरेवापयोष्णीनर्मदाजलैः स्नापितासिमयादेवितथाशांतिंकुरुष्वमे स्नानं पयोदधिघृतंचैवशर्करामधुसंयुतं पंचामृतेनस्नपनं
प्रीत्यर्थंप्रतिगृ० पंचामृतस्नानं किरणाधूतपापाच्चपुण्यतोयासरस्वती मणिकर्णिजलंशुद्धंस्नानार्थंप्रतिगृह्यतां स्नानं सर्वभू

षाधि॰ वस्त्रं॰ उपवीतं॰ कंचुकीमुपवस्त्रंचनानारत्नैःसमन्वितं गृहाणत्वंमयादत्तंपार्वतीत्वंनमोस्तुते कंचुकीं कुंकुमागरुकर्पूरंचंदनं
कस्तुरीयुतम् विलेपनंमहादेविगंधंदास्यामिभक्तितः गंधं रंजिताःकुंकुमौघेनअक्षताश्चातिशोभनाः भक्त्यासमर्पितास्तुभ्यंप्र
सन्नाभवपार्वति अक्षतान् हरिद्राकुंकुमंचैवसिंदूरंकज्जलान्वितं सौभाग्यद्रव्यसंयुक्तंगृहाणपरमेश्वरि सौभाग्यद्रव्याणि॰
सेवंतिकाबकुलचंपकपाटलाब्जैःपुन्नागजातिकरवीररसालपुष्पैः बिल्वप्रवालतुलसीदलमालतीभिस्त्वांपूजयामिजगदीश्वरिमे
प्रसीद पुष्पं अथांगपूजा उमायैनमः पादौपूजयामि गौर्यैन॰ जंघे॰ पार्वत्यै॰ जानुनी॰ जगद्धात्र्यै॰ ऊरू॰ जगत्प्रतिष्ठायै॰ कटी॰ शांति
रूपिण्यै॰ नाभिं॰ देव्यै॰ उदरं॰ लोकवंदितायै॰ स्तनौ॰ काल्यै॰ कंठं॰ शिवायै॰ मुखं॰ भवान्यै॰ नेत्रे॰ रुद्राण्यै॰ कर्णौ॰ शर्वाण्यै॰ ललाटं॰ मंगलदा
त्र्यै॰ शिरःपू॰ देवद्रुमरसोद्भूतःकृष्णागरुसमन्वितः आनीतोयंमयाधूपोभवानिप्रतिगृ॰ धूपं॰ त्वंज्योतिःसर्वदेवानांतेजसांतेजउत्तमम्
आत्मज्योतिःपरंधामदीपोयंप्रतिगृ॰ दीपं॰ अन्नंचतुर्विधंस्वादुरसैःष॰ नैवेद्यं॰ आचमनीयं॰ मलयाचलसंभूतंकर्पूरेणसमन्वितं करो
द्वर्तनकंचारुगृह्यतांजगतःपते करोद्वर्तनं इदंफलंमयादेविस्थापितंपुरतस्तव तेनमेसफलावाप्तिर्भवेज्जन्मनिजन्मनि फलं पूगी
फलंमहद्दिव्यंनागवल्यादलैर्युतं कर्पूरैलासमायुक्तंतांबूलंप्रतिगृ॰ तांबूलं हिरण्यगर्भगर्भस्थंहेमबीजंविभावसोः अनंतपुण्यफल
दमतःशांतिंप्रयच्छमे दक्षिणां वज्रमाणिक्यवैडूर्यमुक्ताविद्रुममंडितं पुष्परागसमायुक्तंभूषणंप्रतिगृ॰ भूषणं चंद्रादित्योचधर

यां वेदसर्वस्वमागमेनयथोदितं एकाग्रेणशृणुष्वैतद्यथादृष्टंपुरातनं येनव्रतप्रभावेनप्राप्तमर्धासनंमम तत्सर्वंकथयिष्येहंत्वंममप्रेय
सीयतः भाद्रेमासिसितेपक्षेतृतीयाहस्तसंयुता तदनुष्ठानमात्रेणसर्वपापैःप्रमुच्यते शृणुदेवित्वयापूर्वंयद्वृत्तंचरितंमहत् त
त्सर्वंकथयिष्यामियथावृत्तंहिमालये पार्वत्युवा॰ कथंकृतंमयानाथव्रतानामुत्तमंव्रतं तत्सर्वंश्रोतुमिच्छामित्वत्सकाशान्महेश्वर
शिवउ॰ अस्तितत्रमहान्दिव्योहिमवान्नगउत्तमः नानाभूमिसमाकीर्णोनानाद्रुमसमाकुलः नानापक्षिसमायुक्तोनानामृगवि-
चित्रकः यत्रदेवाःसगंधर्वाःसिद्धचारणगुह्यकाः विचरंतिसदाहृष्टागंधर्वागीनतत्पराः स्फटिकैःकांचनैःशृंगैर्मणिवैडूर्यभूषि
तैः भुजैर्लिखन्निवाकाशंसुहृदोमंदिरंयथा हिमेनपूरितंनित्यंगंगाध्वनिनिनादितः पार्वतित्वंयथाबाल्येपरमाचरतीतपः अब्दद्वा
दशाकंदेविधूम्रपानमधोमुखी संवत्सरचतुःषष्टिंपक्वपर्णाशनंकृतं माघमासेजलेमग्नावैशाखेचाग्निसेवनं श्रावणेचबहिर्वासअ
न्नपानविवर्जिता दृष्ट्वातातेनतत्कष्टंचिंतयादुःखितोभवत् कस्मैदेयामयाकन्याएवंचिंतातुरोभवत् तदेवावसरेप्राप्तोब्रह्मपुत्र
स्तुधर्मवित् नारदोमुनिशार्दूलशैलपुत्रीदिदृक्षया दत्वार्घ्यंविष्टरंपाद्यंनारदंप्रोक्तवान्गिरिः हिमवानु॰ किमर्थमागतःस्वामि
न्वदस्वमुनिसत्तम महाभाग्येनसंप्राप्तंत्वदागमनमुत्तमं नारदउ॰ शृणुशैलेंद्रमद्वाक्यंविष्णुनाप्रेषितोस्म्यहं योग्यंयोग्यायदातव्यं



व्यंकन्यारत्नमिदंत्वया वासुदेवसमोनास्तिब्रह्मविष्णुशिवादिषु तस्मैदेयात्वयाकन्याअत्रार्थेसंमतंमम हिमवानुवाच वासुदे

णीविद्युदग्निस्त्वमेवच त्वमेवसर्वज्योतींषिआर्तिक्यंप्रतिगृ॰ नीराजनं अथनामपूजा उमायै॰ गौर्यै॰ पार्वत्यै॰ जगद्धात्र्यै॰ जगत्प्रतिष्ठा
यै॰ शांतिरूपिण्यै॰ हराय॰ महेश्वराय॰ शंभवे॰ शूलपाणये॰ पिनाकधृषे॰ शिवाय॰ पशुपतये॰ महादेवाय॰ पुष्पांजलिं॰ यानिकानिचपापा
निब्रह्महत्यासमानिचेति प्रदक्षिणां॰ अन्यथाशरणंनास्तित्वमेवशरणंमम तस्मात्कारुण्यभावेनक्षमस्वपरमेश्वरि नमस्कारः पुत्रा
न्देहिधनंदेहिसौभाग्यंदेहिसुव्रते अन्यांश्चसर्वकामांश्चदेहिदेविनमोस्तुते इतिप्रार्थना ततोवेणवपात्राणिसौभाग्यद्रव्यसहितानि
वायनानिदद्यात् अन्नंसुवर्णपात्रस्थंसवस्त्रफलदक्षिणम् वायनंगौरिविप्रायददामिप्रीतयेतव सौभाग्यारोग्यकामायसर्वसंप-
त्समृद्धये गौरिगौरीशतुष्ट्यर्थंवायनंतेददाम्यहमितिमंत्राभ्यांवायनं तस्मिन्नहनिकर्तव्यंपूजनंरजनीमुखे अर्धरात्रेउमाकांतेअ
र्चनंजागरंचरेत् इतिपूजा अथकथा सूतउ॰ मंदारमालाकुलितालकायैकपालमालांकितशेखराय दिव्यांबरायैचदिगंबरायन
मःशिवायैचनमःशिवाय १ कैलासशिखरेरम्येगौरीपृच्छतिशंकरम् गुह्याद्गुह्यतरंगुह्यंकथयस्वमहेश्वर सर्वेषांसर्वधर्माणाम-
ल्पायासंमहत्फलं प्रसन्नोसियदानाथतथ्यंब्रूहिममाग्रतः केनत्वंहिमयाप्राप्तस्तपोदानव्रतादिना अनादिमध्यनिधनोभर्ताचैवज
गत्प्रभुः ईश्वरउ॰ शृणुदेविप्रवक्ष्यामितवाग्रेव्रतमुत्तमं यद्गोप्यंममसर्वस्वंकथयामितवप्रिये यथाचोडुगणेचंद्रोग्रहाणांभास्करो
वच वर्णानांचयथाविप्रोदेवानांविष्णुरेवच नदीनांचयथागंगापुराणानांचभारतम् वेदानांचयथासामइंद्रियाणांमनोयथा पुरा

वः स्वयंदेवः कन्यांप्रार्थयतेयदि तदामयाप्रदातव्यात्वदागमनगौरवात् इत्येवंगदितंश्रुत्वानभस्यांतर्दधेमुनिः ययौपीतांबरधरंशं
खचक्रगदाधरं कृतांजलिपुटोभूत्वामुनींद्रस्तमभाषत नारदउ॰ शृणुदेवभवत्कार्यंविवाहोनिश्चितस्तव हिमवांस्तुतदागौरी
मुवाचवचनंमुदा दत्तासित्वमयापुत्रिदेवायगरुडध्वजे श्रुत्वावाक्यंपितुर्देवीगतासासखिमंदिरं भूमौपतित्वासादेवीविलला
पातिदुःखिता विलपंतींतदादृष्ट्वासखीवचनमब्रवीत् सख्युवाच किमर्थंदुःखितादेविकथयस्वममाग्रतः यद्भवत्याभिलषितं
करिष्येहंनसंशयः पार्वत्यु॰ सखिशृणुममप्रीत्यामनोभिलषितंमया महादेवंचभर्तारंकरिष्येहंनसंशयः एतन्मेचिंतितंका
र्यंतातेनकृतमन्यथा तस्माद्देहपरित्यागंकरिष्येहंसखिप्रिये पार्वत्यावचनंश्रुत्वासखीवचनमब्रवीत् सख्युवाच पितायत्रन
जानातिगमिष्यावोहितद्वनं इत्येवंसंमतंकृत्वानीतासित्वंमहद्वनं पितानिरीक्षयामासहिमवांस्तुगृहेगृहे केननीतासिमेपुत्री
देवदानवकिन्नरैः नारदाग्रेकृतंसत्यंकिंदास्येगरुडध्वजे इत्येवंचिंतयाविष्टोमूर्छितोनिपपातह हाहाकृत्वाप्रधावंतिलोका
स्तेगिरिपुंगवम् ऊचुर्गिरिवरंसर्वेमूर्छाहेतुंगिरेवद गिरिरुवा॰ दुःखस्यहेतुंशृणुतकन्यारत्नंतदंतमम दष्टावाकालसर्पेणासिं
हव्याघ्रेणवाहता नजानेक्कगतापुत्रीकेनदुष्टेनवाहृता चकंपेशोकसंतप्तोवातेनेवमहातरुः गिरिर्वनाद्वनंयातस्त्वदालोकनकार
णात् सिंहव्याघ्रैश्चभल्लैश्चरोहिभिश्चमहायनं संचारापिविपिनेघोरेव्रजंतीसखिभिःसह तत्रदृष्ट्वानदींरम्यांतत्तीरेचमहागुहां

तांप्रविश्यसखीसार्धंअन्नभोगविवर्जिता संस्थाप्यवालुकालिंगंपार्वत्यासहितंमम भाद्रशु०क्लतृतीयायामर्चयंतीस्तुहस्तभे तत्रवा
द्येनगीतेनरात्रौजागरणंकृतं व्रतराजप्रभावेनआसनंचलितंमम संप्राप्तोहंतदातत्रयत्रत्वंसखिभिःसह प्रसन्नोस्मिमयाप्रोक्तं वरं
ब्रूहिवरानने पार्वत्युः यदिदेवप्रसन्नोसिभर्ताभवमहेश्वर तथेत्युक्त्वातुसंप्राप्तोकैलासंपुनरेवच ततःप्रभातेसंप्राप्तेनद्यांकृत्वा
विसर्जनं पारणंतुकृतंतत्रसख्यासार्धंत्वयाशुभे हिमवानपितंदेशमाजगामघनंवनं चतुराशानिरीक्षंस्तुविह्वलःपतितोभुवि
दृष्ट्वातत्रनदीतीरेप्रसुप्तांकन्यकाद्वयम् उत्थाप्योत्संगमारोप्यरोदनंकृतवान्गिरिः सिंहव्याघ्राहिभल्लूकैर्वनेदुष्टेकुतःस्थिता पा
र्वत्युवाच शृणुतातमयाज्ञातंत्वंदास्यसीश्वरायमां तदन्यथाकृतंताततेनाहंवनमागता ददासितातयदिमामीश्वरायतदागृहं
आगमिष्यामिनैवंचेदिहस्थास्यामिनिश्चितं तथेत्युक्ताहिमवतानीतासित्वंगृहंप्रति पश्चाद्दत्तात्वमस्माकंकृत्वावैवाहिकींक्रियां
तेनव्रतप्रभावेनसौभाग्यंसाधितंत्वया अद्यापिव्रतराजस्तुनकस्यापिनिवेदितः नामास्यव्रतराजस्यशृणुदेवियथाभवत् आलि
भिर्हरितायस्मात्तस्मात्साहरितालिका देव्युवा० नामेदंकथितंदेवविधिंवदममप्रभो किंपुण्यंकिंफलंचास्यकेनचक्रियतेव्रतम् ई
श्वरउ० शृणुदेविविधिंवक्ष्येनारीसौभाग्यहेतुकं करिष्यतिप्रयत्नेनयदिसौभाग्यमिच्छति तोरणादिप्रकर्तव्यंकदलीस्तंभमंडितम्
आच्छाद्यपट्टवस्त्रैस्तुनानावर्णविचित्रितैः चंदनेनसुगंधेनलेपयेद्गृहमंडपम् शंखभेरीमृदंगैस्तुकारयेद्बहुनिस्वनैः नानामंगलगी

तंचकर्तव्यंममसद्मनि स्थापयेद्वालुकालिंगंपार्वत्यासहितंमम पूजयेद्बहुपुष्पैश्चगंधधूपादिभिर्नवैः नानाप्रकारैर्नैवेद्यैः पूजयेज्जाग
रंचरेन्न नारीकेरैः पूगफलैर्जंबीरैर्बहुभिस्तथा बीजपूरैःसनारिंगैःफलैश्चान्यैश्चभूरिशः ऋतुकालोद्भवैर्भूरिप्रकारैः कंदमूलकैः गं
धपुष्पैर्धूपदीपैर्मंत्रेणानेनपूजयेत् ॐ नमःशिवायशांतायपंचवक्त्रायशूलिने नंदिभृंगिमहाकालगणयुक्तायशंभवे शिवायैह
रकांतायैप्रकृत्यैसृष्टिहेतवे शिवायैसर्वमांगल्यैशिवरूपेजगन्मये शिवेकल्याणदेनित्यंशिवरूपेनमोस्तुते शिवरूपेनमस्तुभ्यंशि
वायैसततंनमः नमस्तेब्रह्मचारिण्येजगद्धात्र्येनमोनमः संसारभयसंतापात्त्राहिमांसिंहवाहिनि येनकामेनदेवित्वंपूजितासिम
हेश्वरि राज्यसौभाग्यसंपत्तिंदेहिमामंबपार्वति मंत्रेणानेनदेवित्वांपूजयित्वामयासह कथांश्रुत्वाविधानेनदद्यादन्नंचभूरिशः
ब्राह्मणेभ्योयथाशक्त्यादेयावस्त्रहिरण्यगाः अन्येषांभूयसींदेयास्त्रीणांवैभूषणादिकं भर्त्रासहकथांश्रुत्वाभक्तियुक्तेनचेतसा
कृत्वाव्रतेश्वरंदेविसर्वपापैःप्रमुच्यते सप्तजन्मभवेद्राज्यंसौभाग्यंचैववर्धते तृतीयायांतुयानारीआहारंकुरुतेयदि सप्तजन्मभवे
द्वंध्यावैधव्यंजन्मजन्मनि दारिद्र्यंपुत्रशोकंचकर्कशादुःखभागिनी पच्यतेनरकेघोरेनोपवासंकरोतिया राजतेकांचनेताम्रेवैणवे-
चाथमृन्मये भाजनेविन्यसेदन्नंसवस्त्रफलदक्षिणं दानंचद्विजवर्यायदद्यादंतेचपारणे एवंविधिंयाकुरुतेचनारीत्वयासमाना
रमतेचभर्त्रा भोगाननेकान्भुविभुज्यमानासायुज्यमंतेलभतेहरेण अश्वमेधसहस्राणिवाजपेयशतानिच कथाश्रवणमा

श्रेणतत्फलंप्राप्यतेनरैः एतत्तेकथितंदेविव्रतवाग्रेव्रतमुत्तमं कोटियज्ञकृतंपुण्यमस्यानुष्ठानमात्रतः इतिश्रीभविष्योत्तरपुरा
णेहरगौरीसंवादेहरितालिकाव्रतकथासंपूर्णा अथोद्यापनं पार्वत्युवा॰ उद्यापनविधिंब्रूहित्ततीयायाःसुरेश्वर भक्तितः
श्रोतुमिच्छामिव्रतसंपूर्णहेतवे महादेवउ॰ उद्यापनविधिंवक्ष्येव्रतराजस्यशोभने यस्यानुष्ठानमात्रेणसंपूर्णंहिव्रतंभवे-
त् चतुस्तंभंचतुर्द्वारंकदलीस्तंभमंडितं घंटिकाचामरयुतंकमलेरुपशोभितं चंदनागरुकर्पूरैर्लेपितंमंडपंशुभं मध्येवि
तानंबध्नीयात्तंचवर्णैरलंकृतं तन्मध्येकारयेत्पद्मंपंचचूर्णैःसुशोभनैः तस्योपरिन्यसेद्व्रीहीनद्रोणेनपरिसंमितान् सौवर्णंरा
जतंताम्रंकलशंविन्यसेद्बुधः पंचरत्नानिनिक्षिप्यसर्वौषधिसमन्वितम् तस्योपरिन्यसेत्पात्रंसौवर्णंराजतंचवा वृषारूढं
महादेवंरजतेनविनिर्मितं सर्वावयवसंयुक्तांगौरींहेम्नाविनिर्मितां पूजयेत्तत्रगंधाद्यैःपुष्पैर्नानाविधैःशुभैः रात्रौजागरणंकुर्या
त्कथावाचनपूर्वकं ततःप्रभातसमयेकृत्वास्नानादिकर्मच पूर्ववच्चार्चयेद्देवींपश्चाद्धोमंसमाचरेत् स्वगृह्योक्तविधानेनकृत्वाग्नि
स्थापनंततः प्रारभेच्चततोहोमंनवग्रहपुरःसरं तिलांश्चयवसंमिश्रानाज्येनचपरिप्लुतान् जुहुयाद्रुद्रमंत्रेणगौरीमंत्रेणवेदवित् अ
ष्टोत्तरशतंचापिअष्टाविंशतिमेववा एवंसमाप्यहोमंतुतत्राचार्यंप्रपूजयेत् सुवर्णरत्नवासोभिर्गांदद्याच्चयथाविधि शय्यांसो
पस्करांदद्यादाचार्यायप्रयत्नतः षोडशद्विजयुग्मानिपक्वान्नैश्चसुभोजयेत् सौभाग्यद्रव्यवस्त्राणिवंशपात्राणिषोडश दातव्या

निप्रयत्नेनब्राह्मणेभ्योयथाविधि अन्येभ्योद्विजवर्येभ्योदक्षिणांचप्रयत्नतः भूयसींपरयाभक्त्याप्रदद्याच्छिवतुष्टये उद्दिश्यपा
र्वतीशंचसर्वंकुर्याद्दत्तंद्वितः बंधुभिःसहभुंजीतनियतस्त्वपरेहनि एवंयाकुरुतेनारीव्रतराजंमनोहरम् सौभाग्यमखिलंतस्याः
सप्तजन्मन संशयः इतिश्रीहरितालिकाव्रतोद्यापनंसंपूर्णं अथाश्विनकृष्णतृतीयायांवृहद्गौरीव्रतम् जोलीनिदेशभाषायां
शाखामूलफलैःसहारिंगिणींगृहेआनीयसिकतावेद्यांनिक्षिप्यउदकेनासिच्यतंचंद्रोदयंदृष्ट्वास्नात्वापंचसखीभिःसहअलंकृत्य
पूजयेत् तद्यथा ममइहजन्मनिजन्मांतरेचाक्षय्यसौभाग्यप्राप्तिकामापुत्रपौत्रादिधनधान्यैश्वर्यप्राप्त्यर्थंश्रीगौरीप्रीत्यर्थंवृहद्गौ
रीव्रतंकरिष्ये कलशेवरुणंसंपूज्यवृहद्गौरींप्रपूजयेत् चतुर्भुजांस्वर्णाभांनानालंकारभूषितां हिमेंदुतुहिनाभासांमुक्तामणि
विभूषितां पाशांकुशधरांदेवींध्यायेत्सर्वार्थसिद्धिदां कमंडलुधरांसूक्ष्मांपानपात्रंचबिभ्रतीं ध्यायामि एहिमातर्विशुद्धेत्वंत्रिगु
णेपरमेश्वरि आवाहयामिभक्त्यात्वांप्रसन्नाभवसर्वदा आवाहनं हेमरत्नकृतंदेविआसनंनैर्विनिर्मितं पाशांकुशधरांदेवीमास
नेस्थापयाम्यहं आसनं अक्षमालांकुशधरेवीणापुस्तकधारिणि भक्त्यादत्तंमयातोयंपाद्यार्थंप्रतिगृह्यतां पाद्यं अर्घ्यंददामितेमा
तर्भक्तानामभयंकरे गृहाणत्वंवृहद्गौरिगंधाक्षतसमन्वितं अर्घ्यं भक्तानामिष्टदेमातःसर्वालंकारसंयुते आचम्यतांजगन्मा
तर्वृहद्गौरिनमोस्तुते आचमनं ततःपंचामृतस्नानं स्नापयामिजगन्मातस्त्वांस्कृतीर्थजलेनवै मार्थयित्वामयादेविसद्यस्त्वापवित्रा

शिनि स्नानं वस्त्रंधौतंमयादेविदुकूलंनवनिर्मितं भक्त्यासमर्पितंमातर्गृह्यतांजगदंबिके वस्त्रं हरिद्रांकुंकुमंचैवसिंदूरंकज्जला-
न्वितं सौभाग्यद्रव्यसंयुक्तंगृहाणपरमेश्वरि सौभाग्यद्रव्यं पंचसूत्रनिर्मितंदोरकंअर्पयेत् मलयाचलसंभूतंघनसारंमनोहरं
गंधंगृहाणदेवित्वंबृहद्गौरिनमोस्तुते गंधं करवीरैर्जातिकुसुमैश्चंपकैर्बकुलैःशुभैः शतपत्रैश्चकल्हारैरर्चयेत्परमेश्वरीं पुष्पं-
धूपोयंगृह्यतांदेविकालागरुसमन्वितः आघ्रेयःसर्वदेवानांदेवद्रुमरसोद्भवः धूपं दीपंगृहाणदेवेशित्रैलोक्यतिमिरापहं वह्निना
योजितंमातर्बृहद्गौरिनमोनमः दीपं नैवेद्यंगृह्यतांदेविभक्तिंमेत्व्यचलांकुरु ईप्सितंमेवरंदेहिपरत्रचपरांगतिं नैवेद्यं पानीयं इ
दंफलमितिनारिकेलफलं पूगीफलमितितांबूलं हिरण्यगर्भेतिदक्षिणां नीराजनं पुष्पांजलिं अथकंठेदोरकंबध्नीयात् धार
यिष्यामिभद्रेत्वांत्वद्भक्त्यात्वत्परायणा आयुर्देहियशोदेहिसौभाग्यंदेहिमेशिवे दोरकबंधनं क्षेमसंपत्करेदेविसर्वसौभाग्यदा
यिनि सर्वकामप्रदेदेविगृहाणार्घ्यंनमोस्तुते इतिविशेषार्घ्यं ततश्चंद्रार्घ्यं क्षीरोदार्णवसंभूतलक्ष्मीबंधोनिशाकर गृहाणा-
र्घ्यंमयादत्तंरोहिण्यासहितःशशिन् प्रार्थना गगनांगणसंदीपक्षीराब्धिमथनोद्भव भाभासितदिगंतांतरमानुजनमोस्तु
ते आनीतासिमयादेविपूजितासिमयाशुभे सौभाग्यंममदेहित्वंयत्रस्थानंतत्रगम्यताम् इतिविसर्जनं अथकथा विजयोवाच
अथान्यच्चबृहद्गौरीव्रतंवक्ष्यामिकन्यके मासिभाद्रपदेकृष्णेतृतीयायांचतद्व्रतं आनयेद्बृहतींगौरींशारवामूलफलैःसह रिंगिणीद्द

क्षंसमूलंआनयेत् निक्षिप्यगृहवेद्यांतुनदधःसिकतांशुभां न्यसेत्त्वंद्रोद्यंदृष्ट्वास्नात्वाधौतांबरावृता सखीभिःसहितासम्यकूअ
लंकृत्यमपूजयेत् गौरीमावाह्यविधिवत्सिकतामंडलेशुभे गंधपुष्पाक्षतैर्दिव्यैर्धूपदीपैरनेकशः सर्वोपचारैरर्हतीपंचपंचभिरर्चये
त् एवंपूज्ययथाशक्त्याकृत्वान्वेवप्रदक्षिणां बध्नीयाद्दोरकंपश्चात्तंतुपंचकनिर्मितं बध्नामिदोरकंकंठेत्वदुक्तात्वत्परायणा आयुर्दे
हियशोदेहिसौभाग्यंदेहिमेशुभे अनेनदोरकंबध्वाचंद्रायार्घ्यंसमर्पयेत् क्षेमसंपत्करेदेविसर्वसौभाग्यदायिनि सर्वकामप्रदेदेवि
गृहाणार्घ्यंनमोस्तुते गगनांगणसंदीपक्षीराब्धिमथनोद्भव भाभासितदिगंतांतसोमराजनमोस्तुते कथामेतांचशृणुयाद्भोर्ययै
तन्मनाःसदा ततोगोधूमचूर्णेनपंचभिःकुंडवैर्युतं पक्वान्नमर्धविप्रायदत्वाभुंजीतचस्वयं एवंवैपंचवर्षाणिकृत्वाव्रतमनुत्तमं स
र्वान्कामानवाप्नोतिनात्रकार्याविचारणा ऋषिकन्योवाच केनचादौपुराचीर्णंव्रतमेतत्त्वयोदितं ईप्सितंकोपिलेभेवाव्रतस्यास्यप्र-
भावतः विजयोवा॰ शृणुकन्येयथाप्राप्तंपार्वत्याकथितंपुरा सूतउ॰ शृणुध्वमृषयःसर्वेनैमिषारण्यवासिनः पुराकृतयुगस्यादौस
र्वभूतहितैषिणा शंभुनाकथितंगौर्यैतद्व्रतंकथयाम्यहम् कदाचिदुपविष्टंतंपार्वतीपर्यपृच्छत पार्वत्यु॰ शंभोत्वांप्रष्टुमिच्छामिक
रुणाकरशंकर सर्वबाधोपशमनंसर्वकामफलप्रदं व्रतानांसर्वदानानामुत्तमंब्रूहितत्वतः आयुरारोग्यदंदेवपुत्रपौत्रप्रदायकं तद्व्रतंब्रू
हिदेवेशयद्यहंतववल्लभा ईश्वरउ॰ शृणुदेविपरंगुह्यंव्रतंपरमदुर्लभं पुराभूद्द्वापरस्यांतेपंडोःप्रियवरांगना वर्षषोडशसंपूर्णासं

पन्नवयौवना अनपत्यातुसाकुंतीभर्त्तारमिदमब्रवीत् कुंत्युवा॰ केनकर्मविपाकेनपुत्रहीनास्मिदुःखिता अनपत्यप्रतीकारमिदानीं
ब्रूहितत्वनः पांडुरु॰ ऋषिशापोस्तिमेभद्रेयतस्तेनभविष्यति भर्तुस्तद्वचनंश्रुत्वापितृगेहेभ्यगात्स्वयं पितुर्गेहेवर्तमानाकुंतीव्यासंद
दर्शह नमस्कृत्यचतंप्राहकुंतीसुकुलितांजलिः कुंत्युवा॰ व्रतंमेकथयाशुभत्वपुत्रसंतानकारकं सर्वसंपत्करंनृणांव्रतमेकंमहामुने
व्यासउ॰ शृणुत्वंबृहतीगौर्याव्रतंसंतानदायकं भाद्रकृष्णतृतीयायांनिशिचंद्रोदयेशुभे स्नानंकृत्वाचविधिवत्मौनीभूत्वाव्र
तंचरेत् सर्वसंपत्करंचैवस्त्रीणांपुत्रान्नसौख्यकृत् भूहिरण्यादिदानानांसर्वेषामधिकंव्रतम् पंचवर्षंविधातव्यंततउद्यापनंच
रेत् उद्यापनविधानेनसंपूर्णफलमश्नुते अंतेतुकारयेद्भक्त्यासौवर्णंबृहतीफलं षष्ठ्युत्तरचतुर्भिश्चशुभैर्बीजैर्युतंतुतत् देव्याःपुर
स्तुसंस्थाप्यपूर्ववत्प्रतिपूजयेत् आचार्यंपूजयेद्भक्त्याविप्रान्पंचतथैवच सुवासिन्यःपंचपूज्यावस्त्रालंकारभूषणैः कंचुकैश्चै
वताटंकैःकंठसूत्रैर्हरप्रियाम् वंशपात्राणिपंचैवसूत्रैःसंवेष्टितानिच सिंदूरंजीरकंचैवसौभाग्यद्रव्यसंयुतं गोधूमपिष्टजातं
चबृहतीफलपंचकं वायनानिचपंचैवताभ्योदद्यात्तुभोजनं अर्घ्यंदत्वावायनानिदत्वाभुंजीतवाग्यता तत्फलंधारयेत्कंठेसर्व
कामसमृद्धये ततःप्रातःसमुत्थायसालंकारासखीजनैः गीतवाद्ययुतानद्यांगौरींतांतुविसर्जयेत् आगच्छवरदेदेविपूजिता
सिमयाशुभे ममसौभाग्यदानाययथेष्टंगम्यतांत्वया एतद्व्रतप्रभावेनकाचिद्ब्राह्मणकन्यका पतिंसंजीवयामासनिर्भर्त्स्यंयम

किंकरान् तस्माच्चरत्वंव्रतमेतदायुर्मायुःप्रदंपुत्रसमृद्धिदंच पुत्रैश्चपौत्रैश्चयुताचपत्यागौरीप्रसादाद्ध्रुवजीववत्सा यइदंशृणुयान्नित्यं-
श्रावयेद्वासमाहितः सभुक्त्वाविपुलान्भोगानंतेशिवपदंव्रजेत् इतिश्रीभविष्योत्तरपुराणेबृहद्गौरीव्रतोद्यापनंसंपूर्णं इदंकर्णाटके
प्रसिद्धं अथमार्गशीर्षमाघेवाकृष्णात्तृतीयायांसौभाग्यसुंदरीव्रतम् तच्चचतुर्थीयुतायांकार्यम् नद्वितीयाविद्धायां द्वितीयावेधर
हितात्तृतीयायासिनाभवेत् चतुर्थीयोगिनीकिंचिन्न्यूनाद्धावापियदाभवेत् नारदउ० भगवंस्तेप्रजाःसृष्टानानावर्णास्तथागुणाः
स्वेदजाअंडजाश्चैवउद्भिजाश्चजरायुजाः देवासुराःसगंधर्वाःसयक्षोरगराक्षसाः एकेसुरूपाःसुभगाबलिनश्चापरेतथा त
थान्येदुःखसंयुक्ताःकाणामूकाश्चपंगवः दुःशीलादुर्भगादीनाःपापकर्मकराःसदा एवंमेत्हृदिसंतापःसंशयंच्छेत्तुमर्हसि ब्रह्मो
वा० शृणुवत्सप्रवक्ष्यामित्वंभक्तोसिप्रियोसिमे कर्मबीजप्ररूढंहिशरीरंपांचभौक्तिकं येदत्तदानाजायंतेसुरूपाःसुखिनोजनाः
तपःप्रभावाज्जायंतेबलिनःसुभगास्तथा अदत्तदानाजायंतेपरकर्मकराःसदा परापवादवक्तारःपरद्रव्यापहारकाः हंतारःप्रा
णिनांचैवअभक्ष्याणांचभक्षकाः क्रमशोनरकान्भुक्त्वाजायंतेकुत्सितानराः दारिद्राःपंगवोमूकाःकाणाद्यादुर्भगास्तथा
नारदैवंस्वकर्मोत्थानरानार्यश्चदुःखिताः नारदउ० उपायंब्रूहिभगवन्येनकर्मक्षयोभवेत् तपोदानव्रतंतीर्थंशरीरस्यच
शोषणं दुःखसंतापनस्नानांजीवितान्मरणंवरम् ब्रह्मोवाच शृणुनारदयद्गुह्यंव्रतानामुत्तमंव्रतम् सर्वदुःखप्रशमनं-

व्याधिदारिद्र्यनाशनं सुखसौभाग्यजननंपुत्रपौत्रप्रदायकं वसिष्ठायपुराप्रोक्तंऋषीणांचसमागमे कैलासशिखरेरम्येशंकरेण
महात्मना नारदउ० कस्मात्प्रोवाचभगवान्कृपाकस्माच्चजायते ब्रह्मोवा० दृष्ट्वाद्भुतंचसौभाग्यमरुंधत्याजगत्प्रभुः तथारू
पंचशीलंचसौभाग्यमतुलंतथा कृत्वाशिरःप्रकंपंचजहासमृदुशंकरः पृष्टवान्शंकरंदेवंवसिष्ठःस्मिनकारणम् ईश्वरउ०
अहोव्रतस्यमाहात्म्यंश्रूयतामृषिसत्तमाः पुराजन्मनिशूद्रस्यदासकर्मकरासदा उच्छिष्टभोजनानित्यंउच्छिष्टशयनासदा
कुरूपादुर्भगादीनारूक्षांगगद्गदभाषिणी नाम्नामेघवतीख्यातादुर्दर्शवदनाशुभा एकदाप्रेषणार्थंसागताब्राह्मणसंनिधौ
श्रुतंव्रतंचनारीणांवाच्यमानंद्विजन्मना सौभाग्यसुंदरीनामतृतीयासर्वकामदा ज्ञात्वाचारगमेशास्त्रेसर्वकामफलप्रदा ह
विष्यंचततोच्छिष्टंपारणंचतथाकृतं केवलंचव्रतंचीर्णंश्रद्धापूतेनचेतसा श्रद्धयाधार्यतेधर्मोबहुभिर्नार्थराशिभिः ऋषयश्च
क्रिरेधर्मंश्रद्धयाभाविनात्मना तेनधर्मविपाकेननिषादाधिपतेःसुता सुरूपाचसुशीलाचसर्वलक्षणसंयुता संपूर्णावयवाजा
तानस्यादेव्याःप्रसादतः उच्छिष्टभोजनाजातानिषादानांचयोनिषु अदत्तदानात्संजातातपसाभोगवर्जिता व्रतप्रभावा-
त्संजातासुरूपाचपतिव्रता महासौभाग्यसंयुक्तासाक्षाल्लक्ष्मीरिवापरा सर्वकामप्रदादेवीनंदिनीवसतेगृहे तद्व्रतंचा-
स्तिदेवर्षेसर्वकामफलप्रदं नारदउ० व्रतस्यास्यविधिंब्रूहिकोविधिःकिंचपूजनम् कस्मिन्मासेप्रकर्तव्यंदेवताकाप्रकीर्ति

ना किंपुण्यंकिंचनैवेद्यंध्यानंकस्यचपूजनं ब्रह्मोवाच व्रतस्यारंभणंचादौमार्गशीर्षेथमाघके द्वितीयावेधरहितात्तृतीयायासि

नाभवेत् चतुर्थीयोगिनीकिंचित्क्षुद्राप्यपियदाभवेत् उपवासंप्रकुर्वीतदंतधावनपूर्वकं अपामार्गेणकुर्वीतदंतशुद्धिंतदाव्रती

उमेदेविनमस्तुभ्यंशंकरस्यार्धधारिणि प्रसीदत्वंमहेशानिकरिष्येव्रतमुत्तमं सान्निध्यंकुरुमेदेविव्रतेस्मिन्हरवल्लभे नियमसं

सौभाग्यसुंदरीनामवशिनीसाप्रकीर्तिता सर्वकामप्रदादेविसर्वसंपत्प्रशंकरी तस्यादर्शनमात्रेणसदासंजायतेजगत् द्रोण

पुष्पैश्चसंपूज्यादाडिमंचार्घ्यहेतवे नैवेद्यंमोदकान्दद्यात्कर्पूरंप्राशयेत्ततः वत्सपौषासितेपक्षेतृतीयायांव्रतंभवेत् चेलिकादं

तकाष्ठंचमरुवकेणचपूजनम् राज्यसौभाग्यदानामसुंदरींपूजयेत्ततः धात्रीफलंतदेवार्घ्यंकंकोलंप्राशयेन्निशि नैवेद्येवटकाः

कार्याघृतशर्करयान्विताः कंकोलांबुतथाप्राश्यराज्यसौभाग्यहेतवे घृतेनबोधयेद्दीपंरात्रौजागरणंतथा सर्वकामप्रदादेवीसर्व

दुःखहरापरा सर्वैश्वर्यप्रदादेवीसर्वपापहराशुभा एकापिबहुधात्मानंनामरूपप्रभेदतः माघमासेचसंप्राप्तेबदर्यादंतधावनम्

प्रातःकुर्वीतनियमंरूपसौभाग्यहेतवे अपराण्हेततःस्नात्वासर्वाभरणभूषिता चूतपुष्पैश्चसंपूज्यारूपसौभाग्यसुंदरी नारी

केरार्घ्यदानंचनैवेद्येशष्कुलीस्मृता प्राशनंचैवकस्तूरीरूपसौभाग्यसंयुता पूजयेत्तत्रयासर्वकामसौभाग्यसुंदरीं फाल्गुन

स्यसितेपक्षेप्रातर्नियमसंयुता सौभाग्यसुंदरीबिल्वदंतकाष्ठंतुकारयेत् स्नानंकृत्वातथानारीकांचनारैश्चपूजयेत् नैवेद्यं

सक्तवस्तत्रघृतशर्करयान्विताः यक्षकर्दमजोलेपोधूपाश्चागरुसंभवाः सर्वासुचतृतीयासुविधिरेषउदाहृतः बीजपूरार्घ्यदानंच
प्राशनंचंदनोदकं प्राशनस्यप्रभावेनसर्वान्कामानवाप्नुयात् पारणंचप्रकर्तव्यंसहसर्वैश्चबांधवैः चैत्रेमासिप्रकर्त्तव्यातृती
यापापनाशिनी प्रयत्नेनप्रकर्तव्यासुखसौभाग्यसुंदरी दंतकाष्ठंसमुद्दिष्टंजंबूवृक्षसमुद्भवम् पूजादमनकेर्नामअर्घ्यं-
बिल्वफलंस्मृतं नैवेद्येमंडकाःप्रोक्ताशर्कराघृतसंयुताः सुखसौभाग्यप्राप्त्यर्थंप्राशनंवज्रधारिणः वैशाखस्यसितेपक्षे
तृतीयायामुपोषयेत् मालतीदंतकाष्ठंचनियमग्रहणंततः पतिसौभाग्यदांदेवींसुंदरींपूजयेत्ततः पद्मैःसितैःसुरक्तैश्चमल्लि
काभिश्चपूजयेत् दधिभक्तंसकर्पूरंशर्कराघृतसंयुतं नैवेद्यंकल्पयेद्देव्याअर्घ्यंचाम्रफलंभवेत् हेमोदकंचसंप्राश्यपुष्टिसौ-
भाग्यमाप्नुयात् ज्येष्ठेमासितृतीयायांउपवासपराभवेत् यूथिकादंतकाष्ठंचलावण्यसुभगार्थिनी मल्लिकाकुसुमैःपूज्याय
क्षकर्दमचर्चिता लावण्यसुभगांदेवींसुंदरींपूजयेत्ततः कदलीफलार्घ्यदानंचनैवेद्यंघृतपूरिका मौक्तिकांबुततःपीत्वालाव-
ण्यसुभगाभवेत् आषाढेचततोमासिपतिसौभाग्यसुंदरी प्रातरुत्थायकर्तव्यंदंतकाष्ठमशोकजं नियमंतत्रकुर्वीततृतीया
यांप्रयत्नतः बिल्वपत्रैःकोमलैश्चपतिसौभाग्यसुंदरी जंबूफलार्घ्यदानंचनैवेद्यंपायसंस्मृतं शर्कराघृतसंयुक्तंसुंदरीप्रीयतां
मम विद्रुमांबुनिशिप्राश्यहविषापारणंस्मृतं सपत्नीनांपुरैनैवसापश्यतिकदाचन श्रावणेमासिसंप्राप्तेतृतीयायामुपोषि

ता बैल्वंवाबादरंकाष्ठंजातिपुष्पैश्च पूजनम् सर्वैश्वर्यंचसौभाग्यंसुंदरींपूजयेत्ततः नैवेद्यंघृतपक्वान्नंधूपदीपादिकंतथा कदलीफ
लार्घ्यदानंचप्राशयेद्राजतंपयः गजाश्वपुत्रदासीनांहेमरत्नादिवाससां ईश्वरीसर्वलोकानांभगवत्याःप्रसादतः मासिभाद्रपदे
प्राप्ते पूज्यासौभाग्यसुंदरी दंतकाष्ठंतुकर्तव्यंमातुलिंगीसमुद्भवम् उत्पलैःपूजयेद्देवीमर्घ्यंकर्कोटकीफलम् नैवेद्येशोकवर्तिन्यापि
बेन्माणिक्यजंपयः कर्पूरागरुकस्तूरीसुखदंशस्तगंधिना आश्वयुज्यासितेपक्षेतृतीयायांव्रतंचरेत् दंतकाष्ठंप्रकर्तव्यंप्लक्षवृ
क्षसमुद्भवम् पूजयेत्परयाभक्त्यापुत्रसौभाग्यसुंदरीं उत्पलैःशतपत्रैश्च पूजाकार्याप्रयत्नतः नारिंगमर्घ्यदानार्थंकूष्मांडंवापि
कल्पयेत् नैवेद्येगणकान्शुभ्रान्शर्कराघृतपाचितान् औदुंबरंपयःप्राश्यसुंदरीप्रीयतांमम पुत्रपौत्रसमायुक्तासुखसौभा-
ग्यसुंदरी कार्तिकेमासिसंप्राप्तेतृतीयायामुपोषिता औदुंबरंदंतकाष्ठंकृत्वाव्रतमुपाचरेत् केतकीभिश्चसौभाग्यंप्राप्तयोगांच
सुंदरीम् निवेदयेद्दूपांश्चसुगंधान्शालिसंभवान् अक्षोडंचार्घ्यदानेचलवंगंप्राशयेत्ततः सावित्र्यायोगंनचाप्नोतिपितृभ्रातृ
सुतादिभिः एवंचीर्णेव्रतेकुर्यादुद्यापनविधिंततः सर्वशास्त्रमधीयानमागमेषुविशारदम् आचार्यंप्रार्थयेत्स्नातमार्गशीर्षेय
थाविधि चीर्णंव्रतंमयाचार्यउद्यापनविधिंमम व्रतवैकल्यनाशाययथाशास्त्रंसमाहितः सुंदरीमंडलंकार्यंगौरीतिलकमेववा
उमामहेश्वरंदेवंसुवर्णेनतुकारयेत् व्रतारंभेयथाशक्त्याराजतंवापिकारयेत् वित्तशाठ्यंनकर्तव्यंसतिद्रव्येफलार्थिना वर्षे

प्रपूज्यतांमूर्तिनामेवंमंडलेर्चयेत् सर्वोपहारैर्गंधैश्चपुष्पैर्नानाविधैरपि एकैवसाजगन्माताबहुरूपैर्व्यवस्थिता रूपैर्द्वादशभि
श्चैवपूज्यासौभाग्यसुंदरी ततःपद्मनिभांदेवींरक्तवस्त्रोपशोभितां रक्ताभरणशोभाढ्यांरक्तकुंकुमचर्चिताम् ध्यात्वाचैवंवि
धांदेवींपूजयेदेकमानसा रात्रौजागरणंकार्यंगीतवादित्रनिःस्वनैः ततःसर्वाणिपुष्पाणिनैवेद्यादिफलानिच अर्घ्यार्थंपरिक
ल्प्यानिसर्वकामार्थसिद्धये ततःप्रभातेविमलेस्नानंकृत्वाविधानतः कुसुंभकुसुमैर्होमंकिंशुकैर्वापिकारयेत् अष्टोत्तरशतं
पूर्णंमध्वान्नंपयसान्वितम् तदभावेतुकर्तव्यःशतपत्रैर्विधानतः आसूरेणचमंत्रेणगौणंसुरवंसमाचरेत् भोजयेच्चप्रयत्ने
नचत्वार्यष्टौविधानतः मिष्टान्नेनसपत्नीकान्भक्त्यावैपरितोषयेत् वस्त्रालंकरणैश्चैवयथाशक्त्याप्रपूजयेत् सौभाग्यव
स्त्रंचैकैकंनारीणांचैवदापयेत् ततोहस्तेप्रदातव्यंकुंकुमंलवणंगुडम् नारिकेरंतथावल्लीदूर्वासिंदूरकज्जलं मंगलाष्टकमेत
द्धिदत्वासौभाग्यमाप्नुयात् आचार्यंचसपत्नीकंवस्त्रालंकरणैःशुभैः परिधाययथाशक्त्यामंडलंतत्समर्पयेत् प्रार्थयेच्चतत
तोदेवींसर्वसौभाग्यसुंदरीम् पूजितासिमयादेविसर्वसौभाग्यसुंदरी दत्वामत्प्रार्थितान्कामान्गच्छदेवियथासुखं मूर्ति
चमंगलंदेव्याउपहारांश्चसर्वशः गुरोगृहाणसर्वंत्वंसुंदरीप्रीयतामिति त्वत्प्रसादान्मयाचीर्णंव्रतमेतत्सुदुर्लभं क्षमस्व
विप्रशार्दूलप्रसादसुसुखोभव एवंचीर्णव्रतानारीकृतकृत्याभवेत्सदा येनेदंचकृतंवर्षसंप्राप्तंजन्मनःफलम् नातःपरतरं

किंचिद्व्रतंसौभाग्यकारकम् देहांतेशिवलोकेतुभोगान्भुक्त्वायथेप्सितान् इतिभविष्योत्तरसौभाग्यसुंदरीव्रतोद्यापनंसंपू
र्णम् अथचतुर्थीव्रतानिलिख्यंते तत्रश्रावणकृष्णचतुर्थ्यांसंकष्टचतुर्थीव्रतम् तच्चचंद्रोदयव्यापिन्यांकार्यम् श्रावण
बहुलेपक्षेचतुर्थ्यांतुविधूदये गणेशंपूजयित्वातुचंद्रायार्घ्यंप्रदापयेत् १ दिनद्वयेतद्व्याप्तौपूर्वैव मातृविद्धागणेश्वरइतिव
चनात् दिनद्वयेअव्याप्तौपरैव हेमाद्रौ चंद्रोदयाभावेचतुर्थी निशिषट्घटिव्याप्तायांपरेवव्रतेइति अथव्रतविधिः मासप
क्षाद्युल्लिख्यतिथौममविद्याधनपुत्रपौत्रप्राप्त्यर्थंसमस्तरोगमुक्तिकामःश्रीगणेशप्रीत्यर्थंसंकष्टचतुर्थीव्रतमहंकरि० तत्रादौस्व
स्तिवाचनंगणपतिपूजनंकलशार्चनंचकरिष्ये सौवर्णरौप्यताम्रमृन्मयाद्यन्यतमांगणपतिमूर्तिंकृत्वाजलपूर्णपूर्णपात्रवस्त्रयु
तकुंभोपरिस्थापयित्वाषोडशोपचारैःपूजयेत् आदौध्यानं तद्यथा लंबोदरंचतुर्बाहुंत्रिनेत्रंरक्तवर्णकं नानारत्नैःसुवेषाढ्यं
प्रसन्नास्यंविचिंतयेत् ध्यायेद्गजाननंदेवंतप्तकांचनसुप्रभम् चतुर्बाहुंमहाकायंसूर्यकोटिसमप्रभं इतिध्यानम् आगच्छ
त्वंजगन्नाथसुरासुरनमस्कृत अनाथनाथसर्वज्ञविघ्नराजकृपांकुरु सहस्रशीर्षा० आवाह० गजास्याय० नमोगजास्यमावा०
गौमात्वंसर्वलोकानामिंद्रादीनांविशेषतः भक्तदारिद्र्यविच्छेत्ताएकदंतनमोस्तुते पुरुषएवेदं० विघ्नराजाय० आसनं मोद
कान्धारयन्हस्तेभक्तानांवरदायक देवदेवनमस्तेस्तुभक्तानांफलदोभव एतावानस्य० लंबोदराय० पाद्यं० महाकायमहारु

पअनंतफलदोभव देवदेवनमस्तेस्तुसर्वेषांपापनाशन त्रिपादूर्ध्व० शंकरसूनवे० अर्घ्यं० कुरुष्वाचमनंदेवसुरवंद्यसुवाहन सर्वाघद
लनस्वामिन्नीलकंठनमोस्तुते तस्माद्विराळ० उमासुताय० आचमनीयं स्नानंपंचामृतेनैवगृहाणगणनायक अनाथनाथसर्वज्ञ
नमोमूषकवाहन पयोदधिघृतंचैवशर्करामधुसंयुतं पंचामृतेनस्नपनंक्रीयतांगणनायकः वक्रतुंडाय० पंचामृतस्नानं गंगा
चयमुनाचैवगोदावरीसरस्वती नर्मदासिंधुकावेरीजलंस्नानायकल्पितं यत्पुरुषेण० हेरंबाय० स्नानं रक्तवस्त्रंसुयुग्मंचदेवा
नामपिदुर्लभं गृहाणमंगलंदेवलंबोदरहरात्मज तंयज्ञं० शूर्पकर्णाय० वस्त्रं० ब्रह्मसूत्रंसोत्तरीयंगृहाणगणनायक आरक्तं
ब्रह्मसूत्रंचकनकस्योत्तरीयकम् तस्माद्यज्ञात्सर्वहुतः० कुब्जाय० यज्ञोपवीतं गृहाणेश्वरसर्वज्ञदिव्यचंदनमुत्तमं करुणाक
रअब्जाक्षगौरीसुतनमोस्तुते तस्माद्यज्ञात्सर्वहुतऋचःसा० गणेश्वरा० गंधं अक्षतान्श्वसुरश्रेष्ठकुंकुमाक्ताःसुशोभिताः म
यानिवेदिताभक्त्यागृहाणगणनायक अक्षतान० सुगंधिदिव्यमालांचगृहाणगणनायक विनायकनमस्तुभ्यंशिवसूनोन
मोस्तुते मालाम् माल्यादीनिसुगंधीनि० तस्मादश्वा० विघ्ननाशिने० पुष्पाणि० अथांगपूजा गणेश्वराय० पादौपू० विघ्न
राजाय० जानुनीपू० आखुवाहना० ऊरूपू० हेरंबाय० कटीपू० कामहारिसूनवे० नाभिं० लंबोदराय० उदरं० गौरीसुताय० स्तनौपू०
गणनायकाय० हृदयंपू० स्थूलकंठाय० कंठंपू० स्कंदाग्रजाय० स्कंधौपू० पाशहस्ताय० हस्तौ० गजवक्त्राय० वक्त्रंपू० विघ्नहर्त्रे० लला

टंपू॰ सर्वेश्वराय॰ शिरः पू॰ श्रीगणाधिपाय॰ सर्वांगंपू॰ दशांगंगुग्गुलंधूपमुत्तमंगणनायक गृहाणदेवदेवेशउमासुतनमोस्तुते यत्पुरु
षं॰ विकटाय॰ धूपं॰ सर्वज्ञसर्वरत्नाढ्यसर्वेशविबुधप्रिय गृहाणमंगलंदीपंघृतवर्तिसमन्वितं ब्राह्मणोस्य॰ वामनाय॰ दीपं॰ नैवेद्यं
गृह्यतांदेवनानामोदकसंयुतम् पक्वान्नफलसंयुक्तंषड्रसैश्चसमन्वितं चंद्रमामनसो॰ सर्वाय॰ नैवेद्यं॰ तृष्णावेण्यागौतमीनांपयो
ष्णीनर्मदाजलैः आचम्यतांविघ्नराजप्रसन्नोभवसर्वदा आचमनं॰ फलान्यमृतकल्पानिसुगंधीन्यघनाशन आनीतानियथाशक्त्या
गृहाणगणनायक सर्वार्तिनाशिने॰ फलं॰ तांबूलंगृह्यतांदेवनागवल्यादलैर्युतम् कर्पूरेणसमायुक्तंसुगंधंसुखभूषणं विघ्नहर्त्रे॰
तांबूलं॰ सर्वदेवाधिदेवत्वंसर्वसिद्धिप्रदायक भक्त्यादत्तांमयादेवगृहाणजगदीश्वर सर्वेश्वराय॰ दक्षिणां॰ पंचवर्तिसमायुक्तंव
ह्निनायोजितंमया गृहाणमंगलंदीपंविघ्नराजनमोस्तुते नीराजनं॰ यानिकानिचपापानि॰ नाभ्याआसी॰ प्रदक्षिणाः नमोस्त्वनं॰
सप्तास्येतिनमस्कारः यज्ञेनयज्ञमितिमंत्रपुष्पांजलिं॰ एवंपूजाप्रकर्तव्याषोडशैरुपचारकैः मोदकान्कारयेदेवमेकविंशतिसंख्यया
तेषांमध्येप्रदानव्यादशसंख्याश्चपार्वति देवाग्रेस्थापयेत्पंचपंचविप्रायकल्पयेत् पूजयित्वातुतंविप्रंभक्तिभावेनदेववत् दक्षिणां
चयथाशक्त्यादत्वावैपंचमोदकान् पूजयेन्निशिचंद्रंचअर्घ्यंदत्वायथाविधि क्षीरसागरसंभूतसुधारूपनिशाकर गृहाणार्घ्यंम
यादत्तंगणेशप्रीतिवर्धन रोहिणीसहितचंद्रमसेन॰ इदम॰ क्षीरोदार्णवसंभूतसुधारूपनिशाकर गृहाणार्घ्यंमयादत्तंरोहिण्या

सहितःशशिन् रोहिणीसहितचंद्राय॰ इदम॰ गणेशायनमस्तुभ्यंसर्वसिद्धिप्रदायक संकष्टहरमेदेवगृहाणार्घ्यंनमोस्तुते कृष्णपक्षे
चतुर्थ्यांतुपूजितोसिविधूदये क्षिप्रंप्रसादितोदेवगृहाणार्घ्यंनमोस्तुते संकष्टहरगणेशाय॰ इदमर्घ्यं॰ तिथीनामुत्तमेदेविगणे
शप्रियवल्लभे सर्वसंकष्टनाशायचतुर्थ्यर्घ्यंनमोस्तुते वायनमंत्रः विप्रवर्यनमस्तुभ्यंमोदकान्वैददाम्यहं मोदकान्सफलान्पंचद
क्षिणाभिःसमन्वितान् आपदुद्धरणार्थायगृहाणद्विजसत्तम प्रार्थना अबुद्धमतिरिक्तंवाद्रव्यहीनंमयाकृतं तत्सर्वंपूर्णतांयातु-
विप्ररूपगणेश्वर ब्राह्मणान्भोजयेदेवंयथातंरव्यंयथासुखं स्वयंभुंजीतमौनेनमोदकान्ब्राह्मणैःसह अशक्तश्चैकमन्नंचभुंजी
तदधिसंयुतं अथवाभोजनंकार्यमेकवारंहिमाद्रिजे प्रतिमांगुरवेदद्यादाचार्यायसदक्षिणां वस्त्रकुंभसमायुक्तामादौमंत्रमि
मंजपेत् ॐ नमोहेरंबमदमोदितसंकष्टान्निवारयनिं॰इतिमूलमंत्रंएकविंशतिवारंजपेत् विसर्जनमंत्रः गच्छगच्छसुरश्रेष्ठ-
स्वस्थानेत्वंगणेश्वर व्रतेनानेनदेवेश यथोक्तफलदोभव इतिपूजा अथकथा ऋषयऊचुः दारिद्र्यशोककष्टाद्यैःपीडितानांच
वैरिभिः राजश्रेष्ठैर्नृपैःसर्वैःक्रियतेकिंशुभार्थिभिः धनहीनैर्नरैःस्कंदसर्वोपद्रवपीडितैः विद्यापुत्रगृहभ्रष्टैर्योगयुक्तैःशुभा-
र्थिभिः कर्तव्यंकिंवदोपायंपुनःक्षेमार्थसिद्धये स्कंदउ॰ शृणुध्वंमुनयःसर्वेव्रतानामुत्तमंव्रतम् संकष्टतरणंनामसंपत्तिसुखदा
यकम् येनोपायेनसंकष्टंतरंतिभुविदेहिनः यद्दत्तंदेवकीपुत्रःकृष्णोधर्मायदत्तवान् अरण्येक्लिश्यमानायपुनःक्षेमायसिद्धये य-

थाकथितवान्पूर्वंगणेशोमातरंप्रति तथाकथितवान्श्रीशोद्वापरेपांडवान्प्रति ऋषयऊचुः यथाकथितवानंबांपार्वतींश्रीगणेश्व
रः तथापृच्छंतिमुनयोलोकानुग्रहकांक्षिणः स्कंदउ॰ पुराकृतयुगेपुण्येहिमाचलसुतासती तपस्तप्तवतीभूरितेनालब्धःशिवःप
तिः तदास्मरत्साहेरंबंगणेशंपूर्वजंसुतं तत्क्षणादागतंदृष्ट्वागणेशंपरिपृच्छति पार्वत्युवा॰ तपस्तप्तंमयाघोरंदुश्चरंलोमहर्षणं न
प्राप्तःसमयाकांतोगिरीशोममवल्लभः संकष्टहरणंदिव्यंव्रतंनारदउक्तवान् त्वदीयंयद्व्रतंतावत्कथयस्वपुरातनं तच्छ्रुत्वापार्व
तीवाक्यंसंकष्टहरणव्रतम् प्रीत्याकथितवान्देवोगणेशोज्ञानसिद्धिदः गणेशउ॰ श्रावणेबहुलेपक्षेचतुर्थ्यांतुविधूदये ग
णेशंपूजयित्वातुचंद्रायार्घ्यंप्रदापयेत् पार्वत्युवा॰ क्रियतेकेनविधिनाकिंकार्यंकिंचपूजनम् उद्यापनंकदाकार्यंमंत्राःकेस्तु
स्तुपूजने किंध्यानंश्रीगणेशस्यगणेशवदविस्तरात् गणेशउ॰ चतुर्थ्यांप्रातरुत्थायदंतधावनपूर्वकं प्राप्तंव्रतमिदंपुण्यं
संकष्टहरणंशुभं कर्तव्यमितिसंकल्प्यव्रतेस्मिन्नाणपंस्मरेत् स्वीकारमंत्रः निराहारोस्मिदेवेशयावच्चंद्रोदयोभवेत् भो-
क्ष्यामिपूजयित्वाहंसंकष्टात्तारयस्वमां एवंसंकल्प्यराजेंद्रस्नात्वाकृष्णतिलैःशुभैः आह्निकंतुविधायैवपश्चात्पूज्योगणाधिपः
त्रिभिर्माषैस्तदर्धेनतृतीयांशेनवापुनः यथाशक्त्यातुवाहेमीप्रतिमाक्रियतेसम माषमात्रात्तदर्धस्थतृतीयांशेनवापुनः यथा
शक्त्यातुवाहेमीताम्रस्यापियथासुरवं सर्वथैवदरिद्रेणक्रियतेमृन्मयीशुभा वित्तशाठ्यंनकर्तव्यंकृतेकार्यंविनश्यति जल

पूर्णंवस्त्रयुतंकुंभंतस्याग्रतोन्यसेत् पद्ममष्टदलैःकार्यंगंधपुष्पैःप्रपूजयेत् एवंव्रतंप्रकर्त्तव्यंचतुर्थ्यांश्रावणेसिते स्वीकार्यश्च
तथाचार्यःसंकष्टहरणेतिथौ गणाधीशंतथाचार्यंसर्वशास्त्रविशारदं श्रद्धयाप्रार्थयेदादौतेनोक्तंविधिमाचरेत् एकविंशतिविं
प्रांश्चवस्त्रालंकारभूषणैः पूजयेद्धोहिरण्याद्यैर्हुत्वाग्नौविधिपूर्वकं होमद्रव्यंमोदकाश्चतिलयुक्ताघृतप्लुताः अष्टोत्तरसहस्रं
वानोचेदष्टोत्तरंशतं अष्टाविंशतिसंख्याकैर्मोदकैर्वासशर्करैः अशक्तोष्टौशुभान्स्थूलान्जुहुयाज्जातवेदसि वैदिकेनच
मंत्रेणआगमोक्तेनवातथा अथवानाममंत्रेणहोमंकुर्याद्यथाविधि पुष्पमंडपिकाकार्यागणेशाल्हादकारिणी पूजयेत्तत्र
गणपंभक्तसंकष्टनाशनं गीतवादित्रनिनदैर्भक्तिभावपुरस्कृतैः पुराणवेदनिर्घोषैस्तोषयेच्चगणेश्वरम् एवंजागरणंका
र्यंशक्त्यादानादिकंतथा सपत्नीकमथाचार्यंतोषयेद्वस्त्रभूषणैः उपानच्छत्रगोदानंकमंडलुजलादिभिः यथाशक्त्याप्रकर्त
व्यंदारिद्र्याभावमिच्छता एकविंशतिविप्रांश्चभोजयेन्नामभिर्मम गजास्योविघ्नराजश्चलंबोदरशिवात्मजौ वक्रतुंडःशूर्पक
र्णःकुब्जश्चैवविनायकः विघ्ननाशोहिविकटोवामनःसर्वदैवतु सर्वार्तिनाशीभगवान्विघ्नहर्ताचधूम्रकः सर्वदेवाधिदेवश्च
सर्वेषोडशवैस्मृताः एकदंतःशूर्पकर्णोभालचंद्रोगणेश्वरः गणपश्चैकविंशाश्चसर्वेएतेगणेश्वराः दुर्गापिंड्यश्चरुद्रश्चकुलदे
व्याधिकंभवेत् विशेषेणाष्टसंख्याकैर्मोदकैर्हवनंस्मृतम् एवंकृतविधानेनप्रसन्नोहमसंशयः ददामिवांछितान्कामांस्तद्

तंमत्प्रियंकुरु श्रीकृष्णउ॰ एवंतुकथितंसर्वंगणेशेनस्वयंनृप पार्वत्यातत्कृतंराजन्व्रतंसंकष्टनाशनम् व्रतेनानेनसाधीब्देप्रापशंभुंपतिं
स्वकंतत्कुरुष्वमहाराजव्रतंसंकष्टनाशनं चतुर्थीसंकटानामस्कंदेनकथितार्षीन् ऋषिभिर्लोककामैस्तैर्लोकेतुनदिदंव्रतम्
सूतउ॰ कृतंयुधिष्ठिरेणेतद्राज्यकामेनवैद्विज तेनशत्रून्निहत्याजौस्वराज्यंप्राप्तवान्स्वयं तस्मात्सर्वप्रयत्नेन व्रतंकार्यंविच
क्षणैः येनधर्मार्थकामाश्चमोक्षश्चापिभवेत्किल यःकरोतिव्रतंविप्राःसर्वकामार्थसिद्धिदम् सर्वांछितफलंप्राप्यपश्चाद्गणप
तिंव्रजेत् यदायदाव्रतंविप्रानरःप्राप्नोतिसंकटम् तदातदाप्रकर्तव्यंव्रतसंकष्टनाशनं त्रिपुरंहंतुकामेनकृतंदेवेनशू
लिना त्रैलोक्यभूतिकामेनमहेंद्रेणतथाकृतं रावणेनकृतंपूर्वंबलिबंधनसंकटे स्वकीयंप्राप्तवान्राज्यंगणेशस्यप्रसादतः सीता
न्वेषणकामेनकृतंवायुसुतेनच संकल्प्यदृष्टवान्सोथसीतांरामप्रियांपुरा दमयंत्याकृतंपूर्वंनलान्वेषणकारणात् सापतिंनैषधं
लेभेपुण्यश्लोकंद्विजोत्तमाः अहल्यापिपतिंलेभेगौतमंप्राणवल्लभं विद्यार्थीलभतेविद्यांधनार्थीधनमाप्नुयात् पुत्रार्थीपुत्रमा
प्नोतिरोगीरोगात्प्रमुच्यते इतिश्रीस्कंदपुराणेसंकष्टचतुर्थीव्रतोद्यापनंसंपूर्णम् अथश्रावणेकार्तिकेवाशुक्लचतुर्थ्यां
दूर्वागणपतिव्रतं मदनरत्ने सौरपुराणे स्कंदउवा॰ केनव्रतेनभगवन्सौभाग्यमतुलंभवेत् पुत्रपौत्रधनैश्वर्यैर्मनुजः
स्फारवमेधते तन्मेवदमहादेवव्रतानामुत्तमंव्रतं महादे॰ अस्तिदूर्वागणपतेर्व्रतंत्रैलोक्यविश्रुतं भगवत्यापुराचीर्णंपार्वत्याश्र

द्रयासह सरस्वत्याचइंद्रेणविष्णुनाधनदेनच अन्यैश्चदेवैर्मुनिभिर्गंधर्वैः किंनरैस्तथा चीर्णमेतद्व्रतंसर्वैःपुराकल्पेषडानन चतुर्थीया
भवेच्छुक्लानभोमासस्यपुण्यदा तस्यांव्रतमिदंकुर्यात्कार्तिक्यांवाषडानन कार्तिकेशुक्लपक्षेतुचतुर्थ्यांसुतमंव्रतम् गजान-
नंचतुर्बाहुमेकदंतविपाटितं विधायहेम्नाविघ्नेशंहेमपीठासनस्थितं तथाहेममयींदूर्वांतदाधारेव्यवस्थितनाम् संस्थाप्यविघ्न
कर्त्तारंकलशेताम्रभाजने वेष्टितंरक्तवस्त्रेणसर्वतोभद्रमंडले पूजयेद्रक्तकुसुमैःपत्रिकाभिश्चपंचभिः बिल्वपत्रमपामार्गशमी
दूर्वाहरिप्रियाः गंधपुष्पैश्चधूपैश्चकुसुमैश्चसुगंधिभिः फलैश्चमोदकैःपश्चादुपहारंप्रकल्पयेत् उपहारैस्तुविधिनापूजयेद्गिरि-
जासुतं उमासुतनमस्तुभ्यंविश्वव्यापिन्सनातन विघ्नौघांछिंधिसकलान्सर्वमाद्यंवदामिते गणेश्वरायदेवायउमापुत्राय
वेधसे पूजयेत्वांमहादेवगृहाणभगवन्मम विनायकायशूरायवरदायगजानन उमासुतायदेवायसर्वविघ्नौघहारिणे उमां-
गमलसंभूतोदानवानांवधायवै अनुग्रहायलोकानांसदेवःपातुविश्वधृक् परंज्योतिःप्रकाशायसर्वसिद्धिप्रदायक दीपंतुभ्यं
प्रदास्यामिमहादेवायतेनमः गणेश्वरगणाध्यक्षगौरीपुत्रगजानन व्रतंसंपूर्णतांयातुत्वत्प्रसादादिभानन एवंसंपूज्यविघ्नेशं
यथाविभवविस्तरैः सोपस्करंगणाध्यक्षमाचार्यायनिवेदयेत् गृहाणभगवन्ब्रह्मन्गणराजंसदक्षिणं व्रतंत्वद्वचनादद्यपूर्ण
तांयातुसुव्रत दानं श्रावणेशुक्लपक्षस्यचतुर्थ्यांतुजितेंद्रियः कुर्याद्वर्षत्रयंत्वेवंसर्वसिद्धिप्रदायकं एवंयःपंचवर्षाणिकृत्वो

द्यापनमाचरेत् ईप्सितांल्लभतेकामान्देहांतेशांकरंपदं उद्यापनंविनायस्तुकरोतिव्रतमुत्तमं तेनशुक्लतिलैःकार्यंप्रातःस्नानंषडा
नन हेम्नावाराजतेनापिकृत्वागणपतिंबुधः पंचगव्यैस्तुसंस्नाप्यदूर्वाभिःसंप्रपूजयेत् मंत्रैस्तुदशभिर्भक्त्यादूर्वायुक्तैःशिखिध्वज
दूर्वायुग्मैःपंचगव्यैःपूजनंदशमंत्रकैः गणाधिपनमस्तेस्तुउमापुत्राघनाशन एकदंतेभवक्त्रेतितथामूषकवाहन विनायके
शपुत्रेतिसर्वसिद्धिप्रदायक कुमारगुरवेतुभ्यंगणेशायप्रपूजयेत् इत्येवंकथितंसम्यक्सर्वसिद्धिप्रदंशुभं व्रतंदूर्वागणप
तेःकिमन्यच्छ्रोतुमिच्छसि इतिसौरपुराणोक्तंदूर्वागणपतिव्रतोद्यापनं अथैकविंशतिदिनगणपतिपूजनं तत्रश्राव
णशुक्लचतुर्थीमारभ्यश्रावणकृष्णादशमीपर्यंतंगणपतिपूजनं सामध्यान्हव्यापिनीकार्या एकदंतंशूर्पकर्णंगजतुंडंचतु
र्भुजं पाशांकुशधरंदेवंमोदकंबिभ्रतंकरे ध्यानं आगच्छजगदाधार सुरासुरवरार्चित अनाथनाथसर्वज्ञगीर्वाणपरिपू-
जित आवा० स्वर्णसिंहासनंदिव्यंनानारत्नसमन्वितं समर्पितंमयादेवतत्रत्वंसमुपाविश आसनं देवदेवेशसर्वेशसर्वती-
र्थाहृतंजलम् पाद्यंगृहाणगणपगंधपुष्पाक्षतैर्युतं पाद्यं० प्रवालमुक्ताफलपूगरत्नतांबूलजांबूनदमष्टगंधं पुष्पाक्षतैर्युक्त-
ममोघशक्ते दत्तंमयार्घ्यंसफलीकुरुष्व अर्घ्यं गंगादिसर्वतीर्थेभ्यःप्रार्थितंतोयमुत्तमम् कर्पूरैलालवंगैश्चयुक्तमाचम्य-
तांविभो आचमनं० चंपकाशोकबकुलमालतीमोगरादिभिः वासितंस्निग्धताहेतुस्तैलंचारुमग्र० अभ्यंगस्ना० कामधेनु

समुद्भूतंसर्वेषांजीवनंपरम् पावनंयज्ञहेतुश्च पयःस्नानार्थमर्पितं पयःस्ना॰ पयसस्तुसमुद्भूतंहिमादिद्रव्ययोगतः दध्यानीतं
मयादेवस्नानार्थंप्रतिगृ॰ दधिस्ना॰ नवनीतसमुत्पन्नंसर्वसंतोषकारकं यज्ञांगंदेवताहेतोर्घृतंस्नानार्थमर्पितं घृतस्ना॰ पुष्प-
सारसमुद्भूतंमक्षिकैरात्हृतंचयत् सर्वतुष्टिकरंदेवमधुस्नानार्थमर्पितं मधुस्नानं॰ इक्षुरससमुद्भूतांशर्करांसुमनोहरां मल्
पहरणस्नानेगृहाणत्वंमयार्पितां शर्करास्ना॰ सर्वमाधुर्यताहेतुःस्वादुःसर्वप्रियंकरः पुष्टिकृत्स्नातुमानीतइक्षुसारभवो
गुडः गुडस्ना॰ कांस्येकांस्येनपिहितंदधिमधुघृतपयः मधुपर्कोमयानीतःपूजार्थंप्रतिगृ॰ मधुपर्क॰ सर्वतीर्थात्हृतंतोयं
मयाप्रार्थनयाविभो सुवासितंगृहाणेदंसम्यक्स्नातुसुरेश्वर स्नानं॰ रक्तवस्त्रयुगंदेवलोकलज्जानिवारणं अनर्घ्य-
मतिसूक्ष्मंचगृहाणेदंमयार्पितं वस्त्रं॰ राजतंब्रह्मसूत्रंचकांचनंरत्नसंयुतम् भक्त्योपपादितंदेवगृहाणपरमेश्वर यज्ञो॰
अनेकरत्नयुक्तानिभूषणानिबहूनिच तत्तदंगेकांचनानियोजयामितवाज्ञया भूषणंपूर्वादिक्रमेणअष्टौदिक्पालानावाह्
येत् इष्टगंधसमायुक्तंरक्तचंदनमिश्रितं द्वादशांगेषुतेदेवलिंपयामिकृपांकुरु चंदनं॰ रक्तचंदनसंमिश्रांस्तंदुलांस्तिलकोप-
परि शोभार्थंसंप्रदास्यामिगृहाणजगदीश्वर अक्षता॰ पाटलंकर्णिकारंचबंधूकंरक्तपंकजं मोगरंमालतीपुष्पंगृहाणत्वंप्रभु
वनेश्वर पुष्पा॰ नानापंकजपुष्पैश्चग्रथितांपल्लवैरपि बिल्वपत्रयुतांमालांगृहाणसुमनोहरां मालां॰ अथांगपूजा गणे

शायन॰ पादौपू॰ गौरीपु॰ गुल्फौपू॰ विश्वेश्वराय॰ जानुनीपू॰ गजाननाय॰ उरूपू॰ लंबोदराय॰ वक्षस्थलं॰ गणनाथाय॰ स्तनौपू॰
द्वैमातुराय॰ कंठंपू॰ वक्रतुंडाय॰ शिरःपू॰ अथैकविंशतिपत्रपूजा गणाधिपाय॰ भृंगराजप॰ उमापुत्राय॰ बिल्वपत्रं॰ गजाननाय॰
दूर्वापत्रं॰ लंबोदराय॰ बदरीप॰ हरसूनवे॰ मधुपत्रं॰ गजवक्त्राय॰ तुलसीप॰ गुहाग्रजाय॰ अपामार्ग॰ एकदंताय॰ बृहतीप॰ इभव
क्त्राय॰ शमीप॰ विकटाय॰ करवीरप॰ विनायकाय॰ अश्वत्थप॰ कपिलाय॰ अर्कप॰ बटवे॰ चंपक॰ अभयप्रदाय॰ अर्जुनप॰ पत्नी
हिताय॰ विष्णुक्रांतप॰ सुराधिपतये॰ देवदारुप॰ भालचंद्राय॰ अगरुप॰ हेरंबाय॰ श्वेतदूर्वाप॰ शूर्पकर्णाय॰ जातीप॰ सुरनाथाय॰
धत्तूरप॰ एकदंताय॰ केतकीप॰ अथैकविंशतिनामपूजा गजाननाय॰ विघ्नराजाय॰ लंबोदराय॰ शिवात्मजाय॰ वक्रतुंडाय॰
शूर्पकर्णाय॰ कुब्जाय॰ विनायकाय॰ विघ्ननाशनाय॰ विकटाय॰ वामनाय॰ सर्वार्तिनाशिने॰ भगवतेन॰ विघ्नहर्त्रे॰ धूम्रकाय॰ सर्व
देवाधिदेवाय॰ एकदंताय॰ कृष्णपिंगाय॰ भालचंद्राय॰ गणेश्वराय॰ गणपाय॰ पुष्पं॰ २१ दशांगंगुग्गुलंधूपंसर्वसौगंधिकारकं
सर्वपापक्षयकरंगृहाणत्वंमयार्पितं धूपं॰ सर्वज्ञसर्वलोकेशतमोनाशनमुत्तमं गृहाणमंगलंदीपंदेवदेवनमोस्तुते दीपं॰ नाना
पक्वान्नसंयुक्तंपायसंशर्करान्वितं राजिकाधान्यसंयुक्तंमेथीपिष्टसनक्रकं हिंगुजीरककूष्मांडैर्मरीचीमाषपिष्टकैः संपादितैः
सूपकैस्त्रभर्जितैर्वटकैर्युतं मोदकापूपलड्डुकशष्कुलीवटकादिभिः पर्पटरससंयुक्तंनैवेद्यममृतान्वितं हरिद्राहिंगुलवणस

हितंसूपसुत्तमं ससासुद्रंगृहाणेदंभोजनंकुरुसादरं मयानिवेदितंतुभ्यंगृहाणजगदीश्वर नैवेद्यं॰अतितृप्तिकरंतोयंसुगंधिच-
पिबेच्छया त्वयितृप्तेजगत्तृप्तंनित्यतृप्तेमहात्मनि मध्येपा॰उत्तरापोशनार्थंतेदद्मितोयंसुवासितं सुखपाणिविशुद्ध्यर्थंपुनस्तो
यंददामिते दाडिमंमधुरंनिंबूजंब्वाम्रपनसादिकं द्राक्षारंभाफलंपक्वंकर्कंधूखर्जुरंफलं नारिकेरंचनारिंगंकलिंगंमार्जिरंतथा उ
र्वारुकंचदेवेशफलान्येतानिगृह्यतां॰ फलानि॰गृहाणचंदनंचारुकरांगोद्वर्तनंशुभं नानापरिमलैर्द्रव्यैर्निर्मितंचूर्णमुत्तमं अबीरंना
मकंपुष्पंगंधिचारुप्रगृ॰चारुचालूरसंभूतंवंशसारसमुद्भवं सचंद्रपूगचूर्णाढ्यंखादिरेणचसंयुतं एलालवंगसंमिश्रंतांबूलं-
प्रतिगृ॰तांबू॰न्यूनातिरिक्तपूजायांसंपूर्णफलहेतवे दक्षिणांकांचनींदेवस्थापयामितवाग्रतः दक्षिणां॰ सितपीतैस्तथारक्तैर्जे
लजैःकुसुमैःशुभैः ग्रथितांसुंदरांमालांगृहाणपर॰ मालां॰ हरिताःश्वेतवर्णावापंचत्रिपत्रसंयुताः दूर्वांकुरामयादत्ताएकविंश
तिसंमिताः गणाधिपाय॰ दूर्वांकुरान्स॰ उमापुत्राय॰ अभयप्रदाय॰ एकदंताय॰ मूषकवाहनाय॰ विनायकाय॰ ईशपुत्राय॰ इभवक्त्रा
य॰सर्वसिद्धिप्रदायकाय॰ लंबोदराय॰ विघ्नराजाय॰ विकटाय॰ मोदकप्रियाय॰ विघ्नविध्वंसकर्त्रे॰ विश्ववंद्याय॰ अमरेशाय॰ गज
कर्णकाय॰ नागयज्ञोपवीतिने॰ भालचंद्राय॰ विद्याधिपाय॰ विद्याप्रदाय॰ इतिदूर्वा॰ गणेशंहृदयेध्यात्वासर्वसंकष्टनाशनं एक
विंशतिसंख्याकाः करोमिचप्रदक्षिणाः प्रद॰ औदुंबरेराजतेवाकांस्येकांचनसंभवे पात्रेप्रकल्पितान्दीपान्गृहाणचक्षुरर्पितान्

पंचार्तिंपंचदीपैश्चदीपितांपरमेश्वर चारुचंद्रप्रभंदीपंगृहाणपरमेश्वर पंचार्तिं॰ कर्पूरस्यमयादेवदीपस्तेचनिवेदितः यथास्य
नेक्षतेभस्मनथापापंविनाशाय कर्पूरदी॰ स्तोत्रैर्नानाविधैः सूक्तैः सहस्रनामभिस्ततः उपविश्यस्तुवीतैनंकृत्वास्थिरतरंमनः
दीनानाथदयानिधेसुरगणैःसंसेव्यमानद्विज ब्रह्मेशानमहेंद्रशेषगिरिजागंधर्वसिद्धैस्तुतः सर्वारिष्टनिवारणैकनिपुणत्रैलो
क्यनाथप्रभो भक्तिंमेसफलांकुरुष्वसकलांक्षांत्वापराधान्मम आवाहनंनजानामिनजानामितवार्चनं विसर्जनंनजानामिक्ष-
म्यतांजगदीश्वर क्षमापनं॰ गौरीसुतनमस्तेस्तुसर्वसिद्धिप्रदायक सर्वसंकष्टनाशार्थमर्घ्यंमेम॰ अनेनएकविंशतिअर्घ्याणि
कृतपूजायाःसांगतासिद्ध्यर्थंब्राह्मणायवायनप्रदानंकु॰ ब्राह्मणपू॰ दशमोदकसंयुक्तंवायनंचफलप्रदम् गणेशप्रीणनार्थायगृहा
णत्वंद्विजोत्तम वायनं॰ सांगतासिद्धयेब्राह्मणान्भोजयेत् इत्येकविंशतिदिनगणपतिपूजा अथैकविंशतिदिनगण
पतिकथा शौनकउवाच सूतसूतमहाप्राज्ञव्यासशिष्याविशारद संकष्टेचसमुत्पन्नेकार्यसिद्धिःकथंनृणाम् सूतउवाच
शृणुध्वंमुनयःसर्वेशौनकप्रमुखानघाः संकष्टनाशनंपुण्यंव्रतंवक्ष्येयथाश्रुतं यत्कृत्वासर्वकार्याणिसिद्धिंयांतिनसंशयः
पूजयित्वागणेशंहिएकविंशाद्दिनावधि शौनकउ॰ कथंपूज्योगणाध्यक्षोविघ्नहर्तागणाधिपः केनचादौपुराचीर्णंव्रतंविघ्नह
रस्यच वदसर्वंमहाप्राज्ञअस्माकंविधिपूर्वकं मासोसित्वंमहाभाग्यादरण्येसत्रमंडपे सूतउ॰ एवमेवपुरापृष्टः षण्मुखेनव

व्र. रा.
६६

दत्तांवरः सनत्कुमारमुनिनाब्रह्मपुत्रेणयोगिना सनत्कुमारउ॰ कार्तिकेयमहाप्राज्ञदेवसेनाधिपप्रभो संकटाच्चकथंमुच्येजनोवैज्ञान्
दुर्लभः श्रुत्वावाक्यंब्रह्मसूनोःसर्वेषांकार्यगौरवम् सेनानीस्तुतदाहर्षान्नमस्कृत्यमहामुनिम् स्कंदउ॰ विप्रवर्यमहायोगिन्पार्व
त्यासुखतःश्रुतम् वदामितद्व्रतंतुभ्यंशृणुसर्वंसमासतः कैलासभवनेरम्येवसमानोमहेश्वरः स्नातुंजगामभगवान्भोगवत्यां
यथासुखं तस्मिन्नेवदिनेअंबाअभ्यंगस्नानमारभत् स्वशरीरान्मलंगृहीत्वातस्यमूर्तिमकल्पयत् सजीवंचपुनःकृत्वाएहिपुत्रे
त्यन्वोदयत् अवदद्व्रततोनामबल्लवस्त्वंविनायकः पुत्रगच्छबहिर्द्वारेतिष्ठतत्रदृढायुधः आयास्यतिकदाचिद्धिपुरुषोभवनांतरे
तंनिवारयितुंशक्तोयावत्स्नानंकरोम्यहं ममाज्ञांगृहीत्वापश्चात्त्वंप्रवेष्टुमर्हसिध्रुवं मात्राज्ञांगृहीत्वाशिरसिआगमद्द्वारदेहलीम् मु
द्गरंतुसमादायहस्तेबल्लवनामकः अरक्षद्द्वारदेशंसपार्वत्याज्ञांस्मरन्बलात् तदानीमेवआयातोविभूत्याचर्चितोविभुः संभ्रा-
न्तभवनद्वारेशंभुःसर्वेश्वरोहरः देहलींप्रविशन्यावद्वारयन्द्वारपोबली द्वारपालउ॰ कोसित्वंचकिमर्थंहिगम्यतेभवनेशुभे मा
त्राज्ञायातियावत्त्वंस्थातव्यंतावदेवहि स्कंदउ॰ द्वारपालवचःश्रुत्वाशंभुःकोपमथाकरोत् शंभुरुवा॰ कस्याज्ञाचमयाप्राप्ताकोसि
त्वंभाषसेकथं गृहीत्वाडमरूहस्तेद्वारपालशिरोहनत् प्रविशच्चततस्तूर्णंस्वगृहंपार्वतीपतिः दृष्ट्वानाथंसकोपंसाचिंतयत्पार्व
तीत्हृदि बहुधाबाधनेक्षकृद्धेशंकरेकोपकारणं अलंकृत्वाचसुस्नातापार्वतीजगदंबिका पायसेनतुपूर्णेद्वेभक्ष्यभोज्येनसंयुते सं

च॰
४

६६

स्तेस्तुनमस्तेचंडरोचिषे वेदत्रयनमस्तेस्तुसर्वदेवनमोस्तुते प्रसीदपाहिदेवेशकृदृष्ट्यामांदिवाकर इत्थंसंस्तूयमानोसौदेवदेवोदि-
वाकरः स्निग्धगंभीरमधुरं सत्राजितमुवाचह सूर्यउ॰ वरंब्रूहिप्रदास्यामियत्तेमनसिवर्तते सत्राजितमहाभागतुष्टोहंतववन्दि
यात् सत्राजितउ॰ स्यमंतकमणिंदेहियदितुष्टोसिभास्कर ददौतस्यचतद्रत्नंस्वकंठगदवतायसः भास्करः भाराष्टकंशातकुंभं-
स्रवतेसौमहामणिः शुचिर्भूत्वासदाधार्यंरत्नमेतन्महोत्तमं सत्राजिनक्षणेनैनद्धात्वद्यशुभमानसं इत्युक्त्वांतर्दधेदेवस्तेजोरा-
शिर्दिवाकरः तत्कंठरत्नज्वलमानरूपोपुरींसकृष्णस्यविवेशसत्वरं दृष्ट्वातुलोकामनसादिवाकरंसंचिंतयंतोहविनदृष्टयः स
मागतोयंहरिदश्वदीधितिर्जनार्दनंद्रष्टुमसंशयेन नायंसहस्रांशुरितीहलोकाःसत्राजितोयंमणिकंठभास्वान स्यमंतकंमहार
त्नंदृष्ट्वातत्कंठमंडले स्पृहांचक्रेजगन्नाथोनजहारमणिंततः सत्राजितोजातभयोयाचयिष्यतिमांहरिः प्रसेनायददौभ्रात्रेधार्यांयं
शुचिनात्वया एकदाकंठदेशेसोक्षिप्त्वातंमणिमुत्तमं मृगयाक्रीडनार्थायययौकृष्णेनसंयुतः अश्वारूढोशुचिस्थासोहतःसिंहेन
तत्क्षणात् रत्नमादायसिंहोपिगच्छन्जांबवताहतः नीत्वासविवरेरत्नंददौपुत्रायजांबवान् पुरींविवेशकृष्णोपिस्वकैःसर्वैःसमा
वृतः प्रसेनोद्यापिनायातिहतःकृष्णनर्निश्चितं मणिलोभेनहाकष्टंबांधवःपापिनाहतः द्वारकावासिनःसर्वेजनाऊचुःपरस्परं
वृथापवादसंतप्तःकृष्णोपिनिरगाच्छनैः सहैववनेयैर्यायारण्येदृष्ट्वासिंहेनपातितं प्रसेनंवाहनयुतंतत्पदानुचराःशनैः ऋक्षेण-

निहतंदृष्ट्वाकृष्णाश्चर्क्षबिलंगतः विवेशयोजनशतमंधकारंस्वतेजसा निवारयन्ददर्शाग्रेप्रासादंबहुभूमिकं तंकुमारंजांबवतोदोलायाम
मितद्युतिं माणिक्यंलंबमानंचददर्शभगवान्हरिः रूपयौवनसंपन्नांकन्यांजांबवतींपुनः दोलांदोलयमानांचददर्शकमलेक्षणः महां
तंविस्मयंचक्रेदृष्ट्वातांचारुहासिनीं दोलांदोलयमानांचजगौगीतमिदंमुहुः सिंहःप्रसेनमवधीत्सिंहोजांबवताहतः सुकुमारकमा
रोदीस्तवह्येषस्यमंतकः मदनज्वरदाहार्तादृष्ट्वातंकमलेक्षणं उवाचललितंबालागम्यतांगम्यतामिति रत्नंगृहीत्वावेगेनयावच्छे
तेतुजांबवान् इत्याकर्ण्यहसन्गौरिःशंखंदध्मौप्रतापवान् आकर्ण्यसहसोत्थायसुयुधेयक्षराट्ततः तयोर्युद्धमभूद्घोरंहरिजांब
वतोस्तदा द्वारकावासिनःसर्वेगतास्तेसप्तमेदिने मृतःकृष्णोनिरीक्षंतोनिःसंदिग्धंविचार्यच परलोकक्रियांचक्रुःपरेतस्यतुतेतदा
एकविंशद्दिनंयावद्बाहुप्रहरणोविभुः युयुधेनेनऋक्षेणयुद्धकर्मणितोषितः जांबवान्प्राक्तनंस्मृत्वादृष्ट्वादेवबलमहत् जांबवानुव
अजेयोहंस्मरैःसर्वैर्यक्षराक्षसदानवैः त्वयाजितोहंदेवेशदेवस्त्वमसिनिश्चितं जानेत्वांवैष्णवंतेजोनान्यथाबलमीदृशं इतिप्रसा
द्यदेवेशंददौमाणिक्यमुत्तमं सुतांजांबवतींनामभार्यार्थेवरवर्णिनीं पाणिंवैग्राहयामासदेवदेवंचजांबवान् मणिमादायदेवो-
पिजांबवत्यापिसंयुतः तद्वृत्तांतसमाचष्टेद्वारकावासिनांस्वयं सत्राजितस्यमाणिक्यंदत्तवान्संसदिस्थितः मिथ्यापवादसंश्र
द्धिंप्राप्तवान्मधुसूदनः सत्राजितोपिसंत्रस्तःकृष्णायप्रददौसुतां सत्यभामांमहाबुद्धिर्ददौसर्वगुणान्वितां शतधन्वाक्रूरमुख्या

यादवादुष्टमानसाः सत्राजितेनतेवैरंचक्रूरत्नाभिलाषिताः दुरात्माशतधन्वापिगतेकृष्णेचपांडवान् सत्राजितंनिहत्याशुमणिंजग्राहपा
पधीः कृष्णास्यपुरतःसत्यासमाचष्टेविचेष्टितम् अंतर्हृष्टोबहिःकोपीकृष्णःकपटनायकः बलदेवपुरोवाक्यमुवाचधरणीधरः हत्वा
सत्राजितंद्दष्ट्वामणिमादायगच्छति निहत्यशतधन्वानंगृहीत्वारत्नमावयोः ममभोग्यंचतद्रत्नंभविष्यतिसुनिश्चितं एतच्छ्रुत्वाभया
त्रस्तःशतधन्वापियादवः आहूयाक्रूरनामानंमाणिक्यंप्रददौचसः आरुह्यवडवांवेगान्निर्गतोदक्षिणांदिशाम् रथस्थावनुगच्छेतां
तदारामजनार्दनौ शतयोजनमात्रेणममारवडवातदा पलायमानोनिहतःकृष्णेनचपदातिना रथस्थेबलदेवेतुहतेरत्नस्यलोचनः
नदृष्टंतत्रतद्रत्नंबलदेवपुरोवदत् तदाकर्ण्यमहारोषादुवाचवचनंबली कपटीत्वंसदाकृष्णलोभीपापीसुनिश्चितं अर्थायस्वजनंहं-
सिकस्त्वांबंधुंसमाश्रयेत् अनेकशपथैःकृष्णोबलदेवंप्रसादयन् सोपिधिक्कष्टमित्युक्त्वाययौवैदर्भमंडलं कृष्णोपिरथमारुह्यद्वा
रकांप्रययौपुनः तथैवोचुर्जनाःसर्वेनसाधीयानयंहरिः निष्काशितोरत्नलोभाज्ज्येष्ठोभ्राताबलोबली तच्छ्रुत्वादीनवदनःपापीया
निवसंस्थितः वृथाभिशापात्संतप्तोबभूवसजगत्पतिः अक्रूरोपिविनिष्क्रम्यतीर्थयात्रानिमित्ततः काशींगत्वासुखेनासौयजन्य-
ज्ञपतिंप्रभुं तोषमुत्पादयामासतेनद्रव्येणबुद्धिमान् सुरालयगृहैश्चित्रैर्नगरंसमकल्पयत् तदुर्भिक्षंनवैरोगाईतयोनचविड्वरं
शुचिनाधार्यतेतत्रमणिःसूर्यस्यनिश्चितं जानन्नपिहितत्सर्वंमानुषंभावमाश्रितः लोकाचारंतथामायामज्ञानंचसमाश्रितः बं

दत्तांवरः सनत्कुमारमुनिनाब्रह्मपुत्रेणयोगिना सनत्कुमारउ० कार्तिकेयमहाप्राज्ञदेवसेनाधिपप्रभो संकटात्तुकथंमुच्येजनोवैज्ञान्
दुर्लभः श्रुत्वावाक्यंब्रह्मसूनोःसर्वेषांकार्यगौरवम् सेनानीस्तुनदाहर्षान्नमस्कृत्यमहामुनिम् स्कंदउ० विप्रवर्यमहायोगिन्पार्व
त्यासुखतःश्रुतम् वदामितद्व्रतंतुभ्यंशृणुसर्वंसमासतः कैलासभवनेरम्येवसमानोमहेश्वरः स्नातुंजगामभगवान्भोगवत्यां
यथासुखं तस्मिन्नेवदिनेअंबाअभ्यंगस्नानमारभत् स्वशरीरान्मलंगृह्यतस्यमूर्तिमकल्पयत् सजीवंचपुनःकृत्वाएहिपुत्रे
त्यन्वोदयत् अवदद्वैततोनामबल्लुवस्तंविनायकः पुत्रगच्छबहिर्द्वारेतिष्ठतत्रदृढायुधः आयास्यतिकदाचिद्वैपुरुषोभवनांतरे
तंनिवारयितुंशक्तोयावत्स्नानंकरोम्यहं ममाज्ञांगृह्यपश्चात्त्वंप्रवेष्टुमर्हसिध्रुवं मात्राज्ञांगृह्यशिरसिआगमद्द्वारदेहलीम् मु
द्गरंतुसमादायहस्तेबल्लवनामकः अरक्षद्द्वारदेशंसपार्वत्याज्ञांस्मरन्बलात् तदानीमेवआयातंविभूत्याचर्चितंविभुम् संप्रा-
प्तेभवनद्वारेशंभुःसर्वेश्वरोहरः देहलींप्रविश्यन्त्यावद्वारयन्द्वारपोबली द्वारपालउ० कोसित्वंचकिमर्थंहिगम्यतेभवनेशुभे मा
त्राज्ञायातियावत्त्वंस्थातव्यंतावदेवहि स्कंदउ० द्वारपालवचःश्रुत्वाशंभुःकोपमथाकरोत् शंभुरुवा० कस्याज्ञाचमयाप्राप्ताकोसि
त्वंभाषसेकथं गृहीत्वाडमरुंहस्तेद्वारपालशिरोहनत् प्रविशच्चततस्तूर्णंस्वगृहंपार्वतीपतिः दृष्ट्वानाथंसकोपंसाचिंतयत्तावे
तीत्हृदि बहुधाबाधतेक्षद्वैशंकरेकोपकारणं अलंकृत्वाचसुस्नातापार्वतीजगदंबिका पायसेनतुपूर्णद्वैभक्षभोज्येनसंयुते सं

स्थाप्यचैवपीठाग्रेघृतेनसितयान्विते पात्रद्वयंसमालोक्य अवदत्पार्वतींशिवः शंभुरुवाच दिव्यकांचनसंभूतदर्वीभ्यांचस्क
लोचने भोज्यपात्रंतुकस्यदंस्थापितंचद्वितीयकं भोजनार्थंद्वितीयोयकोयातिवद्वल्लभे नायातित्वरयाचात्रविलंबेकारणंवद
इतिश्रुत्वावचःशंभोःसर्वेशस्यमहासती प्रीतिहर्षसमायुक्तासर्वज्ञमवदत्तदा पार्वत्युः ममाधस्नानसमयेउद्वर्तनमलोद्भव पुत्रो
विरच्यचद्वारदेहल्यांस्थापितोमया तदर्थंचद्वितीयंवैभाजनंस्थापितंध्रुवं इतिश्रुत्वावचस्तस्याश्चकंपमाहूतोयथा शिवउः प्रवि
शंतंचमांद्वारेनवपुत्रोन्यवारयत् कोसित्वंचमयापृष्टस्तेननोक्तानवाभिधा कोपेनचततस्तस्यशिरश्छित्वानिपातितं इतिश्रुत्वा-
ततोदेवीविह्वलापतिताभुवि पार्वत्युवाः पुत्रंजीवयसेदेवतर्हिभोस्येमहेश्वर तथैवचममप्राणागमिष्यंतिनसंशयः इत्युक्त्वा
चततोदेवीहाकष्टमित्यवावदत् पुनःपपातनसाभूमौवातेनकदलीयथा शिवउः उत्तिष्ठभद्रेकिंदुःखंपुत्रार्थंमाकुरुप्रिये अधुनात
वपुत्रंहिजीवयामिशिरोविना प्रियामेवंचआश्वास्यगतोद्वारंस्वयंविभुः इतस्ततोवलोक्याथगजोदृष्टोमृतस्तदा निकृत्यचना
गशिरोबलुवंयोजयद्विभुः संजीव्यबलुवंपुत्रंपार्वतींविनिवेदयत् दृष्ट्वागजशिरःपुत्रंपार्वतीहर्षनिर्भरा भोजयित्वापतिंपुत्रं-
स्वर्णपात्रेस्कशोभने नमस्कृत्यततोदेवंपतिपात्रेउपाविशात् बुभुजेतुततोदेवीपतिशेषंतुभोजनं कैलासभुवनेरम्येपार्वत्यानिव
सन्बहु अटन्विभुःकदाचित्सहवृषभेणबलीयसा पार्वत्यासहितोदेवःप्रासवान्नर्मदातटम् रम्यंरेवातटंदृष्ट्वापार्वतीत्यवदच्छि

वं पार्वत्युवा॰ देवदेवमहादेवशंकरप्राणवल्लभ अक्षक्रीडनकामाहंत्वयासार्धंस्मरेश्वर शंकरउ॰ अक्षक्रीडनकामात्वमासने-
स्मिन्स्थिराभव जयेपराजयेचात्रसाक्ष्यर्थेयोजयप्रिये स्वामिवाक्यंचसाश्रुत्वाएरकांगरत्नसुदृशिना नराकृतिमथाकल्प्यप्रा-
णान्सासमयोजयत् देहंतस्यचसास्पृश्यपाणिपद्मेनसांभसा नसुवाचननोबालमक्षक्रीडांविलोकय आवाभ्यांक्रीड्यमानाभ्यां
कोजयीतिवदध्रुवं इतिमातुर्वचःश्रुत्वाबालकोवेनर्थेतिभोः अक्षक्रीडासमारब्धापार्वत्याशंकरेणच जयोजातश्चपार्वत्याशंकर
स्तुपराजितः शंकरस्तुतदापृच्छत्कोजितोवदबालक अवदद्बालकस्तत्रजितंदेवेनशूलिना पुनःक्रीडांप्रवृत्तासासाक्षीकृत्वातु
बालकं पुनर्जितंतुपार्वत्याशंकरस्तुपराजितः बालंपप्रच्छसादेवीजितंकेनवदाधुना पुनरप्याहबालोसौजितंदेवेनशूलिना ह
र्षेणचसमायुक्तःपार्वतींप्राहशंकरः क्रीडांकुरुमहादेविरोषंत्यजशुभानने क्रीडतीसापुनर्देवीजितोदेव्यासशंकरः लज्जि
तःशंकरोबालंकोजितोवदनिश्चितं शंकरंप्राहबालाख्योजितस्त्वंभुवनाधिप बालवाक्यंसमाकर्ण्यपार्वतीकोपनिर्भरा मिथ्या
वदसिदुष्टात्मन्पादहीनोत्रकर्दमे पच्यमानोतिदुःखेनभविष्यसिनसंशयः बालउवा॰ विशापंकुरुमांमातर्बालभावान्मयेरितं
इतिश्रुत्वावचस्तस्यमातृभावादयान्विता पार्वत्यु॰ नागकन्यायदापुत्रपूजार्थंचनटेशुभे गणेशंपूजयंत्यार्याद्रक्ष्यापूजाविधिं
शिवं तासांश्रुत्वावचोदिव्यंनवभक्तिर्भविष्यति गणेशंपूजयित्वातुममसांनिध्यमेष्यसि इत्युक्त्वासाततोदेवीहिमाचलमगा

दृषा व्यतीतेवत्सरेपूर्णेश्रावणेमासिचागते गणेशपूजनार्थंतानागकन्याःसमागताः दृष्टवान्नर्मदातीरेस्त्रीवृंदंबहुभूषितं बालउ०
किमर्थंचागताबालाःकिंचात्रक्रियतेधुना भवतीभिःपूज्यतेकः किंफलंवदताद्यमे नागकन्याऊ० वत्सपूजागणेशस्यक्रियतेस्माभिरु
त्तमा पूजितेतुजगन्नाथेलभतेवांछितंध्रुवम् बालउ० कथंपूज्योगणाध्यक्षःकियत्कालंवदाद्यभोः कोविधिःकेचसंभाराःकदा
पूज्योगणेश्वरः नागकन्याऊ० श्रावणेमासिसंप्राप्तेचतुर्थ्यांचखगोदये तिलामलककल्केनस्नानंकुर्याज्जलाशये शुक्लपक्षेस
मारभ्ययावत्कृष्णादशमीभवेत् मध्याह्नेपूजयेत्तावदेकविंशद्दिनावधि एकविंशतिदूर्वाभिस्तावत्पुष्पैःशुभैःसदा मोदकैरेकविं-
शैश्चपूजयेत्सत्यहंजनः मोदकादशविप्रायदातव्याश्चसदक्षिणाः एकंगणाधिपेदत्वास्वयंचाद्याद्दशैवतु पूजामौनेनकर्त्तव्या-
भोजनंचतथानघ ब्रह्मचारीभूमिशायीशूद्रभाषणवर्जितः हविष्याशीतथाभूयाच्छुचिरंतर्बहिःसदा एवंनियममास्थाय
पूजांकुर्यात्सदाव्रती ताम्रपात्रेजलंरत्वागंधपुष्पसमन्वितं फलरत्नसमायुक्तअर्घ्यंदद्याद्गणाधिपे दक्षिणांतुसदावत्सएक
विंशान्निवेदयेत् पूजासमाप्तौविप्रायवायनंचसमर्पयेत् गणेशायनमस्तेस्तुपार्वतीनंदनायच गंधपुष्पसमायुक्तंगृहाणा
र्घ्यंनमोस्तुते गणेशप्रीतयेतुभ्यंवायनंदशमोदकं दक्षिणाफलसंयुक्तंवंशपात्रेप्रकल्पितं गणेशःप्रतिगृह्णातिगणेशो
वैददातिच गणेशस्तारकोभाभ्यांगणेशायनमोनमः एवंपूज्योगणाध्यक्षोनार्मदोभक्तितःशुभः गणेशेपूजितेवत्सन

वसिद्धिर्भविष्यति एवमुक्त्वागतादेव्योनागकन्याःशुचिस्मिताः बालकेनकृतंपश्चादन्यस्मिन्वत्सरेततः श्रावणेमासिसंप्रा
प्तेशुक्लपक्षेतिथौशुभे चतुर्थ्यांकृतसंभारोव्रतंजग्राहबालकः गणेशंनाम्नदंतत्र एकविंशद्दिनावधि विधिवत्पूजयामासन
मस्कृत्यगणेश्वरम् गणेशोवरदोजातोयाचयस्वयदीप्सितं श्रुत्वावाक्यंगणेशस्यहर्षनिर्भरमानसः बालउ॰ नमस्कृत्यग-
णेशानंवरंदेहिनमोस्तुते पादयोर्मेबलंदेहिवासंशंकरसन्निधौ गणेशउ॰ यथेच्छसितथैवास्तु पार्वत्याःप्रीतिरस्तुते इत्युक्त्वा
तुगणेशोसौनत्रैवांतर्दधेविभुः दृढपादश्चबालोसौकैलासमगमत्ततः दृष्ट्वाहरस्यचरणौशिरसाजगृहेशुभौ शिवउ॰ उत्तिष्ठ
वत्सतेपादौकथंजातौदृढौवद कस्यप्रसादात्त्वमिहआगतोसिममालयं बालउ॰ कृतंमयागणेशस्यएकविंशद्दिनात्मकम् श्रु
तंचनागकन्याभ्यस्तद्व्रतंपूजनंमया तेनपुण्यप्रभावेनप्राप्तोहंतवसंनिधौ गणेशस्यप्रसादेनशरीरंदृढतांगतं शिवउ॰ की
दृशंतद्व्रतंब्रूहिकरिष्येहंचतद्व्रतं वल्लभायादर्शनार्थेपार्वत्यारोषशांतये बालउ॰ श्रावणेशुक्लपक्षेतुचतुर्थ्यांचसमारभेत् श्रा
वणेबहुलेपक्षेदशम्यांचसमापयेत् गणेशंपूजयेन्नित्यमेकविंशद्दिनावधि एकविंशतिदूर्वाभिःपुष्पैरपितथैवच कर्तव्या-
मोदकास्तत्रएकविंशतिसंख्यकाः दशविप्रायदत्त्वातुएकंदेवेनियोजयेत् अवशिष्टाःस्वयंभक्ष्याःश्रुतमेवंमयाविभो किंम
याद्यत्वयाज्ञप्तंकर्तव्यंवर्ततेविभो आचरच्छंभुरप्येवंगणेशस्यव्रतंशुभं पूजनात्तुगणेशस्यपार्वत्याश्चलितंमनः हिमाचलं

नमस्कृत्यवचनंचेदमब्रवीत् पार्वत्युः गम्यतेद्यमयानातकैलासंनिजमंदिरं शिवस्यचरणौद्रष्टुमुत्सुकंमेमनोभवत् शीघ्रंदेहिममा
ज्ञांभोः क्षणंस्थातुंनशक्यते हिमाचलउः प्रेषयिष्येक्षणान्निष्ठविमानेनार्कवर्चसा सैन्यंददामिरक्षार्थंनवमार्गेशुचिस्मिते पितृवा
क्यंसमाकर्ण्यविमानंचारुरोहसा क्षणमात्रेणसायानाकैलासभुवनोत्तमं दृष्ट्वामहेश्वरंदेवंप्रणनामविहस्यच किंकृतंभो-
नजानीममनोमेचाहृतंत्वया वाक्यंश्रुत्वाभियायाश्चमनसाचालिलिंग्यतां अवदत्कारणंतस्याहरणेमनसोध्रुवं शिवउः कृ
तंमयागणेशस्यपूजनंनवहेतवे तेनपुण्यप्रभावेनआगतात्वंममांतिकं पार्वत्युः कथंपूज्योगणाध्यक्षोवदमत्वंजगत्प्रभो अ
हमद्यकरिष्यामिसेनानीदर्शनायच शंकरउः कुरुदेविगणेशस्यपूजनंचयथाविधि एकविंशतिदूर्वाभिः पुष्पैर्नानाविधैःशुभैः
मोदकैरेकविंशैश्चएकविंशाहिनानिच अर्घ्यैस्तावत्संख्याकैस्तथाब्राह्मणतर्पणैः त्रिलोचनमुखाच्छ्रुत्वागणेशः पूजितस्तथा
एकविंशद्दिनात्पश्चात्कुमारोभ्यगमत्स्वयं स्कंदंदृष्ट्वानदादेव्यास्तनाभ्यांनिर्झरावभुः स्नेहमालिंग्यसादेवीचुचुंबेचमुखंपुनः
वत्साद्यचमुखंदृष्टंगणेशस्यप्रसादतः बहुकालंचमांत्यक्त्वागतःषण्मुखबालक कृतकृत्याद्यजातास्मिदर्शनात्तेनसंशयः रो-
षंत्यजमहाबुद्धेशपथंनेवदाम्यहं स्कंदउः मानर्वदगणेशस्यपूजनंचयथाश्रुतम् विश्वामित्रंचराजानंममामित्रंवदाम्यहं पार्व
त्युः वदमित्रंगणेशस्यपूजनंकुरुभक्तितः एकविंशतिदूर्वाभिःपुष्पैरप्येकविंशतिः कर्तव्यामोदकास्तत्रएकविंशतिसंख्यकाः द

शविप्रायदानव्याःस्वयंचाद्याद्दशैंवतु एकंगणाधिपेदत्वाअर्घ्यांण्यर्पितथैवच पूजयस्वगणाध्यक्षमेकविंशाद्दिनावधि इदंव्रतंगणे
शस्यभक्तितोयःकरिष्यति तस्यकार्याणिसिध्यंतिमनसाचिंतितानिच व्रतराजविधिंश्रुत्वासेनानीश्चतथाकरोत् सेनानीनाम
ग्रणीत्वंसमवाप्यशक्रचिव्रतः कथयामासविप्रार्यविश्वामित्रेनराधिपे सोपिराजानमस्कृत्यव्रतंतत्स्वयमाचरत् गणेशोवरदो-
जातोविश्वामित्रायतत्क्षणात् गणेशउ॰ वदराजन्किमिच्छास्तिददामितवयाचितं विश्वामित्रउ॰ देहिदेवनसन्देहश्चेत्प्रार्गविप्र
र्षित्वमस्त्विति प्रासेनविप्रर्षित्वेनसर्वेप्रासामनोरथाः गणेशउ॰ विप्रर्षित्वंचराजेंद्रप्राप्स्यसिब्रह्मसुतत्वतः वसिष्ठाद्ब्राह्मणश्रेष्ठा
न्ममवाक्यंनसंशयः एवमुक्त्वागणेशोसोपूजितोभूमिपेनसः पुनरन्यंवरंचादात्पूजकानांहितायवै यदायदाचराजेंद्रसंकटं
चकलौभुवि भविष्यतिजनानांहिकर्तव्यंपूजनंमम स्मरिष्यंतिचमांभक्त्यानमस्कृत्यपुनःपुनः तेषांदुःखानिसर्वाणिनाशया
मिनसंशयः एवंदत्वावरान्सम्यक्तत्रैवांतर्हितोभवत् सनत्कुमारयोगींद्रपार्वत्यासुखपद्मतः श्रुतंमयात्वनेनायांगणेशस्य
व्रतंमहत् निवेदितंचतत्सर्वंकुरुविप्रतपोनिधे सनत्कुमारउ॰ महदाख्यानकंश्रुत्वात्दृप्तोहंतन्नसंशयः एवमुक्त्वागतोयोगीन
मस्कृत्यषडाननं सनत्कुमारसेनानीसंवादंचयथाश्रुतं व्यासप्रसादाच्छ्रुतवांस्तथात्तुभ्यंनिवेदितः इदंव्रतंगणेशस्यकरि
ष्यतिचमामवः तस्यकार्याणिसर्वाणिसिद्धिंयास्यंतिसत्वरम् किमन्यच्छ्रोजनश्रेष्ठाःश्रोतुकामास्तपोधनाः तत्सर्वंकथ-

यिष्यामिवक्तव्यंयदिवेच्छथ यइदंशृणुयाद्भक्त्याआख्यानंचसमाहितः तदीप्सितानिकार्याणिसलभेन्निश्चितंभुवि शौन
काद्योऋषिगणःश्रुत्वासूतवचोद्भुतम् पौराणिकंनमस्कृत्याविरराभासनेशुभे इतिश्रीभविष्योत्तरपुराणेस्कंदसनत्कुमार
संवादेतृतीयोल्लासेएकविंशतिदिनगणपतिव्रतकथासंपूर्णा अन्यच्चश्रावणशुक्लचतुर्थीमारभ्यमाघशुक्लचतुर्थीपर्यंतं
दूर्वागणपतिव्रतंस्कांदे तत्रविधिः मासपक्षाद्युल्लिख्यममसमस्तपापक्षयपूर्वकसप्तजन्मराज्यसौभाग्यादिविवृद्धये
मोमहेश्वरसायुज्यतासिद्ध्यर्थंषण्मासपर्यंतंगणपतिप्रीत्यर्थंदूर्वाव्रतंकरिष्ये षोडशोपचारैःपूजयेत् सूतउ० कैलासशिखरे
रम्येसर्वदेवनिषेविते सिद्धसंघसमाकीर्णेगंधर्वगणसेविते देव्यासहमहादेवोदीव्यंस्त्वक्षैर्विनोदितः जितासित्वंजितेत्या
हपार्वतीपरमेश्वरः मापित्वंजितइत्याहसविवादस्तयोरभूत् चित्रनेमिस्तदाद्रष्टासृषावादमभाषत तदाक्रोधसमाविष्टा
गौरीशापंददौततः प्रसादितातनस्तेनविशापंकुरुपार्वति पार्वत्यु० यदासरोवरेरम्येचरिष्यतिभवान्भुवि तदास्वर्गणिकाः
सर्वाविक्ष्यंतित्वांसमागताः तदाभवविशापस्त्वमित्युक्तःसपपातह ततःकतिपयाहोभिःकृष्णानंतसरोवरे कृष्णाभ्रू-
त्वावसंस्तत्र ददर्शस्वर्विलासिनीः ततस्तुसादरंगत्वापप्रच्छप्रणिपत्यताः क्रियंतेकिंमहाभागाःपूजायांवांछितंचकिम्
ततस्ताअब्रुवंस्तस्मैदूर्वाविघ्नेश्वरव्रतम् क्रियतेस्माभिरिहचपरत्राभीष्टसिद्धये ततोब्रवीच्चित्रनेमिर्व्रतंमेदातुमर्हथ

येनाहंगिरिजाशापान्मुच्येयंचिरदुःखितः ततस्ताअब्रुवन्सर्वाव्रतमेतदनुत्तमं दूर्वाविघ्नेश्वरोयत्रपूज्यतेसर्वसिद्धिदः शुक्लपक्षेच
तुर्थीयाभानुवारेणसंयुता तस्यांतिथौसमारभ्यषण्मासंव्रतमाचरेत् प्रत्यहंषट्नमस्काराःषट्दूर्वाःषट्प्रदक्षिणाः शुक्लप
क्षेचतुर्थ्यांचमत्यकंचैकविंशतिः एकभक्तंचकर्तव्यंकथांचशृणुयादिमां ध्यायेद्विनायकंदेवंसमाहितमनाःसदा तरुणारुणसं
काशंसर्वाभरणभूषितं जटाकलापसंभगंकुंकुमेनापराजितं गजाननंप्रसन्नास्यंसिंदूरतिलकांकितं विशालवक्षसंभानुमु-
क्तामणिविभूषितं चतुर्भुजमुदारांगंकिंकिणीकंकणैर्युतं पाशांकुशाधरंदेवंदंतमोदकधारिणं महोदरंमहानागबद्धकुक्षिं
मुदान्वितं स्कंदरांशकसंवीतमिभास्यमपराजितं प्रणतामरसंदोहमौलिमाणिक्यरश्मिभिः विराजितांघ्रिकमलंसर्वदेवनम
स्कृतं अभीष्टफलदंदेवंसर्वभूतोपकारकं एवंध्यात्वाजपेन्नित्यंविनायकमतंद्रितः एवंचरित्वाषण्मासान्शुचिःसत्यपरायणः
पश्चाद्गंधादिदूर्वाभिरर्चयेत्तंसदापुनः उद्यापनंप्रकर्तव्यंदेशकालानुसारतः ततोमगधदेशस्थमानेनयवपिष्टकं दशमानक
मादायदशाष्टौवपिमोदकान् कृत्वाघृतप्लुतान्सम्यक्षड्देवायषडात्मने षड्चविप्रायदातव्याःश्रोत्रियायकुटुंबिने विनाय
कोगणाध्यक्षोविघ्नेशःश्रीगणाधिपः वरदःसुखश्चैवदूर्वाषट्कैःप्रपूजयेत् षट्दूर्वाश्चतथादद्यान्महापूजांप्रकल्पयेत्
एवंकुरुमहेशानप्रीत्यर्थमभिवांछितं तथेत्युक्त्वाचिन्ननेमिःप्रीणयित्वाविनायकं शापान्मुक्तस्ततःशंभुमभ्यगात्प्रहसन्निव

शंकरेणततः पृष्टश्चित्रनेमिस्तथाजगौ व्रतंश्रुत्वाततः शंभुर्गणेशस्य कुतूहलात् गौरीकोपप्रसादायशिवोपिकृतवानथ शिवेनो
क्तंव्रतंत्वस्कंगणेशस्यप्रसादजम् कार्तिकेयोपिसंप्राप्तः सेनानीत्वंचतन्महत् व्रतंचकारनंदीचकार्तिकेयोक्तमादरात् सोपिराजाप्र-
सादायपुत्रार्थंचचकारह ततःक्रमेणलोकेस्मिन्प्रचुरीभूतमुत्तमं व्रतंदूर्वागणेशस्यसर्वसिद्धिकरंपरं शोकव्याधिभयोद्वेगबं-
धव्यसनदुःखतः विमुक्तः पुत्रपौत्रादिधनधान्यसमावृतः इहलोकेसुखंभुक्त्वापश्चाच्छिवपुरंव्रजेत् व्रतेनानेनदूर्वाख्यवि
घ्नेशस्यप्रसादतः यःपठेत्परयाभक्त्याकथामेतांदिनेदिने शृणुयाद्वापिसततंसर्वसिद्धिमवाप्नुयात् इतिस्कंदपुराणोक्तंदूर्वाग
णपतिव्रतोद्यापनं अथभाद्रपदशुक्लचतुर्थ्यांसिद्धिविनायकव्रतंहेमाद्रौस्कांदे तच्चमध्याह्नव्यापिन्यांकार्यं प्रातःशुक्लतिलैः
स्नात्वामध्याह्नेपूजयेन्नृप पार्थिवस्यगणेशस्यतत्रैवपूजनंचरेदितिवचनात् दिनद्वयेतद्व्याप्तौएकदेशव्याप्तौवापूर्वान्यथाप
रा चतुर्थीगणनाथस्यमातृविद्धाप्रशस्यते मध्याह्नव्यापिनीसातुपरतश्चेत्परेहनीतिबृहस्पत्युक्तेः अथव्रतविधिः मासप
क्षाद्युल्लिख्यममेहजन्मनिजन्मांतरेचपुत्रपौत्रधनविद्याजययशःस्त्रीकामायुष्याभिवृद्ध्यर्थंसिद्धिविनायकप्रीत्यर्थंयथाज्ञाने
नपुरुषसूक्तपुराणोक्तमंत्रैर्ध्यानावाहनादिषोडशोपचारैःपंचामृतैःसहपार्थिवगणपतिपूजनंकरिष्ये तथाचमूर्तौप्राणप्र-
तिष्ठादिकमासनादिकलशाराधनंपुरुषसूक्तन्यासंचकृ॰ पार्थिवमूर्तौदेवस्थापनं हेरंबाय॰ मृदाहरणं सुमुखाय॰ संघट्टनं

गौरीसुतनाय॰ स्थापनं अथप्राणप्रतिष्ठांकुर्यात् अस्यश्रीप्राणप्रतिष्ठामंत्रस्य ब्रह्मविष्णुमहेश्वराऋषयः ऋग्यजुःसामाथ
र्वाणिच्छंदांसि क्रियामयवपुःप्राणाख्यादेवता आंबीजंह्रींशक्तिः क्रौंकीलकं अस्यांमूर्तौप्राणप्रतिष्ठापनेविनि॰ ॐआं
ह्रींक्रौंअंयंरंलंवंशंषंसंहंळंक्षं अस्यांमूर्तौप्राणाःप्रतिष्ठंतु पुनः आं॰ अस्यांमूर्तौजीवइहस्थितः पुनः ॐआं॰ अस्यांमूर्तौस
र्वेंद्रियाणिश्रोत्रत्वक्चक्षुर्जिह्वाघ्राणवाक्पाणिपादपायूपस्थानिइहैवागत्यसुखंचिरंतिष्ठंतुस्वाहा अस्यैप्राणाःप्रतिष्ठंतु अस्यैप्राणाःक्षरंतु च अस्यै देवत्वमर्चायै मामहेति च कश्चन । असुनीतेपुनरिति
ऋचंपठित्वा गर्भाधानादिपंचदशसंस्कारसिध्यर्थंपंचदशप्रणवावृत्तीःकरिष्ये ॐ॰१५ तच्चक्षुर्देवहितं॰ देवस्याज्येन
नेत्रोन्मीलनंकृत्वापंचोपचारपूजनंकुर्यात् अथध्यानं एकदंतंशूर्पकर्णंगजवक्त्रंचतुर्भुजं पाशांकुशधरंदेवंध्यायेत्सिद्धि
विनायकं ध्यायेदेवंमहाकायंतप्तकांचनसन्निभं दंताक्षमालापरशुपूर्णमोदकहस्तकं मोदकासक्तशुंडाग्रमेकदंतंविना
यकं ध्यानं॰ आवाहयामिविघ्नेशसुरराजार्चितेश्वर अनाथनाथसर्वज्ञपूजार्थंगणनायक सहस्रशीर्षेत्यावाहनं विचि
त्ररत्नरचितंदिव्यास्तरणसंयुतं स्वर्णसिंहासनंचारुगृहाणसुरपूजित पुरुषएवेदं॰ आसनं सर्वतीर्थसमुद्भूतंपाद्यंगंधा
दिसंयुतं विघ्नराजगृहाणेदंभगवन्भक्तवत्सल एतावा॰ पाद्यं अर्घ्यंचफलसंयुक्तंगंधपुष्पाक्षतैर्युतं गणाध्यक्षनमस्ते
स्तुगृहाणकरुणानिधे त्रिपादूर्ध्व॰ अर्घ्यं दध्याज्यमधुसंयुक्तंमधुपर्कंमयाहृतं गृहाणसर्वलोकेशगणनाथनमोस्तुते म

धुपर्कं॰ विनायकनमस्तुभ्यंत्रिदशैरभिवंदित गंगोदकेनतोयेनशीघ्रमाचमनंकुरु तस्माद्दिरा॰ आचम॰ पयोदधिघृतंचैवशर्करामधु-
संयुतं पंचामृतेनस्नपनात्प्रीयतांगणनायकः पंचामृतस्ना॰ गंगादिसर्वतीर्थेभ्यआनीतंतोयमुत्तमं भक्त्यासमर्पितंतुभ्यं-
गणेहीष्टाभीष्टदायक यत्पुरुषेण॰ स्नानं॰ रक्तवस्त्रमिदंदेवदिव्यकांचनसंभव सर्वप्रदगृहाणेदंलंबोदरहरात्मज नयज्ञं॰ वस्त्रं
राजतंब्रह्मसूत्रंचकांचनंचोत्तरीयकं गृहाणचारुसर्वज्ञभक्तानांवरदोभव तस्माद्यज्ञा॰ उपव॰ यज्ञोप॰ उद्यद्भास्करसंकाशंसंध्या
वदरुणंप्रभो वीरालंकरणंदिव्यंसिंदूरंप्रतिगृ॰ सिंदूरं॰ नानाविधानिदिव्यानिनानारत्नोज्ज्वलानिच भूषणानिगृहाणेशपार्वती
प्रियनंदन आभरणानि॰ कस्तूरीचंदनंचैवकुंकुमेनसमन्वितं विलेपनंसुरश्रेष्ठचंदनंप्रतिगृ॰ तस्माद्यज्ञात्सर्वहुतेतिगंधं रक्ता-
क्षतांश्चदेवेशगृहाणद्विरदानन ललाटपटलेचंद्रस्तस्योपर्यवधार्यतां अक्षतान् माल्यादीनिसुगंधीनिमालत्यादीनिवैप्रभो म
यात्हृतानिपुष्पाणिपूजार्थंप्र॰ करवीरैर्जातिकुसुमैश्चंपकैर्बकुलैःशुभैः शतपत्रैश्चकल्हारैरर्चयेद्गणनायकम् तस्मादश्वेतिपुष्पा॰
अथांगपूजा गणेश्वराय॰ पादौपू॰ विघ्नराजाय॰ जानुनीपू॰ आखुवाहनाय॰ ऊरूपू॰ हेरंबाय॰ कटीपू॰ कामारिसूनवे॰ नाभिंपू॰
लंबोदराय॰ उदरंपू॰ गौरीसुताय॰ स्तनौपू॰ गणनायकाय॰ हृदयंपू॰ स्थूलकर्णाय॰ कंठंपू॰ स्कंदाग्रजाय॰ स्कंधौपू॰ पाशहस्ताय॰ ह
स्तौपू॰ गजवक्त्राय॰ वक्त्रंपू॰ विघ्नहर्त्रे॰ ललाटंपू॰ सर्वेश्वराय॰ शिरःपू॰ गणाधिपाय॰ सर्वांगंपू॰ अथपत्रपूजा सुमुखाय॰ माल

ग्र॰रा॰
७२

च॰
४

तीपत्रं॰ गणाधिपाय॰ भृंगराजप॰ उमापुत्राय॰ बिल्वपत्रं॰ गजाननाय॰ श्वेतदूर्वाप॰ लंबोदराय॰ बदरीप॰ हरसूनवे॰ धत्तूरप॰ गजकर्ण
काय॰ तुलसीप॰ वक्रतुंडाय॰ शमीप॰ गुहाग्रजाय॰ अपामार्गप॰ एकदंताय॰ बृहतीप॰ विकटाय॰ करवीरप॰ कपिलाय॰ अर्कप॰ गज
दंताय॰ अर्जुनप॰ विघ्नराजाय॰ विष्णुक्रांतप॰ बटवेन॰ दाडिमीप॰ सुराग्रजाय॰ देवदारुप॰ भालचंद्राय॰ मरुप॰ हेरंबाय॰ अश्व-
त्थप॰ चतुर्भुजाय॰ जातीप॰ विनायकाय॰ केतकीप॰ सर्वेश्वराय॰ अगस्तिप॰ २१ दशांगंगुग्गुलंधूपंसुगंधंचमनोहरं गृहाण
सर्वदेवेशउमापुत्रनमोस्तुते यत्पुरुषं॰ धूपं॰ सर्वज्ञसर्वलोकेशत्रैलोक्यतिमिरापहं गृहाणमंगलंदीपंरुद्रप्रियनमोस्तुते
ब्राह्मणोस्य॰ दीपं॰ नैवेद्यंगृह्यतांदेवभक्तिं॰ नानाखाद्यमयंदिव्यंतुष्ट्यर्थंतेनिवेदितं मयाभक्त्याशिवापुत्रगृहाणगण
नायक चंद्रमाम॰ नैवेद्यं॰ एलोशीरलवंगादिकर्पूरपरिवासितं प्राशनार्थंकृतंतोयंगृहाणगणनायक मध्येपा॰ उत्तरापो॰
मुखप्रक्षालनं॰ मलयाचलसंभूतंकर्पूरेणसमन्वितं करोद्वर्तनकंचारुगृह्यतांजगतःपते करोद्वर्तं॰ बीजपूराम्रपनस
खर्जूरीकदलीफलं नारिकेलफलंदिव्यंगृहाणगणनायक इदंफलंमयादेव॰ फलं॰ एकविंशतिसंख्याकान्मोदकान्घृतपा
चितान् नैवेद्यंसफलंदद्यान्नमस्तेविघ्ननाशिने गणेशाय॰ मोदकार्पणं॰ पूगीफलंमहद्दिव्यंनाग॰ तांबूलं हिरण्यगर्भेतिद
क्षिणां॰ वज्रमाणिक्यवैडूर्यमुक्ताविद्रुममंडितं पुष्परागसमायुक्तंभूषणंप्रतिगृ॰ भूषणानि॰ दूर्वायुग्मंगृहाणेदंगंधपुष्पा

७२

क्षैनैर्युतनम् पूजयेत्सिद्धिविघ्नेशंप्रत्येकंपूर्वनामभिः गणाधिपनमस्तेतुउमापुत्राघनाशन एकदंतेभवक्रेतितथामूषकवाहन विनायकेश
पुत्रेतिसर्वसिद्धिप्रदायक कुमारगुरवेतुभ्यंपूजनीयःप्रयत्नतः इतिदूर्वार्पणं चंद्रादित्यौचधरणीविद्युदग्निस्तथैवच त्वमेवसर्वतेजां
सिआर्तिक्यंप्रतिगृ० नीराजनं० विघ्नेश्वरविशालाक्षसर्वाभीष्टफलप्रदे प्रदक्षिणांकरोमित्वांसर्वान्कामान्प्रयच्छमे नाभ्याआसीति
प्रदक्षिणां० नमस्तेविघ्नसंहर्त्रेनमस्तेईप्सितप्रद नमस्तेदेवदेवेशनमस्तेगणनायक सप्तास्या० नमस्कारान् विनायकेशपुत्रेतिग
णराजस्कंदोत्तम देहिमेसकलान्कामान्वंदेसिद्धिविनायक यज्ञेन० मंत्रपु० अथैकविंशतिंगृह्यमोदकान्घृतपाचितान् स्थापयि-
त्वागणाध्यक्षसमीपेकुरुनंदन दशविप्राययद्दातव्याःस्थापयेद्दशआत्मनि एकंगणाधिपेदद्यात्सघृतंमोदकंशुभं दशानांमोदका
नांचफलदक्षिणयायुतं विप्रायतचतुर्थ्यर्थेवायनंतेददाम्यहं वायनमंत्रः विनायकस्यप्रतिमांवस्त्रयुग्मेनवेष्टितां तुभ्यं
संप्रददेविप्रप्रीयतांमेजनार्दनः विनायकगणेशानसर्वदेवनमस्कृत पार्वतीप्रियविघ्नेशममविघ्नंविनाशय इतिप्रार्थना अ
थकथा शौनकाद्याऋषिगणानैमिषारण्यवासिनः सूतंपौराणिकश्रेष्ठमिदंसूत्त्वुर्वचस्तदा ऋषयऊचुः निर्विघ्नेनतुकार्याणि-
कथंसिध्यंतिसूतज अर्थसिद्धिःकथंनृणांपुत्रसौभाग्यसंपदः दंपत्योःकलहेचैवबंधुभेदेतथानृणां उदासीनेषुलोकेषुकथं
स्मुखताभवेत् विद्यारंभेतथानृणांवापिज्येचकृषौयथा नृपतेःपरचक्रस्यजयसिद्धिःकथंभवेत् कांदेवतांनमस्कृत्यका-

व्र·रा·
७३

यैसिद्धिर्भवेन्नृणां एतत्समस्तंविस्तार्यब्रूहिमेसूतपृच्छतः सूतउ॰ सन्नद्धयोःपुराविप्राःकुरुपांडवसेनयोः पृष्टवान्देवकीपुत्रंकुंतीपु
त्रोयुधिष्ठिरः युधिष्ठिरउ॰ निर्विघ्नेनजयंमत्यंवदत्वंदेवकीसुत केंदेवतांनमस्कृत्यसम्यक्राज्यंलभेमहि कृष्णउ॰ पूजयस्वगणा
ध्यक्षमुमामलसमुद्भवम् तस्मिन्संपूजितेदेवेध्रुवंराज्यमवाप्स्यसि मासिभाद्रपदेशुक्लेचतुर्थ्यांपूजयेन्नृप मासिमाघेथ्याव
णेवामार्गशीर्षेतथाभवेत् गजवक्त्रंतुशुक्लायांचतुर्थ्यांपूजयेन्नृप यदाचोद्भवतेभक्तिस्तदापूज्योगणाधिपः प्रातःशुक्लतिलैःस्ना
त्वामध्याह्नेपूजयेन्नृप निष्कमात्रसुवर्णेनतदर्धार्धेनवापुनः स्वशक्त्यागणनाथस्यस्वर्णरौप्यमयाकृतिं अथवामृन्मयींकुर्या
द्वित्तशाठ्यंनकारयेत् एकदंतंशूर्पकर्णंगजवक्त्रंचतुर्भुजं पाशांकुशधरंदेवंध्यायेत्सिद्धिविनायकं कृत्वापूजांप्रयत्नेनस्नाप्य
पंचामृतैःपृथक् गंणाध्यक्षेतिनाम्नावैगंधंदद्याच्चभक्तितः आवाहनार्घ्यपाद्यंचदत्वापश्चात्प्रयत्नतः रक्तवस्त्रयुगंचैवदद्याद्दे
वायभक्तितः विनायकेतिपुष्पाणिधूपंचोमासुतायच दीपंरुद्रप्रियायेतिनैवेद्यंविघ्ननाशिने किंचित्सुवर्णपूजांचतांबूलंच
समर्पयेत् ततोदूर्वांकुरान्गृह्यविंशतिंचैकमेवहि पूजनीयःप्रयत्नेनएभिर्नामपदैःसह गणाधिपनमस्तेस्तुउमापुत्राघना
शन विनायकेशपुत्रेतिसर्वसिद्धिप्रदायक एकदंतेभवक्त्रेतितथामूषकवाहन कुमारगुरवेतुभ्यंपूजनीयःप्रयत्नतः दूर्वायु-
ग्मंगृहीत्वातुगंधपुष्पाक्षतैर्युतम् एकैकेनतुनाम्नावैदत्वैकंसर्वनामभिः अथैकविंशतिंगृह्यमोदकान्घृतपाचितान् स्थापयि

च·
४
७३

त्वागणाध्यक्षसमीपेकुरुनंदन दशविप्रायदातव्यास्स्वयंग्राह्यास्तथादश एकंगणाधिपेदद्यात्सनैवेद्यंनृपोत्तम विनायकस्यप्रति-
मांब्राह्मणायनिवेदयेत् तुभ्यंसंप्रददेदेवप्रीयतांमेगजाननः विनायकगणेशत्वंसर्वदेवनमस्कृत पार्वतीप्रियविघ्नेशममविघ्नं
विनाशय गणेशःप्रतिगृह्णातिगणेशोवैददातिच गणेशस्तारकोभाभ्यांगणेशायनमोनमः कृत्वानैमित्तिकंकर्मपूजयेदिष्टदेव
नाम् ब्राह्मणान्भोजयेत्पश्चाद्भुंजीयात्तैलवर्जितं एवंकृतेधर्मराजगणनाथस्यपूजने विजयस्तेभवेन्नूनंसत्यंसत्यंमयोदितं वै
ष्णवाद्यास्सदीक्षास्स आदौपूज्योगणाधिपः तस्मिन्संपूजितेविष्णुरीशोभानुस्तथात्युमा हव्यवाहसुरवादेवाः पूजितास्युर्नसंश
यः चंडिकाद्यामातृगणाःपरितुष्टाभवंतिच तस्मिन्संपूजितेविप्राभक्त्यासिद्धिविनायके यइदंशृणुयान्नित्यंश्राव्यद्वासमा
हितः सिद्ध्यंतिसर्वकार्याणिविनायकप्रसादतः इतिसिद्धिविनायकव्रतंभविष्योक्तंसंपूर्णम् मासिभाद्रपदेशुक्लेशिवलोकेनपू-
जिता तस्यांस्नानंतथादानंउपवासोर्चनंतथा क्रियमाणंशतगुणंप्रसादाद्दांतिकोन्नृप चतुर्थीत्यनुषंगः अस्यामेवचंद्रदर्शनेदोष
माह पराशरः कन्यादित्येचतुर्थ्यांचशुक्लेचंद्रस्यदर्शनं मिथ्याभिदूषणंकुर्यात्तस्मात्पश्येन्नतंसदा तद्दोषशांतयेजाप्यं -
विष्णुनोक्तंचमंत्रकं सिंहःप्रसेनमवधीत्सिंहोजांबवताहतः कुमारकमारोदीस्तवह्येषःस्यमंतकः अथस्यमंतकोपाख्यानं
नंदिकेश्वरउ० शृणुष्वेकाग्रचित्तःसन्व्रतंगाणेश्वरंमहत् चतुर्थ्यांशुक्लपक्षेतुसदाकार्यंप्रयत्नतः सनत्कुमारयोगींद्रयदीच्छे

शुभमात्मनः नारीवापुरुषोवापियःकुर्याद्विधिवद्व्रतं मोचयत्याशुविघ्नेभ्यःसंकष्टाद्भीतितोहितत् अपवादहरंचैवसर्वविघ्नप्रणाशनम्
कांतारेविषमेवापिरणेराजकुलेथवा सर्वसिद्धिकरंविद्धिव्रतानामुत्तमंव्रतं गजाननप्रियंचाथत्रिषुलोकेषुविश्रुतं अतोनवि
धते ब्रह्मन्सर्वसंकष्टनाशनं सनत्कुमारउ॰ केनचादौपुराचीर्णंमर्त्यलोकेकथंगतं एतत्समस्तंविस्तार्यब्रूहिगणेश्वरंमहत्
नंदिकेश्वरउ॰ चक्रेव्रतंजगन्नाथोवासुदेवःप्रतापवान् आदिष्टोनारदेनैवहृत्यालांछनमुक्तये सनत्कुमारउ॰ षड्गुणैश्वर्यसं
पन्नःसृष्टिसंहारकारकः वासुदेवोजगद्व्यापीप्राप्तवान्लांछनंकथं एतदाश्चर्यमाख्यानंब्रूहित्वंनंदिकेश्वर नंदिकेश्वरउ॰
भूमिभारनिवृत्त्यर्थंवसुदेवसुताबुभौ रामकृष्णौसमुत्पन्नौपद्मनाभफणीश्वरौ जरासंधभयात्कृष्णोद्वारकांसमकल्पयत् वि
श्वकर्माणमाहूयपुरींहाटकनिर्मितां तत्रषोडशसाहस्रंस्त्रीणांचैवशताधिकं भवनानिमनोज्ञानितेषांमध्येव्यकल्पयत् पा
रिजाततरुंमध्येतासांभोगायकल्पयत् यादवानांगृहास्तत्रषट्पंचाशतकोटयः अन्येपिबहवोलोकावसंतिविगतज्वराः
यत्किंचित्त्रिषुलोकेषुसुंदरंतत्रदृश्यते सत्राजितप्रसेनाख्यौपुत्रावुग्रस्यविश्रुतौ अंभोधितीरमासाद्यतन्मनस्कतयाचसः सत्राजि-
तस्तपस्तेपेसूर्यमुद्दिश्यबुद्धिमान् व्रतंनिरशनंरुध्वासूर्यसंबद्धलोचनः ततःप्रसन्नोभगवान्सत्राजितपुरस्थितः सत्राजि
तोपितुष्टावदृष्ट्वादेवंदिवाकरं तेजोराशेनमस्तेस्तुनमस्तेसर्वतोमुख विश्वव्यापिन्नमस्तेस्तुहरिदश्वनमोस्तुते ग्रहराजनम

स्तेस्तुनमस्तेचंडरोचिषे वेदत्रयनमस्तेस्तुसर्वदेवनमोस्तुते प्रसीदपाहिदेवेशास्कृदृष्ट्वामांदिवाकर इत्थंसंस्तूयमानोसौदेवदेवोदि-
वाकरः स्निग्धगंभीरमधुरं सत्राजितमुवाचह सूर्यउ॰ वरंब्रूहिप्रदास्यामियत्तेमनसिवर्तते सत्राजितमहाभागतुष्टोहंतवनिश्च
यात् सत्राजितउ॰ स्यमंतकमणिंदेहियदितुष्टोसिभास्कर ददौतस्यचतद्रत्नंस्वकंठादवतार्यसः भास्कर॰ भाराष्टकंशातकुंभं-
स्त्रवतेसौमहामणिः शुचिष्मतासदाधार्यरत्नमेतन्महोत्तमं सत्राजितक्षणेनैतद्धतित्वशुभमानसं इत्युक्त्वांतर्दधेदेवस्तेजोरा-
शिर्दिवाकरः तत्कंठरत्नज्वलमानरूपीपुरींसकृष्णस्यविवेशसत्वरं दृष्ट्वातुलोकामनसादिवाकरंसंचिंतयंतोहविनष्टदृष्टयः स
मागतोयंहरिदश्वदीधितिर्जनार्दनंद्रष्टुमसंशयेन नायंसहस्रांशुरितीहलोकाःसत्राजितोयंमणिकंठभास्वान् स्यमंतकंमहार
त्नंदृष्ट्वातत्कंठमंडले स्पृहांचक्रेजगन्नाथोनजहारमणिंततः सत्राजितोजातभयोयाचयिष्यतिमांहरिः प्रसेनायददौभ्रात्रेधार्योयं
शुचिनात्वया एकदाकंठदेशेसोक्षिप्त्वातंमणिमुत्तमं मृगयाक्रीडनार्थाययुयौकृष्णेनसंयुतः अश्वारूढोशुचिश्चासौहतःसिंहेन
तत्क्षणात् रत्नमादायसिंहोपिगच्छन्जांबवताहतः नीत्वास्वविवरेरत्नंददौपुत्रायजांबवान् पुरींविवेशकृष्णोपिस्वकैःसर्वैःसमा
वृतः प्रसेनोद्यापिनायातिहतःकृष्णाननिश्चितं मणिलोभेनहाकष्टंबांधवःपापिनाहतः द्वारकावासिनःसर्वेजनाऊचुःपरस्परं
वृथापवादसंतप्तःकृष्णोपिनिरगाच्छनैः सहैवतैर्ययारण्येदृष्ट्वासिंहेनपातितं प्रसेनंवाहनयुतंतत्पदानुचराश्शनैः ऋक्षेण-

निहतं दृष्ट्वा कृष्णश्चर्क्षबिलं गतः विवेश योजनशतमंधकारं स्वतेजसा निवारयन्ददर्शाग्रे प्रासादं बहुभूमिकं तं कुमारं जांबवतो दोलायाम
भितद्युतिं माणिक्यं लंबमानं च ददर्श भगवान्हरिः रूपयौवनसंपन्नां कन्यां जांबवतीं पुनः दोलां दोलयमानां च ददर्श कमलेक्षणः महां
तं विस्मयं चक्रे दृष्ट्वा तां चारुहासिनीं दोलां दोलयमानां च जगौ गीतमिदं मुहुः सिंहः प्रसेनमवधीत्सिंहो जांबवता हतः सुकुमारक मा
रोदीस्तव ह्येष स्यमंतकः मदनज्वरदाहार्ता दृष्ट्वा तं कमलेक्षणं उवाच ललितं बाला गम्यतां गम्यतामिति रत्नं गृहीत्वा वेगेन यावच्छे
ते तु जांबवान् इत्याकर्ण्य हसन् गौरिः शंखचक्रधरोमितापवान् आकर्ण्य सहसोत्थाय युयुधे युक्षराट्ततः तयोर्युद्धमभूद्घोरं हरिजांब
वतोस्तदा द्वारकावासिनः सर्वे गतास्ते सप्तमे दिने मृतः कृष्णो निरीक्षं तौ निःसंदिग्धं विचार्यन्त परलोकक्रियां चक्रुः परेतस्य तु तेन्तदा
एकविंशद्दिनं यावद्बाहुप्रहरणो विभुः युयुधे नेन ऋक्षेण युद्धकर्मणि तोषितः जांबवान्प्राक्तनं स्मृत्वा दृष्ट्वा देवबलं महत् जांबवानुवा
अजेयोहं सुरैः सर्वैर्यक्षराक्षसदानवैः त्वया जितोहं देवेश देवस्त्वमसि निश्चितं जाने त्वां वैष्णवं तेजो नान्यथा बलमीदृशं इति प्रसा
द्य देवेशं ददौ माणिक्यमुत्तमं सुतां जांबवतीं नाम भार्यार्थं वरवर्णिनीं पाणिं वै ग्राहयामास देवदेवं च जांबवान् मणिमादाय देवो-
पि जांबवत्यापि संयुतः तद्वृत्तांतं समाचष्टे द्वारकावासिनां स्वयं सत्राजितस्य माणिक्यं दत्तवान् संसदि स्थितः मिथ्यापवादसंशु
द्धिं प्राप्तवान्मधुसूदनः सत्राजितोपि संत्रस्तः कृष्णाय प्रददौ सुतां सत्यभामां महाबुद्धिर्ददौ सर्वगुणान्वितां शतधन्वाक्रूरमुखा

यादवादुष्टमानसाः सत्राजितेनतेनैवैरंचक्रूररत्नाभिलाषिताः दुरात्माशतधन्वापिगतेकृष्णेचपांडवान् सत्राजितंनिहत्याशुमणिंजग्राहपा
पधीः कृष्णस्यपुरतःसत्यासमाचष्टेविचेष्टितम् अंतर्द्वेषोबहिःकोपीकृष्णःकपटनायकः बलदेवपुरोवाक्यमुवाचधरणीधरः हत्वा
सत्राजितंहृष्टामणिमादायगच्छति निहत्यशतधन्वानंगृहीत्वारत्नमावयोः ममभोग्यंचतद्रत्नंभविष्यतिसुनिश्चितं एतच्छ्रुत्वाभया
त्त्रस्तःशतधन्वापियादवः आहूयाक्रूरनामानंमाणिक्यंप्रददौचसः आरुह्यवडवांवेगान्निर्गतोदक्षिणांदिशम् रथस्थावनुगच्छेतां
तदारामजनार्दनौ शतयोजनमात्रेणममारवडवातदा पलायमानोनिहतःकृष्णेनचपदातिना रथस्थेबलदेवेनुहतेरत्नस्यलोचनः
तदृष्टंतत्रतद्रत्नंबलदेवपुरोवदत् तदाकर्ण्यमहारोषादुवाचवचनंबली कपटीत्वंसदाकृष्णलोभीपापीसुनिश्चितं अर्थायस्वजनंहं-
सिकस्त्वांबंधुंसमाश्रयेत् अनेकशपथैःकृष्णोबलदेवंप्रसादयन् सोपिधिक्कष्टमित्युक्त्वाययौवैदर्भमंडलं कृष्णोपिरथमारुह्यद्वा
रकांप्रययौपुनः तथैवोचुर्जनाःसर्वेनसाधीयानयंहरिः निष्काशितोरत्नलोभाज्ज्येष्ठोभ्राताबलोबली तच्छ्रुत्वादीनवदनःपापीया
निवसंस्थितः वृथाभिशापात्संतप्तोबभूवसजगत्पतिः अक्रूरोपिविनिष्क्रम्यतीर्थयात्रानिमित्ततः काशींगत्वासुखेनासौयजन्य-
ज्ञपतिंप्रभुं तोषमुत्पादयामासतेनद्रव्येणबुद्धिमान् सुरालयगृहैश्चित्रैर्नगरंसमकल्पयत् तदुर्भिक्षंनवैरोगाईतयोनचविड्वरं
शुचिनाधार्यतेतत्रमणिःसूर्यस्यनिश्चितं जानन्नपिहितत्सर्वंमानुषंभावमाश्रितः लोकाचारंतथामायामज्ञानंचसमाश्रितः बं

धुवैरंसमुत्पन्नंलांछनंसमुपस्थितं वृथापवादबहुलंजायमानंकथंहरेः इतिचिंतातुरंकृष्णंनारदःसमुपस्थितः गृहीत्वातत्कृतांपूजांसु
खासनगतोब्रवीत् नारदउ॰ किमर्थंखिद्यसेदेवकिंवातेशोककारणं यथावृत्तंसमाचष्टेनारदायच्चकेशवः जानामिकारणंदेवयदर्थं
लांछनंतव त्वयाभाद्रपदेशक्लेचतुर्थ्यांचंद्रदर्शनं कृतंतेनसमुत्पन्नंलांछनंतुवृथैवहि श्रीकृष्णउ॰ वदनारदमेशीघ्रंकोदोषश्चंद्रद
र्शने किमर्थंतुद्वितीयायांतस्यकुर्वंतिदर्शनं नारदउ॰ गणनाथेनसंशप्तश्चंद्रमारूपगर्वितः तद्दर्शनेननराणांहिवृथानिंदाभविष्यति
श्रीकृष्णउ॰ किमर्थंगणनाथेनशप्तश्चंद्रकथामयः इदमाख्यानकंश्रेष्ठंयथावद्वक्तुमर्हसि नारदउ॰ गणानामाधिपत्येचरुद्रेणावि
हितःपुरा अणिमामहिमाचैवलघिमागरिमातथा प्राप्तिःप्राकाम्यमीशत्वंवशित्वंचाष्टसिद्धयः भार्यार्थंप्रददौदेवोगणेशस्यप्रजा
पतिः पूजयित्वागणाध्यक्षंस्तुतिंकर्तुंप्रचक्रमे ब्रह्मोवा॰ गजवक्त्रगणाध्यक्षलंबोदरवरप्रद विघ्नराजाधिदेवेशसृष्टिसंहारकारक
संपूजयेद्गणाध्यक्षंमोदकाद्यैःप्रयत्नतः तेषांप्रजायतेसिद्धिर्निर्विघ्नेननसंशयः असंपूज्यगणाध्यक्षंयेवांछंतिसुरासुराः नतेषां
जायतेसिद्धिःकल्पकोटिशतैरपि त्वद्भक्त्यातुगणाध्यक्षविष्णुःपालयतेसदा रुद्रोपिसंहरत्याशुत्वद्भक्त्यैवकरोम्यहं इत्थंसंस्तूयमा-
नोसौदेवदेवोगजाननः उवाचपरमप्रीतोब्रह्माणंजगतांपतिः श्रीगणेशउ॰ वरंब्रूहिप्रदास्यामियत्तेमनसिवर्त्तते ब्रह्मोवा॰ क्रियमाण
स्यमेसृष्टिर्निर्विघ्नंजायतांप्रभो एवमस्त्वितिदेवोसौगृहीत्वामोदकान्करे सत्यलोकात्समागत्यस्वेच्छयागगनेशनैः चंद्रलोकंसमा

साद्यचलितोगणनायकः उपहासंततश्चक्रेसोमोरूपमदान्वितः तंदृष्ट्वाकोपनाम्नाक्षोगणनाथःशशापह दर्शनीयःस्फुरूपोहंस्कंदरस्त्वा
हमित्यथ गर्वितोसिशशांकत्वंफलंप्राप्स्यसिसत्वरं अद्यप्रभृतिलोकास्त्वांनहिपश्यंतिपापिनं येपश्यंतिप्रमादेनत्वांनराःमृगलांछनं
मिथ्याभिशापसंयुक्ताभविष्यंतीहतेध्रुवं हाहाकारोमहान्जातःश्रुत्वाशापंचभीषणं अत्यंतम्लानवदनश्चंद्रोजलमथाविशत् कु
मुदंकोसुदीनाथःस्थितस्तत्रकृतालयः ततोदेवर्षिगंधर्वानिराशोद्विग्नमानसाः तुराषाहंपुरोधायजग्मुस्तेतंपितामहम् देवःशशांकस्
श्चंद्रस्यगणेशस्यचचेष्टितं दत्तःशापोगणेशेनकथयामासुरादरात् विचार्यभगवान्ब्रह्मानान्स्फुरानिदमब्रवीत् गणेशशापो
देवेंद्रः शक्यतेकेनवान्यथा कर्तुंरुद्रेणनमयाविष्णुनाचापिनिश्चितं तमेवदेवदेवेशंव्रजध्वंशरणंसुराः सएवशापमोक्षंचकरि
ष्यतिनसंशयः देवाऊ० केनोपायेनवरदोगजवक्त्रोगणेश्वरः पितामहमहाप्राज्ञतद्स्माकंवदप्रभो पितामहउ० चतुर्थ्यांदेवदेवो
सोपूजनीयःसदेवहि कृष्णपक्षेविशेषेणनक्तंकुर्याच्चतद्व्रतं अपूपैर्घृतसंयुक्तैर्मोदकैःपरितोषयेत् मधुरान्नंहविष्यंचस्वयंभु
जीतवाग्यतः स्वर्णरूपंगणेशस्यदानव्यंद्विजसत्तमे शक्त्याचदक्षिणांदद्याद्विजशाठ्यंनकारयेत् एवंसमेतैस्तैःसर्वैर्गीर्ष्पतिः
प्रेषितस्तदा सगत्वाकथयामासचंद्रायब्रह्मणोदितं व्रतंचक्रेततश्चंद्रोयथोक्तंब्रह्मणापुरा आविर्बभूवभगवान्गणेशोव्रत
तोषितः तंक्रीडमानंगणनायकंचतुष्टावदक्षात्कलानिधानः त्वंकारणंकारणकारणानांवेत्ताभिवेद्यंचविभोप्रसीद प्रसीददेव

शाजगन्निवासगणेशलंबोदरवक्रतुंड विरिंचिनारायणपूज्यमानक्षमस्वमेगर्वकृतंचहास्यं येत्वामसंपूज्यगणेशनूनंवांछंतिमूढाःशकुनार्थ
सिद्धिं नेदैवनष्टाविस्मृतंचलोकेज्ञातोमयानेसकलःप्रभावः येचाप्युदासीननरास्तुपापास्तेयांतिवासंनरकेसदेव हेरंबलंबोदरमेक्षम-
स्वदुश्चेष्टितंतत्करूणासमुद्र एवंसंस्तूयमानोसौचंद्रेणाथगजाननः गणेशउ॰ तुष्टोहंतवदास्याभिनैनहृद्यंमयानव ततोब्रह्माद
यःसर्वेसमाजग्मुर्भयार्दिताः विशापंकुरुदेवेशप्रार्थयामोवयंनव विशापमकरोच्चंद्रंकमलासनगौरवात् शुक्लपक्षेचतुर्थ्यांतु
येपश्यंतिसदैवहि मिथ्यापवादमावर्षंप्राप्स्यंतीहनसंशयः मासादौपूर्वमेवत्वांयेपश्यंतिसदाजनाः चतुर्थ्यांशुक्लपक्षस्यतेषां
दोषोनजायते तदाप्रभृतिलोकोयंद्वितीयायांकृतादरः पुनरेवतुपप्रच्छकलावान्गणनायकं केनोपायेनदेवेशतुष्टोभवसितद्व
द गणेशउ॰ सदाकृष्णचतुर्थ्यांतुमोदकाद्यैःप्रपूज्यमां रोहिण्यासहितंत्वांचसमभ्यर्च्यविधानतः यथाशक्त्याचमद्रूपंस्वर्णेन-
परिकल्पितं दत्वाद्विजायभुक्त्वाथकथांश्रुत्वाविधानतः सदातस्यकरिष्यामिसंकष्टस्यनिवारणं भाद्रशुक्लचतुर्थ्यांतुमृन्मयीप्र
तिमाशुभा हेमाभावेतुकर्तव्यानानापुष्पैःप्रपूज्यमाम् ब्राह्मणान्भोजयेत्पश्चाज्जागरंचविशेषतः स्थापयेदव्रणंकुंभंधान्य
स्योपरिशोभितं यथाशक्त्याचमद्रूपंशानकुंभेननिर्मितं वस्त्रद्वयसमाच्छन्नंमोदकाद्यैःप्रपूज्यमां रक्तांबरधरोमर्त्योब्रह्मचर्य
व्रतःशुचिः राजनस्यतुरूपंमेयथाशक्त्याविनिर्मितं वस्त्रंशिवप्रियायेतिउपवस्त्रंगणाधिपे गंधंलंबोदरायेतिपुष्पंसिद्धिप्रदाय

के धूपंगजमुखायेतिदीपंमूषकवाहने विघ्ननाथायनैवेद्यंफलंसर्वार्थसिद्धिदे तांबूलंकामरूपायदक्षिणांधनदायच इक्षुदंडैर्मो
दकैश्चहोमंकुर्याच्चनामभिः विसर्जनंततःकुर्यात्सर्वसिद्धिप्रदायकम् एवंसंपूज्यविघ्नेशंकथांश्रुत्वाविधानतः मंत्रेणानेनतत्स
र्वंब्राह्मणायनिवेदयेत् दानेनानेनदेवेशप्रीतोभवगणेश्वर सर्वत्रसर्वदादेवनिर्विघ्नंकुरुसर्वदा मानोन्नतिंचराज्यंचपुत्रपौत्रा
न्प्रदेहिमे गाश्चधान्यंचवासांसिदद्यात्सर्वस्वशक्तितः दत्वातुब्राह्मणैःसर्वैःस्वयंभुंजीतवाग्यतः मोदकापूपमधुरंलवणंक्षार
वर्जितं एवंकरोतियश्चैवव्रतस्याहंसर्वदाजयं सिद्धिंचधनधान्येचददामिविपुलांप्रजां इत्युक्त्वांतर्दधेदेवोविघ्नराजोविनायकः तद्व्र
तंकुरुकृष्णत्वंततःसिद्धिमवाप्स्यसि नारदेनैवमुक्तश्चव्रतंचक्रेहरिःस्वयं मिथ्यापवादंनिर्मृज्यततःकृष्णोभवच्छुचिः येश्रृण्वं
तित्विदमाख्यानंस्यमंतकमणीयकम् चंद्रस्यचरितंसर्वंतेषांदोषोनजायते भाद्रशुक्लचतुर्थ्यांतुकश्चिच्चंद्रस्यदर्शनं जानंतत्परिहा
रार्थंश्रोतव्यंसर्वमेवहि यदायदामनःकष्टंसंदेहउपजायते तदातदाचश्रोतव्यमाख्यानंकष्टनाशनं एवमुक्त्वागतोदेवोगणेशः
कृष्णातोषितः यदायदाश्चर्येसिकार्यउत्थितोनारीनरश्चाथकरोतितद्व्रतं सिद्ध्यंतिकार्याणिमनेप्सितानिकिंदुर्लभंविघ्नहरेप्र
सन्ने इतिश्रीस्कंदपुराणेनंदिकेश्वरसनत्कुमारसंवादेस्यमंतकोपाख्यानंसंपूर्णं अथकपर्दीविनायकव्रतं श्रावणस्यसिते
पक्षेचतुर्थ्यामेकभुग्व्रती व्रतंकुर्याद्गणेशस्यमासमेकंव्रतंचरेत् सर्वसिद्धिकरंनृणांसुरवंचैवसुरेश्वर तद्विधिः तिथ्यादिस्मृता

ममचतुर्विधपुरुषार्थसिध्यर्थंकपर्दीगणेशव्रतमहंक॰ मूलमंत्रेणाषडंगन्यासंपूजांकृत्वासमारभेत् ॐनमोभगवतेसकलगुणा
त्मशक्तियुतानंतयोगपीठायनमः अष्टदलंकारयेद्युः ॐतीव्रायैनम॰ ज्वालिन्यै॰ नर्मदायै॰ कामरूपिण्यै॰ उग्रायै॰ तेजोवत्यै॰ म-
ध्ये विघ्नविनाशिन्यै॰ अथध्यानम् एकदंतंमहाकायंलंबोदरगजाननं विघ्ननाशकरंदेवगणेशंप्रणमाम्यहं इमांपूजांगृहाणे
शकपर्दीगणनायक आगच्छइतित्रिवारंपठेत् विनायकनमस्तुभ्यमुमामलसमुद्भव इमांमयाकृतांपूजांप्रीत्यर्थंप्रतिगृह्य॰
सहस्रशीर्षेत्या॰ अलंकारसमायुक्तंमुक्तामणिविभूषितं स्वर्णसिंहासनंचारुप्रीत्यर्थंप्रतिगृ॰ पुरुषएवेदमास॰ गौरीसुतनमस्ते
स्तुशंकरप्रियकारक भक्त्यापाद्यंमयादत्तंगृहाणगणनायक एतावानस्येतिपाद्यं॰ व्रतमुद्दिश्यविघ्नेशगंधपुष्पादिसंयुतं गृहा
णार्घ्यंमयादत्तंसर्वसिद्धिप्रदायक तस्माद्विराळाचमनीयं अनाथनाथसर्वज्ञगीर्वाणपरिपूजित स्नानंपंचामृतंदेवगृहाण
गणनायक आप्यायस्वेतिदुग्धं॰ दधिक्राव्णोइतिदधि॰ घृतंमिमिक्षेइतिघृतं॰ मधुवातेतिमधु॰ स्वादुःपवस्वेतिशर्करा इतिपं
चामृतस्ना॰ गंगाजलंसमानीतंहेमांभोरुहवासितं स्नानेस्वीकुरुविघ्नेशकपर्दिगणनायक यत्पुरुषेणेतिस्नानं हरिद्रारक्तद्व-
यंदेवदेवांगवसनोपमं भक्त्यादत्तंगृहाणेशलंबोदरहरात्मज तंयज्ञमितिवस्त्रं॰ नानालंकारसंयुक्तंनानारत्नविभूषितं अने
कदिव्याभरणंप्रीत्यर्थंप्रतिगृ॰ आभरण॰ राजतंब्रह्मसूत्रंचकांचनंचोत्तरीयकं भालचंदनमस्तुभ्यंगृहाणवरदोभव तस्माद्यज्ञा

त्सर्वहुतेनेतिगंधं अक्षताश्च धवलान्देव सिद्धगंधर्वपूजित भक्त्याद्त्तान्गृहाणेमान्सर्वसिद्धिप्रदायक अक्षतान् सुगंधीनिचपुष्पा

णिऋद्धिसिद्धिप्रदायक कपर्दिगणनाथेशश्वेतपुष्पंददाम्यहं तस्मादश्वेतिपुष्पं अथांगपूजा कपर्दिगणनाथाय० पादौपू० गणेशाय० जा

नुनीपू० गणनाथाय० उरूपू० गणक्रीडाय० कटीपू० वक्रतुंडाय० हृदयंपू० लंबोदराय० कंठंपू० गजाननाय० स्कंधौपू० हेरंवाय० हस्तौपू० विकटा

य० मुखंपू० विघ्नराजाय० नेत्रेपू० धूम्रवर्णाय० शिरःपू० कपर्दिनेन० सर्वांगंपू० अथावरणपूजा ईशानाय० अघोराय० तत्पुरुषाय० वामदे

वाय० सद्योजाताय० इतिप्रथमावरणं १ वक्रतुंडाय० एकदंताय० महोदराय० गजाननाय० विकटाय० विघ्नराजाय० धूम्रवर्णाय० विनाय-

काय० द्वितीयावरणं २ ब्राह्म्येन० माहेश्वर्यै० कौमार्यै० वैष्णव्यै० वाराह्यै० इंद्राण्यै० चामुंडायै० महालक्ष्म्यै० तृतीयावरणं ३ इंद्राय अग्न

ये० यमाय० निर्ऋतये० वरुणाय० वायवे० सोमाय० ईशानाय० वरुणनिर्ऋत्योर्मध्ये अनंताय० इंद्रेशानयोर्मध्ये ब्रह्मणे० इतिचतुर्थावरणं४

वज्राय० शक्तये० दंडाय० खड्गाय० पाशाय० अंकुशाय० गदायै० त्रिशूलाय० चक्राय० अब्जाय० इतिपंचमावरणं ५ दशांगंगुग्गुलंधूपंचंदना

गरुसंयुतं उमासुतनमस्तुभ्यंगृहाणवरदोभव यत्पुरुषमितिधूपं गृहाणमंगलंदेवघृतवर्तिसमन्वितं दीपंज्ञानप्रदंचारुरुद्रप्रिय-

नमोस्तुते ब्राह्मणोस्येतिदीपं० नैवेद्यंगृह्यतांदेव० चंद्रमामनसेतिनैवेद्यं आचमनीयं० इदंफलमितिफलं० पूगीफलमितितांबूलं० हिर-

ण्यगर्भेतिदक्षिणां० अग्निर्ज्योतिरविर्ज्योतिर्ज्योतिरग्निर्विभावसुः ज्योतिस्त्वंसर्वदेवानांगणाधिपनमोस्तुते नीराजनं० यानिकानिच०

मं॰रा॰
७९

नाम्याआसीनिमदक्षिणा॰ नमोस्त्वनंताय॰ समास्यासन्निनिनमस्कारः गणाधिपनमस्तेस्तुनमस्तेस्तुगजानन लंबोदरनमस्तेस्तुनमस्तेलं
बिकास्कन एकदंतनमस्तेस्तुनमस्तेस्तुभक्तप्रिय स्कंदाग्रजनमस्तेस्तुनमस्तेस्त्वीप्सितप्रद कपर्दिगणनाथेशसर्वसंपत्प्रदायक यज्ञेनयज्ञ॰
मंत्रपुष्पांजलिः॰ अथब्रह्मचारिपूजा आकृष्णान्सुष्टिगणकान्विंशत्सप्तोत्तरशतकान् विप्रायबद्धवेदद्या द्दंधपुष्पार्चितायच तंडुलान्वैननो
दद्यात्पाकेचान्नेचशोभनान् कपर्दीगणनाथेसोमीयतांतंडुलैःसदा कथांश्रुत्वाविधानेनदेवमुद्वासयेत्ततः इतिकपर्दिगणपतिपूजा अ
थकथा कदाचिदुपविष्टश्चपार्वत्यासहशंकरः द्यूतेच्छाकिंअस्तिदेविक्रीडितुंतवकिंशुभे दुरोदरमिपाज्जेतुंवांछितंप्रत्युवाचसा ममा
पिअस्तिसापेक्षादीयतेचेत्पणोमम तदाकिंकिमभीष्टंतुदास्यामिपरमेश्वरि लोकत्रयंवाइच्छास्तिकिमन्यैर्वचनेर्वृथा पृच्छामित्वांवचोदेवि
दानव्यंकिंकिमिच्छसि विश्वासोयेनजायेतनहृदाद्यशुभानने वाक्यमेवंविधंश्रुत्वाशर्वाणीचशिवांतिके नविश्वासोस्तिनेवाक्येजित्वा
दास्यसिमत्पणः इतिश्रुत्वावचोदेव्याःशंकरःप्राहनिश्चयं पणःप्रकल्प्यतांदेविदीयतेदेनसंशयः भावंसंचिंत्यदेवस्यसत्वराक्रीडितुंय-
यौ आयुधानिततोदेवःपणेयोजितवान्हरः त्रिशूलंत्रिदशाश्चर्वाज्जितवत्येववल्लभा तस्मिन्कर्मणितंजित्वापणमन्यंशिवाग्रहीत् ए
वंडमरुकादीनितान्यन्यान्यजयत्पृथक् दीनोभूत्वामहादेवोभवानीमब्रवीदिति शार्दूलचर्मतन्मध्येदेहिमेगिरिजेशुभे नचैवंवक्तुंसुचि-
तंमहादेवपणेगते पणेजितेनदास्यामिपूर्वमुक्तोसितत्स्मर अविचिंत्यब्रवीषित्वंजगदीशकृपानिधे इतिश्रुत्वावचोदेव्याःकुपितोसौमहेश्व

चं॰ २

७९

रः आद्यद्दशादिनंदेविनकरिष्यामिभाषणं इत्युक्त्वाचमहादेवस्तत्रैवांतरधीयत रक्षरक्षमहादेवकिंजीवनमतःपरं इतिसंचिंत्यसाद्रष्टुसुद्या
नंमत्यपद्यत गिरिजातत्रवनितावृंदंदृष्ट्वाब्रवीदिति किमर्थमागताःसर्वाःकिमेतत्क्रियतेधुना कपर्दिगणनाथस्यव्रतंकर्तुमिहागताः तस्यपू
जांविहायादौइदानींश्रूयतेकथा किमर्थंतद्व्रतंनार्योयुष्माभिःक्रियतेवने फलमस्यकिमस्तीतिपार्वतीप्राहताःप्रति पृच्छतेकिंत्वयादेविनूरे
नारीभिरंबिके अभीष्टसिद्धिरस्मिंस्तुवर्ततेभुवनत्रये इतिश्रुत्वावचस्तासांपार्वतीप्राहतासुवि भातःकुपित्वाभगवान्निर्गतस्तुमहेश्व
रः तस्यसंदर्शनार्थैवकरिष्येव्रतमुत्तमं व्रतस्यैतस्यकिंदानंविधानंकीदृशंमम सर्वंविचिंत्यमनसाकथयंतुसुरांगनाः स्त्रियऊचुः
कालोविधानंदानंचक्रमस्यास्यफलंतथा तत्सर्वंसावधानेनवक्ष्यामिशृणुपार्वति पातादिदोषरहितेसच्चतुर्थ्यांतुवासरे इषेमासिव्रतंसम्यक्
गणेशार्पितमानसः तैलतांबूलभोगादीन्वर्जयित्वाशिवप्रिये मंदवारेतुभुंजीयादेकवारंमितंयथा प्रातःकालेशुचिर्भूत्वास्नानंकुर्याद्विधानतः
वापीकूपतडागेषुनद्यांशुक्लतिलैःसह संध्यादिकंयथाचित्यंसर्वंनिर्वर्त्ययत्नतः अर्चनागारमासाद्यगोमयेनोपलिप्यच गोचर्ममात्रंतन्म
ध्येकुर्याद्रंगेनमंडलं तन्मध्येष्टदलंपद्मंतन्मध्येगणनायकं पूजयेत्स्वच्छकुसुमैर्हरिद्राभिश्चितास्ततः गांगींगूंगैंगौंगश्चन्यासंकृत्वाततः
परं मंत्रेणानेनकुसुमैर्देवमावाह्यनिक्षिपेत् अथवागणनाथस्यप्रतिमामथपूजयेत् ततस्तद्गतचित्तःसन्ध्यानंकुर्याद्विधानतः ए
कदंतंमहाकायंलंबोदरगजाननं विघ्ननाशकरंदेवंहेरंबंप्रणमाम्यहं इमांपूजांगृहाणेशकपर्दिगणनायक आगच्छेतित्रिरुच्चार्यकुर्या

दावाहनादिकं पुराणमंत्रैरथवावेदसंभवैश्चषोडशैः पूजयेदुपचारैश्चमूलमंत्रेणपार्वति ततस्तत्प्रकाशकैर्मंत्रैर्गंधपुष्पाक्षतादिभिः इंद्रादिलोक-
पालांश्चपूजयेद्देवसन्निधौ लंबोदरनमस्तेस्तुनमस्तेत्वंबिकासुत एकदंतनमस्तेस्तुनमस्तेस्त्वीप्सितप्रद कपर्दिगणनाथस्यसर्वसंपत्प्रदा
यिनः पूजाप्रकारःकथितस्तवताभिःशुचिस्मिते अकृष्णानंजलिमतान्हविष्यव्रीहितंडुलान् स्वच्छान्यत्नेनसंशोध्यचूर्णंकुर्यान्महेश्वरि
शिवेतुचूर्णंप्रथमेभानुवारेर्धचंद्रवत् कुर्याद्द्वितीयेसंचूर्णंचंद्रवत्सिष्टकाष्टकम् तृतीयेपायसान्नंचदध्यन्नंचचतुर्थके आनीयाष्टांशकं
सम्यक्कृदेवंसंपूज्यभक्तितः कल्पितान्यान्नानिविधिवद्दद्यात्तेयानितानिच तेषांतेषामष्टमांशंतस्मैसम्यक्समर्पयेत् ततःशुद्धायबटवेद
द्यादेवंवराटकं मुष्ट्यामितंतंडुलांश्चपक्वजीयाद्भागसमकं याःकामयंतेयेभक्ताःपूजास्तेप्राप्नुवंतिहि इत्यूचुस्तांभवानींतुस्त्रियोविग
तकल्मषाः तासांतद्वचनंश्रुत्वातदानीमकरोद्व्रतं तत्क्षणाच्चविश्वेशःप्रत्यक्षःसमजायत त्रिलोकनाथदेवेशकरुणाकरशंकर दी
नामनन्यगतिकांभक्तवत्सलपाहिमां तुष्टश्चशंकरःप्राहकथमेतत्त्वयाकृतं कपर्दिगणनाथस्यमाहात्म्यात्किंनसिध्यति व्रतस्यैतस्यमा
हात्म्यंज्ञातुंवांछितवान्स्वयं उद्दिश्यागमनंविष्णोरकरोत्तद्व्रतंशिवः तदानींगरुडारूढःसमागत्यतमब्रवीत् मदागमनिमित्तंकिंवि
कृतंशंकरत्वया ममापिज्ञापनीयंतदित्युक्तेज्ञापयच्छिवः अथैतदकरोद्विष्णुरुद्दिश्यागमनंविधेः आगतःसन्निधिःशीघ्रंममा-
ज्ञापयमाधव प्रयोजनंचास्तिविधेस्तवागमनकारणं एकदंतव्रतंकिंचिद्भवत्येवनसंशयः इंद्रागमनमुद्दिश्यतदानींतेनतत्कृतम्

आगत्यसहसासोपिममाज्ञापयविश्वसृड् हेरंबव्रतमाहात्म्यंदृष्टमेवंकृतंमया ममापिज्ञापनीयंतदित्युक्तोविधिनोदितं विक्रमादित्य
मुद्दिश्यवज्जीनदकरोद्वसः आगतोहंमनुष्यस्त्वामिदंमत्तेकिमीप्सितं कपर्दिहस्तिवदनव्रतमाहात्म्यमीदृशं इतिज्ञातुंमयाभीष्टंनलब्धं
ततदाब्रवीत् विधानंतस्यमाहात्म्यंज्ञापनीयंत्वयेतिमे पप्रच्छविक्रमादित्यउत्सुकश्चपुरंदरं पुरंदरमुखाज्ज्ञात्वातत्सर्वंस्वपुरींप्राप्ति
सायुधःभयर्योराजापराक्रमपरायणः कपर्दीशव्रतंकृत्वामहिष्याङ्गुरतोवदत् जेष्यामिसकलान्शत्रून्नास्थामिचमहोन्नतिं तस्य-
व्रतस्यकिंदानीमितिसाप्राहविक्रमं पत्युवाचक्रियामकीदृग्धादेकवरात्मक एवंचेत्तत्रकर्तव्यंमद्गेहेयत्रकुत्रचित् एवंराज्ञोमुखाच्छ्रु
त्वादूषयामासतद्व्रतं कपर्दिगणनाथेनकिंस्यान्ममसुशोभनं नक्रियतेमयानाथकपर्दीशस्त्वंतुयद्व्रतं इत्यादिदूषणादाशुकुष्ठव्याधि-
मवाप्स्यसि कुष्ठव्याधियुतांपत्नींदृष्ट्वाराजाब्रवीत्तदा त्वस्थानव्यंत्वयात्रेतिसर्वराज्यंविनश्यति अर्कस्यवचनंश्रुत्वाशम्याश्रममृगाच्च
सा परिचर्यावशात्तुष्टास्तस्याःसर्वेमुनीश्वराः निश्चित्ययोगमार्गेणसर्वेनामब्रुवन्सतीं कपर्दीशव्रताक्षेपाद्दुःखंप्राप्तंत्वयाशुभे कु
रुष्वतद्व्रतंसम्यक्सर्वंभद्रंभविष्यति ऋषीणामाज्ञयासाचकपर्दीशव्रतंमहत् तदानींराजमहिषीदिव्यदेहमवापसा अस्मिन्नंतरिते
कालेभवान्यासहशंकरः अगमच्चवृषारूढोभुवनानिचतुर्दश मध्येमार्गेद्विजेंद्रस्यरोदनंभववल्लभा श्रुत्वाब्राह्मणमारोदीःकिम
र्थंतवरोदनं नकिमप्यस्तिमेदुःखंदारिद्र्यादेवकेवलात् दुःखंचेत्तवविप्रेंद्रकपर्दीशव्रतंकुरु एतत्कर्तुंव्रतंदेविसामर्थ्यंनास्तिमेधुना

व्र॰रा॰
८१

विक्रमार्कपुरेसर्वेवैश्योदास्यतिनत्कुरु कपर्दीशव्रतेनैवमंत्रित्वंप्राप्स्यसिध्रुवं दारिद्र्यमोचनंसम्यक्भविष्यतिनसंशयः गृहंप्रतिसमागम्य
गृहीत्वातंदुलान्द्विजःवैश्याद्गृहीत्वानत्सर्वंतदानीमकरोद्व्रतं तस्मिन्नर्कपुरेविप्रस्तन्मंत्रित्वमवापसः आज्ञापयत्कपर्दीशव्रतंवैश्यस्यत
त्क्षणात् अकरोत्स्वसुतायाश्वविक्रमःपतिरस्त्विति व्रतप्रभावादादित्यसुपयेमेविशःसुता अनेनैवविवाहेनपरांप्रीतिमवापसा ए
वमंतरितेकालेमृगयार्थंप्रविश्यसः गहनंक्षुत्तृषार्त्तःसन्ययौमुनिवराश्रमम् उपचारैःश्रमंनीतास्तेषामर्कोमनोरमाम् रमणीयाश्रमेत
स्मिन्दर्शयामासविक्रमः इत्थंपृच्छन्मुनीन्सर्वान्देयाचैषाममांगना तवेयंमहिषीत्युक्त्वानयेनास्मैसमर्पयन् सममहिष्यास्स्वपुरींदि
व्यनारीनरैर्युतां दृष्टःसन्विक्रमादित्यःसंभ्रमात्प्राहभूपतिः कपर्दिगणनाथस्यव्रतंकृत्वास्त्रियासह अयजद्विक्रमादित्यःसकलश
सुमंडलं गणनाथव्रतेनैवपुत्रपौत्रवृतस्त्वसः धनधान्यादिसंपद्भिःसुखेनन्यवसद्भुवि एतद्व्रतंयेकुर्वंतियाश्चकल्पविधानतः चतुर्णां
पुरुषार्थानांतेषांप्राप्तिर्भवेद्ध्रुवं हयमेधस्यविघ्नेतुसंजातेसगरःपुरा इदमेवव्रतंकृत्वापुनरश्वमलब्धवान् इमांकथांपंचवारंप्रथ
मेभानुवासरे द्वितीयेचतृतीयेचषड्वारंश्रृणुयाद्व्रती इतिश्रीस्कंदपुराणेकपर्दिविनायकव्रतकथा॥ आश्विनकृष्णचतुर्थ्यांद
शरथललिताव्रतं तच्चपौर्णिमांतमासेनकार्तिकवद्यचतुर्थ्यांकार्यम् देशकालौसंकीर्त्य॰ ममपुत्रपौत्रादिसकलकामनासिद्ध्यर्थंदश
रथललिताप्रीत्यर्थंयथामीलितोपचारैःपूजनमहंक॰ आसनादिकलशाराधनंक॰ आगच्छललितेदेविसर्वसंपत्प्रदायिनि यावत्पूजां

च॰ ४
८१

करिष्यामिनाक्त्वंसन्निधौभव आवाह॰ नीलकौशेयवसनांहेमाभांकमलासनां भक्तानांवरदांनित्यंललितांचिंतयाम्यहं ध्यायामि कार्तस्व
रमयेदिव्येनानामणिसमन्विते अनेकरत्नसंयुक्तेआसनेसंविशस्वभो आस॰ गंगादिसर्वतीर्थेभ्योमयाप्रार्थनयाहृतं तोयमेतत्सुखस्प
र्शंपाद्यार्थंप्र॰ पाद्यं॰ दक्षस्यदुहितासाध्वीरोहिणीनामविश्रुता पुत्रसंपत्तिकार्यार्थंगृहाणार्घ्यंनमोस्तुते अर्घ्यं॰ क्षीरोदार्णवसंभूतल-
क्ष्मीबंधोनिशाकर गृहाणार्घ्यंशशांकेशरोहिण्यासहितःशशिन् अर्घ्यं॰ पाटलोशीरकर्पूरसुरभिस्वादुशीतलं तोयमाचमनीयार्थं-
शिशिरंप्रतिगृ॰ आच॰ पयोदधिघृतंमध्वाशर्करासगुणान्वितं पंचामृतेनस्नपनंप्रीयतांपरमेश्वरि पंचामृ॰ मंदाकिन्याःसमानीतं
हेमांभोरुहवासितं स्नानायतेमयाभक्त्यानीरंस्वीक्रियतांशिवे स्नानं सर्वसत्वाधिकेसौम्येलोकलज्जानिवारणे मयोपपादितेतुभ्यं
वाससीप्र॰ वस्त्रं॰ मलयाचलसंभूतंघनसारंमनोहरं हृदयानंदनंचारुचंदनंप्र॰ चंदनं हरिद्राकुंकुमंचैवसिंदूरंकज्जलान्वितं सौभाग्य
द्रव्यसंयुक्तंगृहाणपरमेश्वरि सौभाग्यद्रव्यं॰ कूष्मांडैर्मालतीकाद्यैर्जातीपुष्पैःसुगंधिभिः मयाहृतानिपुष्पाणिपूजार्थंप्रतिगृ॰ पुष्पाणि॰
अथांगपूजा दशांगललितायै॰ पादौपू॰ भवान्यै॰ गुल्फौपू॰ सिद्धेश्वर्यै॰ जंघेपू॰ भद्रकाल्यै॰ जानुनीपू॰ श्रियैनम॰ ऊरूपू॰ विश्वरूपिण्यै॰ कटी
पू॰ देव्यै॰ नाभिंपू॰ वरदायै॰ कुक्षिंपू॰ शिवायै॰ हृदयंपू॰ वागीश्वर्यै॰ स्कंधौपू॰ महादेव्यै॰ बाहूपू॰ भद्रायै॰ करौपू॰ पद्मिन्यै॰ कंठंपू॰ सरस्वत्यै॰
मुखंपू॰ कमलासनायै॰ नासिकांपू॰ महिषमर्दिन्यै॰ नेत्रेपू॰ लक्ष्म्यै॰ कर्णौपू॰ भवान्यै॰ ललाटंपू॰ विंध्यवासिन्यै॰ शिरःपू॰ सिंहवाहिन्यै॰ सर्वांगं॰

वनस्पतिरसोद्भूतोगंधाढ्यश्चमनोहरः आघ्रेयः सर्वदेवानांधूपोयंप्र· धूपं· साज्यंचवर्त्तिं· दीपं· नैवेद्यंगृह्यतां· नैवेद्यं· मध्येपानीयं· इदंफलं· फलं
पूगीफलंमहद्दिं· तांबूलं· हिरण्यगर्भेनिदक्षिणां· कर्पूरगौरं· नीराजनं· नमोदेव्यै· मंत्रपुष्पं· यानिकानिचपा· प्रदक्षिणा· अन्यथाशरणंनास्ति
त्वमेवशरणंमम तस्मात्कारुण्यभावेनरक्षमांपरमेश्वरि दशरथनामयादेविदशपुष्पादशाक्षरा पुत्रार्थीकामयेदेविसर्वान्का
मान्प्रयच्छमे प्रार्थना दशरथललितादेव्याव्रतसंपूर्णहेतवे वाणकंद्विजवर्यायसहिरण्यंददाम्यहं वायनं सवाहनाशक्तियुतावरदा
पूजितामया ममानुग्रहंकुर्वाणागच्छत्वंनिजमंदिरं अथकथा सूतउ· अरण्येवर्तमानास्तेपांडवादुःखकर्शिताः कृष्णंदृष्ट्वामहात्मा
नंप्रणिपत्ययथाक्रमं युधिष्ठिरउ· देवदेवजगन्नाथलक्ष्मीप्रियजनार्दन कथयस्वसुरश्रेष्ठदशांगललिताव्रतं कथमेषासमुत्प-
न्नाकेनादौपूजिताभुवि पूजनात्किंफलावाप्तिः कथयस्वसुरेश्वर श्रीकृष्णउ· पुरात्रेतायुगेपार्थराजादशरथोमहान् तस्यभार्या
तुकौसल्याअपुत्रासापतिव्रता अथाजगामकस्मिंश्चिद्दृश्यशृंगऋषीश्वरः स्वागतंचकृतंराज्ञासोपविष्टोवरासने तेनराज्ञामुनिश्रे-
ष्ठः स्तोत्रैश्चबहुतोषितः तस्यभक्त्यातुसंतुष्टोऋषिर्वचनमब्रवीत् मुनिरुवाच तुष्टोहंतवराजेंद्रकौसल्याभार्ययासह ब्रूहित्वं
चमहाभागकिंप्रियंतेकरोम्यहं दशरथउ· यदितुष्टोसिमेविप्रअपुत्रोहंऋषीश्वर तीर्थंवाव्रतमेकंवातद्वदस्वमुनीश्वर मुनिरुवाच
शृणुराजन्नवहितोव्रतमेकंब्रवीमिते पुत्रकामव्रतंश्रेष्ठंकृतंराजन्सुरासुरैः रोहिणीनामचंद्रस्यभार्यापरमवल्लभा साचैवललि

तानाम्नीरोहिणीतिनराधिप आश्विनस्यसितेपक्षेदशम्यादिंप्रपूजयेत् दशम्यादिचतुर्थ्यांतंद्विपदिनानिव्रतंचरेत् आश्विनस्यसितेप
क्षेचतुर्थ्यांतुविशेषतः स्नात्वासायंतनेकालेसन्नमन्भक्तिभावतः कूष्मांडैर्मातुलिंगाद्यैर्जातिपुष्पैःसुगंधिभिः गंधपुष्पैस्तथाधूपैर्नैवेद्यै
र्दशमोदकैः अर्घ्यंदद्याच्चदेव्यग्रेपूजयित्वाक्षमापयेत् ततोमंगलवाद्यैश्चगायद्भिश्चनरेश्वर चंद्रोदयेचसंप्राप्तेअर्घ्यंदद्याद्युधिष्ठिर
शंखेतोयंसमादायसपुष्पाक्षतचंदनैः जानुभ्यामवनींगत्वाचंद्रायार्घ्यंनिवेदयेत् पंचरत्नसमायुक्तंदशपुष्पैःसमन्वितं अक्षतैश्च
समायुक्तंचंद्रायार्घ्यंनिवेदयेत् दशरथनामयादेवीदशपुष्पादशांजलिः चंद्रेणसहितेदेविगृहाणार्घ्यंनमोस्तुते दशरथनामयादेवीनि
त्यमाराधितामया पुत्रार्थीकामयेदेविसर्वान्कामान्प्रयच्छमे दशसंख्यांश्चकरकान्शीतोदकसमन्वितान् वर्षेवर्षेप्रदद्यान्निमर्त्येकंकर
कान्वित इत्थंप्रपूजयेद्देवींसर्वदातुप्रयत्नतः अर्वाक्कुर्यादशवर्षाणांपूजयेद्भक्तिभावतः नारीनरोवाराजेंद्रव्रतमेतत्करोतिवै यंयंचिंत
यतेकामंव्रतस्यास्यप्रभावतः पुत्रपौत्रधनंधान्यंलभतेनात्रसंशयः इतिभविष्योत्तरपुराणेदशरथललिताव्रतकथासंपूर्णा अथो-
द्यापनं उद्यापनविधिंवक्ष्येव्रतसंपूर्तिहेतवे कृष्णपक्षेचतुर्थ्यांतुआश्विनेव्रतमाचरेत् दशविप्रैःसपत्नीकैर्वेदवेदांगपारगैः स्नात्वा
सायंतनेकालेसर्वैस्तैर्भक्तिभावतः चतुस्तंभंचतुर्द्वारंकदलीस्तंभमंडितं तन्मध्येकारयेत्सम्यंपंचवर्णैःसुशोभितं कलशंस्थापयेत्त
द्विधानेनसमन्वितं ताम्रंवामृन्मयंकुंभंवस्त्रयुग्मेनवेष्टयेत् तस्योपरिन्यसेद्देवंरोहिण्यासहितंविधुं सुवर्णनिर्मितंदेवंचतुर्भुजसम

न्वितं सौवर्णरोहिणीकार्याचंद्रमारजनस्यच पूर्वोक्तेनविधानेनपूजांकृत्वासमाहितः एवंपूजाप्रकर्तव्याषोडशैरुपचारकैः मोदकान्का
रयेद्राजन्तिलजानेकविंशतिं दशविप्रायदातव्याआत्मार्थंस्थापयेद्दश एकोदेवायदातव्योललितापीतयेव्रती दशरथललितादेव्याव्रत
संपूर्णहेतवे वायनकंद्विजवर्यायसहिरण्यंददाम्यहं दशरथनामयादेवीनित्यमाराधितामया पुत्रार्थीकामयेदेविसर्वान्कामान्प्रयच्छ
मे इतिसंप्रार्थ्यदेवेशींचंद्रायार्घ्यंनिवेदयेत् स्वगृह्योक्तविधानेनकृत्वाग्निंस्थापयेत्ततः होमंचैवप्रसंपाद्यतिलपायसलड्डुकैः अष्टोत्तरशतं
सद्योअष्टाविंशतिमेववा जुहुयाच्चंद्रमंत्रेणगणेशेनतथैवच एवंसमाप्यहोमंतुततआचार्यंप्रपूजयेत् कुर्याद्द्विर्दशसुश्रैश्चपक्वान्नैश्चप्रपू
जयेत् विप्रायपीठदानंचततःकुर्याद्विसर्जनं ततःपुत्राःप्रजायंतेधनधान्यसमन्विताः सौभाग्यंपुत्रसंपत्तिर्जायतेभूपसत्तावर अवैधव्यं
चलभतेसर्वान्कामानवाप्नुयात् एतत्तेकथितंभूपकिमन्यच्छ्रोतुमिच्छसि कृतंदशरथेनास्मिन्कौसल्याभार्ययासह तुष्टादशरथादेवी-
गणेशेनसचंद्रमाः यस्मात्कृतंकृत्योराजाभार्ययासहमोदते तस्माद्दशरथानामललिताभुविकीर्तिता एतत्तेकथितंराजन्दशांगल
लिताव्रतं यइदंशृणुयान्नित्यंश्रावयेद्वासमाहितः अश्वमेधसहस्रस्यफलंतस्यध्रुवंभवेत् इतिश्रीभविष्योत्तरपुराणेदशरथललि
ताव्रतोद्यापनंसंपूर्णम् अथकार्तिककृष्णचतुर्थ्यां अथवादक्षिणदेशेआश्विनकृष्णचतुर्थ्यांकरकचतुर्थीव्रतम् तच्चलिख्यते अत्र-
स्त्रीणामेवाधिकारः तासामेवफलश्रुतेः आचम्यमासपक्षाद्युल्लिख्य ममसौभाग्यपुत्रपौत्रादिस्थिरश्रीप्राप्तयेकरकचतुर्थीव्र

तंकरिष्ये इतिसंकल्य चंद्रंलिख्यततः अधस्ताच्छिवंषण्मुखयुक्तांगौरींलिखित्वा षोडशोपचारैः पूजयेत् पूजामंत्रः नमःशिवायैशर्वाण्यै
सौभाग्यंसंततिंशुभां प्रयच्छभक्तियुक्तानांनारीणांहरवल्लभेति ततःनमोंतनाममंत्रेणशिवषण्मुखगौरीगणपतीनांपूजाकार्या ततः
सपक्वान्नान् अक्षतसंयुक्तान् दशकरकान् ब्राह्मणायदद्यात् ततःपिष्टकनैवेद्यंभोज्यंसर्वंनिवेदयेत् ततश्चंद्रोदयोत्तरंचंद्रायार्घ्यंद
द्यात् अथकथा मांधातोवाच अर्जुनेतुगतेनसुइंद्रकीलगिरिंप्रति विषण्णमनसाकृष्णद्रौपदीसमचिंतयत् अहोकिरीटिनाकर्म
समारब्धंसुदुष्करं बहवोविघ्नकर्तारोमार्गेवैपरिपंथिनः चिंतयित्वेतिसादेवीकृष्णाकृष्णंजगद्गुरुं भर्तुःप्रियचिकीर्षंतीसाप्टच्छ
द्विघ्नवारणं द्रौपद्युवाच कथयस्वजगन्नाथव्रतमेकंसुदुर्लभं यत्कृत्वासर्वविघ्नानिविलयंयांतितद्वद श्रीकृष्णउ० एवमेवमहाभागे-
शंभुःपृष्टःकिलोमया तस्यास्तद्वचनंश्रुत्वाप्राहदेवोमहेश्वरः शृणुदेविवरारोहेवक्ष्यामित्वांमहेश्वरि सर्वविघ्नहरेत्याहकरकाख्या
चतुर्थिका पार्वत्युवाच भगवन्कीदृशीप्रोक्ताचतुर्थीकरकाभिधा विधानंकीदृशंप्रोक्तंकेनेयंचपुराकृता ईश्वरउवाच शक्रप्रस्थपु
रेरम्येविद्वज्जनसमाकुले स्वर्णरौप्यसमाकीर्णेरत्नप्राकारशोभने दिव्यनारीजनालोकेवशीकृतजगत्त्रये वेदध्वनिसमायुक्तेस्वर्गाद
पिमनोहरे वेदशर्माद्विजस्तत्रवसन्देशेविदांवरः पत्नीतस्यैवविप्रस्यनाम्नालीलावतीशुभा तस्यांसंजनयामासपुत्रान्सप्तामितौ
जसः कन्यावीरावतीनाम्नीसर्वलक्षणसंयुता नीलोत्पलाभनयनापूर्णेंदुसदृशानना ततःकालेशुभेदिनेविधिवद्विद्विजोत्तमः ददौ

वेदांगविदुषेविप्रायविधिपूर्वकं अत्रांतरेतुसातच्चक्रेगौर्याःशुभंव्रतं चतुर्थ्यांकार्तिकस्याथकृष्णायांतुविशेषतः स्नात्वासायंतनेकाले
सर्वान्नतान्भक्तिभावतः विलिख्यवटवृक्षंचगौरींतस्यतलेलिखेत् शिवेनविघ्ननाथेनषण्मुखेनसमन्विताम् गंधपुष्पाक्षतैर्गौरींमंत्रे
णानेनपूजयेत् नमःशिवायैशर्वाण्यैसौभाग्यंसंततिंशुभां प्रयच्छभक्तियुक्तानांनारीणांहरवल्लभे तस्याःपार्श्वेमहादेवंविघ्ननाथंषडा
ननं पुनःपुष्पाक्षतैर्धूपैरर्चयेच्चपृथक्पृथक् पक्वान्नाक्षतसंपन्नान्सदीपान्करकान्दश तथापिष्टकनैवेद्यंभोज्यंसर्वंन्यवेदयत्
प्रतीक्षंत्यःस्त्रियःसर्वाश्चंद्रोदयपरास्थिताः साबालाविकलादीनाक्षुत्तृष्णाभ्यांपरिपीडिता निपपातमहीपृष्ठेरुरुदुर्बांधवास्तदा समा-
श्वास्यचतैस्तांस्तुमुखमभ्युक्ष्यवारिणा तद्भ्राताचिंतयित्वैवमारुरोहमहावटं हस्तेचोल्कांसमादायज्वलंतींस्नेहपीडितः भगि-
न्यैदर्शयामासचंद्रंव्याजोदितंतदा तंदृष्ट्वार्त्तिमुत्सृज्यबुभुजेभावसंयुता चंद्रोदयंतमाज्ञायअर्घ्यंदत्वाविधानतः तद्दोषेणमृत
स्तस्याःपतिस्तत्पापदूषितः पतिंतथाविधंदृष्ट्वाशिवमभ्यर्च्यसापुनः व्रतंनिरशनंचक्रेयावत्संवत्सरोगतः चक्रुःसंवत्सरेतीतेव्रतं-
तद्भ्रातृयोषितः पूर्वोक्तेनविधानेनसापिचक्रेशुभानना तदायातानाशचीदेवीकन्याभिःपरिवारिता एतदेवव्रतंकर्तुंभूमिंगतास्वर्गलोक
तः वीरावत्यास्तदाभ्याशमगमद्भाग्यतःस्वयं दृष्ट्वातांमानुषींदेवीप्रपच्छसकलंशची वीरावतीतदापृष्टाप्रोवाचविनयान्विता अ
हंपितृगृहेभ्रातासाम्मृतोयंमेपतिःप्रभुः नजानेकर्मणःकस्यफलंप्राप्तंमयाधुना ममभाग्यवशाद्देवीआगतासिमहेश्वरि अनुगृण्ही

धर्मांमातर्जीवयाशक्रपतिंमम इंद्राणीउ॰ त्वयापितृगृहेपूर्वंकुर्वंत्याकरकव्रतं नदैवार्घ्यंत्वयादत्तंविनाचंद्रोदयंशुभे तेननैवव्रतदोषेणस्वा
मीलोकांतरंगतः इदानींकुरुयत्नेनकरकव्रतमुत्तमं पतिंतेजीवयिष्यामिव्रतस्यास्यप्रभावतः कृष्णउ॰ तस्यास्तद्वचनंश्रुत्वाव्रतंच-
क्रेविधानतः प्रसन्नासाभवद्देवीशक्रस्यप्राणवल्लभा तयाव्रतेकृतेदेवीजलेनाभ्युक्ष्यतत्पतिं जीवयामासचेंद्राणीदेववच्चबभूवसः न
तश्चागाद्गृहंस्वीयंरेमेसापतिनासह धनंधान्यंसुपुत्रांश्चदीर्घमायुश्चलब्धवान् तस्मात्त्वयापियत्नेनव्रतमेतद्विधीयतां सूतउ॰ श्रीह
र्यास्यवचःश्रुत्वाचकारद्रौपदीव्रतम् तत्कृतस्यप्रभावेनजितातान्कौरवान्रणे लेभिरेराज्यमतुलंपांडवादुःखनाशनं येकरिष्यंतिसु
भगाव्रतमेतन्निशागमे तेषांपुत्रान्धनंधान्यंसौभाग्यंचातुलंयशः करकंक्षीररसंपूर्णंतोयपूर्णमथापिवा ददामिरत्नसंयुक्तंचिरंजी
वतुमेपतिः इतिमंत्रेणकरकान्प्रदद्याद्द्विजसत्तमे सुवासिनीभ्योदद्याच्चआदद्यात्ताभ्यएवच एवंव्रतंयाकुरुतेनारीसौभाग्यका
म्यया सौभाग्यंपुत्रपौत्रादिलभतेसुस्थिरांश्रियं इतिवामनपुराणेकरकाभिधाचतुर्थीव्रतंसंपूर्णं अथमाघशुक्लचतुर्थ्यांगौरी
चतुर्थीव्रतं हेमाद्रौब्राह्मे उमाचतुर्थ्यांमाघेतुशुक्लायांयोगिनीगणैः प्रागभक्षयित्वास्त्रक्षाचभूयस्तांगस्वकैर्गुणैः तस्मात्सानत्र
संपूज्यानरैःस्त्रीभिर्विशेषतः कुंदपुष्पैःप्रयत्नेनसम्यक्भक्त्यासमाहितैः कुंकुमालक्तकाभ्यांचरक्तसूत्रैःसकंकणैः रक्तपुष्पैस्त-
थाधूपैर्दीपैर्बलिभिरेवच गुडार्द्रकाभ्यांपयसालवणेनाथपालकैः पालकंमृद्भांडंइतिहेमाद्रिः पूज्याक्रियश्चविविधास्तथावि

प्राश्यशोभनाः सौभाग्यवृद्ध्येदेयंभोक्तव्यंबंधुभिःसह इतिगौरीचतुर्थीव्रतंब्रह्मपुराणोक्तं अथमाघशुक्लचतुर्थ्यांवरदचतुर्थीव्रतं
तदुक्तंकाशीखंडे माघशुक्लचतुर्थ्यांतुनक्तव्रतपरायणाः येत्वांदुंढेर्चयिष्यंतितेचार्च्याःसुरसत्तमैः विधायवार्षिकींयात्रांचतुर्थीमाप्य
माधवीं शुक्लान्तिलान्गुडैर्बध्वामाश्नीयाल्लड्डुकान्व्रती अनन्तकग्रहणात्सदोषव्यापिनीग्राह्येतिसिद्धं इतिवरदचतुर्थीव्रतं अथ
माघकृष्णचतुर्थ्यांतिलकृच्चतुर्थीव्रतं अथपूजाविधिः येभ्योमाताक्क॰ १ एवापित्रेतिचजपित्वा आगमार्थंतु॰ घंटानादंकृत्वा
अपसर्पंतितिछोटिकामुद्रां॰ तीक्ष्णदंष्ट्रेतिक्षेत्रपालंसंप्रार्थ्य आचम्यप्राणानायम्यममसकुटुंबस्यक्षेमस्थैर्यविजयाभयआयुरारो
ग्यैश्वर्याभिवृद्ध्यर्थंधर्मार्थकाममोक्षचतुर्विधपुरुषार्थसिध्यर्थंश्रीसंकष्टहरगणेश्वरप्रीत्यर्थंनारदीयपुराणोक्तप्रकारेणपुरुषसूक्त
विधानेनयथासंभावितनियमेनयथोपचारमीलितद्रव्यैःसंकष्टचतुर्थीव्रतांगत्वेनगणपतिपूजनंकरिष्ये कलशार्चनंशंखार्चनंचकु-
र्यात् अथन्यासंकुर्यात् अस्यश्रीगणपतिमंत्रस्यशुक्लऋषिः श्रीसंकष्टहरगणपतिर्देवता अनुष्टुप्छंदः श्रीसंकष्टहरगणपति
प्रीत्यर्थेन्यासेवि॰ ॐनमोहेरंबअंगुष्ठाभ्यांनमः मदमोदिततर्जनीभ्यांनमः ममसंकष्टंनिवारयमध्यमा॰ निवारयअनामिकाभ्यां॰ हुं
फट्कनिष्ठिकाभ्यां॰स्वाहा करतलकरपृष्ठाभ्यां॰ एवंहृदयादि भूर्भुवःस्वरोमितिदिग्बंधः ॐनमोहेरंबमदमोदितममसंकष्टंनिवार
यहुंफट्स्वाहा॰ अथध्यानम् श्वेतांगंश्वेतवस्त्रंसितकुसुमगणैःपूजितंश्वेतगंधैः क्षीराब्धौरत्नदीपैःसुरनरविमलेरत्नसिंहासन

स्थं दोर्भिःपाशांकुशेष्टाभयधृतरुचिरं चंद्रमौलिं त्रिनेत्रं ध्याये छांत्यर्थमीशं गणपतिममलं श्रीसमेतं प्रसन्नं लंबोदरं चतुर्बाहुं त्रिनेत्रं रक्त
वर्णकं सर्वाभरणशोभाढ्यं प्रसन्नास्यं विचिंतयेत् ध्यायामि आगच्छ विघ्नराजेंद्र स्थाने चात्र स्थितो भव आराधयिष्ये भक्त्याहं भ
वंतं सर्वसिद्धये सहस्रशीर्षेत्यावा॰ गणेशाय॰ आवा॰ अभी॥ सितार्थसिद्ध्यर्थं पूजितो यः सुरासुरैः सर्वविघ्नच्छिदे तस्मै गणाधिपत
येनमः पुरुषएवेदमासनं विघ्ननाशिनेन॰ आसनं॰ गणाधिपनमस्तेस्तु सर्वसिद्धिकरप्रभो पाद्यं गृहाण देवेश सुरासुरसुपूजित एता-
वान॰ लंबोदराय॰ पाद्यं॰ रक्तगंधाक्षतोपेतं रक्तपुष्पसमन्वितं अर्घ्यं गृहाण देवेश मया दत्तं हि भक्तितः त्रिपादूर्ध्वं॰ चंद्रार्धधारिणेन॰ अर्घ्यं॰
सुरासुरसमाराध्य सर्वसिद्धिप्रदायक मया दत्तं सुरश्रेष्ठ गृहाणाचमनीयकं तस्माद्विरा॰ विश्वप्रियाय॰ आचमनी॰ पयोदधिघृतं चैव श
र्करामधुसंयुतं पंचामृतेन स्नपनं करिष्ये सर्वसिद्धिदम् यत्पुरुषेणेति॰ ब्रह्मचारिणेन॰ पंचामृतस्ना॰ गंगादिसलिलं शुद्धं सुवर्णकलशे
स्थितं सुवासितं परिमलैः स्नापयामि गणेश्वर पुरुषसूक्तेन शुद्धोदकस्ना॰ रक्तांबरं वस्त्रयुग्मं सर्वकार्यार्थसिद्धये मया दत्तं गणाध्यक्ष
गृह्यतामखिलार्थद तं यज्ञं॰ सर्वप्रदाय॰ वस्त्रयुग्मं॰ कुंकुमाक्तं मया दत्तं सौवर्णमुपवीतकं उत्तरीयेण संयुक्तं गृहाण गणनायक तस्मा
द्यज्ञात्सर्व॰ वक्रतुंडाय॰ यज्ञोप॰ चंदनागरुकर्पूरकुंकुमादिसमन्वितं गंधं गृहाण देवेश सर्वसिद्धिप्रदायक तस्माद्यज्ञात्सर्व॰ गणाध्य
क्षाय॰ गंधं॰ अक्षताश्च सुरश्रेष्ठाः कुंकुमोक्ताः सुशोभनाः गृहाण विघ्नराजेंद्र मया दत्ता हि भक्तितः गजवदनाय॰ अक्षता॰ रक्तपुष्पा

णिविघ्नेशएकविंशतिसंख्यया गृहाणसुमुखोभूत्वामयादत्तान्युमासुत तस्माद्दत्वा॰ गुणशालिने॰ पुष्पाणि॰ सुगंधीनिचमाल्यानिगृ॰
हाणगणनायक विनायकनमस्तुभ्यंशिवसूनोनमोस्तुते विघ्ननाशिने॰ माल्यानि॰ एकविंशतिनामभिः दूर्वाभिः पूजयेत् ॐगजा
ननाय॰ विघ्नराजाय॰ लंबोदराय॰ शिवात्मजाय॰ वक्रतुंडाय॰ शूर्पकर्णाय॰ कुब्जाय॰ गणेशाय॰ विघ्ननाशिने॰ विकटाय॰ वामदेवाय॰
सर्वदेवाय॰ सर्वार्तिनाशिने॰ विघ्नहर्त्रे॰ धूम्राय॰ सर्वदेवाधिदेवाय॰ उमापुत्राय॰ कृष्णपिंगला॰ भालचंद्राय॰ गणाधिपाय॰ एकदंताय॰
२१ एकविंशतिदूर्वापुष्पाणिसमर्पयामि॰ अथांगपूजा संकष्टनाशिने॰ पादौपू॰ स्थूलजंघाय॰ जंघेपू॰ एकदंताय॰ जानुनीपू॰ आखुवा
हनाय॰ उरूपू॰ हेरंबाय॰ कटीपू॰ लंबोदराय॰ उदरंपू॰ गणाध्यक्षाय॰ हृदयंपू॰ स्थूलकंठाय॰ कंठंपू॰ स्कंदाग्रजाय॰ स्कंधौपू॰ परशुह
स्ताय॰ हस्तौपू॰ गजवक्त्राय॰ वक्त्रंपू॰ सर्वेश्वराय॰ शिरःपू॰ संकष्टनाशिनेन॰ सर्वांगंपू॰ अथावरणपू॰ गणाधिपाय॰ उमापुत्राय॰
अघनाशिने॰ हेरंबाय॰ लंबोदराय॰ गजवक्त्राय॰ एकदंताय॰ धूम्रकेतवे॰ भालचंद्राय॰ ईशपुत्राय॰ इभवक्त्राय॰ मूषकवाहनाय॰ कुमा
रगुरवे॰ संकष्टनाशिने॰ इतिप्रथमावरणं १ विघ्नगणपतये॰ वीरगणपतये॰ शूर्पकर्णगणपतये॰ प्रसादगणपतये॰ वरदगणपतये॰ इंद्रग
णपतये॰ एकदंतगणपतये॰ लंबोदरगणपत॰ क्षिप्रगणपतये॰ सिद्धिगणपत॰ द्वितीयावरणं २ रामाय॰ रामेशाय॰ वृषांकाय॰ रतिप्रि
याय॰ पुष्पबाणाय॰ महेश्वराय॰ वराहाय॰ श्रीसदाशिवाय॰ तृतीयावरणं ३ आदित्याय॰ चंद्राय॰ कुजाय॰ बुधाय॰ बृहस्पतये॰ शु॰-

क्राय॰ शनैश्चराय॰ केतवे॰ सिद्ध्यै॰ समृद्ध्यै॰ कांत्यै॰ मदनरत्यै॰ मदद्राविण्यै॰ वसुमत्यै॰ वैनायक्यै॰ चतुर्थावरणं ४ इंद्राय॰ अग्नये॰ यमाय॰ निर्ऋ-
तये॰ वरुणाय॰ वायवे॰ सोमाय॰ ईशानाय॰ पंचमावरणं ५ अथपत्रीपूजा गणाधिपाय॰ पाचीप॰ सुमुखाय॰ भृंगराजप॰ उमापुत्राय॰ बिल्व
पत्रं॰ गजवक्त्राय॰ श्वेतदूर्वाप॰ लंबोदराय॰ बदरीपत्रं॰ हरसूनवे॰ धत्तूरप॰ गुहाग्रजाय॰ तुलसीप॰ गजकर्णाय॰ अपामार्गपत्रं॰ एकदंताय॰
बृहतीप॰ इभवक्त्राय॰ शमीप॰ मूषकवाहनाय॰ करवीरप॰ विनायकाय॰ वेणुपत्रं॰ कपिलाय॰ अर्कप॰ भिन्नदंताय॰ अर्जुनप॰ पत्नीहिताय॰
विष्णुक्रांतप॰ बटवे॰ दाडिमीप॰ भालचंद्राय॰ देवदारुप॰ हेरंबाय॰ मरुपत्रं॰ सिद्धिदाय॰ सिंदूरप॰ सुराग्रजाय॰ जातीप॰ विघ्नराजाय॰
केतकीप॰ इत्येकविंशतिपत्राणि अथपुष्पपूजा सुमुखाय॰ जातीपु॰ एकदंताय॰ शेवंतीपु॰ कपिलाय॰ जुईपु॰ गजकर्णाय॰ चंपकपु॰
लंबोदराय॰ कल्हारपु॰ विकटाय॰ केतकीपु॰ विघ्ननाशिने॰ बकुलपु॰ विनायकाय॰ जपाकुसुमपु॰ धूम्रकेतवे॰ पुन्नागपु॰ गणाध्यक्षाय॰ ध
त्तूरपु॰ भालचंद्राय॰ मातुलिंगपु॰ पत्नीहिताय॰ विष्णुक्रांतपु॰ उमापुत्राय॰ करवीरपुष्पं॰ गजाननाय॰ पारिजातपु॰ ईशपुत्राय॰ कमलपु॰
सर्वसिद्धिप्रदाय॰ गिरिकर्णिकापु॰ मूषकवाहनाय॰ कुमुदपु॰ कुमारगुरवे॰ तगरपुष्पं॰ दीर्घशुंडाय॰ सुगंधिराजपु॰ इभवक्त्राय॰ अगस्ति॰
संकष्टनाशनाय॰ गुलाबपु॰ इत्येकविंशतिपु॰ २१ अथाष्टोत्तरशतनामपूजा ॐ अस्यश्रीअष्टोत्तरशतविघ्नेश्वरदिव्यनामामृत
स्तोत्रमंत्रस्य गृत्समदऋषिः गणपतिर्देवता अनुष्टुप्छंदः गंबीजं नंशक्तिः मंकीलकं श्रीगणपतिप्रसादसिद्ध्यर्थंपूजनेवि॰ ॐकारपू

वैकनामानि विनायकाय· विघ्नराजाय· गौरीपुत्राय· गणेश्वराय· स्कंदाग्रजाय· अव्ययाय· पूताय· दक्षाध्यक्षाय· द्विजप्रियाय· अ
ग्निगर्वच्छिदे· इंद्रश्रीप्रदाय· वाणीबलप्रदाय· सर्वसिद्धिप्रदाय· शर्वतनयाय· शर्वप्रियाय· सर्वात्मकाय· सृष्टिकर्त्रे· देवानीकार्चिताय· शि
वाय· शुद्धाय· बुद्धिप्रियाय· शांताय· ब्रह्मचारिणे· गजाननाय· द्वैमातुराय· मुनिस्तुत्याय· भक्तविघ्ननाशिने· एकदंताय· चतुर्बाहवे·
शक्तिसंयुताय· चतुराय· लंबोदराय· शूर्पकर्णाय· हेरंबाय· ब्रह्मवित्तमाय· कालाय· ग्रहपतये· कामिने· सोमसूर्याग्निलोचनाय· पाशां
कुशधराय· चंडाय· गुणातीताय· निरंजनाय· अकल्मषाय· स्वयंसिद्धाय· सिद्धार्चितपदांबुजाय· बीजपूरकाय· अव्यक्ताय· वरदाय· शा
श्वताय· कृतिने· विद्वत्प्रियाय· वीतभयाय· गदिने· चक्रिणे· इक्षुचापधृते· अब्जोत्पलकराय· श्रीशाय· श्रीपतये· स्तुतिहर्षिताय· कु
लाद्रिभृते· जटिने· चंद्रचूडाय· अमरेश्वराय· नागयज्ञोपवीतिने· श्रीकंठाय· रामार्चितपदाय· व्रतिने· स्थूलकंठाय· त्रयीकर्त्रे· सामघोष-
प्रियाय· पुरुषोत्तमाय· स्थूलतुंडाय· अग्रगण्याय· ग्रामण्याय· गणपाय· स्थिराय· वृद्धिदाय· सुभगदाय· शूराय· वागीशाय· सिद्धिदा
यकाय· दूर्वाबिल्वप्रियाय· कांताय· पापहारिणे· कृतागमाय· समाहिताय· वक्रतुंडाय· श्रीपदाय· सौम्याय· भक्तकांक्षितदात्रे· अच्यु
ताय· केवलाय· सिद्धिदाय· सच्चिदानंदविग्रहाय· ज्ञानिने· मायायुक्ताय· दांताय· ब्रह्मिष्ठाय· भयवर्जिताय· १०० प्रमत्तदैत्यभय
प्रदाय· व्यक्तमूर्तये· अमूर्तकाय· पार्वतीशंकरोत्संगखेलनोत्सवलालसाय· समस्तजगदाधाराय· वरदमूषकवाहनाय· हृष्टचित्ताय·

प्रसन्नात्मने॰ सर्वसिद्धिप्रदायकाय॰ १०८ अष्टोत्तरशतेनैवंनाम्नाविघ्नेश्वरस्यच तुष्टावशंकरःपुत्रंत्रिपुरंहंतुमुद्यतः यःपूजयेदनेनैवभ-
क्त्यासिद्धिविनायकम् दूर्वादलैर्बिल्वदलैःपुष्पैर्वाचंदनाक्षतैः सर्वान्कामानवाप्नोतिसर्वापद्भ्यःप्रमुच्यते इतिश्रीभविष्योत्तरपुराणेवि
घ्नेश्वराष्टोत्तरशतदिव्यनामस्तोत्रंसंपूर्णम् वनस्पतिरसोद्भूतंदशांगंगुग्गुलान्वितम् गृहाणसर्वकामार्थंमयादत्तंविनायक यत्पुरुषं॰
उमापुत्राय॰ धूपं॰ घृताक्तवर्तिसंयुक्तंदीपंशक्तिप्रदायकम् गृहाणेशमयादत्तंतेजोराशेजगत्पते ब्राह्मणो॰ रुद्रप्रियाय॰ दीपं॰ अन्नंच
तुर्विधंस्वादुरसैःषड्भिःसमन्वितम् भक्त्यानिवेदितंदेवनैवेद्यंप्रतिगृह्यताम् भक्ष्यैर्नानाविधैर्युक्तान्मोदकान्घृतपाचितान् गृहाणविघ्न-
राजेंद्रतिलतंडुलसमन्वितान् चंद्रमामनसो॰ विघ्ननाशिने॰ नैवेद्यं॰ फलानीमानिरम्याणिस्थापितानितवाग्रतः तेनमेसफलावाप्तिर्भवेज्जन्म-
निजन्मनि संकष्टनाशिने॰ फलंस॰ पूगीफलंम॰ नाभ्याआसी॰ सिद्धिविनायकाय॰ तांबूलं॰ श्रियेजातइतिनीराजनं॰ पूजाफलसमृद्ध्यर्थंत
वाग्रेस्वर्णमीश्वर स्थापितंतेनमेप्रीतःपूर्णान्कुरुमनोरथान् सप्तास्यास॰ विघ्नेशाय॰ सुवर्णपुष्पं॰ अथदूर्वा॰ गणाधिपाय॰ दूर्वायुग्मंस॰
उमापुत्रा॰ दूर्वा॰ अघनाशना॰ दूर्वा॰ एकदंताय॰ दूर्वा॰ इभवक्त्राय॰ दूर्वायु॰ विनायकाय॰ दूर्वायु॰ ईशपुत्राय॰ दूर्वायु॰ सर्वसिद्धिप्रदायकाय॰ दू
र्वायु॰ कुमारगुरवे॰ दूर्वायु॰ श्रीगणेश्वराय॰ एकदूर्वांकुरंसमर्पयामि गणाधिपनमस्तेस्तुउमापुत्राघनाशन एकदंतेभवक्त्रेतितथा
मूषकवाहन विनायकेशपुत्रेतिसर्वसिद्धिप्रदायक कुमारगुरवेतुभ्यंगणराजप्रयत्नतः एभिर्नामपदैर्नित्यंदूर्वायुग्मंसमर्पयेत् श्रीग-

णेशोवक्रतुंडउमापुत्रस्तथैवच विघ्नराजःकामदश्चगणेश्वरइतिस्मृतः जीमूतःशक्तिरित्युग्रस्तथांजनसमप्रभः योगिध्येयोदिव्यगुणोमहाकाय
इतीरितः ततश्चसिद्धिदःप्रोक्तोमहोदरइतिस्मृतः गजवक्त्रःकर्मभीमस्ततःपरशुधार्यपि करिकुंभोविश्वमूर्तिरुग्रतेजास्ततःपरम् लंबोदरस्ततः
सिद्धिर्गणेशस्यैकविंशतिः नामानिरमणीयानिजपेदेभिश्चपूजयेत् गणेशात्तस्यनश्यंतिसंकष्टानिमहंत्यपि महासंकष्टदग्धोहंगणेशंशरणं
गतः तस्मान्मनोरथंपूर्णंकुरुविश्वेश्वरप्रिय ततःस्वर्णमयंपुष्पंविघ्नेशायनिवेदयेत् प्रदक्षिणानमस्कारान्कृत्वादेवंक्षमापयेत् यज्ञेनयज्ञ॰
संकष्टनाशनाय॰ पुष्पांजलिंस॰ नमोस्तुदेवदेवेशभक्तानामभयप्रद विघ्नानांनाशकर्त्रेचहरात्मजनमोस्तुते विघ्ननाशिने॰ नमस्कारं॰ ततः
ॐनमोहेरंबइतिमूलमंत्रंएकविंशतिवारंजपेत् अथगणेशायार्घ्यंदद्यात् गणेशायनमस्तुभ्यंसर्वसिद्धिप्रदायक संकष्टहरमेदेवगृहाणा-
र्घ्यंनमोस्तुते संकष्टहरगणपतये॰ इदमर्घ्यंसमर्प॰ कृष्णपक्षेचतुर्थ्यांतुसंपूजितविधूदये क्षिप्रंप्रसीददेवेशगृहाणार्घ्यंनमोस्तुते एता-
भ्यांमंत्राभ्यां अर्घ्यंदद्यात् तिथीनामुत्तमेदेविगणेशप्रियवल्लभे सर्वसंकष्टनाशायगृहाणार्घ्यंनमोस्तुते चतुर्थ्यैनमः इदमर्घ्यम् रोहिणी
सहितंचंद्रंपंचोपचारैः पूजयेत् क्षीरोदार्णवसंभूतलक्ष्मीबंधोनिशाकर गृहाणार्घ्यंमयादत्तंरोहिण्यासहितःशशिन् -
इतिगणेशायत्रिरर्घ्यंदद्यात् ३ रोहिणीसहितचंद्रायनमः इदमर्घ्यंसमर्पयामि गगनांगणसंदीपक्षीराब्धिमथ-
नोद्भव भाभासितदिगंतांतसोमराजनमोस्तुते रोहिणीसहितचंद्रायनमस्कारः ततः आचार्यंपूजयेत् वाय -

नंचदद्यात् मोदकान्फलान्पंचदक्षिणाभिःसमन्वितान् गृहाणत्वंद्विजश्रेष्ठव्रतस्यपरिपूर्तये वायनमं० प्रतिमादानमं० प्रतिमांगु
रवेदद्यादाचार्यायसदक्षिणां वस्त्रकुंभसमायुक्तामादौमंत्रमिमंजपेत् गणेशस्यप्रसादेनममसंतुमनोरथाः तुभ्यंसंप्रददेविप्र-
प्रतिमांतुगजाननीं इष्टकामार्थसिद्ध्यर्थंपुत्रपौत्रप्रवर्धिनीम् गणाधिराजदेवेशविघ्नराजविनायक नवमूर्तिप्रदानेनप्रसन्नोभव
सर्वदा इतिकलशप्रतिमादानमंत्रः अथप्रतिग्रहमंत्रः गणेशःप्रतिगृह्णातिगणेशोवैददातिच गणेशस्तारकोभाभ्यांग
णेशायनमोनमः संसारपीडाव्यथितंहिमांसदासंकष्टभूतंसुमुखप्रसीद त्वंत्राहिमांनाशयकष्टसंघान्नमोनमःकष्टविनाश
नाय इतिप्रार्थना यद्दुर्लक्ष्यकृतंतेद्ययथाशक्तिप्रपूजनम् संकष्टंहरमेदेवउमासुतनमोस्तुते इतिनमस्कारः इतिपूजावि०
अथकथा सूतउ० अरण्येवर्तमानंतंपांडुपुत्रंयुधिष्ठिरं सबांधवंसुखासीनंप्रययौव्यासआदरात् तंदृष्ट्वामुनिशार्दूलंव्यासंप्रसाययोनृ
पः मधुपर्कंचसार्धंचकृत्वातस्मैत्युवाचतं युधिष्ठिरउ० अद्यमेसफलंजन्मभवनागमनेकृते येसंकष्टाहिसंजातावनेममनिवासिनः
तेसर्वेविलयंयाताभवतोदर्शनेनहि आत्मानंसाधुमन्येहं राज्यतृष्णापराङ्मुखं दुःखितंमांकथंस्वामिन्राज्यभ्रष्टंवनेस्थितम्
एतेभीमादयःसर्वेबांधवाव्यथयंतिमो दुराधर्षाःसुवीर्याहिमच्छासनविधारताः इयंतुद्रौपदीसाध्वीराजपुत्रीपतिव्रता राज्यो
पभोगयोग्यासाप्यद्यदुःखोपभोगिनी मयाचविंकृतंव्यासपूर्वंकष्टाद्गुजीविता दायादैर्वंचितंराज्यंद्यूतच्छद्मरतैस्तथा परा-

ब्र॰रा॰
८९

जितावयंब्रह्मन्सुहृद्भिर्बंधुभिस्तथा वनंप्रस्थापितादूतैरिदमूचुस्तथैवच कुर्वंतुगमनंशीघ्रंवनायभवदादयः इत्थंनिराकृताःस्वामिन्य
द्यातद्वनमागताः अहंतदाप्रभृत्याहोनद्रक्ष्यामिभवादृशान् यद्यस्तिव्रतमेकंहिसर्वसंकष्टनाशनं तद्व्रतंकथयब्रह्मन्ननुग्राह्योस्मिसु
व्रत इत्युक्तवंतंराजानंसर्वसंकष्टनाशनं उवाचप्रीणयन्व्यासोधर्मजंमेदिनीपतिं व्यासउ॰ नास्तिभूमंडलेराजंस्त्वत्समोधर्मतत्प
रः कथयामिव्रतंतेद्यव्रतानामुत्तमोत्तमं संकष्टनाशनंनित्यंशुभदंफलदंभवि यत्कृत्वासर्वकार्याणांनिष्पत्तिर्जायतेध्रुवं विद्यार्थीलभ
तेविद्यांधनार्थीलभतेधनं प्रोषितायापुरंध्रीचकरोतिव्रतमुत्तमं ईप्सितंलभतेसर्वंपतिनासहमोदते संकष्टेपियदाक्षिप्तोमानवोग्रहपीडि
तःसाम्राज्येदीक्षितोनित्यंमंत्रिभिःपरिवारितः सुहृद्भिर्बंधुभिश्चैवतथापुत्रैःसमन्वितः तस्यतुप्रियकर्त्रीचपत्नीगुणवतीप्रिया ना-
म्नारत्नावलीत्यासीत्पतिव्रतपरायणा तयोःपरस्परंप्रीतिरभवच्चगुणाश्रयी कदाचिद्दैवयोगेनहृतंराज्यंचवैरिभिः कोशोबलंचापहृतंविध्व
स्तोबंधुभिःसह रत्नावल्यानयासार्ध्व्यानिर्गतोभूमिवल्लभः वनेक्षुधार्तःश्रमितोत्यंतकृशासास्तृषार्दितः इतस्ततश्चरन्राजन्नातपे-
नातिपीडितः एकाकीवनमासाद्यतयासार्धंयुधिष्ठिर सूर्येचास्ताचलंयातेअरण्येचशिवार्दिते व्याघ्राश्वत्तुकुशस्तत्रपर्जन्योपिववर्षह
कंटकैःक्लेशितानाराज्ञीदुःखमाक्रंदपीडिता तांविलोक्यनृपश्रेष्ठोदुःखेनैवतुपीडितः ततःप्रभातसमयेमार्कंडेयंमहामुनिं ददर्शराजात
त्रैवविस्मयाविष्टमानसः उपगम्यशनैस्तंतुदंडवत्पतितोभुवि अब्रवीद्वचनंराजामार्कंडेयंमहामुनिं किंकृतंहिमयास्वामिन्दुष्कृतं

च॰
४
८९

कथयस्वनत् केनकर्मविपाकेनराज्यलक्ष्मीःपराङ्मुखी मार्कंडेयउ० शृणुराजन्प्रवक्ष्यामियत्त्वयापूर्वजन्मनि पूर्वंहिलुब्धकश्चासीर्गतोसि
गहनंवनम् मृगशार्दूलशशकान्हन्यमानोवनेतदा तस्मिन्रात्रौभ्रमन्राजन्चतुर्थ्यांमाघकृष्णके दृष्टंशुभंचकृष्णायास्तडागंपुष्करनिर्म
लं तत्तीरेनागकन्यानांसमूहंरक्तवाससां गणेशंपूजयंतीनांदृष्टवान्प्रियमव्रतं उपगम्यशनैस्तत्रपृष्टंतासांत्वयाविभो आर्याःकि
मेतन्मेसर्वंकथयध्वंहितत्वतः नागकन्याऊ० पूजयामोगणपतिंवयंसिद्धिप्रदायकं शांतिदंपुष्टिदंनित्यंसर्वव्याधिविनाशनं पुनः
पृष्टंत्वयातत्रकिंदानंपूज्यतेत्रकः स्त्रियऊ० यदाचोत्पद्यतेभक्तिर्मामिपूज्योगणाधिपः कृष्णायांचचतुर्थ्यांवैरक्तपुष्पैःप्रपूज
येत् धूपैर्दीपैश्चनैवेद्यैरन्यैर्भक्तिसमन्वितैः विविधान्मोदकान्कृत्वापूरिकाघृतपाचिताः नैवेद्यंषड्रसंसर्वंगणेशायनिवेदयेत् ततोगृहीतं
राजेंद्रत्वयासंकष्टनाशनं अभवद्धनधान्यंनेपुत्रपौत्रसमन्वितं कस्मिंश्चित्समयेराजन्धनमत्तेनसिद्धिदम् विस्मृतंतद्व्रतंसर्वंत्वयायत्नेन
कल्पितं ततःप्राप्तंहिपंचत्वंत्वयापापविनाशनं तत्प्रभावाद्राजकुलेविशालेप्राप्तमुत्तमं त्वयाजन्मनृपश्रेष्ठराज्यंप्राप्तंत्वयाविभो कृतंह
मित्रमपियायुक्तःप्राप्तोसिविपुलंयशः कृतावज्ञाव्रतस्यांतेनत्वयासफलमीदृशं राजोवा० अधुनाक्रियतेस्वामिन्कथ्यतांममसद्व्रतं य
त्कृत्वासफलंराज्यंप्राप्यतेचमयापुनः ऋषिरुवा० व्रतसंकल्पमाशुत्वंकुरुराजन्नृपोत्तम प्राप्स्यसित्वंहिराज्यंचसंदेहंमाकुरुप्रभो
इत्युक्त्वासमुनिश्रेष्ठोत्यंतर्धानमगात्ततः मुनेस्तद्वचनंश्रुत्वाव्रतसंकल्पमातनोत् राजाराज्ञीस्तुनिर्मोक्तसकलंतद्व्रतंशुभं आयाताः

सकलास्तस्य मंत्रिभृत्याश्च सैनिकाः समायमोनृपश्रेष्ठस्तत्क्षणात्स्वयमेवहि लब्धास्वकीयं राज्यं च गणेशस्य प्रसादतः बुभुजे मेदिनीं राजा पु
त्रपौत्रसमन्वितः तस्मात्त्वमपि राजेंद्र कुरु संकष्टनाशनं व्रतं सिद्धिप्रदं नृणां स्त्रीणां चैव विशेषतः युधिष्ठिर उ॰ स विस्तरं व्रतं ब्रूहि हि कृपया क
ष्टनाशनं व्यास उ॰ यदा संक्लेशिनो राजन्दुःखैः संकष्टदारुणैः पुमान्कृष्णचतुर्थ्यां तु तदा पूज्यो गणाधिपः श्रावणे बहुले पक्षे चतुर्थ्यां तु विधू
दये तस्मिन्दिने व्रतं ग्राह्यं संकष्टारव्यं युधिष्ठिर निराहारो यदेवेश यावच्चंद्रोदयो भवेत् माघे वा कृष्णपक्षे तु चतुर्थ्यां तु विधूदये तस्मिन्
दिने व्रतं ग्राह्यं संकष्टारव्यं नृपोत्तम प्रातः शुचिर्भवेत्सम्यग्दंतधावनपूर्वकं निराहारो यदेवेश यावच्चंद्रोदयो भवेत् भोक्ष्यामि पूजयि-
त्वाहं गणेशं शरणं गतः एवं संकल्पमादौ तु स्नात्वा शुक्लतिलैः शुभैः आह्निकं तु विधायैवं पूजां च कुरु सज्जन यथाशक्त्या तु सौवर्णी प्रतिमां
च विधाय च सौवर्णे राजते ताम्रे मृन्मये वाथ शक्तितः कुंभे पुष्पैः फलैः पूर्णे देवं तत्रैव विन्यसेत् शुभे देशे न्यसेत्कुंभं वस्त्रं तत्र निधाय च
पद्ममष्टदलं कृत्वा गंधाद्यैः पूजयेत्ततः रक्तपुष्पैश्च धूपैश्च एभिर्नामपदैः पृथक् आवाहनं गणेशाय आसनं विघ्ननाशिने पाद्यं लंबोदराये
ति अर्घ्यं चंद्रार्धधारिणे विश्वप्रियायाचमनं स्नानं च ब्रह्मचारिणे चंदनं रुद्रपुत्राय पुष्पं च गुणशालिने भवानीप्रियकर्त्रे च धूपं दद्याद्यथा
विधि दीपं रुद्रप्रियायेति नैवेद्यं विघ्ननाशिने तांबूलं सिद्धिदायेति फलं संकष्टनाशिने इति नामपदैः पूजां कृत्वा मासप्रमाणं शृणु श्रावणे स
मलड्डूकान्नभस्ये दधिभक्षणं आश्विने चोपवासं च कार्तिके पयभक्षणम् मार्गे मासि निराहारः पौषे गोमूत्रभक्षणं तिलान्प्रशनं माघे

फाल्गुनेघृतशर्करास्‌ चैत्रेमासिपंचगव्यंदूर्वारसंतुमाधवे ज्येष्ठेघृतंपलंभोज्यमाषाढेमधुभक्षणं इतिमासयमान्कृत्वानरोमुच्येतसंकटात्‌ भुंजी-
याद्वातथासप्तग्रासान्वास्वेच्छयासकृत्‌ अशक्तश्चेत्ततःसिद्धिर्भविष्यतिनसंशयः मंत्रेणानेनसंप्रार्थ्यदेवदेवंजगद्गुरुं एवंपूजाप्रकर्तव्याषोडशो
रुपचारकैः नानाभक्ष्यादिसंयुक्तमुपहारंप्रकल्पयेत्‌ मोदकान्कारयेद्राजन्तिलजान्दशसंख्यकान्‌ देवाग्रेस्थापयेत्तंचदशविप्रायदापयेत्‌
पूजयित्वातुतंविप्रंभक्तिभावेनदेववत्‌ दक्षिणांचयथाशक्त्यादत्वापंचैवमोदकान्‌ संसारपीडाव्यथितंहिमांसदासंकष्टभूतंसुमुखप्रसी
द त्वंत्राहिमान्नाशयकष्टसंघान्नमोनमःकष्टविनाशनाय इतिसंप्रार्थ्यदेवेशंचंद्रायार्घ्यंनिवेदयेत्‌ ब्राह्मणान्भोजयेत्पश्चाद्गणेशप्रीतये
सदा स्वयंभुंजीतपंचैवमोदकान्बंधुभिःसह अशक्तोल्वेकमन्नंवाभुंजीयाद्दधिनासह अथवाभोजनंकार्यमेकवारंहिपांडव भूमिशा-
यीजितक्रोधोलोभदंभविवर्जितः प्रतिमांगुरवेदद्यादाचार्यायनिवेदयेत्‌ गच्छगच्छसुरश्रेष्ठस्वस्थानेपरमेश्वर व्रतेनानेनसंप्रीतोयथोक्तफल
दोभव एवंव्रतंप्रकर्तव्यंचतुर्थ्यांमासकृष्णके गाणपत्यंतथाकार्यंसर्वशास्त्रविशारदं आचार्यंवरयेद्विद्वान्यथोक्तविधिनार्चयेत्‌ एकविंशति
विप्रान्वैवस्त्रालंकारभूषणैः पूजयेद्वाहिरण्याद्यैर्मोदकैश्चैवहोमयेत्‌ अष्टोत्तरसहस्रंतुशतंचाष्टाधिकंतथा अष्टाविंशतिरष्टौवावेदोक्तैःसि
लसर्पिषा सपत्नीकंसुवर्णाद्यैर्गोभूवस्त्रादिभूषणैः छत्रंचोपानहौदद्यात्कमंडलुगृहादिभिः आचार्यंपूजयेद्राजन्गणेशस्यतुतुष्टये ए
वंकृत्वाविधानेनप्रसन्नोनात्रसंशयः प्रतिमासंतुयःकुर्यात्त्रीण्यब्दान्येकमेववा अथवाजन्मपर्यंतंनस्यद्दुःखंकदाचन दारिद्र्यंनभवेत्तस्यसं

कष्टंनभवेदिह वत्सरांतेद्वादशान्वैब्राह्मणान्भोजयेत्ततः विद्यार्थीलभतेविद्यांधनार्थीलभतेधनं पुत्रार्थीलभतेपुत्रान्सौभाग्यंचसुवासिनी भ
वंतियेव्रतमिदंशुभमीदृशंहितेवैसुरसंसुविमनोज्ञनपूर्णकामाः नित्यंभवंतिललनाःपुरुषाःसुखिनस्तेपुत्रपौत्रधनधान्ययुताःपृथिव्याम्
एवमुक्त्वाततोव्यासस्तत्रैवांतरधीयत युधिष्ठिरस्तुतत्सर्वमकरोद्राजसत्तमः तेनव्रतप्रभावेनस्वराज्यंप्राप्तवान्नृपः हत्वारिपून्कुरुक्षेत्रेस्व
राज्यमलभन्नृपः इतिश्रीनारदीयपुराणेकृष्णचतुर्थीसंकष्टहरव्रतंसंपूर्णं अथअंगारकचतुर्थीव्रतंलिख्यते इंद्रउवाच अंगारकचतुर्थ्यांच
विशेषोविहितःकुतः वदमेकृपयाब्रह्मन्मध्ययान्नियमेनच शृण्वतोनचमेतृप्तिर्गजाननकथांशुभां ब्रह्मोवाच अंगारकचतुर्थ्यांतुमहिमानंम
हीपते शृणुष्वावहितोभूत्वाकथयामितवाग्रतः अवंतीनगरेराजन्भरद्वाजोमहामुनिः वेदवेदांगविद्वाज्ञः सर्वशास्त्रविशारदः अग्निहो
त्ररतोनित्यंशिवध्यानेचतत्परः नदीतीरेगतोतिष्ठन्ननुष्ठानरतोमुनिः अकस्मात्कामिनींदृष्ट्वाकामासक्तोभवन्मुनिः कामबाणाभिभूतःसन्वि
पपातमहीतले अतिविह्वलगात्रस्यतस्यरेतस्तदास्खलत् प्रविष्टंतस्यतद्रेतःपृथिवीबिलमध्यतः ततएकःकुमारोभूज्जपाकुसुमसंनिभः
तंधरित्रीस्नेहवशात्पालयामाससादरम् जंतुःस्वंतेनधन्यंसमन्यतेपितरौकुलम् ततःससप्तवर्षस्तांपप्रच्छजननींनिजां महितोहिकथंमा
तर्मानुषंदेहमास्थितः कश्चमेजनकोमातस्तन्ममाचक्ष्वसांप्रतम् धरोवाच भरद्वाजमुनेरेतःस्खलितंमयिसंगतं ततोजातोसिरेपुत्रवर्धि
तोसिमयाशुभं सूतउवाच तर्हितंमेमुनिंमातर्दर्शयस्वतपोनिधिं ब्रह्मोवाच तमादायतदादेवीभरद्वाजंजगामह धरोवाच भरद्वाजनमस्तु-

त्यतद्वीर्यप्रभवंसुतं वर्धितंतंपुरोधायस्वीकुरुष्वसुनेधुना नदाज्ञयायायोधात्रीस्वधामरुचिरंनदा भरद्वाजःकृतंलब्ध्वासुसुदेचालिलिंगतं आघ्राय-
शिरउत्संगेस्थापयामासतंसुदा सुहूर्तेशुभलग्नेचचकारोपनयंसुनिः वेदशास्त्राण्युपादिश्यगणेशस्यमनुंशुभं उवाचकुर्वनुष्ठानंगणेशप्रीतये
चिरं संतुष्टोदास्यतेकामान्सर्वांस्तवमनोगतान् ततोमंदाकिनीतीरेपद्मासनगतोमुनिः संनियम्येंद्रियाण्याशुध्यायन्हृद्देवमंतरे जजापपरमं
मंत्रंवायुभक्षोष्टशंमुनिः एवंवर्षसहस्रंसत पस्तेपेसुदारुणं माघकृष्णाच्चतुर्थ्यांतसुदयेशशिनःशुभे दर्शयामासस्वंरूपंगणनाथो
धृदिग्भुजं दिव्यांबरंभालचंद्रंनानालंकारमंडितं ददर्शसूर्यसंकाशंसबालःपुरतःस्थितं उत्थायप्रणिपत्यैनंतुष्टावजगदीश्वरम् नम
स्तेविघ्ननाशायनमस्तेविघ्नकारिणे सुरासुरशिरोरत्नसर्वशक्त्युपबृंहिणे निरामयायदेवायनिर्गुणायगुणच्छिदे नमोब्रह्मविदां-
श्रेष्ठस्थितिसंहारकारिणे नमस्तेजगदाधारनमस्त्रैलोक्यपालक दयानिधेब्रह्मविदेब्रह्मणेब्रह्मरूपिणे लक्ष्यालक्ष्यस्वरूपायदुर्लक्षण
च्छिदेनमः इतिस्तुतःप्रसन्नात्मापरमात्मागजाननः उवाचश्लक्ष्णयावाचावरंयाचयबालक एवमुक्तोभूमिपुत्रस्तनऊचेगजाननं
भौमउ० धन्योनातोममहिजननंदर्शनात्तेसुरेशधन्यंज्ञानंकुलंमापतयायेनदृष्टोसिसाक्षात् धन्यावाणीवसतिमयियापादपद्मेचभ
क्तिर्जातोसित्वंवरदसकलभोभक्तिभावेनदेव यदितुष्टोसिदेवेशस्वर्गेभवतुमेस्थितिः अमृतंपातुमिच्छामिदेवैःसहगजानन कल्याण
कारिमेनामख्यातिमेतुजगत्त्रये दर्शनंमेचतुर्थ्यांयज्जायतेपुण्यदंविभो अतःसापुण्यदानित्यंसर्वसंकष्टहारिणी कामदाव्रतकर्त

णांत्वत्प्रसादात्सुरेश्वर गजाननउ॰ अमृतंप्राप्स्यसेसम्यकूदेवैःसहधरासुत मंगलेतिचनाम्नात्वंलोकेख्यातिंगमिष्यसि अंगारकेतिरक्तत्वाद्दस्म
त्प्रायतःसुतः अंगारकचतुर्थीयेकरिष्यंतिनराभुवि तेषामब्दभवंपुण्यंसंकष्टीव्रतसंभवम् निर्विघ्नतासर्वकार्येभविष्यतिनसंशयः
अवंतीनगरेराजाभविष्यसिपरंतपः व्रतानामुत्तमंयस्मात्कृतमेव्रतमुत्तमं यस्यसंकीर्तनान्मर्त्यःसर्वकामानवाप्नुयात् इतिदत्वावरान्
देवोंतर्दधेद्विरदाननः ततस्तुमंगलोदेवंस्थापयित्वाप्रयत्नतः शुंडासुखंदशभुजंसर्वावयवसुंदरं प्रासादंकारयामासगजाननमुदावहं संज्ञां
मंगलमूर्तिंचदेवदेवस्यसोकरोत् ततोभवत्कामदंतत्क्षेत्रंसर्वजनस्ययत् अनुष्ठानात्पूजनाच्चदर्शनात्सर्वमोक्षदं ततोविनायकोदेवोविमानव
रमुत्तमं प्रेषयामासस्वगणान्भौममानेतुमंतिके तेगत्वातेनदेहेनभौममानीतवांस्तदा गणेशस्यांतिकेराजन्नदद्भुतमिवाभवत् ततोभौ
मोभवत्ख्यातस्त्रैलोक्येसचराचरे यतोभौमेनसंकष्टचतुर्थीभौमसंयुतां कृत्वाप्राप्तंयथास्वर्गेसुधापानंसुरैःसह अतश्चांगारकयुताच
तुर्थीप्रथिताभुवि चिंतितार्थप्रदानेनचिंतामणिरिवाप्रिया प्रयातामंगलमूर्तिःसर्वानुग्रहकारकः परिणेतुंसनगरात्पश्चिमेप्रथितो-
भवत् चिंतामणिइतिख्यातःसर्वविघ्ननिवारणः अतःससिद्धगंधर्वैःपूज्यतेसविधूदये ददातिवांछितानर्थान्पुत्रपौत्रादिसंपदः
इतिश्रीगणेशपुराणेब्रह्मेंद्रसंवादेअंगारकचतुर्थीव्रतंसं॰ अथपंचमीव्रतानिलिख्यंते अथचैत्रशुक्लपंचमीकल्पादिः चैत्रमा
सिसितेपक्षेपंचम्यांपूजयेद्धरिम् तत्रदोलोत्सवंकुर्याद्धूपधूपैश्चपूजयेत् नारीनरोवाराजेंद्रसंतर्प्यपितृदेवताः स्रक्चंदनसमायुक्ता-

श्री नागपंचमी

न्ब्राह्मणान्भोजयेत्ततः इतिहेमाद्रौभविष्ये अथश्रावणशुक्लपंचमीनागपूजायांपरा पंचमीनागपूजायांकार्याषष्ठीसमन्विता तस्यांतुतुषिता-
नागाइतरासचतुर्थिका अथनागपंचमीव्रतंहेमाद्रौप्रभासखंडे ईश्वरउ० श्रावणेमासिपंचम्यांशुक्लपक्षेतुपार्वति द्वारस्योभयतोलेख्या
गोमयेनविषोल्बणाः सातुपुण्यतमाप्रोक्तादेवानामपिदुर्लभा कुर्याद्द्वादशवर्षाणिपंचम्यांचवरानने चतुर्थ्यामेकभक्तंतुतस्यांनक्तमकीर्तितं
भूरिचंद्रमयंनागमथवाकलधौतजं कृत्वादारुमयंवापिअथवामृन्मयंप्रिये हरिद्राचंदनेनैवपंचसर्पास्तुलेखयेत् पंचम्यामर्चयेद्भक्त्यानागाःपंच
फणाःस्मृताः पूजयेद्विधिवद्वीरेलाजपंचामृतैःसह करवीरैःशतपत्रैर्जातीपुष्पैश्चपद्मकैः तथागंधादिधूपैश्चपूजयेन्नागपंचकम् ब्राह्मणान्भो
जयेत्पश्चाद्घृतपायसमोदकैः अनंतंवासुकिंशेषंपद्मंकंबलमेवच तथाकर्कोटकंनागंभुजंगाश्वतरंतथा धृतराष्ट्रंशंखपालंकालीयंतक्षकंतथा
पिंगलंचमहानागंमासिमासिप्रकीर्तिताः व्रतस्यांतेपारणंस्यात्क्षीरैर्ब्राह्मणभोजनं सुवर्णभारनिष्पन्नंनागंदद्याच्चगांतथा तथावस्त्राणिदे-
यानिव्यासायामिततेजसे एवंसंपूजयेन्नागान्सदाभक्त्यासमन्वितः विशेषतस्तुपंचम्यांपयसापायसेनच दिवारात्रौनरैरुक्तव्रमेदिनीखन
नंनहि इतिप्रभासखंडेनागपंचमीव्रतं अत्रैवनागदष्टव्रतं हेमाद्रौभविष्योत्तरपुराणे सुमंतउ० नागदष्टोनरोराजन्प्राप्यमृत्युंव्रजत्यधः
अधोगत्वाभवेत्सर्पोनिर्विषोनात्रसंशयः शतानीकउ० नागदष्टःपितायस्यभ्रातावादुहितापिच मातापुत्रोथवाभार्याकर्तव्यंतद्वदस्वमे मो
क्षायतस्यविप्रेंद्रदानव्रतमुपोषणं ब्रूहिमेद्विजशार्दूलयद्भवेत्तत्करोम्यहं सुमंतउ० उपोष्यापंचमीसम्यक्नागानांबलवर्धिनी सुमेक

मेकंयावच्चविधानंशृणुभारत कृमेकंसंवत्सरंउपोष्येतिदिवाभोजनाभावः तस्यांनक्तमित्यर्थेनक्तोक्तेः श्रावणेमासिपंचम्यांशुक्लपक्षेनराधि
प सापिपुण्यतमाप्रोक्ताधात्य्यासागतिकाम्यया चतुर्थ्यामेकभक्तंचपंचम्यांनक्तमाचरेत् कुर्याच्चांद्रमसंनागमथवाकलधौतजं हेमरौ
प्यंचेत्यर्थः अथदारुमयंभव्यंमृन्मयंवाप्यशक्तितः पंचम्यामर्चयेद्भक्त्यानागंपंचफणंतथा करवीरैस्तथापद्मैर्जातिपुष्पैःसुगंधिभिः
गंधधूपैश्चनैवेद्यैःस्नाप्यक्षीरादिभिर्नृप ब्राह्मणान्भोजयेत्पश्चाद्घृतपायसमोदकैः अनंतंवासुकिंशंखंपद्मंकंबलमेवच तथाकर्कोटकं
नागंनागमश्वतरंनृप धृतराष्ट्रंशंखपालंकालियंतक्षकंतथा पिंगलंचतथानागंमासिमासिक्रमाद्यजेत् पूजयित्वाप्रयत्नेनपंचम्यां
नक्तभुग्भवेत् एवंद्वादशाहूत्वावैश्रावणेतुसितेनृप वत्सरांतेयथाशक्त्याअन्नदानंचकारयेत् ब्राह्मणानांयतीनांचनागानुद्दिश्यभक्ति
तः इतिहासविदेनागंकांचनंरत्नचित्रितं गांचदद्यात्सवत्सांवैसर्वोपस्करसंयुतां दानकालेपठेदेतत्स्मरन्नारायणंविभुं सर्वगंसर्वधाता
रमनंतमपराजितं येकेचिन्मेकुलेसर्पैर्दष्टाःप्राप्तात्त्वधोगतिं व्रतदानेनगोविंदमुक्तिभाजोभवंतुते इत्युच्चार्याक्षतैर्युक्तंसितचंदनमि-
श्रितं वासुदेवाग्रतोभूपतोयंतोयेथनिक्षिपेत् अनेनविधिनासर्वेयेमरिष्यंतिवामृताः सर्पतस्तेपियास्यंतिस्वर्गतिंनृपसत्तम कृ-
त्वासर्वान्समुद्धृत्यकुलजान्कुरुनंदन प्रयातिविष्णुसान्निध्यंसेव्यमानोप्सरोगणैः वित्तशाठ्यविहीनोयःसर्वमेतत्फलंलभेत् नक्तेन
भक्तिसहिताःसितपंचमीषुयेपूजयंतिसुभगान्कुसुमोपहारैः तेषांगृहेषुभयदाहिभवंतिसर्पाअर्चान्विताःमणिमयूखविभासिनां

गाः येनस्यांपूजयंतीहनागान्भक्तिपुरःसराः नतेषांसर्पतोवीरभयंभवतिकिंचन इतिनागदष्टपंचमीव्रतंभविष्योक्तम् अथभाद्रपदशु-
क्लपंचमीव्रतं तच्चमध्याह्नव्यापिन्यांकार्यम् तथाचमाधवीयेहारीतः पूजाव्रतेषुसर्वेषुमध्याह्नव्यापिनीतिथिः दिनद्वयेतद्व्या-
प्तौवापूर्वविद्धायांकार्यमितिमदनरत्नात् प्राप्यभाद्रपदेमासिशुक्लपक्षस्यपंचमी तस्यांमध्याह्नसमयेनद्यादौविमलेजले स्नात्वापामा-
र्गसमिध अष्टोत्तरशताधिकाः अथवाकारयेत्समदंतधावनमादितः वनस्पतिप्रार्थना आयुर्बलंयशोवर्चः प्रजाःपशुवसूनिच ब्रह्म-
प्रज्ञांचमेधांचत्वन्नोदेहिवनस्पते संप्रार्थ्यानेनमंत्रेणकुर्याद्वैदंतधावनं तत्रमंत्रः मुखदुर्गंधिनाशायदंतानांचविशुद्धये ष्ठीवनायच-
गात्राणांकुर्वेहंदंतधावनं अनेनदंतान्संशोध्यस्नायान्मृत्स्नानपूर्वकं पंचगव्यमंत्रः देशकालौसंकीर्त्यअमुकुकायशुध्यर्थंपंचगव्यम-
हंकरिष्ये गायत्र्याप्रत्यगोमूत्रंगंधद्वारेतिगोमयं आप्यायस्वेतिचक्षीरंदधिक्राव्णेतिवैदधि शुक्रमसिज्योतिरसिअमृतमसिनाम-
धामसि प्रियंदेवानामनाधृष्टंदेवयजनमसि इत्याज्यं देवस्यत्वेतिकुशोदकं आपोहिष्ठेतिमंथयेत् तस्यचतुर्भागंहुत्वा सप्तप-
र्णाःशुभादर्भाअक्षताश्चैवसंस्थिताः तेनैवोद्धृत्यहोतव्यम् अग्नयेस्वा॰सोमायस्वा॰ इरावतीधेनुमती॰ इदंविष्णु॰ ब्रह्मजज्ञानं॰ मानस्तो-
के॰गायत्र्या॰विष्णवे॰ ब्रह्मणे॰ रुद्राय॰ सूर्यायस्वाहेतिहोमयेज्जलमध्येवा प्रणवेनअथचकेशवेतिनाममंत्रेणस्त्रीणांपंचगव्यंकुर्या-
त् प्राशयेदिति नद्यादिकेतदास्नात्वास्नात्वानियममेवच ब्राह्मणीक्षत्रियावैश्याशूद्रावापिवराननेस्नात्वानैमित्तिकंकर्मगत्वानिज-

ऋषी पंचमी

व्र॰रा॰
९४

गृहंपुनः वेदींसम्यक्प्रकुर्वीतगोमयेनोपलिप्यतां इतिहेमाद्रौ रंगवल्लीसमायुक्तेसर्वतोभद्रमंडले अव्रणंसजलंकुंभंताम्रंमृन्मयमेववा
संस्थाप्यवस्त्रसंयुक्तंकंठदेशेस्रक्शोभितं पंचरत्नसमायुक्तंफलगंधाक्षतैर्युतं सहिरण्यंसमासाद्यताम्रेणपटलेनवा वंशमृन्मयपात्रे
णयववपूर्णेनचैववहि आच्छादयेत्तंचैलेनलिखेदष्टदलंततः तत्रसप्तऋषीन्दिव्यान्भक्तियुक्तःप्रपूजयेत् अथसंकल्पः मासपक्षा
द्युल्लिख्यममऋतुसंपर्कजनितदोषपरिहारार्थंअरुंधतीसहितकश्यपादिसप्तऋषिप्रीत्यर्थंऋषिपूजनमहंकरि॰ अथपूजाविधिः —
आगच्छंतुमहाभागाश्चतुर्वेदपरायणाः यावद्व्रतमिदंकुर्वेद्रूपयाभवतामहं आवाह॰ मूर्तिब्रह्मण्यदेवस्यब्रह्मण्यंतेजउत्तमं सूर्यको
टिप्रतीकाशमृषिवृंदंविचिंतये ध्यानं ऋग्यजुःसामवेदानांस्वरूपेभ्योनमोनमः पुराणपुरुषेभ्योहि देवर्षिभ्योनमोनमः आस॰
गंधपुष्पाक्षतैर्युक्तंपाद्यंगृह्णंतुभोद्विजाः प्रसादंकुरुतप्रीतास्तुष्टाःसंतुसदामम पाद्यं॰ नभस्येशुक्लपंचम्यामर्चिताऋषिसत्तमाः दहं
तुपापंमेसर्वंगृह्णंत्वर्घ्यंनमोनमः अर्घ्यं॰ लोकानांतुष्टिकर्तारोयूयंसर्वेतपोधनाः नमोवोधर्मविज्ञेभ्योमहर्षिभ्योनमोनमः आचम॰
पयोदधिघृतंचैवशर्करामधुसंयुतं पंचामृतेनस्नपनंकरिष्येऋषिसत्तमाः पंचामृ॰ मंदाकिन्याःसमानीतंयमुनागौतमीजलं कृष्णाचनर्मदातापीता
भ्यःस्नानार्थमाहृतं स्नानं॰ सर्वेनित्यंतपोनिष्ठाब्रह्मज्ञाःसत्यवादिनः वस्त्राणिप्रतिगृह्णंतुसुक्तिदाःसंतुमेसदा वस्त्रं॰ नानामंत्रैःस
मुद्भूतंत्रिवृत्तद्ब्रह्मसूत्रकं प्रत्येकंचप्रयच्छामिऋषयःप्रतिगृ॰ उपवीतानि कुंकुमागरुकर्पूरस्रुगंधैर्मिश्रितंशुभं गंधाढ्यंचंदनंदिव्यं-

पं॰
५

९४

गृण्हंतु ऋषिसत्तमाः ॥ गंधं॰ शुभ्राक्षताश्च संपूर्णाः प्रक्षाल्य च नियोजिताः शोभार्थैवो मया दत्ता गृह्यंतां मुनिसत्तमाः ॥ अक्षताः ॥ मालतीचंप-
कादीनि तुलस्यादीनि वै द्विजाः मयाहृतानि पुष्पाणि पूजार्थं प्रतिगृ॰ पुष्पाणि वनस्पतिरसोद्भूतो गंधाढ्यः सुमनोहरः आघ्रेयः सर्वदेवा
नां धूपोयं प्रति॰ धूपं॰ आज्यं च वर्तिसंयुक्तं॰ दीपं॰ नानापक्वान्नसंयुक्तं रसैः षड्भिः समन्वितं गृण्हंतु ऋषयः सर्वे नैवेद्यं प्रति॰ नैवेद्यं॰ मध्ये पा॰
उत्तरापो॰ हस्तप्र॰ करोद्वर्तनार्थे चं॰ नमो वेदविदः श्रेष्ठा ऋषयः सूर्यसन्निभाः गृण्हंत्विदं फलं तु श्रमयादत्तं हि भक्तितः फलं॰ पूगीफलं महद्दि
व्यं॰ पूगीफलं॰ हिरण्यगर्भेनिदक्षिणा यानि कानि च पापानि ब्रह्महत्यासमानि च तानि तानि विनश्यंति प्रदक्षिणपदे पदे प्रदक्षिणां॰ नमो
स्तु ऋषिवृंदेभ्यो देवर्षिभ्यो नमो नमः सर्वपापहरेभ्यो हि वेदविद्भ्यो नमो नमः नमस्कारः एते सप्तर्षयः सर्वे भक्त्या संपूजिता मया सर्वपापं
व्यपोहंतु ज्ञानतो ज्ञानतः कृतं प्रार्थना वायनं कृतायाः पूजायाः सांगतासिद्ध्यर्थं ब्राह्मणाय वायनप्रदानं क॰ तथा च ब्राह्मणपूजनं॰ वाय
नं फलसंयुक्तं सघृतं दक्षिणान्वितं द्विजवर्याय दास्यामि व्रतसंपूर्णहेतवे भवंतः प्रतिगृण्हंतु ज्योतीरूपास्तपोधनाः उभयोस्तारकाः सं
तु वायनस्य प्रदानतः ॥ वायनं॰ न्यूनातिरिक्तकर्माणि मया यानि कृतानि च क्षमध्वं तानि सर्वाणि यूयं सर्वे तपोधनाः यांतु देव॰ विसर्जनं॰
एवं संपूज्य विधिवद्भक्तियुक्तेन चेतसा तेभ्यः प्रयेच श्रोतव्यं शुभं चैव कथानकं इति पूजावि॰ अथ कथा हेमाद्रौ ब्रह्मांडे सिताश्वउ॰ श्रुता
नि देवदेवेश व्रतानि सुबहूनि च सांप्रतं मे समाचक्ष्व व्रतं पापप्रणाशनं ब्रह्मोवा॰ शृणु राजन्प्रवक्ष्यामि व्रतानामुत्तमं व्रतं ऋषिपंचमी

निविख्यातंसर्वपापहरंपरं येनचीर्णेनराजेंद्रनरकंनैवपश्यति तत्रैवोदाहरिष्यामिइतिहासंपुरातनं वैदर्भेचद्विजवरोउत्तंकोनामनामतः त
स्यभार्यासुशीलेतिपतिव्रतपरायणा तस्याअपत्ययुगुलंपुत्रोहिसर्वविभूषणः अधीतवान्सुतस्तस्यवेदान्सांगपदक्रमान् समानेनकु
लीनेनसुतावापिविवाहिता विवाहिताचसादैवाद्वैधव्यंप्रापसत्तमा सतीत्वंपालयंतीसाआस्तेनिजपितुर्गृहे तस्यादुःखेनसंतप्तःसु
तंसंस्थाप्यवेश्मनि गंगातीरवनंप्राप्तःकदाचित्तुतयासह सतत्राध्यापयामासशिष्यान्वेदंद्विजोत्तमः सुताचकुरुतेतस्यपितुःशुश्रू
षणंपरम् पितुःशुश्रूषणंकृत्वापरिश्रांताकदाचन निशीथेकिलसंसुप्ताकृमिराशिरजायत शिष्यास्तथाविधांदृष्ट्वाविवस्त्रांमस्त
रेस्थिताम् शिष्यानिवेदयामासुस्तन्मातुःकरुणास्थिताः नजानीमोवयंकिंचिद्देवींसाध्वींतथाविधाम् कृमिराशिमयीजाता-
मातःसंप्रतिदृश्यते वज्रपातसमंश्रुत्वातच्छिष्यैश्चउदाहृतं साभ्रांतमानसाशीघ्रंतत्समीपमुपागमत् सातांतथाविधांदृष्ट्वाविलला
पसुदुःखिता उरश्चताडयामाससुतरांमोहमापच क्षणेनप्राप्यचैतन्यमुत्थाप्यप्रतिमृज्यच समालंब्यचबाहुभ्यांनिन्येतत्पितुरंति
कं स्वामिन्कथयमेसाध्वीकेनदुष्कृतकर्मणा निशीथेचप्रसुप्तेयंजायतेकृमिसंकुला एवंश्रुत्वाततोवाक्यंऋषिर्ध्यानपरायणः ज्ञा
त्वानिवेदयामासतस्याःप्राक्जन्मचेष्टितं ऋषिरुवाच भागियंसप्तमेतीतेजन्मनिब्राह्मण्यभूत् रजस्वलाचसंजाताभांडादीन्यस्पृ
शत्तदा अस्यास्तुपापमनातेनजायतेकृमिवद्वपुः रजस्वलायाःपापेनयुक्ताभवतिसानघे प्रथमेहनिचांडालीद्वितीयेब्रह्मघातिनी

तृतीयेरजकीप्रोक्ताचतुर्थेहनिशूद्र्यति तदातयासखीसंगाद्भर्तृंदृष्ट्वावमानितं दृष्टप्रत्नभावेनजाताद्विजकुलेमले अवमानाद्भर्तुस्तस्यास्यकृमि-
राशिमयीधुना एतत्तेकथितंसर्वकारणंदुःखतस्यच शूशीलोवा॰ दर्शनादपिजन्मस्याद्विप्राणांनिर्मलेकुले जन्मयुग्मद्विधानांहिजायते
ब्रह्मतेजसा अवज्ञयाप्रजायंतेनिशीथेकृमिराशयः महाश्चर्यंकथनाथतद्व्रतंकथयस्वमे ऋषिरु॰ शूशीलेशृणुतत्सम्यक्व्रतानामुत्त
मव्रतं येनचीर्णेनसहसापापादस्मात्प्रमुच्यते दुःखत्रयाच्चमुच्येतनारीसौभाग्यमाप्नुयात् कल्याणानिविवर्धंतेसंपदश्चनिरापदः
युधिष्ठिरउ॰ श्रुतानिदेवदेवेशव्रतानिसुबहूनिच सांप्रतंमन्यदाचक्ष्वव्रतंपापप्रणाशनं श्रीकृष्णउ॰ अथान्यदपिराजेंद्रपंचमींऋषिसं
ज्ञितां कथयिष्यामियत्कृत्वानारीपापात्प्रमुच्यते युधिष्ठिरउ॰ कीदृशीपंचमीकृष्णकथंचऋषिसंज्ञिता पातकान्मुच्यतेकस्मान्नारीय
दुकुलोद्भव पापानिचबहून्यत्रविद्यंतेकिलकेशव कथंवाऋषिपंचम्यांनारीकस्मात्प्रमुच्यते कृष्णउ॰ अज्ञानाज्ज्ञानतोवापियास्त्रीजाता
रजस्वला दुष्टास्पृशतिभांडानि गृहकर्मणिसंस्थिता प्राप्नोतिसामहापापंसत्यंसानरकंव्रजेत् शृणुतत्कारणंयस्माद्वर्जनीयारजस्व
ला प्रोत्सार्यगृहतोदूरंचातुर्वर्ण्येनभारत ब्रह्महत्यापुराशक्रोवृत्रंहत्वात्ववापच नयावैराजशार्दूलव्रीडितोवृत्रसूदनः ब्रह्माणंस-
मुपागच्छदात्मनःशुद्धिकारणात् शुद्धिंशक्रस्यराजेंद्रमत्दृष्टेनांनरात्मना विभज्यब्रह्महत्यांतुचतुर्धाचचतुर्मुखः प्राक्षिपद्राजशार्दूल
चतुस्थानेषुवैतदा वन्हौप्रथमज्वालासुनदीषुप्रथमोदके पर्वताग्रेवृक्षजातौनारीरजसिपार्थिव ततोरजस्वलानारीप्रोत्सार्याचप्रयत्न

ऋषि पंचमी

व्र.रा.
९६

तः ब्रह्मणःशासनात्पार्थचातुर्वर्ण्येनसर्वदा प्रथमेहनिचांडालीद्वितीयेब्रह्मघातकी तृतीयेरजकीप्रोक्ताचतुर्थेहनिशुध्यति भर्तुःशुद्धाच
तुर्थेह्निदैवेपित्र्येचपंचमे अज्ञानाज्ज्ञानतोवापिजातंसंपर्कपातकं तत्पापसंक्षयार्थंवैकार्येयंऋषिपंचमी सर्वपापप्रशमनीसर्वोपद्रव
नाशिनी ब्रह्मक्षत्रियविट्शूद्रस्त्रीभिःकार्याविशेषतः कृष्ण उ० अत्रार्थेयत्पुरावृत्तंप्रवक्ष्यामिकथानकं पुराकृतयुगेराजाविदर्भायां
बभूवह श्येनजिन्नामराजर्षिश्चातुर्वर्ण्यानुपालकः तस्यदेशेवसन्विप्रोवेदवेदांगपारगः सुमित्रोनामराजेंद्रसर्वभूतहितेरतः कृ
षिकृत्यासदायुक्तः कुटुंबपरिपालकः तस्यभार्यासुसाध्वीचपतिशुश्रूषणेरता जयश्रीर्नामविख्याताबहुभृत्यसुहृज्जना अ
तिचिंतान्वितासाचप्रावृट्कालेसुमध्यमा क्षेत्रादिषुरतासाध्वीव्याकुलीकृतमानसा एकदासात्मनःप्राप्तमृतुकालंव्यलोकयत् र
जस्वलापिसाराजन्गृहकर्मचकारह भांडादीन्यस्पृशद्राजन्नृतोप्रासेपिभामिनी कालेनबहुनासाध्वीपंचत्वमगमत्तदा तस्याभर्त्तापिविप्रो
सौकालधर्ममुपेयिवान् एवंतौदंपतीराजन्स्वकर्मवशगौतदा भार्यातस्यजयश्रीःसाऋतुसंपर्कदोषतः शुनियोनिसमुत्पन्नाशुनीचा-
भून्नरेश्वर तस्याःसंपर्कदोषेणबलीवर्दोबभूवह एवंतौदंपतीराजन्स्वकर्मवशगौतदा ऋतुसंपर्कदोषेणतिर्यग्योनिमुपागतौ स्व-
धर्माचरणाज्ज्ञानात्तुभौजातिस्मरौतथा सुतस्यैवगृहेराजन्स्मरंतौपूर्वपातकं सुमित्रस्यचपुत्रोभूद्गुरुशुश्रूषणेरतः सुमतिर्नाम
धर्मज्ञोदेवतातिथिपूजकः अथक्षयाहेसंप्राप्तेपितुस्तुसुमतिस्तदा भार्यांचंद्रवतींप्राहसुमतिःश्रद्धयान्वितः अद्यसांवत्सरीदिनंपि

पं०
५
९६

तुर्मेचारुहासिनि भोजनीयाद्विजाभीरुपाकश्राद्धिर्विधीयताम् तयाकृतापाकश्राद्धिः सुमतेर्भर्तुराज्ञया मुक्तंपायसभांडेवैसर्पेणगरलंततः दृ-
ष्ट्वाब्रह्मवधाद्भीताशुनीभांडानिसास्पृशत् द्विजभार्याचतांदृष्ट्वाउल्मुकेनजघानह भांडादीनिचप्रक्षाल्यत्यक्त्वापाकंसुमध्यमा पुनःपाकंच-
कृत्वातुश्राद्धंकृत्वाविधानतः ततोभुंक्तेषुविप्रेषुनोच्छिष्टंचददौबहिः भूमौक्षिप्तंतयाशून्याउपवासस्ततोभवत् ततोरात्र्यांप्रवृत्तायांसाशुनी
क्षुधिताभृशम् बलीवर्दमुपागत्यभर्तारमिदमब्रवीत् बुभुक्षिताद्यहेभर्तर्नदत्तंभोजनादिकं ग्रासादिकंचनमासंक्षुधामांबाधतेभृश-
म् अन्यस्मिन्दिवसेपुत्रोममलेढ्यंददात्यसौ अद्यमत्त्वंकिमप्येषउच्छिष्टमपिनोददौ पायसान्नेपपाताद्यगरलंसर्पसंभवं मयाविचिं-
त्यमनसामरिष्यंतिद्विजोत्तमाः संस्पृष्टंपायसंगत्वाबध्वाहंताडिताभृशम् दुःखितंतेनमेगात्रंकटिर्भग्नाकरोमिकिं ततःप्राहसचानड्वान्भद्रे
तेपापसंग्रहात् किंकरोमित्वशक्तोहंभारवाहोद्यसंस्थितः अद्याहमात्मजक्षेत्रेवाहितःसकलंदिनं मारितस्त्वात्मजेनाहंमुखंबध्वाबु-
भुक्षितः वृथाश्राद्धंकृतंतेनजाताद्यममकष्टता कृष्णाउ० तयोःसंवदतोरेवंमातापित्रोश्चभारत श्रुतापुत्रस्तदावाक्यंयदुक्तंचतदोभ-
योः ततोरजन्यांतत्कालंददौतस्यैवभोजनं पितरौतौविदित्वातुदत्तवान्सुमतिस्तदा तदासौदुःखितःपुत्रोज्ञात्वावस्थांतदानयोः मा-
तापित्रोस्तुराजेंद्रतदासौप्रस्थितोवनम् ज्ञातुमिच्छामिकष्टंवैमातापित्रोश्चभारत तत्रगत्वाज्ञानवृद्धानृषीन्परमधार्मिकान् प्रणि-
पत्याब्रवीद्वाक्यंहितंचैवतदानयोः सुमतिरु० कथयध्वंविप्रवर्याःप्रश्नमेकंसमाहिताः केनकर्मविपाकेनपितरौमेतपोधनाः इमामव-

स्थांसंप्राप्तोमुच्येतेपातकात्कथं ब्रूह्यत्र॰ तदाकर्ण्यवचस्तस्यस्कमनेर्दुःखितस्यच ऋषिःसर्वतपोनामसर्वज्ञःकरुणान्वितः स्कमातंप्रत्युवा
चेदंतत्पित्रोर्मुक्तयेतदा ऋषिरु॰ तवमातापुराविप्रस्वगृहेबालभावतः प्राप्तमृतुंविदित्वातुसंपर्कमकरोद्विज तेनकर्मविपाकेनशुनियोनि
मुपागता पितापिस्पर्शदोषेणबलीवर्दोबभूवह एतयोर्मुक्तिकामार्थंकुरुत्वमृषिपंचमीं भार्ययासहविप्रेंद्रऋषीन्संपूज्ययत्नतः आन्त्व
रस्वव्रतंतत्रसप्तवर्षंद्विजोत्तम अंतेचोद्यापनंकुर्याद्वित्तशाठ्यविवर्जितः शाकाहारस्तुकर्तव्योनीवारैःश्यामकैस्तथा कंदंवाथफलंमूलं
हलकृष्टंनभक्षयेत् प्राप्यभाद्रपदेमासिशुक्लपक्षस्यपंचमी तस्यांमध्यान्हसमयेनद्यादौविमलेजले स्नात्वापामार्गसमिधादंतधावनमा
दितः आयुर्बलंयशोवर्चःप्रजाःपशुवसूनिच ब्रह्मप्रज्ञांचमेधांचत्वन्नोदेहिवनस्पते संप्रार्थ्यनेनमंत्रेणकुर्याद्वैदंतधावनं मुखदुर्गंधि
नाशायदंतानांचविशुद्धये जीवनायचगात्राणांकुर्वेहंदंतधावनं अनेनदंतान्संशोध्यस्नायान्मृत्स्नानपूर्वकम् तिलामलककल्केनकेशान्सं
शोध्ययत्नतः परिधायनवेशुद्धेवाससीचसमाहितः विधायनित्यकर्माणिगत्वाद्वारवतीमृषीन् द्वारवतीमग्निहोत्रशालांस्थाप
येद्विधिवद्भक्त्यापंचामृतरसैःशुभैः चंदनागरुकर्पूरैर्विलिप्यचस्रग्गंधिभिः पूजयेद्विविधैःपुष्पैर्गंधपुष्पादिदीपकैः समाच्छाद्यशुभै
र्वस्त्रैःसोपवीतैर्यथाविधि ततोनैवेद्यसंपन्नैरर्घ्यंदद्याच्छुभैःफलैः पूजयस्वऋषीन्दिव्यानरुंधत्यासमन्वितान् कश्यपोत्रिर्भरद्वाजो
विश्वामित्रोथगोतमः जमदग्निर्वसिष्ठश्चसाध्वीचैवाप्यरुंधती मंत्रेणानेनसप्तर्षीन्पूजयेत्सुसमाहितः व्रतेनऋषिपंचम्याःकृतेनैवहि

ऋषिपंचमी

जोत्तम ऋतुसंपर्कजोदोषःक्षयंयातिनसंशयः श्रीकृष्णउ० तच्छ्रुत्वासुमतिर्वाक्यंपरमंऋषिभाषितं गृहमेत्यव्रतंचक्रेसभार्यःश्रद्धयान्वितः
व्रतंतुऋषिपंचम्याःसर्वपापप्रणाशनं कृत्वासर्वंयथोक्तंचमातापित्रोःफलंददौ व्रतपुण्यप्रभावेनमातातस्यशुनयोनितः मुक्तानृपतिशार्दूल
विमानवरसंस्थिता दिव्यांबरधराभूत्वागतास्वर्गंचभारत पितापिसमृतोगच्छत्सुमतेःपशुयोनितः स्वर्गंप्राप्तोमहाराजव्रतस्यास्यप्र
भावतः दिव्यांबरधरोभूत्वागतःस्वर्गंचभारत कायिकंवाचिकंवापिमानसंयच्चदुष्कृतं तत्सर्वंविलयंयातिव्रतस्यास्यप्रभावतः य
स्ययज्जायतेपुण्यंतच्छृणुष्वनृपोत्तम सर्वव्रतेषुयत्पुण्यंसर्वतीर्थेषुयत्फलं सर्वदानेषुदत्तेषुतदेतद्व्रतचारणात् कुरुतेयाव्रतंनारीसाभवे
त्सुखभागिनी रूपलावण्ययुक्ताचपुत्रपौत्रादिसंयुता इहलोकेसुखंभूयात्परत्रचपरांगतिं एतत्तेकथितंराजन्व्रतानामुत्तमव्रतम्
सर्वसंपत्प्रदंचैवनारीणांपापनाशनम् धनंयशश्चस्वर्गंचपुत्रानपियुधिष्ठिर पठतांशृण्वतांचापिसर्वपापप्रणाशनम् इतिश्रीभ
विष्योत्तरपुराणेऋषिपंचमीव्रतकथासं० अथोद्यापनं युधिष्ठिरउ० किमस्योद्यापनंप्रोक्तंव्रतपूर्णफलप्रदं सुमतिःकेनविधिनाच
कारवदतत्वतः कृष्णउ० पूर्वस्मिन्दिवसेकुर्यादेकभक्तंसमाहितः प्रातरुत्थायसुस्नातस्ततोगुरुगृहंव्रजेत् प्रार्थयेत्तंसमाचार्योभ
वोद्यापनकर्मणि पूर्वोक्तेनैवविधिनास्नात्वाभक्त्यासमन्वितः शुचौदेशेसमालिप्यसर्वतोभद्रमंडले अव्रणंसजलंकुंभंताम्रंमृन्म
यमेवच संस्थाप्यवस्त्रसंवीतंकंठदेशेसुशोभनं पंचरत्नसमायुक्तंफलगंधाक्षतैर्युतं सहिरण्यंसमासाद्यताम्रेणपटलेनवा वंशाम्र

व्र·रा·
९८

न्मृयपात्रेणयवपूर्णेनचैवहि आच्छादयेत्तच्चैलेनालिखेदष्टदलंततः सौवर्णीप्रतिमाकार्याऋषीणांभावितात्मना पलेनवातदर्धेनतदर्धार्धे
नवापुनः शक्त्यावाकारयेत्तत्रवित्तशाठ्यविवर्जितः कृष्णाउ॰ वितानंपंचवर्णंचफलपुष्पसमन्वितं बध्नीयादुपरिश्रीमत्संभारान्संविधा-
यच मध्यान्हेपूजयेद्भक्त्याऋषीन्श्रद्धासमन्वितः कश्यपोत्रिर्भरद्वाजोविश्वामित्रोथगोतमः जमदग्निर्वसिष्ठश्चसाध्वीचैवाप्यरुंधती गृण्हं
त्वर्घ्यंमयादत्तंतुष्टाभवतुमेसदा एवंपूजांविनिर्वृत्यऋषीन्ध्यात्वासमाहितः अनेनविधिनासप्तवर्षाणिव्रतमाचरेत् आदौमध्येतथा-
चांतेकुर्यादुद्यापनंबुधः आचार्यान्वरयेत्सप्तवेदवेदांगपारगान् प्रतिमाःसप्तकुर्वीतस्ववर्णेनस्वशक्तितः जटिलाःसाक्षसूत्राश्चकमंडलुस
मन्विताः संस्थाप्यकलशेष्वेतान्मृन्मयेष्वव्रणेषुच स्नापयेद्विधिवद्भक्त्यापंचामृतपयादिभिः पूर्वोक्तविधिनाराजन्कृत्वापूजांसमाहितः
रात्रौजागरणंकुर्यात्पुराणश्रवणादिभिः कृतनित्यक्रियःप्रातर्जुहुयात्तिलसर्पिषा वैदिकोवाथपौराणअधिकारोमनुःस्मृतः सहस्रोमाः
महावाथनाममंत्रैस्तुवापृथक् अष्टोत्तरसहस्रंवाशतमष्टोत्तरंतुवा पुनःपूजांततःकृत्वागुरुंसंपूजयेद्व्रती स्वर्णांगुलीयवासोभिःकुंडला
मृतभोजनैः सप्तगावश्चैवदातव्यावस्त्रालंकारसंयुताः दद्यादेकांसवत्सांचगुरवेगांपयस्विनीं पूजयेदृत्विजःसप्तवासोभिर्दक्षिणादिभिः
कलशांस्तुपवीतानिदद्यात्तेभ्यःस्वभक्तितः आचार्यंचसपत्नीकंप्रणिपत्यसमापयेत् भोजयेद्ब्राह्मणान्भक्त्यादीनानाथान्प्रतर्प्यच सो
पस्कराश्चताःप्रतिमाआचार्यैभ्योनिवेदयेत् लब्ध्वानुज्ञांतुभुंजीतइष्टैर्बंधुजनैःसह उद्यापनविधिःप्रोक्तोसर्वत्रायंफलार्थिनां अनेनविधिनास

पं॰
५
९८

उपांग ललिता पंचमी

स्यकृव्रतमेतत्समाचरेत् सर्वव्रतेषुयत्पुण्यंसर्वतीर्थेषुयत्फलं सर्वदानेषुदत्तेषुतद्भवेत्व्रतचारिणां एवंयाकुरुतेभूपउद्यापनविधिंपरम् सर्वपाप
विनिर्मुक्तास्वर्गलोकेमहीयते इहलोकेचिरंकालंभर्त्रासहशचिस्मिता पुत्रपौत्रैःपरिवृताभुक्त्वाभोगान्मनोहरान् निःपापास्वभगानित्यंल
भतेचाक्षयांगतिं इतिश्रीभविष्योत्तरपुराणेऋषिपंचमीव्रतोद्यापनविधिःसंपूर्णः आश्विनशुक्लपंचम्यामुपांगललिताव्रतं तत्रदाक्षि
णात्यानांशिष्टाचारएवप्रमाणम् तच्चमध्यान्हव्यापिन्यांकार्यम् पूजाव्रतेषुसर्वेषुमध्याह्नव्यापिनीतिथिरितिमाधवीयेहारीतोक्तेः दिन
द्वयेतद्व्याप्तावव्याप्तौपूर्वायुगमहृतादितियुग्मवाक्यात् अन्यच्चशक्तिपूजायांतु अर्धरात्रव्यापिनीग्राह्या यत्तुभूरिजन्माजजल्पवच्च
नंदिनारात्रिव्यापिन्याग्रहणेप्रमाणाभावात् जागरणस्यचांगत्वात्पूर्वाण्हव्यापिन्येवग्राह्येतितच्चभूरिजन्मनोमंदप्रज्ञस्यदुर्बुद्धिवि
लसितमात्रमित्युपेक्ष्यम् अथव्रतविधिः आचम्यप्राणानायम्यमासपक्षाद्युल्लिख्य ममपुत्रधनविद्यारोगनिर्मुक्तिसुखगोविज
यपुष्ट्यायुष्यादिकामःस्त्रीअवैधव्यकामाउपांगललितापीत्यर्थंयथामीलितोपचारैःउपांगललितापूजनमहंक० इतिसं० पूजांकुर्यात्
शुक्लपक्षस्यपंचम्यामिषेमासिचरेद्व्रतम् चत्वारिंशत्तथाष्टौवादंतधावनमादितः आयुर्बलंयशोवर्चःप्रजाःपशुवसूनिच ब्रह्मप्र
ज्ञांचमेधांचत्वन्नोदेहिवनस्पते संप्रार्थ्यानेनमंत्रेणकुर्याद्वैदंतधावनं मुखदुर्गंधिनाशायदंतानांचविशुद्धये ष्ठीवनायचगात्राणांकुर्वे
हंदंतधावनं अनेनदंतान्संशोध्यस्नायान्मृत्स्नानपूर्वकं ततोयथाविधिस्नात्वाशुक्लवासागृहंव्रजेत् शच्यौदेशेसमालिख्यसर्वतोभद्रमं

उपांगललिता

डलम् अव्रणंसजलंकुंभंताम्रंमृन्मयमेवच संस्थाप्यवस्त्रसंवीतंकंठदेशेसुशोभनम् पंचरत्नसमायुक्तंगंधपुष्पाक्षतैर्युतं सहिरण्यंस-
मासाद्यताम्रेणपटलेनवै वंशमृन्मयपात्रेणयवपूर्णेनचैवहि आच्छादयेत्तच्चैलेनलिखेदष्टदलंततः सौवर्णंराजतंताम्रंपिधानंस्थापयेत्ततः उ
पचारैःषोडशभिरेभिर्मंत्रैःसमाहितः नित्यंनैमित्तिकंकुर्यात्ततःपूजांसमाचरेत् इतिविधिः ममसमनेप्सितकामनासिद्ध्यर्थंप्रतिवार्षिकसुपांग
ललितापूजनमहंक॰ तत्रादौगणपतिपूजनंक॰ • अथपूजा नित्यकौशेयवसनांहेमाभांकमलासनां भक्तानांवरदांनित्यंललितांचिंतयाम्यहम्
ध्यायामि निजासनेस्वायुधैश्चललितेभक्तवत्सले उपांगललितेमातर्देहिमेव्रतकर्मणि आगच्छललितेदेविसर्वसंपत्प्रदायिनि यावद्व्रतं
समाप्येततावत्त्वंसन्निधौभव हिरण्यवर्णांहरिणींसुवर्णरजतस्रजां चंद्रांहिरण्मयींलक्ष्मींजातवेदोममावह आवा॰ कार्तस्वरमयंदिव्यं
नानामणिगणार्चितं अनेकशक्तिसंयुक्तमासनंप्र॰ तांमआवहजातवेदोलक्ष्मीमनपगामिनीं यस्यांहिरण्यंविंदेयंगामश्वंपुरुषानहं आ-
सनं॰ गंगादिसर्वतीर्थेभ्योमयाप्रार्थनयाहृतं तोयमेतत्सुखस्पर्शंपाद्यार्थंप्र॰ अश्वपूर्णांरथमध्यांहस्तिनादप्रबोधिनीं श्रियंदेवीमुपह्वये-
श्रीर्मादेवीर्जुषतां पाद्यं॰ निधीनांसर्वरत्नात्वमनर्घ्यंचगुणात्ह्यसि तथापिभक्त्याललितेगृहाणार्घ्यंनमोस्तुते कांसोस्मितांहिरण्यप्राकारा-
मार्द्रांज्वलंतींतृप्तांतर्पयंतीं पद्मेस्थितांपद्मवर्णांतामिहोपह्वयेश्रियं अर्घ्यं॰ पाटलोशीरकर्पूरसुरभिस्वादुशीतलं तोयमाचमनीयार्थं
ललितेप्रतिगृ॰ चंद्रांप्रभासांयशसाज्वलंतींश्रियंलोकेदेवजुष्टामुदारां तांपद्मनीमींशरणमहंप्रपद्येलक्ष्मीर्मेनश्यतांत्वांवृणोमि आच॰

पयोदधिघृ[illegible]र्करामधुसंयुतं पंचामृतेनस्नपनंक्रीयतांपरमेश्वरी आप्यायस्वेतिऋक् दधिक्राव्णोइतिऋक् घृतंमिमिक्षेइतिऋक् मधुवा
तेतिऋक् स्वादुः[illegible]ऋक् पंचामृतस्ना॰ मंदाकिन्याःसमुद्भूतंहेमांभोरुहवासितं स्नानायतेमयाभक्त्यादत्तंस्वीक्रियतांजलं आदित्यवर्णे
तपसोधिजातोवनस्पा[illegible]वृक्षोथबिल्वः तस्यफलानितपसानुदंतुमायांतरायाश्चबाह्या अलक्ष्मीः स्नानं॰सर्वभूषाधिकेसौम्येलोकलज्जानि
वारणे मयोपपादितेतुभ्यंवाससीप्र॰ उपैतुमांदेवसखः कीर्तिश्चमणिनासह प्रादुर्भूतोस्मिराष्ट्रेस्मिन्कीर्तिमृद्धिंददातुमे वस्त्रं मुक्तामणि
गणोपेतमनर्घ्यंचसुखप्रदं उत्तरीयंसुखस्पर्शंललितेप्रति॰ उत्तरीयव॰ कृष्णकाचाष्टसंयुक्तंसूत्रंग्रैवेयकंतथा दास्याभिकंठमालार्थंप्रत्यं
गेललितेनव कंठमालां॰मलयाचलसंभूतंघनसारंमनोहरं हृदयानंदनंचारुचंदनंप्रतिगृ॰ क्षुत्पिपासामलांज्येष्ठामलक्ष्मींनाशयाम्यहं अ-
भूतिमसमृद्धिंचसर्वांनिर्णुदमेगृहात् चंदनं॰ अक्षताविमलाःशुद्धामुक्ताभाससमप्रभाः भूषणार्थंमयादत्तागृहाणपरमेश्वरि गंधद्वारांदुरा
धर्षांनित्यपुष्टांकरीषीणीम् ईश्वरींसर्वभूतानांतामिहोपह्वयेश्रियं अक्षताः मालतीचंपकादीनिनानापुष्पैःसुवासितैः मयाहृतानिपुष्पाणिपू
जार्थंप्र॰ मनसःकाममाकूतिंवाचःसत्यमशीमहि पशूनांरूपमन्नस्यमयिश्रीःश्रयतांयशः पुष्पं॰ अथांगपू॰ उमांगललितायैन॰ पादौपू॰ भवा-
न्यै॰ गुल्फौपू॰ सिद्धेश्वर्यै॰ जंघेपू॰ भद्रकाल्यै॰ जानुनीपू॰ श्रियै॰ ऊरूपू॰ विश्वरूपिण्यै॰ कटींपू॰ देव्यै॰ नाभिंपू॰ वरदायै॰ कुक्षीपूज॰ शिवायै॰ हृ
दयंपू॰ वागीश्वर्यै॰ स्कंधौपू॰ महादेव्यै॰ बाहूपू॰ प्रकृतिभद्रायै॰ करौपू॰ पद्मिन्यै॰ कंठंपू॰ सरस्वत्यै॰ मुखंपू॰ कमलासनायै॰ नासिकांपू॰ महिषमर्दि

न्यै॰ नेत्रेपू॰ लक्ष्म्यै॰ कर्णौपू॰ भवान्यै॰ ललाटंपू॰ विंध्यवासिन्यै॰ शिरः पू॰ सिंहवाहिन्यै॰ सर्वांगंपू॰ देवद्रुमरसोद्भूतः कालागरुसमन्वितः आघ्रेयनाम
यंधूपोभवानि घ्राणतर्पणः कर्दमेनप्रजाभूतामयिसंभ्रमकर्दम श्रियंवासयमेकुलेमातरंपद्ममालिनीं धूपं॰ चक्षुषांसर्वलोकानांतिमिरस्यनि
वारणं आर्तिक्यंकल्पितंभक्त्यागृहाणपरमेश्वरि आपस्रजंतुस्निग्धानिचिक्लीतवसमेगृहे नीचदेवींमातरंश्रियंवासयमेकुले दीपं॰ मोदका
पूपलड्डुकवटकोदुंबरादिभिः सघृतंपायसान्नंचनैवेद्यंप्र॰ आर्द्रांपुष्करिणींपुष्टींसुवर्णांहेममालिनीं सूर्यांहिरण्मयींलक्ष्मींजातवेदोममावह नैवेद्यं॰
मलयाचलसंभूतंघनसारंमनोहरं करोद्वर्तनकंचारुगृहाणपरमेश्वरि॰ करोद्वर्तनं॰ कर्पूरेलालवंगादितांबूलीदलसंयुतं क्रमुकस्यफलंतुभ्यंतां
बूलंप्र॰ आर्द्रांयः करिणींयष्टींपिंगलांपद्ममालिनीं चंद्रांहिरण्मयींलक्ष्मींजातवेदोममावह तांबूलं॰ मातुलिंगंनारिकेलंफलंखर्जूरसंभवं जं
बीरंपनसंवापिगृह्यतांपरमेश्वरि इदंफलंमयादेविस्थापितंपुरतस्तव तेनमेसफलावाप्तिर्भवेज्जन्मनिजन्मनि तांमआवहजातवेदोलक्ष्मीम
नपगामिनीं यस्यांहिरण्यंप्रभूतिंगावोदास्योश्वान्विंदेयंपुरुषानहम् फलं॰ हिरण्यगर्भ॰ यःशुचिःप्रयतोभूत्वाजुहुयादाज्यमन्वहं सूक्तंपंचदश
र्चंचश्रीकामः सततंजा[illegible]क्षिणां॰ चंद्रादित्यौचधरणीविद्युदग्निस्तथैवच त्वमेवसर्वज्योतींषिआर्तिक्यंप्र॰ पद्मासनेपद्मपादेपद्माक्षिपद्मसं
भवे तन्मेभज[illegible]क्ष्येनसौरख्यंलभाम्यहं नीराजनं॰ उपांगललितेमातर्नमस्तेविंध्यवासिनि दुर्गेदेविनमस्तुभ्यंनमस्तेविश्वरूपिणि अ
श्वदायैगोद[illegible]दायमहाधने धनंमेजुषतांदेवीसर्वकामांश्चदेहिमे पुष्पांज॰ अथदूर्वांकुशान्सायान्चत्वारिंशत्तथाष्टभिः अधिकान्हस्तआ

दायमंत्रमेनज्जपेद्बुधः मंत्रः बहुप्ररोहासततममृताहरिनालना यथेयंललितेमानस्तथामेस्तुर्मनोरथाः इत्युक्त्वापूजयेद्देवींदूर्वाभिःकुसुमैस्त
था मंत्रेणाष्टचत्वारिंशद्भक्तिनम्रसुसमाहितः दूर्वांकुरान् प्रदक्षिणाश्चयंदेविप्रयत्नेनमयाकृत तेनपापानिसर्वाणिव्यपोहंतुनमाम्यहम्
प्रदक्षिणां साष्टांगोयंप्रणामस्तेनमस्कृत्ययथाविधि त्वद्दासइतिमांभक्त्याप्रसीदपरमेश्वरि नमस्कारः दीनोहंपापयुक्तोहंदारिद्र्यैक
निकेतनः समुद्धरकृपासिंधोकामान्मेसफलान्कुरु प्रार्थना अथवायनं द्विजायवायनकंदद्याद्विंशत्यावटकादिभिः कइदंकस्मेतिमंत्रेणआ
चार्यायनिवेदयेत् पक्वान्नफलसंयुक्तंसघृतंदक्षिणान्वितं द्विजवर्यायदास्यामिव्रतसंपूर्णहेतवे वायनकंद्विजवर्यायसहिरण्यंददाम्य
हं इतिवायनमंत्रः ततःकथांसमाकर्ण्यवायनकान्नस्यसंख्यया स्वयंभुंजीतचैवान्नंवाग्यतःसहबांधवैः रात्रौजागरणंकुर्यान्नृत्यगीता
दिमंगलैः प्रभातेपूजयेद्देवींततःकुर्याद्विसर्जनं सवाहनाशक्तियुतावरदापूजितामया मातर्मामनुगृह्याथगम्यतांनिजमंदिरं इतिविस०
इतिवार्षिकपूजाविधिः अथकथा सूतउ० पुराकैलासशिखरेमहर्षिगणसेविते षडाननंसुखासीनमिदमूचुर्महर्षयः ऋषयऊचुः
महासेनमहादेवनंदनानंदविक्रम आख्यानानिसुपुण्यानिश्रुतानित्वत्प्रसादतः कथास्त्वद्वचनादेवप्रसूताभूरिभूतयः नतृप्तिम-
धिगच्छामःपायंपायंसुधामिव शुश्रूषवोवयंदेव्याव्रतंतत्कथयस्वनः मनोभिलषितार्थानांसिद्धिर्यस्मिन्कृतेभवेत् स्कंदउ० साधु
पृष्टंमहादेव्यामाहात्म्यंमुनिपुंगवाः वच्मिसर्वंविधानेनतच्छृणुध्वंजगद्धितं भृगुक्षेत्रेकिलपुराविप्रोभूद्धौनमाभिधः श्रुतिस्मृ-

त्रिपुराणज्ञोधनीचबहुबांधवः अनपत्यस्यतस्याथजज्ञातेजरसःसुतौ श्रीपतिर्गोपतिश्चैवनामनीविदधेतयोः अचिरेणैवकालेनसपंचत्वम
गाद्द्विजः तौतुबालौधनंबंधून्हित्वासाधर्मचारिणी सतीविवेशादहनंस्वर्यातुंपतिनासह अथतेबांधवाःसर्वेहाकष्टमितिचुक्रुशुः निंदंतो-
दुःखिताश्चक्रुस्तत्क्रियांपारलौकिकीं अथतस्यसपत्नीभूद्भ्रातासजगृहेधनं आक्रोशंतौचतौगेहंनिजमानीयदुर्मनाः नास्तिचक्रेधनं
सर्वंताभ्यांकिंचिन्नवददौ ततोमौंजीधरौबालौबंधुभिःकथितंवसु ययाचतुःपितृव्यंतंदेहिनोद्रविणंहितत् सतावूचेगतंद्रव्यंयुवाकेन
मतारिनौ निर्गच्छतंममगृहादित्यादिपरुषंबहु तौतद्वचोभिर्निर्विण्णौबालौश्रीपतिगोपती बभाषातेमिथःकष्टंधिगहोपितृहीनता
यावोदेशांतरंयत्रस्वजनोनास्तिकश्चन अनाभाष्यैवस्वजनान्जग्मतुर्दिशमुत्तराम् भिक्षाचारौबहून्देशान्वनानिसरितोगिरीन् सम
तिक्रम्यययतुर्विशालांनामतःपुरीम् कासारमीक्षांचक्रातेततोस्याःसन्निधौशुभं पुंडरीकवनाकीर्णंरक्तसंध्याविभूषितं संध्याभ्रभूषि
तंचारुयथातारकितंनभः श्रांतौपथिगतौबालौक्षणंविश्रम्यतत्तटे आचम्यशिशिरंतोयंसस्नतुस्तौयथाविधि गताध्वखेदौविप्राग्र्यौ
पुरंप्राविशतांततः वीथीचतुःपथयुतंचारुगोपुरमंडितं देवतागाररुचिरंसौधराजिविराजितं नानावीथीरतिक्रम्याविप्रावासमवा
पतुः कस्यचित्तत्रविप्रस्यक्षुत्पिपासार्दितौगृहं ईयतुर्वेदिकायांतावुपविष्टौश्रमातुरौ स्वामीततोस्यगेहस्याविवेकइतिविश्रुतः
आयातौवैश्वदेवांतेसददर्शातिथीद्विजौ अनापृच्छंस्तथाशीलंतथाचकुलनामनी ऋषिवत्पूजयामासस्मरन्धर्मंसनातनम् अति

श्रीभोजयामासस्वाद्वन्नंसहृच्चात्मना तौब्रह्मचारिणौविप्रौसपर्यांतांविलोक्यच देशबंधुपरित्यागखेदमुक्तौबभूवतुः अथापृच्छद्द्विज
स्तौतुकौयुवांकुतआगतौ किमर्थमल्पवयसौनिर्गतौस्वगृहादिति तद्विवेकस्यवचनमाकर्ण्यश्रीपतिस्तदा आनुपूर्व्येणसकलंवृत्तांतंसम
भाषत पितृहीनौचतौज्ञात्वात्यक्तौबंधुजनेनच आश्वास्यस्थापयामासस्वगृहेबहुवासरं प्रचक्रमेथशिष्येभ्यसहाध्यापयितुंश्रुतिम् बभू
वतुश्चतौबालौगुरुशुश्रूषणेरतौ गुरोर्गेहेन्यवसतामागतानिर्मलाशरत् फुल्लपद्मविशालाक्षीप्रसन्नेंदुशुभानना तस्यांसशिष्यमात्रा
यंचरंतंव्रतमुत्तमं पप्रच्छतुर्भोकिमिदमावाभ्यामितिकथ्यताम् ताभ्यामेवंकृतेप्रश्नेविवेकइदमब्रवीत् विवेकउ० उपांगललितादेव्याव्रतं
देवर्षिपूजितं सर्वकामकरंनृणामस्माभिःसमुपास्यते विद्याकामेनकर्तव्यंतथैवधनकाम्यया सुतार्थिनाप्रकर्तव्यंव्रतमेतदनुत्तमम्
विद्याकामौचतौबालौव्रतमाचरतुर्मुदा भक्तितोगुर्वनुज्ञातौयथाशक्तियथाविधि व्रतप्रसादात्सकलंवेदशास्त्रमवापतुः अन्यस्मिन्नुहा
यनेभक्त्याविवाहार्थंप्रचक्रतुः श्रीपतिर्गोपतिश्चैवव्रतमेतत्तपोधनाः अचिरेणैवकालेनमासिमाघेनयोर्गुरुः स्वांविवाहोचितांकन्यांना
म्नागुणवतीमिति विनीतायसुनवतेयूनेश्रीपतयेतदा विचार्यबांधवैःसाकंददौपुण्यर्क्षवासरे पारिबर्हंबहुमुदाप्रादाद्दुहितृवत्सलः वि
वेकोपिमुदंलेभे सानुरागौविलोक्यतौ अन्याब्देपुनरेतत्तुव्रतंदेव्याश्चचक्रतुः भ्रातरौतौनिजंदेशमिच्छंतौचधनादिकम् अथान्येह्निक
स्मिंश्चित्तावुपाध्यायमूचतुः स्वामिस्त्वत्प्रसादेनलब्धाविद्यातथावसु अनुजानीहिगच्छावोनिजंदेशमितःपुनः इत्याकर्ण्यसमा

लोकयशःशुभंवासरमादृतः स्वयंमापयितुंतांतौविमोकन्यांत्वनिर्ययौ अथदेव्याःप्रसादेनपितृव्यस्यतयोःकिल अन्वेषणेमतिर्जातागतौश्रीप
तिगोपती निर्गतौकृगतौदेशांवसतःक्केत्यचिंतयत् लोकानिंदंतिमांनित्यंजाताअन्वेषणेमतिः दिदृक्षुस्तौनततःसोपिनिर्जगामनिजात्पुरात्
किंचित्सनगरंप्रापद्विजबालौगवेषयन् तदेवनगरंप्राप्तोविवेकाख्योद्विजोत्तमः सशिष्यःकन्ययासार्धंक्रमन्मार्गेशनैःशनैः तत्रतेषांसम
जनीसंगमोमुनिपुंगवाः विदांचकारतौवृद्धःछात्रमध्यमेवयसिस्थितौ मूर्ध्न्यवघ्रायतौपश्चात्मुदंलेभेपरंतपाः नशक्नुवन्मुदावक्तुंप्रेमगद्ग
दयागिरा पादानतांगुणवतींविवेकःनमणोदिनाम् आशीर्वादैर्बहुविधैस्तांस्नुषांसमयोजयत् विवेकस्तुतदातत्रसंभाष्यचपरस्परम्
विवेकउ० स्नतावेतौमयानीतौपालितौपठितौनव संप्रापितुंभयातोस्मिभवतांग्राममुत्तमम् इतिसंभाष्यमाणास्तेभृगुक्षेत्रंययुर्मुदा ज्ञाति
भिःसहसंगम्यशृण्वद्भिस्तद्विचेष्टितं तौपितृव्यगृहेस्थित्वाहायनान्यष्टसप्तच स्वपितृव्यगृहेकांश्चिदुषित्वादिवसांस्तदा लब्ध्वापितृ
धनंगेहंसर्वंश्रीपतिगोपती ईयतुस्तदनुज्ञातौविवेकःस्वांपुरींययौ श्रीपतिर्गोपतेस्तत्रविवाहमकरोत्तदा तावेकत्रेतसौसत्रंचक्रतुर्द्वि
जतर्पणं श्रीपतिःश्रद्धयायुक्तःकनीयान्व्ययशंकितः विचार्यभार्ययासार्कंविभक्तःश्रीपतेरभूत् सभोगान्विविधान्भुंजन्प्रमत्तोब
हुसंपदा तदेव्याराधनंचक्रेगोपतिःस्मरवल्लभः अथस्वल्पेनकालेननष्टंतस्यशनैर्धनं अकिंचनोगतश्चिंताभार्ययाश्वासितस्तदा तव
भ्रातृगृहेविप्राभुंजतेबहवःसदा गच्छावोनुदिनंकांतनत्रभोक्तुमुभावपि एवंभोजनवेलायांआगत्यागत्यतद्गृहं भुंजन्भुंजन्निजगृ

हेगतौनौबहुवासरं कदाचिदागतोयावद्गोपतिर्भार्ययासह उपविष्टेषुविप्रेषुभोक्तुंनोविंददासनम् अथान्नराशेरभ्याशेभोजनायक्षु-
धातुरः उपविष्टःश्रीपतेस्तुभार्ययासनिवारितः अस्मादुत्तिष्ठवेलूर्णंत्वमुच्छिष्टंकरिष्यसि तिष्ठतिष्ठक्षणंत्वैवपश्चाद्भुंक्ष्वेतिसाब्रवी-
त् गोपतेःकांतयाहृष्टंततोविमनसावुभौ अभुक्तावेवतिःक्रांतौजग्मतुर्निजमंदिरं ततःस्वजायांमोवाचनिजमार्गंविचिंतयन् भ्रा-
त्रामयासमंवित्तंसंविभक्तमपिप्रिये दुर्बलोहंधनोन्मत्तःश्रूयतामत्रकारणं पुरावाभ्यांगुरुर्गृहेव्रतमाचरितंशुभं उपांगललितादेव्याविद्या-
दिसकलंततः मासंमयातत्सकलंपरित्यक्तंप्रमादतः ज्येष्ठआचरतेनित्यंतस्माच्छ्रीस्तत्रवर्तते तस्मादहंतदाभोक्ष्येयदाद्रक्ष्यामितांशि-
वां इत्युक्त्वानिर्गतस्तस्माद्गृहादकृतभोजनः तद्भार्याचिंतयाविष्टासापितस्थावनभ्रमती भुक्तवत्सुब्राह्मणेषुश्रीपतिःपर्यपृच्छत क्वगतोगो-
पतिरितितच्छ्रुत्वासोपिदुःखितः गोपतिस्तुसरिद्दुर्गवनानिबहुशोभ्रमत् एकंस्वपथिकान्मार्गेणदेव्याःपदमभ्यगात् पंचमेवासरेप्रासेक्षु-
त्पिपासादिनौवने अलब्धदर्शनोदेव्यादुःखितोनिपपातह तंतत्कृच्छ्रगतमालोक्यभवानीभक्तवत्सला कृतापराधमपितमनुजग्राहवैनदा-
गतमूर्छःसमुत्थायदिगंतान्यविलोकयन् ददर्शदूरतोगोपचारयंतंगवांगणं तंहृष्ट्वाकिंचिदाश्वस्तोययौतस्यांतिकंशनैः अपृच्छत्कभवान्या-
नः कुत्रत्यःकुतआगतः कोयंदेशःकभूपालःकिंपुरंनामतद्वद निशम्यवचनंतस्यवक्तुंगोपःप्रचक्रमे गोपउ० उपांगंनामनगरमुपांगोनाम
भूपतिः तत्रत्योहंसमायातःपुनस्तत्रव्रजाम्यहं उपांगललितादेव्याविद्यतेतत्रमंदिरं इत्याकर्ण्यवचस्तस्यविप्रःसमुदितोभवत् सगोपस्

हितः सायंस्विरन्ध्रविवेशह दूराद्ददर्शभवनंपुरमध्येनपोधनाः उपांगललितादेव्याःस्फाटिकंगगनंलिहं सौवर्णेनविचित्रेणकलशेनोपशोभितं
यथोदयाचलःशैलोदधानोभानुमंडलं त्वरितोगोपमामंत्र्यप्रासादंसययौमुदा प्रणम्यदंडवद्भूमौबद्धांजलिपुटस्तदा उपांगललितांदेवींमथ
स्तोतुंप्रचक्रमे गोपतिरुवाच॰ नमस्तुभ्यंजगद्धात्रिभक्तानांहितकारिणि जगद्भीतिविनाशिन्यैसर्वमंगलमूर्तये हत्वानिशुंभमहिषप्रभृतीन्
स्कुरारीनिंद्रादयोनिजपदेषुयथाभिषिक्ताः लोकत्रयावनगृहीतमहावतारेमातःप्रसीदसततंकुरुमेनुकंपां त्वांसूक्तयेनिजजनाःकुटिलोद्धतांगी
गौरीनिजेवपुषिकुंडलिनींभजंति मुक्तौचदेवमनुजाःकनकारविंदबद्धासनामविरतंकमलांस्तुवंति सापराधोस्मिसततंमासरस्वांजगदंबिके
इदानीमनुकंप्योहं यद्वांछामिकुरुष्वतत् इतिस्तुत्वाथशर्वाणींप्रणिपत्यपुनःपुनः कृतसंध्याविधिस्तत्रस्कुधापाकृतभोजनः स्वप्नेमूर्तिम
यीदेवीविप्रमेवंसमादिशत् गोपतेवत्सतुष्टास्मिगच्छोपांगमहीपतिम् मत्पूजनकरंडस्यप्रार्थयस्वपिधानकं तत्पूजयन्निजगृहेपरांसमृ
द्धिमवाप्स्यसि स्वप्नइत्याप्तसंदेशोप्रभातेगोपतिस्तदा राजदर्शनवेलायांनृपद्वारंसमभ्यगात् प्रविष्टोसौनृपसभांप्रतीहारैर्निवेदितः रा
ज्ञासंभावितस्तत्रनिषसादासनेशुभे पृष्टोगमनहेतुंस्वयथाचेनृपपुंगवम् देव्यर्चनकरंडस्यपिधानंदेहिमेनृप इत्यर्थितःसविप्रेणजा
तादेशोनृपोददौ पिधानकंनमस्कृत्यतस्मैचाभ्यर्चनादिकं आशीर्भिरभिनंद्याथतमामंत्र्यचभूपतिं उपांगललितादेव्याःप्रासादंपु
नरागमत् प्रणिपत्यांबिकांविप्रस्त्वरितोनिर्ययौपुरात् समीपेस्वपुरंदृष्ट्वात्दृष्टोगृहमुपागमत् सुहृद्भिःसहसंगम्यसर्वंतत्कथयन्मु



स्तुतिः

स्तुति

दा पूजयित्वापिधानंतद्दिदधेपारणंद्विजः एवमाराध्यमानस्तुसप्रसन्नोभवत्पुनः सोपिसन्नंसमारेभेद्विजाग्र्योबहुवासरं एकातस्याभवत्क
न्याललितानामसुंदरी कन्यापिधानमादायविहर्तुंयातिसर्वदा प्रमत्तत्वात्प्रियत्वाच्चपितृभ्यामनिवारिता कदाचित्स्ववयस्याभिःस्नातुं
गंगाजलेशुभे क्रीडंतीददृशेतोयेनीयमानंकलेवरं पिधानहस्तासासिंचदन्याश्चांजलिभिस्तदा ससर्पदष्टउत्तस्थौततोदेव्याःप्रसादतः
सानिश्रांतंद्विजंदृष्ट्वामनसाचिंतयत्प्रियम् जुहावाभ्यवहारायजनकस्यनिकेतनम् मार्गेचपरिपप्रच्छकुलंशीलंचतस्यसा सोपिसर्वं
समाचख्योगुणराशीतिनामच ललितामंत्रयामासगुणराशिंद्विजोत्तमम् परिविष्टेषुचान्नेषुपितृवेश्मनिमेद्विज गृहीतापोशनो
भूत्वाभार्यार्थंमांत्वमर्थय मयानुमोदितस्तातःसमांतुभ्यंप्रदास्यति यथोक्तोगुणराशिस्तुतथासर्वंचकारह गोपतिर्भार्ययाभ्रात्रास्वमा
लोक्यस्वबांधवैः परीक्षितार्यविमार्यानद्यायांकुशलीलयोः प्रतिजज्ञेततःकन्यांललितांगुणशालिने शुभेमुहूर्तेचतयोर्विवाहंकृतवान्प्रभुः
वरायब्राह्मणेभ्यश्चददौबहुधनंतदा विदधेचतयोर्गेहंनातिदूरंस्ववेश्मतः तत्रोषतुःसानुरागौमिथस्तौदंपतीचिरं पिधानंकृतयानीतंनि
जंललितयागृहे शनैरथधनंसर्वंगोपतेरगमद्गृहात् गुणराशिर्धनीजातोमहादेव्याःप्रसादतः करंडस्यपिधानंतज्जनन्याबहुवास
रं याचितापिनवैप्रादाल्ललितापूजितंगृहे अथसागोपतेर्भार्यातस्यैवानर्चनाद्धृतं इत्थंविचिंत्यपापात्माजामातरमघातयत् सोमिदर्थं
वनंयातःस्वयंतद्गेहमाययौ शोचंतींकिललांकन्यांसतुदेव्याःप्रसादतः उत्थायविपिनादेत्यभक्त्याशनेकरवंगृहे पादसंवाहनंतस्य-

ललिता पूजनविधिः





कुरुतेललितांतदा तंदृष्ट्वादुःखिताभूमौप्रणिपत्यपुनःपुनः लज्जिताकृच्छ्रतःपृष्टानिजपापंन्यवेदयत् स्कं॰द॰उ॰ गुणराशिस्तदातस्यैप्रायश्चित्तंद
दौबहु आत्मानंबहुकालेनपूतंकृच्छ्रैश्चकारह श्रीपतेस्त्वंचलांलक्ष्मींसमालोक्यतपोधनाः गोपतिस्तुयथापृच्छज्ज्ञातस्त्वंवर्तसेकथं किमा
चरसिकल्याणंयेनस्थैरनपायिनी इतितस्यवचःश्रुत्वाश्रीपतिर्विस्मितःपुनः अस्माभिस्तद्व्रतंदेव्यायत्कृतंगुरुमंदिरे सोपिदेव्याव्रतंच
केपुनर्भर्त्रोपदेशिनम् लेभेसपरमामृद्धिंपुत्रांश्चमुदितोभवत् उपांगललितादेव्याःकुर्यादाराधनंततः एवमेतत्पुरावृत्तंमहात्म्यंकथि
तंमया कृतमन्यैश्चबहुभिस्तैपिलब्धमनोरथाः स्कं॰द॰उ॰ विधानमस्यवक्ष्येहंतच्छृणुध्वंतपोधनाः शुक्लपक्षेतुपंचम्यामिषेमासिचरेद्व्र
तं गर्जितंसंध्ययोस्त्याज्यंदिनवृद्धिक्षयोतथा निर्वर्त्यावश्यकंकर्मशुचौरागविवर्जितः चत्वारिंशत्तथाष्टौचकल्पयित्वाविधानतः
दंतकाष्ठान्युपादायतडागंवानदींव्रजेत् आयुर्बलंयशोवर्चःप्रजाःपशुवसूनिच ब्रह्मप्रज्ञांचमेधांचत्वन्नोदेहिवनस्पते दंतधावन
पूर्वाणिमज्जनानिसमाचरेत् ततोयथाविधिस्नात्वाशुक्लवासागृहंव्रजेत् उपचारैःषोडशभिरेभिर्मंत्रैःसमाहितः कुर्यात्पूजांप्र-
यत्नेनदूर्वाभिश्चविशेषतः शुचौदेशेमंडपिकांकृत्वातीवमनोहरां सौवर्णींप्रतिमांशक्त्याकल्पयेन्मंत्रपूर्वकां द्विजायवायनकंदद्याद्विं
शत्यावटकादिभिः ततःकथांसमाकर्ण्यवायनकान्नस्यसंख्यया स्वयमद्यात्तदेवान्नंवाग्यतःसहबांधवैः रात्रौजागरणंकुर्यान्नृ-
त्यगीतादिमंगलैः प्रभातेपूजयेद्देवींततःकुर्याद्विसर्जनं सवाहनाशान्तिसुतावरदापूजितामया मातर्मामनुगृह्याथगम्यतांनि

उपांगललिता पंचमी

जमंदिरं नामचौरगुरनेदद्याद्दानानिचसभूरिशः अतमेवंचयःकुर्यात्पुत्रवान्धनवान्भवेत् विद्यावान्रोगनिर्मुक्तोसुखीगोधनजायते
अवैधव्यंचलभतेस्त्रीकन्यावरमुत्तमं विजयंपुष्टिमायुष्यंयच्चान्यदपिवांछितं इत्येतद्व्रतमाख्यातंसेतिहासंमहर्षयः शृण्वन्नपिनरोभक्त्या
सुखमाप्नोतिनिश्चितं निर्मुक्तःससुखीधीमान्व्रतराजप्रसादतः वित्तमारोग्यमायुष्यंप्राप्नोतिचप्रसादतः इतिश्री०उ० कथासं०
अथोद्यापनं आचार्यंवरयेत्पश्चादृत्विजोविंशतिंतथा उपलिप्तेशुचौदेशेविलिखेन्मंडलंततः ब्रह्मादींश्चततस्थाप्यपूजयेद्विधि
मंत्रतः अव्रणेकलशेशुद्धेललितांस्थापयेत्तथा रात्रौजागरणंकृत्वाप्रभातेहोममाचरेत् इक्षुखंडतिलैःशुद्धैःपायसेनापिवाव्रती॥
अष्टोत्तरशतंहुत्वाबलिदानंसमाचरेत् वायनंचततोदद्याद्वंशपात्रेनिधायच वटकान्विंशतिसंख्यान्निर्मलान्घृतपाचितान् आचा
र्यंपूजयेत्पश्चाद्वस्त्रालंकारधेनुतः ऋत्विजश्चतथादद्यात्कुंभंवस्त्रसदक्षिणं विसृज्यचततःपीठमाचार्यायनिवेदयेत् भोजयेच्चततो
विप्रान्पायसान्नेनभक्तितः विप्राज्ञांचततोगृह्यस्वयंभुंजीतबंधुभिः इतिश्री०स्कं०उपां०व्र०सं० अथमाघशुक्लपंचम्यांवसंतप्रवृ
निः सामध्याह्नव्यापिनीग्राह्या दिनद्वयेतद्व्याप्तावव्याप्तौवापूर्वा मुहूर्तमात्रसत्त्वेपिपराग्राह्या तत्रविष्णोःपूजाकार्या माघे
मासिसितेपक्षेपंचम्यांपूजयेद्धरिं पूर्वविद्धाप्रकर्तव्यावसंतादौतथैवच तैलाभ्यंगंततःकृत्वाभूषणानिचधारयेत् नित्यंनैमित्ति
कंकृत्वागुलालेनार्चयेद्धरिं गंधपुष्पैश्चधूपैश्चनैवेद्यैःपूजयेत्सदा नारीनरोवाराजेंद्रसंतर्प्यपितृदेवताः स्रक्चंदनसमायुक्तान्-

व्र·रा·
१०५

ब्राह्मणान्भोजयेत्ततः इतिहेमाद्रौवसंतपंचमीविधिः अथषष्ठीव्रतानि तत्रभाद्रशुक्लषष्ठ्यांललिताव्रतम् सामध्यान्हव्यापिनी
ग्राह्या तद्व्याप्त्यभावव्याप्तौवापूर्वाजागरप्रधानत्वात् कृष्णाउ० भद्रेभाद्रपदमासिशुक्लषष्ठ्यांसुसंयुता नारीस्नात्वाप्रभातेतुशुक्लमा-
ल्यांबराशुचिः सुवेषाभरणोपेताभूत्वासंगृह्यवालुकां आनीयवंशपात्रेतुपंचपिंडाकृतींशुभां ध्यात्वातुललितांदेवींतपोवननि
वासिनीं पंकजंकरवीरंचनेपालींमालतींतथा नीलोत्पलंकेतकंचसंगृह्यतगरंतथा एकैकाष्टशतंग्राह्यमष्टाविंशतिरेववा अक्ष-
ताःकलिकाग्राह्यास्ताभिर्देवींसमर्चयेत् प्रार्थयेदग्रतोभूत्वादेवींतांगिरिशप्रियां गंगाद्वारेकुशावर्तेबिल्वकेनीलपर्वते स्नात्वाकन
खलेतीर्थेहरंलब्धवतींपतिं ललितेललितेदेविसौख्यसौभाग्यदायिनि अनंतंदेहिसौभाग्यंपुत्रपौत्रप्रवर्धनं मंत्रेणानेनकुसुमैस्त्वं
पक्वैर्बकुलैःशुभैः एवमभ्यर्च्यविधिनानैवेद्यंपुरतोन्यसेत् त्रपुसैरपिकूष्मांडैर्नारिकेरैःसुदाडिमैः बीजपूरैःसतुंडीरैःकारवेल्लैःसचि
र्भिटैः फलैस्तत्कालसंभूतैःकृत्वाशोभांतदग्रतः विरूढैर्धान्यसंभूतैर्दीपिकाभिःसमंततः सार्धैःसद्गुणकैर्धूपैःसौहारीककरंज
कैः घृतपक्वैःकर्णवेष्टैर्मोदकैरुपमोदकैः बहुप्रकारैर्नैवेद्यैर्यथाविभवसारतः एवमभ्यर्च्यविधिवद्रात्रौजागरणोत्सवं गीतवाद्य-
स्तुतैर्नृत्यैःप्रेक्षणीयैरनेकधा सखीभिःसहितासाध्वीतांरात्रिंप्रशमंनयेत् नचसंमीलयेन्नेत्रेनारीयामचतुष्टयं दुर्भगादुःखिता
वंध्यानेत्रसंमीलनाद्भवेत् एवंजागरणंकृत्वाससम्यांसरितंप्रति स्नात्वावस्त्रंपरीधायधार्यंसौभाग्यकुंकुमं गंधपुष्पादिधूपै

प०
६

१०५

श्चगीतवाद्यपुरःसरं तच्चदद्याद्द्विजेंद्रायनैवेद्यादिसकभद्रके ततोग्रहंसमागत्यहुत्वावैश्वानरंक्रमात् देवान्पितॄन्ब्राह्मणांश्चपूजयि
त्वासकवासिनीः कन्यकाश्चैवसंभोज्यादीनानाथांश्चभोजयेत् भक्ष्यभोज्यैर्बहुविधैर्दत्वादानानिभूरिशः ललितामेस्तुसुप्रीताइत्युक्त्वा
तुविसर्जयेत् यःकश्चिदाचरेदेतद्व्रतंसौभाग्यदंपरं षष्ठ्यांतुललितासंज्ञंसर्वपापनिबर्हणं नरोवायदिवानारीतस्यपुण्यफलंशृणु यत्तुल
भ्यंव्रतैश्चान्यैर्दानैर्वानृपसत्तम तपोभिर्नियमैर्वापितदेतेनहिलभ्यते इहचैवातुलांसंपत्सौभाग्यमनुभूयच कृत्वामूर्ध्निपदंपार्थसपत्नी
नांयशस्विनी मृताशिवपुरंप्राप्यदेवैरसुरपन्नगैः प्राप्नोतिदर्शनंदेव्यातयातुसहमोदते पुण्यशेषादिहागत्यपुण्यसौख्यैकभाजनं भ
र्त्रासहसुतानारीसीतेवप्रियवल्लभा इदंयःशृणुयात्पार्थपठेद्वासाधुसंसदि सोपिपापविनिर्मुक्तःशक्रलोकेमहीयते षष्ठ्यांजलांतर
गतांवरवंशपात्रेसंस्थाप्यपूजाधितयासिकतांक्रमेण नक्तंचजागरमनुव्रतशेषशीलाकुर्यादसौत्रिभुवनंललितेभवानि इतिहेमाद्रौल
लि०षष्ठी० इदंगुर्जरदेशेप्रसिद्धं अथैवभाद्रपदकृष्णषष्ठ्यांकपिलाषष्ठीव्रतं तच्चयोगविशेषेणपूर्वस्यांवाकार्यम् तच्चयोगःपुराण-
समुच्चयेदर्शितः भाद्रेमास्यसितेपक्षेभानौचैवकरेस्थिते पातेकुजेचरोहिण्यांसाषष्ठीकपिलास्मृता संयोगेतुचतुर्णांचनिर्दिष्टापर
मेष्ठिना अथक० हेमाद्रौस्कांदे विश्वांगउ० रूपसंपदमारोग्यंसंततिंचातिपुष्कलां प्राप्नुवंतिनरायेनव्रतेनतद्वदस्वमे अगस्त्यउ० सा
धुसाधुत्वयाप्राज्ञयत्पृष्टोहंशुचिव्रत तत्सर्वंकथयिष्यामिततःश्रेयोभविष्यति शृणुपार्थप्रवक्ष्यामिस्वर्गमोक्षप्रदंनृणां यच्चरुसंपु

ब्रना
१०६

रादेवान्ब्रह्मरुद्रेंद्रदैवतैः असुराणांचसर्वेषांराक्षसानांतथैवच शंकरेणपुराचैतत्षण्मुखायनिवेदितं षण्मुखेनसमाख्यातंमहापात-
कनाशनं तद्दृस्येब्रह्महागोघ्नःसुरापोगुरुतल्पगः अगारदाहीगरदःसर्वपापरतोपिवा मुच्यतेसर्वपापेभ्यःस्वर्गलोकंचगच्छति यच्च
पुण्यंपवित्रंचनृणामद्भुतमंगलं उपकारायलोकानांतथातवनृपोत्तम शृणुभूपमहापुण्यंषष्ठीमाहात्म्यमुत्तमं भाद्रेमास्यसितेप-
क्षेषष्ठीभौमेनसंयुता व्यतीपातेनरोहिण्यासाषष्ठीकपिलास्मृता आश्विनस्यसितेपक्षेमहापुण्यप्रवर्धिनी षष्ठिसंवत्सरस्यांते
सापुनस्तेनसंयुता चैत्रवैशाखयोर्मध्येसितेपक्षेशुभोदये वैशाखेपिचराजेंद्रद्वारवत्यांपरास्मृता तस्यांचैवहुतंदत्तंयत्किंचि-
त्प्रतिपादितं तस्यसर्वस्यपुण्यस्यसंख्यावक्तुंनशक्यते यस्मिन्कालेभवेदेतैर्गुणैःषष्ठीयुतानदा पंचम्यामेकभक्तंचकुर्यात्तत्रविच
क्षणः षष्ठ्यांप्रातःसमुत्थायकृत्वादौदंतधावनं जलपूर्णांजलिंकृत्वाइमंमंत्रमुदीरयेत् निराहारोद्यदेवेश त्वद्भक्तस्त्वत्परायणः
पूजयिष्याम्यहंभक्त्याशरणंभवभास्कर अर्घ्यंदत्वेतिसंकल्पंकृत्वायस्माच्छुचिस्मितः स्नानंकृत्वाप्रयत्नेननद्यांतीर्थेद्भवेह्रदे
तडागेदीर्घिकायांवागृहेवानियतात्मवान् देवदारुंतथोशीरंकुंकुमैलामनःशिलं पद्मकंपत्रकंयष्टिमधुगव्येनपेषयेत् क्षीरेणा
लोड्यकल्केनस्नानंकुर्यात्समंत्रकं आपस्त्वमसिदेवेशज्योतिषांपतिरेवच पापंशमयदेवेशमनोवाक्कायकर्मजं पंचगव्यकृतः
स्नानःपंचगव्यैस्तुमार्जयेत् आनयेन्मृत्तिकांशुद्धांस्नानार्थंवैप्रयत्नतः मृत्तिकेब्रह्मपूतासिकाश्यपेनाभिमंत्रिता पवित्रंकुरु

ष०
६

१०६

मांनित्यंसर्वपापात्समुद्धर मंत्रेणानेनवरुणंपूजयेद्भक्तिमान्नरः पाशाग्रहस्तवरुणसर्ववारीश्वरप्रभो अद्याहंमार्थयामित्वांपूजना
र्थंसुरेश्वर आदित्योभास्करोभानूरविःसूर्योदिवाकरः प्रभाकरोभितोवीरोदेवःसर्वेश्वरोहरिः गोमयेनोपलिप्तायांभूम्यांवैकुंकुमे
नतु मंडलंसर्वतोभद्रमालिखेद्बुद्धिमान्नरः तत्रमध्येलिखेत्पद्ममष्टपत्रंसकर्णिकं पूर्वपत्रेन्यसेत्सूर्यमाग्नेयेतपनंन्यसेत् सुवर्णरे
तसंयाम्येनैर्ऋत्येचन्यसेद्रविं आदित्यंवारुणेपत्रेवायव्येचदिवाकरं सौम्येप्रभाकरंतत्रसूर्यमीशानपत्रके तीव्ररश्मिधरंदेवंब्रह्मा
णंचैवविन्यसेत् आधाररूपिणंदेवंमध्येचैवारुणंन्यसेत् सहस्ररश्मिंसूर्यंचसूक्ष्मस्थूलगुणान्वितं सर्वगंसर्वरूपंचमध्येभास्कर
मेवच सप्ताश्वरथमारूढंपद्महस्तंदिवाकरं अक्षसूत्रंधनुःपाणिंकुंडलैर्मुकुटेनच रत्नैर्नानाविधैर्युक्तंसौवर्णंतत्रकारयेत् शक्ति
तस्तुपलादूर्ध्वंतदर्धंकर्षतोपिवा सौवर्णमरुणंकुर्याद्रज्जुंचैवतथाविधाम् सप्ताश्वैर्भूषितंकृत्वारथंतस्याग्रतःस्थितं अरुणंवि
नतापुत्रंगृहीताश्वमनूरुकं एवंरूपंरथंकृत्वापद्मस्योपरिविन्यसेत् तस्योपरिन्यसेद्देवंरक्तवस्त्रविभूषितम् रक्तचंदनमाल्या
दिमंडितंचातिशोभनं अग्रतःसारथिंकृत्वापूजयेदरुणंशुचिः रक्तपुष्पैस्तुगंधैश्चतथान्यैरपिशक्तितः विनतातनयोदेवःकर्म
साक्षीतमोनुदः सप्ताश्वःसप्तरज्जुश्चअरुणोमेप्रसीदतु मंत्रेणानेनसंपूज्यसारथिंतदनंतरं देवस्यशंसनंकल्प्यप्रभूतादिकपं
चकं प्रभूतंविमलंसारमाराध्यंपरमंशुभं दीप्तादिशक्तिभिश्चैवततोभानुंप्रपूजयेत् दीप्तासूक्ष्मातथाभद्राविबिनीविमलान

घा अमोघाविद्युताचेतिनवमासर्वतोसुखी अपवित्रःपवित्रोवासर्वावस्थांगतोपिवा यःस्मरेद्भास्करंदेवंसबाह्याभ्यंतरेशुचिः
शिखायांभास्करंन्यस्यललाटेसूर्यमेवच चक्षुर्मध्येन्यसेद्धीमान्सुखेतत्ररविंन्यसेत् कंठेन्यसेद्धीमान्सुमंतंपद्महस्तंद्विहस्तयोः ति
मिरक्षयकृद्देवंस्तनयोरेवविन्यसेत् जातवेदाभिधंनाभ्यांकल्याभानुंतथान्यसेत् उग्ररूपंगुह्यदेशेतेजोरूपंद्विजंघयोः पाद
योःसर्वरूपंतुसूक्ष्मस्थूलगुणान्वितं एवंयथोक्तंविन्यस्यपात्रंगत्वाततोर्चयेत् करवीरार्ककुसुमैरक्तचंदनमिश्रितैः पुष्पैःस्र
गंधैर्धूपैश्चकुंकुमैरुपशोभितं मार्तंडंभानुमादित्यंभास्करंतपनंरविं हंसंदिवाकरंचेतिपादयोसुकुटावधि पादौजंघेतथाजा
नुहृदयमूरूकटीतथा नाभिंवक्षस्थलंशीर्षमेतेष्वंगेषुपूजयेत् आनयेदर्घ्यपात्रंचसौवर्णंरौप्यताम्रजं अर्घ्यार्थेदेवतंपात्रमुद
केनप्रपूरयेत् पूजयेच्चाथप्रागादिदेवतास्ताःसमाहितः दिग्देवतास्ततःपूज्यागंधपुष्पानुलेपनैः पात्रेतोयंसमादायस्रपु-
ष्पफलसंयुतं जानुभ्यामवनिंगत्वासूर्यायार्घ्यंन्यवेदयेत् वेदगर्भनमस्तुभ्यंदेवगर्भनमोस्तुते अव्यक्तमूर्तयेतुभ्यमर्घ्यंगृह्ण
नमोस्तुते ब्रह्ममूर्तिधरायैवचतुर्वक्त्रसनानन सृष्टिस्थितिविनाशायगृहाणार्घ्यंनमोस्तुते कालात्मासर्वभूतात्मावेदात्मा-
सर्वतोमुखः जन्ममृत्युजराशोकसंसारभयनाशनः विष्णुरूपधरोदेवःपीतवस्त्रश्चतुर्भुजः प्रभवःसर्वलोकानामर्घ्यंगृह्णन
मोस्तुते दारिद्र्यव्यसनध्वंसीश्रीमान्पातुदिवाकरः स्रवर्णस्फाटिकोभानुःस्वर्णरेतादिवामणिः हरिदश्वांशुमालीचअर्घ्यंगृ

प्हनमोस्तुते चतुर्भिर्मुनिभिः सम्यगष्टाभिः परिगीयते सामध्वनिस्तुतोयज्ञे अर्घ्यंगृह्णनमोस्तुते अर्घ्यंगंधंचपुष्पंचतथाधूपमदी

पकं नैवेद्यंचयथाशक्त्याप्रार्थयेत्सूर्यदेवतां अग्निमीळेनमस्तुभ्यंनमस्तेजातवेदसे इषेत्वैवनमस्तुभ्यंअग्नेचैवनमोनमः आत्म

रूपिन्नमस्तुभ्यंविश्वमूर्त्तेनमोनमः त्वंधातात्वंचवैविष्णुस्त्वंब्रह्मात्वंहुताशनः मुक्तिकामोहमिच्छामिप्रार्थयामिसुरेश्वर विश्वन

श्चक्षुःशरण्यातोविश्वनश्चरणेनमः विश्वात्मासर्वतोदेवः प्रार्थयामिसुरेश्वर इमंमंत्रंसमुच्चार्यनमस्कुर्वीतभास्करं संवर्त्तसेतिपाणि

भ्यांतोयेर्नविमृजेन्मुखं हंसःशुचिषदित्यर्चासूर्यस्यैवावलोकनं उदुत्यंचित्रमित्येनत्सूक्तंदेवाग्रतोजपेत् पद्मकेसरकोणेषुफल

कंचैवकारयेत् फलैःपुष्पैरक्षतैश्चभक्ष्यैर्नानाविधैरपि शय्यांतत्रचदेवस्यशुभेदेशेप्रकल्पयेत् षड्धान्यंषड्रसंचैवरौप्यंचैवमहास

मुं पुरुषंखड्गहस्तंचकारयेच्चैवबुद्धिमान् वस्त्रयुग्मेनसंछाद्यलवणोपरिविन्यसेत् अनेनैवतुमंत्रेणस्नानमर्घ्यार्चनंततः नमस्ते

क्रोधयुक्तायखड्गहस्ताजिघांसवे जिघांसंतंचतंदृष्ट्वाद्रुद्रुवुःसर्वदेवताः त्वयाव्याप्तंमेरुपृष्ठंचंडभास्करसुप्रभ अतस्त्वांपूजयिष्या

मिअर्घ्यंगृह्णनमोस्तुते क्षपयित्वातुतांरात्रिंगीतवादित्रनिस्वनैः ततस्त्वभ्युदितेसूर्येहोमंकुर्यात्स्वशक्तितः पूजयेत्तत्रशक्त्याचदे

वांश्चविधिवद्गुरुं होमोर्कस्यसमिद्भिश्चघृताभिश्चैस्तिलैस्तथा सिद्धान्नंचचरुद्रव्यंघृतंचजुहुयाद्द्विजः आकृष्णेनेतिमंत्रेणाशनम

ष्टोत्तरंक्रमात् होमोव्याहृतिभिर्वाथस्विष्टकृत्तदनंतरं कपिलांपूजयेद्देवींसवत्सांपापनाशिनीं वस्त्रयुक्तांसघंटांचस्वर्णशृंगावि

भूषितां ताम्रपृष्ठीं रौप्यखुरां कांस्यदोहनकान्वितां मंत्रेणानेन तां दद्याद्ब्राह्मणायेतिशक्तितः कपिलेसर्वभूतानांपूजनीयासिरोहिणी
सर्वतीर्थमयीयस्माद्दतःशांतिंप्रयच्छमे आचार्यस्यततोभक्त्यासर्वपापौविनिक्षिपेत् गोभूहिरण्यवासांसिव्रीहयोलवणांतिलाः एत
त्सर्वंप्रदत्वातुकपिलांप्रार्थयेत्ततः कपिलेपुण्यकर्मासिनिष्पापेपुण्यकर्मणि मामुद्धारयपापात्तुददतोत्यक्षयंकुरु दिविवादित्रशब्दै-
श्वसेव्यनेकपिलासदा तथाविद्याधरासिद्धाभूतनागगणाग्रहाः कपिलारोमसंख्यातास्तत्रदेवाःप्रतिष्ठिताः पुष्पवृष्टिंप्रमुंचंतिनित्यमा-
काशसंस्थिताः ब्रह्मणोत्पादितांदेवीमग्निकुंडात्समप्रभां नमस्तेकपिलेपुण्येसर्वदेवनमस्कृते जयनित्यंमहासत्वेसर्वतीर्थादिमंगले
दातारंस्वजनोपेतंब्रह्मलोकंनयाशुमां ततःप्रदक्षिणांकृत्वानत्वाब्राह्मणपुंगवान् आशीर्वादान्वदेयुस्तेपुत्रपौत्रधनागमान् आरोग्यं-
रूपसौभाग्यंसर्वदुःखविवर्जितः अंतेगोलोकमासाद्यचिरायुःसुखभाग्भवेत् यदास्वर्गात्प्रचरतिराजाभवतिधार्मिकः सप्तद्वीपव
तींभुंक्तेसदाराज्यमकंटकं अहोव्रतमिदंपुण्यंसर्वदुःखविनाशनं अतःपरंप्रवक्ष्यामिदानस्यफलमुत्तमं कपिलाख्यायदाषष्ठीजा
यतेभुविमानद व्रतंसर्वव्रतश्रेष्ठमिदमग्र्यंमहाफलं उद्धरिष्यंतिदातारंनूनमक्षय्यमव्ययं एवंदेवगणाःसर्वेभूतसंघामहर्षयः
आकाशस्थाःप्रवक्ष्यंतिपुण्येस्मिन्दिवसागमे पात्रभूतायकृषयेश्रोत्रियायकुटुंबिने एवंयःकपिलांदद्याद्विधिदृष्टेनकर्मणा
सयातिपरमंस्थानंयावन्नच्यवतेपुनः उद्यापनविधिंब्रूहिभक्तायममतत्वतः कृष्णउ॰ पूर्वस्मिन्दिवसेकुर्यादेकभक्तंसमाहितः

शाल्यौदेशेसमालिप्यसर्वतोभद्रमंडलम् स्थापयेद्व्रणंकुंभंचंदनोदकपूरितं ॥ संवेष्ट्यवस्त्रयुग्मेनकंठदेशेसुशोभनम् पंचरत्नसमायु
क्तंदूर्वापुष्पाक्षतान्वितं रक्तवस्त्रयुगच्छन्नंताम्रपात्रेणसंयुतं रथंरौप्यपलस्यैवचतुरश्वैर्विचित्रितं सौवर्णींपलसंयुक्तांमूर्तिंसूर्यस्यका
रयेत् कुंभस्योपरिसंस्थाप्यगंधपुष्पैस्तथार्चयेत् आदित्यंपूजयेद्देवंनामभिस्तैर्यथोदितैः आदित्यंभास्करंभानुंरविंसूर्यंदिवाकरं प्रभाकरनम
स्तुभ्यंसंसारान्मांसमुद्धर भुक्तिमुक्तिप्रदोयस्मात्तस्माच्छांतिंप्रयच्छमे नमोनमस्तेवरदऋक्सामयजुषांपते नमोस्तुविश्वरूपायविश्व-
धाम्नेनमोस्तुते एवंसंपूज्यविधिवद्देवदेवंदिवाकरम् पूजयेत्कपिलांधेनुंवस्त्रमाल्यानुलेपनैः दानमंत्रः दिव्यमूर्तिर्जगच्चक्षुर्द्वादशा-
त्मादिवाकरः कपिलासहितोदेवोममसुक्तिंप्रयच्छतु यस्मात्त्वंकपिलेपुण्येसर्वलोकस्यपावनी प्रदत्तासहसूर्येणममसुक्तिप्रदाभव इ
तिहेमाद्रौस्कांदेकपिलाषष्ठीव्रतोद्यापनंसं० अथकार्तिकेस्कंदषष्ठीव्रतं हेमाद्रौभविष्ये श्रीकृष्णउ० षष्ठ्यांफलाशनोराजन्विशेषात्का
र्तिकेनृप राज्यच्युतोविशेषेणस्वंराज्यंलभतेचिरात् षष्ठीतिथिर्महाराजसर्वदासर्वकामदा उपोष्यासाप्रयत्नेनसर्वकालंजयार्थिना
कार्तिकेयस्यदयिताएषाषष्ठीमहातिथिः देवसेनाधिपत्यंहिप्राप्तमस्यांमहात्मना अस्यांहिश्रीसमायुक्तोयस्मात्स्कंदोभवत्पुरा न-
स्मात्षष्ठ्यांनभुंजीतप्राप्नुयाद्भार्गवींसदा दत्वार्घ्यंकार्तिकेयायस्थित्वावैदक्षिणामुखः दध्यक्षतोदकैःपुष्पैर्मंत्रेणानेनसुव्रत सप्तर्षि-
दारजस्कंदसेनाधिपमहाबल रुद्रोमाग्निजषड्वक्त्रगंगागर्भनमोस्तुते प्रीयतांदेवसेनानीःसंपादयतुहृद्गतं दत्वाविप्रायचात्मानंय

ञ्चान्यदपिवर्तते पश्चाद्भुक्तेतस्मैराज्यंभूमिंकृत्वातुभाजनम् एवंषष्ठीव्रतस्यस्यउक्तंस्कंदेनयत्फलं तन्निबोधमहाराजमोच्यमानंमया
खिलम् षष्ठ्यांफलाशनोयस्तुनक्ताहारोभविष्यति शुक्लायामथकृष्णायांब्रह्मचारीसमाहितः तस्यसिद्धिंधृतिंपुष्टिंराज्यमायुर्नि
रामयं इहलोकेपरत्रापिदद्यात्स्कंदोनसंशयः अशक्तश्चोपवासेवैतेननक्तंसमाचरेत् तैलंषष्ठ्यांनभुंजीतनदिवाकुरुनंदन यस्तु
षष्ठ्यांनरोनक्तंकुर्याद्धरनसत्तम सर्वपापैर्विनिर्मुक्तोगांगेयस्यप्रसादतः स्वर्गेचनियतंवासोलभतेनात्रसंशयः इहचागत्यकालांतेयथोक्त
फलभाग्भवेत् देवानामपिवंद्योसौराजराजोभविष्यति इतिस्कंदषष्ठीव्रतंभविष्योक्तंसंपूर्णं अथमार्गशीर्षशुक्लेभाद्रपदेवाचंपाष
ष्ठीव्रतं हेमाद्रौस्कांदे स्कंदउ० प्राप्तराज्यंचराजानंधर्मपुत्रंयुधिष्ठिरं कदाचिदाययौद्रष्टुंदुर्वासामुनिसत्तमः तंपप्रच्छमहातेजाध-
र्मसूनुःकृतांजलिःराज्यलाभःकथंजातोममविप्रतपोनिधे तद्व्रतंश्रोतुमिच्छामिकर्तुंचमुनिसत्तम दुर्वासाउ० शृणुराजन्महाभा
गव्रतानामुत्तमव्रतं अस्तीहयच्चीर्णमात्रंसर्वकामांस्तुपूरयेत् सर्वपापक्षयंकुर्यादखंडितव्रतान्यपि षष्ठीभाद्रपदेशुक्लावेधत्याचस-
मन्विता विशाखाभौमयोगेनसाचंपाइतिविश्रुता देवासुरमनुष्याणांदुर्लभाषष्टिहायनैः कृतेत्रेतायांपंचाशद्वायनीद्वापरेपुनः च
त्वारिंशत्कलौविंशद्वायनीदुर्लभाततः आदौकृतयुगेपूर्वंयाचीर्णाविश्वकर्मणा तत्फलाद्विश्वकर्तृत्वंप्राजापत्यमवाप्तुवान् पृथुना
कार्तवीर्येणप्युविनारायणेनच ईश्वरेणमयासार्द्धंइतरैनरलिप्सया यश्चैतांद्विधिवत्कुर्यात्सोत्यंतंफलमश्नुते युधिष्ठिरउ० तद्वि-

धिंश्रोतुमिच्छामिविस्तराद्वदतोमुने केमंत्राःकेचनियमाःसापिकिंलक्षणाभवेत् दुर्वासाउ॰ इंद्रदेवत्यऋक्षेभौमेनवैध्रेनेनसमन्विता भाद्रे
मासिसितेषष्ठीसाचंपेतिनिगद्यते पंचम्यांनियमंकुर्यादेकभुक्तंसमाचरेत् चंपाषष्ठीव्रतंकुर्याद्यथोक्तंवचनाद्गुरोः ततःप्रभातेविमलेदं
तधावनपूर्वकं कृत्वास्नानंशुचिर्भूत्वासंकल्प्यचयथाविधि निराहारोद्यदेवेशस्त्वद्भक्तस्त्वत्परायणः पूजयिष्याम्यहंभक्त्याशरणंभवभा
स्कर संकल्पमंत्रः ततःस्नानंप्रकुर्वीतनद्यादौविमलेजले मृदमालभ्यमंत्रेश्वतिलैःशुक्लैश्वमंत्रवित् सावित्रंपरमंत्वंहिपरंधामजलेम
म त्वत्तेजसापरिभ्रष्टंपापंयातुसहस्रधा प्रार्थना आद्यस्त्वमसिदेवेशज्योतिषांपतिरेवच पापंनाशयमेदेववाङ्मनःकर्मभिःकृतं स्ना
नमंत्रः ततःसंतर्पयेद्देवान्ऋषीन्पितृगणानपि ततश्चैत्यगृहंमौनीपारवंडालापवर्जितः स्थंडिलंकारयेच्छुद्धंचतुरस्रंसुशोभनम् स्था
पयेद्व्रणंकुंभंपंचरत्नसमन्वितं कुंकुमेनलिखेत्पद्मंद्वादशारंसकर्णिकम् तस्योपरिन्यसेत्सूर्यंसौवर्णंसरथारुणं शक्त्यावावित्तसारे-
णवित्तशाठ्यविवर्जितः तमर्चयेद्गंधपुष्पैर्विधिमंत्रपुरःसरं पंचामृतेनस्नपनंकुर्यादर्कस्यसंयतः ततस्तुगंधतोयेनपरांपूजांसमारभेत्
गंधैर्नानाविधैर्दिव्यैःकर्पूरागरुकुंकुमैः फलैर्नानाविधैर्दिव्यैःकुंकुमैश्चसुगंधिभिः मंडपंकारयेत्तत्रपुष्पमालाविभूषितं यथाशोभंप्रकुर्वीत
अधश्चोपरिसर्वतः ततःसंपूजयेद्देवंभास्करंकमलोपरि मध्येदलेषुपूर्वादित्यादित्यादीन्सुपूजयेत् आदित्याय॰भास्कराय॰भानवे॰
अर्यम्णे॰विश्वचक्राय॰अंशुमतेन॰सहस्रांशवेन॰खगाय॰सुराध्याय॰सूर्याय॰द्वादशात्मने॰प्रभाकराय॰ १२ जन्मांतरसहस्रेषुदुष्कृतं

यन्मयाकृतं तत्सर्वंनाशमायातु त्वत्प्रसादाद्दिवाकर ततोरथपूजा ततःसंपूजयेद्देवमच्युतंतद्रथेस्थितं अष्टाक्षरेणमंत्रेणगंधपुष्पादिभिः
क्रमात् मंत्रः ॐ घृणिःसूर्यआदित्यः इतिमंत्रः कालात्मासर्वभूतात्मावेदात्माविश्वतोमुखः जन्ममृत्युजरारोगसंसारभयनाशनः
उदयेअर्घ्यमंत्रः ततःसंपूजयेच्छुक्लांसवत्सांगांपयस्विनीं सवस्त्रघंटाभरणांकांस्यपात्रेचदोहिनीम् ब्रह्मणोत्पादितेदेविसर्वपापविना
शिनि संसारार्णवमग्नंमांगोमातस्त्रातुमार्हसि सुरूपाबहुरूपाश्चमानरोलोकमातरः गावोमामुपसर्पंतुसरितःसागरंयथा या
लक्ष्मीःसर्वदेवानांयाचदेवेषुसंस्थिता धेनुरूपेणसादेवीममपापंव्यपोहतु तिलहोमंततःकुर्यात्साविव्याष्टोत्तरंशतं ततस्तांकल्प
येद्धेनुंसद्योमेप्रीयतामिति आचार्याततोदद्यादादित्यंसरथारुणम् सकुंभरक्तवस्त्रैश्चसर्वोपस्करसंयुतम् मनोभिल-
षितावाप्तिंकरोतुममभास्करः दानमंत्रः गृह्णामिभास्कररवेभवंतंविश्वतोमुखं मनोभिलषितावाप्तिमुभयोःकर्तुमर्
हसि प्रतिग्रहणमंत्रः सर्वतीर्थमयींधेनुंसर्वयज्ञमयींशुभां सर्वदानमयींदेवींब्राह्मणायददाम्यहम् गोदानम्
गृह्णामिसुरभींदेवींसर्वयज्ञमयींशुभाम् उभौपुनीहिवरदेउभयोस्तारकाभव ततस्तुभोजयेद्विप्रान्द्वादशैवस्वश
क्तितः दद्याच्चदक्षिणांतेभ्यःप्रणिपत्यविसर्जयेत् अवैकल्यंभवेत्तस्यशांतिमायुर्द्विजोत्तम अभिनंद्यतमाशीर्भिस्ते
सर्वैअभिनंदिताः ततस्तुस्वयमश्नीयाद्द्विजानामवशिष्टकम् सहपुत्रैःकलत्रैश्चअन्यैर्बहुजनैर्वृतः एवंयःकुरुतेराजन्सो

स्वंतंपुण्यमश्नुते प्रसूणांचविधिःप्रोक्तः सर्वेषांदृष्टिगोचरः सर्वैश्चतद्व्रतंकार्यंस्वशक्त्याहुःखभीरुभिः प्रभुःप्रथमकल्पस्ययोनुकल्पेनवर्त
ते विफलंनच्चतस्यस्याद्वशस्तत्कलिकः अर्थानिर्धनस्यविधिः पंचम्यांनियमंकुर्यादाचार्यवचनाद्व्रती षष्ठ्यांस्नानंप्रकुर्वीतसंतर्प्यपि
तृदेवताः भक्ष्येत्यस्यगृहंमौनीसूर्यंमनसिचिंतयेत् स्थापयेदव्रणंकुंभंमृत्पात्रंचतथोपरि तस्योपरिन्यसेत्सूर्यंफलकेनविनिर्मितम्
सौवर्णंभक्तिसंयुक्तंरथंसारथिनायुतं तमर्चयेज्जगन्नाथंगृहीलाज्ञांगुरोःस्वयम् षडक्षरेणमंत्रेणगंधपुष्पाक्षतादिभिः ॐ नमःसूर्याये
तिमंत्रः संपूज्यविधिवद्देवंफलपुष्पादिकंन्यसेत् सूर्यंनिवेदयेत्सर्वंसूर्योमेप्रीयतामिति ततःप्रभातेविमलेगत्वागुरुगृहंप्रति स-
र्वोपकरणैःसूर्यमाचार्यायनिवेदयेत् धान्यंपुष्पंफलंवस्त्रंरत्नधेन्वादिकंन्यसेत् गवांकोटिसहस्रंतुकुरुक्षेत्रेर्कपर्वणि चंपादानस्यरा-
जेंद्रकलांनार्हतिषोडशीं सर्वतीर्थप्रदानानितथान्यान्यपिषोडश चंपयातुलितानीहचंपकात्वतिरिच्यते इतिश्रीस्कंदपुराणेचंपाषष्ठी
व्रतंसंपूर्णम् अथमार्गशीर्षशुक्लचंपाषष्ठी मार्गेमासेशुक्लपक्षेषष्ठीवैधृतिसंयुता रविवारेणसंयुक्तासाचंपाइतिकीर्तिता इ
तिमल्लारिमाहात्म्ये मार्गशीर्षेमलेपक्षेषष्ठ्यांवारेंशुमालिनः शततारागतेचंद्रेलिंगंस्याद्दृष्टिगोचरमिति इयंयोगविशेषेणपूर्वायो
गाभावेपरायात्या इतिचंपाषष्ठी अथसप्तमीव्रतानि तत्रवैशाखशुक्लसप्तम्यांगंगोत्पत्तिः तत्रपूजाचोक्तापृथिवीचंद्रोदयेब्राह्मे
वैशाखशुक्लसप्तम्यांजह्नुनाजाह्नवीस्वयं क्रोधात्पीतापुनस्त्यक्ताकर्णरंध्रात्तुदक्षिणात् तांतत्रपूजयेद्देवींगंगांगगनमेखलाम्

इतिहरिवंशेपुण्यकव्रतांते अब्दंप्रातःस्नानमभिधायगंगायाव्रतकथामहायशस्करीउक्ता प्रत्यूषेचसदास्नानंकार्यंमंदाकिनीजले अन्यत्र
वाजलेस्नानंशुक्लपक्षेहरिप्रिये एतद्गंगाव्रतंनामसर्वकामप्रदंशुभं सप्तसप्तचसप्ताथकुलानिहरिवल्लभे स्त्रीतारयतिधर्मज्ञेगंगाव्रतकत्री
रिणी॥ देयंकुंभसहस्रंतुगंगायाव्रतकेशुभे तारणंसिद्धिदंचैवतद्व्रतंसर्वकामिदं वैशाखेशुक्लपक्षेतुसप्तम्यांपूजयेद्धरिं गंगायांविधिव-
त्स्नात्वाभोजयेद्ब्राह्मणान्दश पूजयेत्सूक्ष्मवस्त्रैश्चपुष्पस्रक्चंदनैःशुभैः पूजकःसर्वपापेभ्योमुच्यतेनात्रसंशयः इयंचशिष्टाचारात्मध्या
ह्नव्यापिनीग्राह्या दिनद्वयेतद्व्याप्तौ एकदेशव्याप्तौवापूर्वायुग्मवाक्यात् इतिगंगासप्तमीव्रतं अथशुक्लादिश्रावणकृष्णसप्तम्यांशीत
लाव्रतम् तच्चमध्याह्नव्यापिन्यांकार्यम् तच्चमाधवीयेहारीतः पूजाव्रतेषुसर्वेषुमध्याह्नव्यापिनीतिथिरिति अथव्रतविधिः मास-
पक्षाद्युल्लिख्यममइहजन्मनिजन्मांतरेचअवैधव्यप्राप्तयेअखंडितभर्तृसंयोगपुत्रपौत्रादिधनधान्यप्राप्तयेशीतलाव्रतंकरिष्ये तथाच
यथामीलितोपचारैःशीतलांपूजयिष्ये तत्रअष्टदलपीठेअव्रणंकलशंसंस्थाप्य तदुपरिसौवर्णींशीतलांपूजयेत् अथध्यानंस्कांदे
वंदेहंशीतलांदेवींरासभस्थांदिगंबरां मार्जनीकलशोपेतांशूर्पालंकृतमस्तकां कुंभेसंस्थापयेद्देवींपूजयेन्नाममंत्रतः शीतलेदहमेपा
पंपुत्रसौख्यफलप्रदे धनधान्यप्रदेदेविपूजांगृण्हनमोस्तुते इतिध्यानं आवाह॰ आसनं पाद्यं विधायशीतलाकारिअवैधव्यसूतनप्र
दे श्रावणस्यसितेपक्षेअर्घ्यंगृण्हनमोस्तुते अर्घ्यंनाममंत्रेणपूजनीया आचमनं स्नानं वस्त्रं उपव॰ विलेप॰ अलंका॰ पुष्पा॰ धूपं दीपं

शीतलेदंचपक्वान्नंदध्योदनमुत्तमंशुभम् नैवेद्यंगृह्यतांदेविघृतमिश्रंचसुंदरि संपूज्यसप्तगौरीश्चभोजयेच्चप्रयत्नतः नैवे॰ करोद्वर्त॰ फलं॰
तांबूलंदक्षिणां॰ नीराज॰ पुष्पां॰ प्रद॰ नम॰ व्रतसंपूर्णफलावाप्तयेब्राह्मणायवायनम् तत्रमंत्रः दध्यन्नंदक्षिणायुक्तंवाणकंफलसंयुतम्
शीतलाप्रीतयेतुभ्यंब्राह्मणायददाम्यहं इतिपूजनं अथकथा हेमाद्रौभविष्ये कृष्णउ॰ प्रसिद्धंभूयतांरम्यंनगरंहस्तिनापुरम् इंद
द्युम्नश्चराजाभून्नृपतिर्लोकपालवत् धर्मशीलाभिधाचासीत्तस्यभार्यायशस्विनी क्रियाकांडेरतासाध्वीदानशीलाप्रियंवदा बभूवप्रथमः
पुत्रोमहाधर्मेतिनामतः नंदतेपितृवात्सल्यात्कालेन्यस्मिन्ततोभवत् द्वितीयाचतथापुत्रीतस्यजातागुणोत्तमा पुत्रीलक्षणसंपन्नाशु
भकारीतिनामतः ववृधेसापितुर्गेहेसर्वांगगुणसुंदरी नाम्नारूपेणसाबालासर्वासांचगुणाधिका सामुद्रिकगुणोपेतापद्महस्ताप्रि
यंवदा कौंडिण्यनगरेराजासुमित्रोनामनामतः तत्पुत्रोगुणवान्नामशुभकार्याःपतिर्बभौ वरोदेहेनमानेनलक्ष्मीवान्रूपवान्गुणैः
गुणवान्शुभकारिण्याःपाणिंजग्राहधर्मवित् गृहीत्वापाणिंबर्हिणिगतोसौनगरंप्रति पुनःसमागतोराजागुणवान्हस्तिनापुरं आज
गामपरिजनैःस्तत्पुत्र्यानयनोत्सुकः प्रणम्यचपितुःपादौत्वरितंचारुहासिनी आज्ञांदेहिमहाराजश्वशुरस्यगृहंप्रति त्वद्दर्शनंचपितु
र्ज्ञात्वामातुस्तुशुभकारिणी रथमारुह्यहेस्वामिन्यास्यामिस्वपुरंप्रति ततःपितातुतस्याथदंपत्योःशुभहेतवे पुत्रितंसुस्थिराभूत्वावा
रेकंचक्षमस्वमे शीतलासप्तमीनामव्रतंचरशुभप्रदं कन्योवा॰ ताततत्रपरिज्ञातंयदुक्तंपद्मयोनिना पतिव्रतासमोधर्मोनास्तीहभुवन-

व्रये ततस्तांकारयामासशीतलाव्रतमुत्तमम् सौभाग्यारोग्यजनकमवैधव्यकरंपरम् पुत्रींचप्रेषयामासब्राह्मणोवेदपारगः व्रतोपकरणं
सर्वंगृहीत्वपूजांसरोवरे मार्गेपद्मानिसंगृह्यव्रतोपकरणंशुभा शीतलापूजनेहेतोर्गतासाध्वीसरोवरं तत्राहृष्टंतयामोहात्तडागंविधिसाध
नम् बभ्रामसावनेशून्येस्मरंतीशीतलाव्रतम्. अतिश्रांतायतोमोहात्स्मरंतीशीतलांबहु ददर्शसाततोनारींवृद्धांरूपगुणान्विताम् वि
प्रसुस्त्वपितोमार्गेदृष्टिहीनोमृतस्तदा शुभकारींततोवाक्यंवृद्धाऊचेयशस्विनी भविष्यतिचिरंजीवीभर्तातेराजकन्यके आगच्छपूजना-
र्थायदर्शयामिसरोवरं तयासहगतासाध्वीतडागंविधिपूर्वकं पूजयामासशर्वाणींतोषयामासशीतलाम् पूजयित्वाचतांदेवींस्वपथं
गंतुमुद्यता शीतलायावरंगृह्यसहसख्याचमस्थिता ततोसाददृशोरण्येब्राह्मणंदृष्टसर्पकं भार्यांतुतस्यनिकटेब्राह्मणस्यमहात्मनः
ब्राह्मणानिद्रयासुप्तः पूर्वकर्मप्रभावतः दष्टोभुजंगरूपेणकालेनैवहतस्तदा विषेर्हतपतिंदृष्ट्वारुरोदब्राह्मणीबहु राजपुत्रीलब्धवराशी
तलायाःपतिव्रता वरंसंगृहीत्वशालायांरुरोदकरुणंबहु तयोस्तरुणदंपत्योर्योग्यसौभाग्यदर्शनात् रुदंतीकरुणंबालाशोचयामासतंवरं
यावन्नपरलोकस्थंजनंसंगत्यतत्कृते तावदन्येनसहसाअनुगच्छामिवन्हिना निष्ठतिष्ठक्षणंसुभ्रुगमिष्यामिहिपावकं अर्जयिष्येदिवं
दिव्यमक्षय्यंभवनांतरे राजपुत्रीवचःश्रुत्वाब्राह्मण्याःकरुणान्विता सस्मारशीतलांदेवींमहावैधव्यभंजनीम् आगच्छच्छीतलातत्र-
वरंदातुंशुचिस्मिता शीतलोवा॰ वरंवरयवत्सेत्वंकिंदुःखंचारुहासिनि शीतलाव्रतजंपुण्यंदेहित्वंब्राह्मणींशुभां तेनपुण्यप्रभावे

र्तास्यान्निर्विषोभवेत् इतिदेव्यावचःश्रुत्वाअददद्ब्राह्मणींततः बुबोधाशुततोविप्रश्चिरंसुप्तोयथापुनः शीतलायाव्रतेबुद्धिर्ब्राह्मण्या-
श्चाभवत्तदा अकरोत्सापितत्पूजांभक्तिभावपुरःसरं तदंतरेराज्यपुत्र्यापतिरागाद्गृहांतिकं सोपिदष्टोथसर्पेणगच्छंत्यग्रेददर्श
ह विललापततःसाध्वीसख्यासहवनांतरे शीतलोवाच वत्सेमयापूर्वमुक्तं स्मरतद्वरवर्णिनि शीतलाव्रतचारिण्यावैधव्यंनैवजा
यते स्वयमुत्थायकल्याणिपतिंस्वंसंगृहेयथा बोधयाशुपतिंभीरु व्रतंवैधव्यनाशनं इत्युक्ताबोधयामासभर्त्तारंसापतिव्रता भ
र्त्तापिमुदितोदृष्ट्वास्वांप्रियांप्रीतिकर्मणि दृष्ट्वातुमहदाश्चर्यंतद्ग्रामस्थायिनोजनाः सर्वेतेविस्मयंजग्मुर्ब्राह्मणीपतिरक्षणात्
ब्राह्मणींहर्षितांदृष्ट्वाप्रणिपत्यपतिव्रता देहिमातर्नमस्तेस्तुअवैधव्यंवियोगता अन्यापिशीतलायास्तु व्रतंनारीकरिष्यति
अवैधव्यमदारिद्र्यमवियोगःस्वभर्तृतः तथेत्यंतर्दधेदेवीशीतलाकामरूपिणी शीतलायावरंलब्ध्वाजगामात्मीयवेश्मनि प
द्मानिवासमप्रत्तुविश्ववंद्यसमर्हणासाधितविश्वमंगला प्रसादमासाद्यचशीतलायानित्योत्सवापार्वतिवद्बभूव इतिभविष्येशीतला
व्रतंसंपूर्णम् अथभाद्रशुक्लसप्तम्यांमुक्ताभरणव्रतम् हेमाद्रौभविष्ये सामध्याह्नव्यापिनीग्राह्या तदुक्तंमाधव्यामोपरा मम
इहजन्मनिअखंडितसंततिपुत्रपौत्रवृद्धयेमुक्ताभरणव्रतेउमामहेश्वरपूजनंकरिष्ये अथपूजा देवदेवमहेशानपरमात्मन्जगद्गु
रो प्रतिपादितयासोमपूजयापूजयाम्यहं आवाहनं अनेकरत्नखचितंसौवर्णमणिसंयुतं मुक्तान्वितंमहादेवगृहाणासनमुत्तमं

आसनं पाद्यंगृहाणदेवेशसर्वविद्यापरायण ध्यानगम्यसनातंशंभोसर्वेश्वरनमोस्तुते पाद्यं इदमर्घ्यमनर्घ्यंत्वममराधीशशंकर किं
करीभूतयासोममयादत्तंगृहाणभोः अर्घ्यं गंगादिसर्वतीर्थेभ्यःसमानीतंसुशीतलं जलमाचमनीयार्थंगृहाणउमयासह आचम
नीयं मध्वाज्यशर्करामिश्रमधुनापरिकल्पितः शंकरमीनयेतुभ्यंमधुपर्कोनिवेदितः मधुपर्कं पयोदधिघृतंचैवशर्करामधुसं
युतं पंचामृतेनस्नपनंप्रीयतांपरमेश्वरः पंचामृतस्ना॰ गंगाचयमुनाचैवगोदावरिसरस्वती नर्मदासिंधुकावेरीस्नानार्थंप्र-
तिगृह्यतां शुद्धोदकस्ना॰ स्नानादूर्ध्वंमहादेवप्रीत्यापापप्रणाशन वस्त्रयुग्मंमयादेवगृह्यतांकांतयासह वस्त्रं उपवीतंसोत्तरी
यंनानाभूषणभूषितम् गृहाणसोमविमलंमयादत्तमिदंशुभं उपवीतं मलयाचलसंभूतंघनसारंसुगंधियुक् चंदनंपंचवदन
गृहाणवनितासह चंदनं जातीचंपकपुन्नागबकुलैःपारिजातकैः शतपत्रैश्चकल्हारैरर्चयेहमुमापतिं पुष्पाणि त्रैलोक्यपाव
नंनेद्यपरमात्मन्जगद्गुरो चंदनागरुकर्पूरधूपंदास्यामिशंकर धूपं शुभवर्तियुतंसर्पिर्लोडितंवन्हिनायुतम् दीपमेकमनेका
र्कप्रतिमंकलयत्विमं दीपं पयसापूपकंसरंदुग्धान्नंमधुडोदनं दिव्यान्नंषड्रसोपेतंसुधारससमन्वितं समर्पयामिदेवेशकिं-
करीशंकरायने नैवेद्यं पुनराचमनंशुद्धंकुरुसोमांबुनामुना मुखशुद्धिकरंदेवरूपयात्वंगृहाणभोः आचमनीयं कस्तूरिका-
समायुक्तंमलयाचलसंभवं गृहाणचंदनंसोमकरोद्वर्तनकंशुभं करोद्वर्तनं नारिकेरफलंजंबूफलंनारिंगमुत्तमं कूष्मांडंपुरतो

भक्त्याकल्पितंमतिगृह्यतां फलं पूगीफलमितितांबूलं हिरण्यगर्भेतिदक्षिणां नीराजनं पुष्पांजलिं प्रदक्षिणां नमस्कारं महादे
वमहाराजप्रीत्यापापप्रणाशन अस्माकंकुर्वतांपूजांभवतासाधुयोजितं ज्ञानतोज्ञानतोवापिभवतोविहिताचया संपूर्णास्तु
विश्वेशविमलात्वत्प्रसादतः इतिप्रार्थना देवदेवजगन्नाथसर्वसौभाग्यदायक गृण्हीयांदोरकंरूपंपुत्रंपौत्रप्रवर्धनं दोरकग्रहणं
प्रसन्नसामोपगीतंत्वांधारयामिजगद्गुरो सूत्रग्रंथिस्थितंनित्यंधारयाभिस्थिरोभव इतिदोरकबंधनं हरपापानिसर्वाणितुष्टिंकुरुद
यानिधे प्रसन्नःसन्नुमाकांतदीर्घायुःपुत्रदोभव इतिजीर्णदोरकोत्तारणं अथवायनं मंडकान्सफलान्युक्तान्सघृतान्दक्षिणायु
तान् एकादशशतंकृत्वाब्राह्मणायकुटुंबिने वेदशास्त्रप्रवीणायदद्यात्सोमस्यतुष्टये शंकरःप्रतिगृण्हातिशंकरोवैददातिच
शंकरस्तारकोभाभ्यांशंकरायनमोनमः इतिवायनं एवंयापूजनंकुर्यात्सोमस्यप्रखदस्यच सर्वान्कामानवाप्नोतिपुत्रपौत्रैश्चमोद
ते प्रार्थना इतिपूजा अथकथा श्रीकृष्णउ० मुनींद्रोलोमशोनाममथुरायांगतःपुरा सोर्चितोवसुदेवेनदेवक्याचयुधिष्ठिर उ
पविष्टःकथाःपुण्याःकथयित्वामनोरमाः ततःकथयितुंभूयःकथामेतांप्रचक्रमे कंसेनतेहताःपुत्राःजाताजाताःपुनःपुनः मृतव
त्सादेवकित्वंपुत्रदुःखेनदुःखिता यथाचंद्रमुखीदीनाबभूवनहुषप्रिया पश्चाच्चीर्णव्रताचैवबभूवतत्रवत्सका त्वमपिदेवकित
थाभविष्यसिनसंशयः लोमशउ० अयोध्यायांपुराराजानहुषोनामविश्रुतः तस्यस्त्रीरूपसंपन्नादेवीचंद्रमुखीप्रिया तथान-

स्यैवनगरेविष्णुगुप्तोभवद्द्विजः आसीद्गुणवतीतस्य पत्नीभद्रमुखीतथा तयोरासीदतिप्रीतिः स्पृहणीयापरस्परं अथतेद्वेअपिसख्यौ
स्नानार्थंशरयूजले मासेप्राप्तेभाद्रेतत्रैव बह्व्योवैनगरांगनाः ताःस्नात्वामंडलंचक्रुस्तन्मध्येव्यक्तरूपिणम् लेपयित्वाशिवंशांतसुम-
यासहशंकरं गंधपुष्पाक्षतैर्भक्त्यापूजयित्वायथाविधि प्रणम्यगंतुकामास्ताःपप्रच्छतुरुभेस्त्रियौ ताऊचुः अस्माभिःशंकरोदेवो
पार्वत्यासहपूजितः बध्वासूत्रमयंतंतुंशिवस्यात्मानिवेदितः धारणीयमिदंतावद्यावत्प्राणविधारणं तासांतद्वचनंश्रुत्वासख्यौते
चापिदेवकि कृत्वाव्रतमयंतत्रबध्वादोर्भ्यांस्वदोरकं ततस्ताश्चगृहंजग्मुःस्वसखीभिःसमावृताः कालेनमहतातस्यास्तद्व्रतंवि
स्मृतंशुभम् चंद्रमुख्याःप्रमत्तायाविस्मृतःसतुदोरकः भद्रमुख्यास्तथाभद्रेविस्मृतंसर्वमेवतत् मृताकैश्चिदहोरात्रैःसाबभू
वप्लवंगमी भद्राख्याकुक्कुटीजाताव्रतभंगाच्छुभानने संभूयभूयःसमयंप्राकृव्रतंचक्रतुःसदा कालेनपंचतांप्राप्तेसख्यौभावात्सहै
वते अत्रैवमातृकेदेशेजातागोकुलसंज्ञके भद्राख्याब्राह्मणीजातायासीच्चंद्रमुखीपुरा नाम्नाभद्रमुखीयासाभूषणानामसाभ
वत् अग्निमीळस्यसादत्तापित्रातस्यपुरोधसः अतीववल्लभाचासीद्भूषणाभूषणप्रिया भूषिताभूषणवरैरूपेणालंकृतास्वयम्
तस्यांबभूवुरष्टौचपुत्राःसर्वगुणान्विताः मातृवद्रूपसंपन्नाःपितृवद्धर्मशालिनः सख्यौतेतेनतद्व्रतजातेजातिस्मरेकिल पुनर्निरं
तरांप्रीतिस्तयोरासीद्यथापुरा कालेबहुतिथेजातेजातासंत्यक्तयौवना मध्येवयसिराज्ञीसापुत्रमेकमजीजनत् ईश्वरीरोगिणंमू

कंप्रज्ञाहीनंचविस्वरम् तादृशोपिमहाभागेमृतोसोनववार्षिकः ततस्तांभूषणादृष्टुमीश्वरींपुत्रदुःखितां सखीभावादतिस्नेहात्सु
तैःस्वैःपरिवारिता अमुक्ताभरणाभद्रास्वरूपेणैवभूषिता साहिभद्राद्विजस्याभूद्भार्याभूषणनामिका पुरोहितस्याःकालेनकुक्कुटी
बहुपुत्रिणी तांदृष्ट्वातादृशींभव्यांप्रजज्वालेश्वरीरुषा ततोगृहंप्रेषयित्वाब्राह्मणींतीव्रमत्सराम् चिंतयामाससाशीघ्रंतस्याःपुत्र
वधंप्रति निश्चित्यचेतसाक्रूराघातयामासतत्सुतान् हताहताश्चतेपुत्राःपुनर्जीवंत्यनामयाः तदद्भुततरंदृष्ट्वासखीमाहूयभूष
णां उपविश्यासनेश्रेष्ठेबहुमानपुरःसरम् अपृच्छद्विस्मयाविष्टाराज्ञीसानृपवल्लभा ब्रूहितथ्यंमहाभागेकिंत्वयासुकृतंकृतं दानं
व्रतंतपोवापिशुभ्रभूषणसुपोषणं येनतेनिहताःपुत्राःपुनर्जीवंत्यनामयाः तथाहिबहुपुत्राचजीवद्वत्साशुभानना अमुक्ताभरणानि
त्यंभर्तुश्चैतस्यवस्थिता अतीवशोभसेभद्रेविद्युदेवयथांबरे भूषणोवाच शृणुदेविमवस्याभिजन्मांतरविचेष्टितं किंतद्विवि-
स्मृतंसर्वमयोध्यायांकृतंहियत् आवाभ्यांव्रतवैकल्यंप्रमत्ताभ्यांवरानने येनत्वंप्लवगीजाताजाताहंकुक्कुटीतथा तथापिव्रतवै
कल्यंत्वयाचापत्यतःकृतं मयातुसर्वभावेनचेतसाध्यायशंकरं तिर्यग्योन्यनुसारेणमनोवृत्त्याप्यनुष्ठितम् एतद्धिकारणंभद्रे
नान्यत्किंचित्करोम्यहं लोमशउ० इत्याकर्ण्यवचःश्रुत्वापूर्वजन्मविचेष्टितम् ईश्वरीचतयासार्द्धंपुनःसम्यक्चकारह व्रत-
स्यास्यप्रभावेणपुत्रपौत्रादिसंभवम् भुक्त्वाचसौख्यमतुलंमृताशिवपुरंगता तस्मात्त्वमपिकल्याणिव्रतमेतत्समाचर आरब्धे

स्मिन्व्रतेदिव्येजीवत्पुत्राभविष्यसि देवक्युवाच ब्रह्मन्नाख्याहिमेसम्यक् व्रतमेतत्सुखप्रदं संतानवृद्धिकरणंशिवलोकस्थितिप्र
दं लोमशउ॰ भद्रेभाद्रपदेमासिसप्तम्यांसलिलाशये स्नात्वाशिवंमंडलकेलेखयित्वासहांबिकां तत्रसंपूज्यसमयंकुर्याद्ध्वाक
रेगुणं यावज्जीवंमयात्मातुशिवस्यविनिवेदितः इत्येवंसमयंकृत्वाततःप्रभृतिदोरकं सौवर्णंराजतंवापिसूत्रंवाधारयेत्क
रे मंडूकान्वेष्टितान्दद्यान्मासेपक्षेथवाब्दके स्वयंतांश्चैवभुंजीतव्रतभंगभयाच्छुभे प्रतिमासंतुसप्तम्यांशुक्लपक्षेविशेषतः
कुर्यादेवंव्रतंभद्रेवर्षांतेपितुदेवकि कारितामुद्रिकाशैवीहैमीरौप्यास्वशक्तितः ताम्रपात्रोपरिस्थाप्यब्राह्मणायनिवेदयेत्
आचार्यायविशेषेणसुवर्णस्यांगुलीयकं पुष्पांकुसुमसंयुक्तंतांबूलांजनसूत्रकैः सहार्थैस्तृतीया एवंतत्कारयित्वातुव्रतंसंत
तिवर्धनं सर्वपापविनिर्मुक्तंभुक्त्वासौख्यमनामयं संतानंवर्धयित्वाचशिवलोकेमहीयते एतत्तेसर्वमाख्यानमाख्यातंव्रत
मुत्तमं कुरुदेवकियत्नेनजीवत्पुत्राभविष्यसि कृष्णउ॰ इत्युक्त्वातुमुनिश्रेष्ठस्तत्रैवांतरधीयत चकारसर्वंयत्नेनयदुक्तंतेनधीम
ता व्रतस्यास्यप्रभावेणदेवकीमामजीजनत् तस्मात्पार्थनरैःकार्यंस्त्रीभिःकार्यंविशेषतः व्रतंपापप्रशमनंसुखसंततिव
र्धनं एवंयःशृणुयाद्भक्त्यायश्चैतत्प्रतिपादयेत् व्रतमाख्यानसहितंसोपिपापैःप्रमुच्यते आख्यानकंव्रतमिदंसुखसौख्यका
मायास्त्रीकरिष्यतिशिवंहृदयेनिधाय दुःखंविहायबहुशोगतकल्मषौघासास्त्रीव्रताद्भवतिशोभनजीववत्सा इतिहेमाद्रौभ

विष्येमुक्ताभरणसप्तमीव्रतंसंपूर्णं अथआश्विनशुक्लसप्तम्यांसरस्वतीपूजा साउदयव्यापिनीग्राह्या युगाद्यावर्षवृद्धि
श्चसप्तमीपार्वतीप्रिया रवेरुदयमीक्षंतेलतास्तितिथियुग्मके मतापमार्तंडेभविष्योक्तेः वर्षवृद्धिर्जन्मतिथिः तत्रैवमूलनक्षत्रेपु
स्तकस्थापनमुक्तं रुद्रयामले मूलर्क्षेस्कधाधीशपूजनीयासरस्वती पूजयेत्प्रत्यहंयावत्श्रवणांतेविसर्जयेत् नाध्यापयेन्न
चलिखेन्नाधीयीतकदाचन पुस्तकेस्थापितेदेव्याविद्याकामोद्विजोत्तमः अहंभद्रात्वभद्राहंनावयोरंतरंक्वचित् सर्वसिद्धिंप्र
दास्यामिभद्रायांत्वर्चितास्म्यहम् आश्विनस्यसितेपक्षेमेधानामसरस्वती मूलेनावाहयेद्देवींश्रवणेनविसर्जयेत् इतिसरस्वती
पूजनम् अथरथसप्तमीव्रतं अस्यांस्नानविधिः तच्चअरुणोदयव्यापिन्यांकार्यं तदुक्तंमदनरत्नेस्मृतिसंग्रहे सूर्यग्रहण
तुल्यासाशुक्लामाघस्यसप्तमी अरुणोदयवेलायांस्नानंतत्रमहाफलं माघेमासिसितेपक्षेसप्तमीकोटिपुण्यदा कुर्यात्स्नानार्घ्य
दानाभ्यामायुरारोग्यसंपदः दिनद्वयेअरुणोदयव्यापित्वेपूर्वैव सौवर्णेराजतेताम्रेभक्त्यालाबुमयेतथा तैलेनवर्तिर्दातव्या
महापात्रेतुरंजिता समाहितमनाभूत्वादीपंशिरसिधारयेत् भास्करंत्हृदयेध्यात्वाइमंमंत्रमुदीरयेत् नमस्तेरुद्ररूपायरसा
नांपतयेनमः अरुणारुणनमस्तेस्तुहरिदश्वनमोस्तुते जलोपरिदीपंस्तीर्त्वासंतर्प्यपितृदेवताः लोलार्करथसप्तम्यांस्नात्वा
गंगादिसंगमे सप्तजन्मकृतैःपापैर्मुक्तोभवतितत्क्षणात् इतिगर्गः षष्ठीसप्तमीयोगेवारथारूढांशुमालिनः योगोयंपद्म

कोनामसहस्रार्कग्रहैः समः एतच्चस्नानंतिथ्यादिस्मरणानंतरंशिष्टाचारात् सप्तार्कपत्राणिसप्तबदरीपत्राणिशिरसिनिधाय तत्र
मंत्रः यद्यज्जन्मकृतंपापंमयासप्तसुजन्मसु तन्मेरोगंचशोकंचमाकरीहंतुसप्तमी स्नानानंतरमर्घ्यंचदातव्यंमंत्रपूर्वकं सप्तस-
सावहप्रीतसप्तलोकप्रदीपन सप्तम्यासहितोदेवगृहाणार्घ्यंदिवाकर अर्घ्यं जननीसर्वभूतानांसप्तमीसप्तसप्तिके सप्तव्या
हृतिकेदेविनमस्तेसूर्यमंडले प्रार्थना इतिस्नानविधिः अनेनैवतुमंत्रेणपूजयेच्चदिवाकरं कृत्वाषोडशधाराजन्सप्ताश्वरथमं
डले अथकथा युधिष्ठिरउ॰ कथंसाक्रियतेकृष्णमनुष्यैरथसप्तमी चक्रवर्तित्वफलदायाहिरव्याताल्वयाभम कृष्णउवाच
आसीत्कांबोजविषयेयशोवर्मानराधिपः वृद्धेवयसितस्यासीत्सर्वव्याधियुतःसुतः तत्कर्मपापंसोपृच्छद्विनीतंद्विजपुंगवम्
सप्राहराजन्वैश्योयंकृपणःपूर्वजन्मनि ददर्शरथसप्तम्याःक्रियमाणंव्रतंनृप व्रतदर्शनमाहात्म्यादुत्पन्नोजठरेतव अदातावि
भवेयस्मात्तस्मात्सव्याधितोभवत् ततःसराजापप्रच्छकिमेतस्यविधीयताम् यस्यसंदर्शनात्प्राप्तोलोभोस्थानमनुत्तमं ब्राह्म
णउ॰ तदेवक्रियतांराजन्रथसप्तमिसंज्ञितम् व्रतंपापहरंयेनचक्रवर्तित्वमाप्यते राजोवा॰ ब्रूहिविप्रव्रतंकृत्स्नंसविधानंसमंत्रकं
रोगिणांचदरिद्राणांसर्वसंपत्प्रदायकं द्विजउ॰ शुक्लपक्षेतुमाघस्यषष्ठ्यामामंत्रयेद्गृही स्नानंशुक्लतिलैःकार्यंनद्यादौविमलेजले
वापीकूपतडागेषुविधिवद्वर्णधर्मतः देवादीन्पूजयित्वातुनत्वासूर्यालयंगतः सूर्यंपूज्यनमस्कृत्यपुष्पधूपाक्षतैःशुभैः आगत्यप्र

वनंपश्चात्संचयज्ञांश्चनिर्वपेत् संभोज्यातिथिभृत्यांश्चबालकानाश्रितान्स्वयम् विद्यमानेदिनेश्नीयात्वाग्यतस्तैलवर्जितम् रात्रौवि
मान्समाहूयसर्वज्ञान्वेदपारगान् संपूज्यनियमंकुर्यात्सूर्यमाधायचेतसि सप्तम्यांतुनिराहारोभुक्त्वाभोगविवर्जितः भोस्त्वेष्टम्यां-
जगन्नाथनिर्विघ्नंतत्रमेकुरु इत्युच्चार्यनृपश्रेष्ठतोयंतोयेषुनिक्षिपेत् ततोविसृज्यतंविप्रंस्वपेद्भूमौजितेंद्रियः ततःप्रातःसमु
त्थायकृत्वाशौचंशुचिर्नरः कारयित्वारथंदिव्यंकिंकिणीजालमालिनम् सर्वोपस्करसंयुक्तंरत्नैःसर्वांगचित्रितं कांचनंरा-
जतंवाथहयसारथिसंयुतं ततोमध्यान्हसमयेकृतस्नानादिकोव्रती अतिर्यग्वीक्षमाणस्तुपारवंडालापवर्जितः सौरसू-
क्तंजपेत्प्राज्ञआगच्छेत्स्वमालयम् निवृत्तनित्यकार्यस्तुकृत्वाब्राह्मणवाचनं वस्त्रमंडपिकामध्येस्थापयेत्तंरथोत्तमं कुंकु
मेनकृगंधेनचर्चयित्वासमंततः मालाभिःपुष्पधूपैश्चसमंतात्परिवेष्टयेत् धूपेनागरुमिश्रेणधूपयित्वाततोपरि रथस्थं
पूजयेद्भानुंसर्वसंपूर्णलक्षणम् वित्तानुसारंहेमंचवित्तशाठ्यविवर्जितः शाठ्याद्व्रजतिवैकल्यंवैकल्याद्धिफलंभवेत् ततोदेवं
समभ्यर्च्यसरथंसहसारथिं पुष्पैर्धूपैस्तथागंधैर्वस्त्रालंकारभूषणैः फलैर्नानाविधैर्भक्ष्यैर्नैवेद्यैर्घृतपाचितैः पूजयेद्भास्करं
भक्त्यामंत्रैरेभिस्त्रिभिःक्रमात् भानोदिवाकरादित्यमार्तंडजगतांपते अपांनिधेजगद्रक्षभूतभावनभास्कर प्रणतार्ति
हराचिंत्यविश्वचिंतामणेविभो विष्णोहंसादिभूतेशआदिमध्यांतभास्कर भक्तिहीनंक्रियाहीनंमंत्रहीनंजगत्पते प्रसाद

त्तवसंपूर्णमर्चनंयदिहास्तुमे एवंसंपूज्यदेवेशंप्रार्थयेत्कमनोगतं ददातिप्रार्थितंभानुर्भक्त्यासंतोषितोनरैः वित्तहीनोपिविधि
नासर्वमेतत्प्रकल्पयेत् रथंससारथिंसाश्वंवर्णकैर्भिन्नलेखितं सौवर्णंचतथाभानुंयथाशक्त्याविनिर्मितं प्रागुक्तेनविधानेनपू
जयित्वाकविस्तरम् जागरंकारयेद्रात्रौगीतवादित्रनिस्वनैः प्रेक्षणीयैर्विचित्रैश्चपुण्याख्यानकथादिभिः रथयात्रांप्रपश्येन
भानोरायतनंश्रिया अनिमीलितनेत्रस्तुनयेत्तांरजनींबुधः प्रभातेविमलेस्नात्वाकृतकृत्यस्ततोद्विजान् तर्पयेद्विविधैरत्नैर्दा
नैर्वासोविभूषणैः अश्वमेधेनतुल्यंतदिदंब्रह्मविदोविदुः अतोदेयानिदानानियथाशक्त्याविचक्षणैः रथस्तुगुरवेदेयोयथोप
स्करसंयुतः सरक्तवस्त्रयुगुलोरक्तधेनुसमन्वितः एवंचीर्णव्रतोराजन्किंनाप्नोतिजगत्त्रये तस्मात्सर्वप्रयत्नेनकुरुत्वंरथसप्त-
मीं येनारोग्योभवेत्पुत्रस्त्वदीयोनृपसत्तम व्रतस्यास्यप्रभावेणप्रसादाद्भास्करस्यच भविष्यतिमहातेजामहाबलपराक्रमः भो
गान्सविपुलान्राजन्भुंक्तेराज्यमकंटकं दत्वासौरथसप्तम्यांजायतेमानवोत्तमः लभतेपुत्रपौत्रांश्चसूर्यलोकंसपश्यति तत्रस्थि
त्वाकल्पमेकंचक्रवर्तीभविष्यति सूताउ॰ इतिसर्वंसमाख्यायतपोयुक्तोद्विजोत्तमः यथागतंजगामासौनृपःसर्वंचकारह य
थादिष्टंद्विजेंद्रेणतत्तत्सर्वंबभूवह एवंसचक्रवर्तित्वंप्राप्तवान्नृपनंदनः श्रूयतेयस्तुमांधातापुराणेषुपरंतपः यइदंशृणुयाद्भ
क्त्याश्रावयेच्चयथाविधि तस्यैवतुष्यतेभानुर्यच्छत्येवापिसंपदः एवंविधंरथवरंरथवाजियुक्तंहैमंचहेमशानदीधितिनासमेतं

दद्याच्च माघसितसप्तमिवासरे योसः सर्वचक्रगतिरेवमुर्हीं भ्रमन्ति इतिरथस॰ मासा अथैव अचलास॰ व्रतं युधिष्ठिरउ॰ कथंस्त्रि
यः सुरूपाः स्युः सुभगाः सुप्रजास्तथा पुण्यस्य महतश्चात्र सर्वमेतत्फलं यतः अल्पायासेन सुमहद्येन पुण्यमवाप्यते कथयस्व मप्रसा
देन येन श्रेयो भविष्यति श्रीकृष्णउ॰ श्रूयतां भरतश्रेष्ठ रहस्यं मुनिभाषितं यन्मया कस्यचिन्नोक्तं अचलासप्तमीव्रतं वेश्याचेंदुमती
नाम रूपौदार्यगुणान्विता आसीत्कुरुकुलश्रेष्ठ सगरस्य विलासिनी सा वसिष्ठाश्रमं पुण्यं जगाम गजगामिनी वसिष्ठमृषिमासीनं
प्रणम्यानतकंधरा कृतांजलिपुटा भूत्वा प्राहेदं जगतो हितं मया न दत्तं न हुतं नोपवासकृतव्रतं भक्त्या संपूजितः शंभुः स्वामिन् शार्ङ्ग
धरो न च सांप्रतं तप्यमानाया व्रतं किंचिद्वदस्व मे येन दुःखात्तु पापौघाद्दुस्तरामि भवार्णवात् एतत्तस्याः सुबहु च श्रुत्वातिकरुणं व
चः कारुण्यात्कथयामास वसिष्ठो मुनिपुंगवः माघस्य सितसप्तम्यां सर्वकामफलप्रदं रूपसौभाग्यजननं स्नानं कुरु वरानने कृ-
त्वा षष्ठ्यामेकभक्तं सप्तम्यां निश्चलं जलं रम्यं नेत्रालये धार स्वं दत्वा शिरसि दीपकं माघस्य सितसप्तम्यामचलं चालितं च यत्
जलामलानां सर्वेषां स्नानं प्रक्षालनं ततः वसिष्ठवचनं श्रुत्वा तस्मिन्नहनि भारत चकारेंदुमती स्नानं दानं सम्यग्यथाविधि स्ना
नस्यास्य प्रभावेण भुक्त्वा भोगान्यथेप्सितान् इंद्रलोके सरोमध्ये नायकत्वमवाप सा अचलासप्तमीस्नानं कथितं ते विशांप
ते सर्वपापप्रशमनं सर्वसौभाग्यवर्धनं युधिष्ठिरउ॰ सप्तमीस्नानमाहात्म्यं श्रुतं नीरविशेषतः सांप्रतं श्रोतुमिच्छामि विधि

मंत्रसमन्वितं श्रीकृष्णउ॰ एकभक्तेनसंतिष्ठेत्सप्तम्यांसंपूज्यभास्करं सप्तम्यांतुव्रतीप्रातःस्रगंभीरंजलाशयं सरित्सरस्तडागंवादे
वरवानमथापिवा स्नानावगाहंसत्वेष्टंदुष्टसत्वैरदूषितं व्यालांबुपक्षिभिश्चैवजलगैर्मत्स्यकच्छपैः नकेनचाल्यतेयावत्तावत्स्नानं
समाचरेत् सौवर्णेराजनेपात्रेभक्त्यालाबुमयेथवा तैलस्यवर्तिर्दानव्यामहाराजनरंजिना महाराजतंकुसुंभं समाहितमनाभूत्वा
दत्वाशिरसिदीपकं भास्करंत्हृदयेध्यात्वाइमंमंत्रमुदीरयेत् नमस्तेरुद्ररूपायरसानांपतयेनमः वरुणायनमस्तेस्तुहरिवासन
मोस्तुते जलोपरिहरेद्दीपंस्नातासंतर्प्यदेवताः चंदनेनलिखेत्पद्ममष्टपत्रंसकर्णिकं मध्येशिवंसपत्नीकंप्रणवेनचसंयुतं शा
केदलेरविःपूज्योभानुश्चैवानलेनथा याम्येविवस्वान्नैर्ऋत्येभास्करंपूजयेत्ततः पश्चिमेसवितापूज्यःपूज्योर्कश्चानिलेदले सौम्येस
हस्रकिरणःशैवेसर्वात्मकोनृप पूज्याःप्रणवपूर्वास्तुनमस्कारांतयोजिताः पुष्पैःस्रगंधधूपैश्चपृथक्त्वेनयुधिष्ठिर विसृज्य
वस्त्रसंवीतंस्वस्थानंगम्यतामिति विसर्जितेसहस्रांशौसमागम्यस्वमालयं ताम्रपात्रेथवाशक्त्यामृन्मयेवाथभक्तिमान्
स्थापयेत्तिलपिष्टंचप्रयतंसगुडंनथा कांचनंतालकंकृत्वाअशक्तास्तिलपिष्टजं संस्थाप्यरक्तवस्त्रेणपुष्पैर्धूपैरथार्चयेत् तत
स्तंचालयेद्दिप्रैर्दद्यान्मंत्रेणतालकं आदित्यस्यप्रसादेनप्रातःस्नानफलेनच दुष्टदौर्भाग्यदुःखघ्नंमयादत्तंतुतालकं तालकंता
लकपत्रं पूजयित्वोपदेष्टारंविप्रानन्यांश्चपूजयेत् ततोदिनंसमग्रंचसनरोध्यानतत्परः भास्करस्यकथांशृण्वन्ननन्याश्चा-

पिसंहिताः पाखंडादिभिरालापदर्शनस्पर्शनादिकं वर्जयेत्क्षपयेत्प्राज्ञस्ततोबंधुजनैःसह एतत्तेकथितंपार्थरूपसौभाग्यकारकम्
अचलासप्तमीस्नानंसर्वकामफलप्रदं इतिपठतिसमग्रंयः शृणोतिप्रसंगात्कलिकलुषविनाशंसप्तमीस्नानमेतत् मतिमपिचजना
नांयोददातिप्रयत्नात्सुरसदनगतोसौसेव्यतेचाप्सरोभिः इतिअचलासप्तमीव्रतकथासमाप्ता अथअस्यामेवपुत्रसप्तमीव्रतं
मदनरत्नेआदित्यपुराणे आदित्यउ॰ माघमासेतुशुक्लायांसप्तम्यांसमुपोषितः यःपूजयेतमांभक्त्यातस्याहंपुत्रतांव्रजे
एवंचोभयसप्तम्यांमासिमासिकरोत्तम यस्तुमांपूजयेद्भक्त्याकमेकमेकमादरात् कमेकःसंवत्सरः प्रयच्छामिसुतंतस्य
आत्मनोत्वंगसंभवं वित्तंयशस्तथापुत्रमारोग्यंपरमंसदा माघमासेतुयोविप्रःशुक्लपक्षेजितेंद्रियः पाखंडान्पतितानंत्या
न्जल्पेद्द्विजितेंद्रियः उपोष्यविधिवत्षष्ठ्यांश्वेतमाल्यविलेपनैः पूजयित्वातुमांभक्त्यानिशिभूमौस्वपेद्बुधः प्रातरुत्थायस
प्तम्यांकृत्वास्नानादिकाःक्रियाः पूजयित्वातुमांब्रह्मन्वीरहोमंसमाचरेत् वीरहोमंनामअग्निहोत्रहोमः प्रीणयित्वाहरिंभक्त्या
हविषापद्मलोचनं हरिःआदित्यः दध्योदनेनपयसापायसेनद्विजांस्तथा तस्यैवकृष्णापक्षस्यषष्ठ्यांसम्यगुपोषितः तस्यैवेतिमा
घमासस्य रक्तोत्पलैःसुगंधाढ्यैरक्तपुष्पैश्चपूजयेत् एवंयःपूजयेद्भक्त्यानरोमांविधिवत्सदा उभयोरपिदेवेंद्रसुपुत्रंलभतेवरं
इतिपुत्रसप्तमीव्रतंसंपूर्णं अथाष्टमीव्रतानिलिख्यंते चैत्रशुक्लाष्टम्यांभवान्युत्पत्तिः तत्रसुग्मवाक्यात्परायात्या अथभवानी

यात्रोन्काकाशीखंडे भवानींयस्तुपश्येतशुक्लाष्टम्यांमधौनरः नजातुशोकंलभतेसदानंदमयोभवेत् अशोककलिकाश्चाष्टौयेपिबं
तिपुनर्वसौ चैत्रेमासिसिताष्टम्यांनतेशोकमवाप्नुयुः त्वामशोकहराभीष्टंमधुमाससमुद्भवम् पिबामिशोकसंतप्तोमामशोकंसदा
कुरु पुनर्वसुबुधोपेताचैत्रेमासिसिताष्टमी प्रातस्तुविधिवत्स्नात्वावाजपेयफलंलभेत् चैत्रेमासिचसंध्यायांप्रसुप्तेचजनार्द
ने बुधाष्टमीनकर्तव्याहंतिपुण्यंपुराकृतं नचबुधवारयुक्तायांशुक्लाष्टम्यांबुधाष्टमीव्रतं शुक्लपक्षेष्टमीचैवशुक्लपक्षेचतुर्द
शी पूर्वविद्धानकर्तव्याकर्तव्यापरसंयुता दिनद्वयेतद्व्याप्त्यभावव्याप्तौवापूर्वा मुहूर्तमात्रसत्वेपिपरा अथव्रतविधिः मासप
क्षाद्युल्लिख्य ममइहजन्मनिजन्मांतरेवाबाल्याद्यारभ्यकर्मणामनसावाचाजानताजानतावापरस्त्वाद्युत्पत्तिदोषपरिहारा
र्थंपुत्रपौत्रादिसकलमनोरथसिद्धिप्राप्त्यर्थंश्रीपरमेश्वरप्रीत्यर्थंबुधाष्टमीव्रतमहंकरिष्ये बुधंषोडशोपचारैःकलशोपरिपू
जयेत् चतुर्बाहुंग्रहपतिंसुप्रसन्नमुखंबुधं ध्यायेहंशंखचक्रासिपाशहस्तमिलाप्रियं ध्यानं पीतमाल्यांबरधरःकर्णिकार
समद्युते गृहाणपूजांभगवन्समागत्यग्रहेश्वर आवा० उद्बुध्यध्वमितिऋचंपठेत् मध्येबुधंआवा० अधिदेवतांविष्णुमिदं
विष्णुरितिमंत्रेणप्रत्यधिदेवतांनारायणंसहस्रशीर्षेतिसूक्तेनावाह्य इलापतेनमस्तेस्तुनिशेशप्रियसूनवे हेमसिंहासनंदे-
वगृहाणप्रीतयेमम आसनं शीतलोदकमानीतंसुपुष्पसरिदुद्भवं पाद्यंगृहाणदेवेशममाद्यपरितुष्टये पाद्यं तारासुत

नमस्तेस्तुसततंभगवन्प्रिय गृहाणार्घ्यंग्रहपतेनानाफलसमन्वितं अर्घ्यं सगंधद्रव्यसंयुक्तैः शुद्धैःस्वादुसरिज्जलैः आचम्यतां
निशानाथनंदनप्रीतयेमम आचम॰ पयोदधिघृतैश्चैवमधुशर्करसंयुतैः पंचामृतैस्तथादेवस्नानंनत्स्वीकुरुप्रभो पंचामृ॰ वासि
तंगंधकर्पूरैर्निर्मलंजलमुत्तमं स्नानायतेमयाभक्त्यादीयतेव्रतसिद्धये अतोदेवादिकैःषड्भिःस्नापनीयस्ततोबुधः पौरुषे
णचसूक्तेनउद्बुध्यस्वेत्यृचैककया स्नानं पीतवस्त्रद्वयंदेवराजवंशकरप्रभो उर्वशीनाथजनकगृहाणप्रीतयेसदा वस्त्रं यज्ञोप
वीतकंसूत्रंत्रिगुणंत्रिदशप्रिय ममपापविनाशार्थंगृहाणप्रीतयेबुध उपवी॰ हरिचंदनकस्तूरीकर्पूरादिसमन्वितं गंधंभगव
तेतुभ्यमिलानाथनमोस्तुते गंधं अक्षतान्स्व॰ अक्षताः माल्यादी॰ पुष्पा॰ अथांगपूजा बुधाय॰ पादौपू॰ सोमपुत्राय॰ जानुनीपू॰
तारकाय॰ कटीपू॰ राजपुत्राय॰ उदरंपू॰ इलाप्रियाय॰ हृदयंपू॰ कुमाराय॰ वक्षस्थलंपू॰ पुरूरवःपित्रे॰ बाहूपू॰ सोमसुताय॰ स्कं
धौपू॰ पीतवर्णाय॰ मुखंपू॰ ज्ञानाय॰ नेत्रे॰ बुधाय॰ मूर्धानंपू॰ सोमसूनवे॰ सर्वांगंपू॰ वनस्पतिरसो॰ धूपं॰ आज्यंचेतिदीपं नै
वेद्यंगृह्य॰ नैवेद्यं॰ पूगीफलमितितांबूलं इदंफलमितिफलं हिरण्यगर्भेतिदक्षिणां श्रीराजनदीपं उद्बुध्यध्वमितिपुष्पांजलिं
उर्वश्यास्त्वप्रीतिर्यस्तु यःपुरूरवसःपिता ग्रहमध्येसरूपोयोबुधोनःसंप्रसीदतु विशेषार्घ्यं यानिकानिचेतिप्रदक्षिणां नम -
स्कारं आवाहनंनजा॰ प्रार्थना संतुष्टोवायनादस्मादिलानाथोग्रहेश्वरः सतांबूलाष्टलड्डुकंवायनंप्रतिगृ॰ वायनं इतिपूजनं

अथकथा श्रीकृष्णउ॰ बुधाष्टमीव्रतंभूपवक्ष्यामिशृणुपांडव येनचीर्णेननरकंनरःपश्यतिनकर्हिचित् युधिष्ठिरउ॰ बुधाष्टमीव्रतं-
किंतत्कस्मात्पापाच्चमुंचति तत्सर्वंवदनिश्चित्यममदेववदयानिधे श्रीकृष्णउ॰ पुराकृतयुगस्यादौइलोराजाबभूवह बहुभृत्य-
कलत्रमित्रैर्मंत्रिभिःपरिवारितः जगामहिमवत्पार्श्वंमहादेवेनशापितं योस्यांप्रविशतेभूमौसस्त्रीभवतिनिश्चितं सराजा
मृगयासक्तःप्रविष्टस्तदुमावनं एकाकीहयमारूढःक्षणात्स्त्रीत्वंजगामह साबभ्रामवनेशून्येपीनोन्नतपयोधरा काहंक
स्यकुतःप्राप्तानसाबुध्यतकिंचन तांददर्शबुधस्तन्वींरूपौदार्यगुणान्वितां अष्टम्यांबुधवारेचतस्यास्तुष्टोबुधग्रहः ददौगृहा
श्रमंरम्यंआत्मीयंरूपतोषितः पुत्रमुत्पादयामासयोसौरव्यातःपुरूरवाः चंद्रवंशकरोराजाआद्यःसर्वमहीभृतां ततःप्रभृ
तिपूज्येयंसाष्टमीबुधसंयुता सर्वपापप्रशमनीसर्वोपद्रवनाशिनी अथान्यदपितेवच्मिधर्मराजकथानकं कृष्णउ॰ आसीद्राजा
विदेहायांनिमिर्नामसवैरिभिः संग्रामेनिहतोराजातस्यभार्यातिनिर्धना उर्मिलानामबभ्राममहींबालकसंयुता अवंतिनगरं
प्राप्यब्राह्मणस्यनिकेतने चकारोदरपूर्त्यर्थंनित्यंकंडनपेषणे हृत्वासासप्तगोधूमान्ददौबालकयोस्तदा कारुण्यात्पुत्रवा
त्सल्यात्क्षुधासंपीड्यमानयोः कालेनबहुनासाध्वीपंचत्वमगमत्तदा पुत्रस्तस्याविदेहायांगत्वास्वपितुराश्रमे उपविष्टःस
त्ययोगाद्धुभुजेगामनाकुलां अन्विष्यधर्मराजेनसाकन्यानिमिवंशजा श्यामलानामचार्वंगीसर्वलक्षणसंयुता गांधर्वेणो

पयित्वानीतास्वनगरंप्रति तास्तुवाचवरारोहांधर्मराजःस्वकांप्रियां वहस्वसर्वव्यापारंश्यामलेत्वंगृहेमम कुरुष्वसर्वभृत्यानांदानशि-
क्षांयथोचितां किंत्वेतेप्रवराःसप्तकीलकैर्नियंत्रिताः कदाचिदपिनोद्घाट्यास्त्वयावैदेहिनंदिनि एवमस्त्वितिवैप्रोक्तानिजकर्मच-
कारसा ततोभुक्त्वाबुधस्याग्रेबांधवैःप्रीतिपूर्वकं तावदेवहिभोक्तव्यंयावत्साकथ्यतेकथा कदाचिद्व्याकुलीभूत्वाधर्मराजविदे
हजा उद्घाटयित्वाप्रवरंददर्शजननींस्वकां पच्यमानांचरुदतींभीषणैर्यमकिंकरैः लीलयाक्षिप्यतेबध्वातप्ततैलेषुसापुनः
तथैवतलकांबध्वापीडितासामनस्विनी द्वितीयेनरकेतद्वत्सांददर्शस्वमातरं यंत्रेनिष्पीड्यमानासाशिलायांलोष्ठकेनच तृतीये
प्रवरेतद्वत्तामेवचददर्शसा कृमिभिःपीड्यमानासाघंटाप्तुक्तेश्चकल्पितैः श्वभिश्चतुर्थेप्रवरेभीषणैर्दारुणाननैः अभक्ष्यभ-
क्षणाद्येश्चक्रंदतींतांपुनःपुनः पंचमेप्रवरेभूमौकंठेपादेनताडितां संदंशैर्घनपातैश्चच्छिद्यमानांसहस्रशः षष्ठेतामिक्षुयंत्र
स्थांमस्तकेमुद्गराहतां संपीड्यमानामनिशंक्रकचैर्दारुखंडवत् सप्तमेप्रवरेचैवबहुभिरूपैःसुदारुणैः दृष्ट्वातथागतांतांतु
मातरंदुःखकर्षितां श्यामलाम्लानवदनाकिंचिन्नोवाचभामिनी किमर्थंम्लानवदनातिष्ठसित्वमनिंदिते कारणंतत्रमेब्रू
हिकिंचिन्नोद्घाटितास्त्वया एतेप्रवरकाःसप्तनिषिद्धायेपुरामया इत्युक्ताश्यामलाप्राहभर्त्तारंविनयान्विता किंतुपापंकृ
तंराजन्ममममात्रासुदारुणं येनेत्थंविविधैर्घोरैर्बाध्यतेबहुशस्त्वया इत्युक्तःप्रिययाप्राहतांयमःप्रहसन्निव तवमात्रा

व्र०रा०
१२१

कृतस्नेहाद्गोधूमावैत्हृताः किल किंनजानासितद्धेतुंयेनपृच्छसिमामिह ब्रह्मस्वंमयाहृतंकेदहत्यासमसमंकुलं नदेवब्राह्मणरूपेणाद्रि
शत्यासमसमंकुलं गोधूमास्तइमेभूत्वाह्यभिरूपाः सुदारुणाः येपुराब्राह्मणगृहेत्हृतास्तेत्वत्कृतेनतया जानाम्येतद्दहंसर्वंयत्तेमाभा
कृतंपुरा श्यामलोवा० तथापित्वांसमासाद्यदेवंजामातरंविभुं मुच्यतेतेनपापेनयथात्वमधुनाकुरु तच्छ्रुत्वाचिंतयाविष्टश्चि
रंध्यात्वाजगादतां धर्मराजः सुरवासीनप्रियांप्राणहरेश्वरीं इतस्त्वंसप्तमेतीतेजन्मनिब्राह्मणीशुभा आसीत्तस्मिन्तदासं-
गात्सखीनांपर्युपोषिता बुधाष्टमीतुसंपूर्णायथोक्तफलदायिनी तस्याःपुण्यंददस्वत्वंयदिसत्यंममायतः तेनमुच्यतेनरका
त्तेमातापापसंघकृत् तच्छ्रुत्वात्वरितंस्नात्वाददौपुण्यंचिवाचकं स्वमात्रेश्यामलातुष्टातेनमोक्षंजगामसा ऊर्मिलारूपसं
पन्नादिव्यदेहावरांशुका विमानवरमारूढादिव्यमाल्यांबरावृता भर्तुःसमीपेस्वर्गस्थादृश्यतेद्यापिसाजनैः बुधस्यपार्श्वे
नभसिनिमिराजसमीपगा विस्फुरंतीमहाराजबुधाष्टम्याःप्रभावतः युधिष्ठिरउ० यद्येवंप्रवराकृष्णातिथिर्वैतुबुधाष्टमी त
स्याएवविधिंब्रूहियदितुष्टोसिमाधव श्रीकृष्णउ० शृणुपांडवयत्नेनबुधाष्टम्याविधिंशुभम् यदायदासिताष्टम्यांबुध-
वारोभवेद्यदि तदातदाहिसाग्राह्याएकभक्ताशनैर्नृभिः स्नात्वानद्यांतुपूर्वाण्हेगृहीत्वाकरकंनवं जलपूर्णंलसद्रत्नैः कृत्वा
नर्घ्यैःसमन्वितं पूजयेच्चगृहंनीत्वाबुधमेकंक्रमेणतु एकमाषसुवर्णेनतदर्धार्धेनवापुनः कारयेद्बुधरूपंतुस्वशक्त्यावाम

अ०
८

१२१

यत्नतः अंगुष्ठमात्रंपुरुषंचतुर्बाहुंसुलक्षणं पद्ममध्येव्रणंकुंभंपूजयेत्सिततंदुलैः हेमपात्रेचसंस्थाप्यपीतवस्त्रयुगेनच वस्त्रो
परिस्थितंदेवंपीतवस्त्राक्षतादिभिः पंचामृतेनसंस्नाप्यतत्तन्मंत्रैःक्रमेणतु नैवेद्यंगुग्गुलंधूपंदशांगेनसुगंधितं पायसैर्घृतपूपै
श्चमोदकाशोकवर्तिकैः फलैश्चविविधैश्चैवशर्कराभिर्गुडैःशुभैः ततःपुष्पाक्षतैःपीतैर्वक्ष्यमाणैश्चनामभिः नमोबुधायपादौ
तु सोमपुत्रायजानुनी तारकायुक्कटीचैवराजपुत्रायचोदरं इलाप्रियायत्हृदयं कुमारायेतिवक्षसि बाहूपुरूरवःपित्रे अंसौ
सोमसुतायच सुखंतुपीतवर्णायज्ञानायचस्तनद्वयं मूर्धानंतुबुधायेति एषुस्थानेषुपूजयेत् सौवर्णराजतंताम्रंपात्रमादा
यशोभनम् गंधपुष्पाक्षतैःपीतैर्गुडमिश्रांबुपूरितैः जानुभ्यामवनिंगत्वातेनचार्घ्यंनिवेदयेत् उर्वश्याःश्वशुरोयस्तुयःपुरू
रवसःपिता योग्रहाणामधिपतिर्बुधोनःसंप्रसीदतु वरांश्चविष्णुनादत्तान्सकलान्नःप्रसीदतु मंत्रेणानेनदत्वार्घ्यंजप्त्वामंत्र
मिमंबुधः प्रथमेमोदकान्दद्याद्द्वितीयेफेणिकास्तथा तृतीयेघृतपूर्णंचचतुर्थेवटकांस्तथा पंचमेमंडकान्दद्यात्षष्ठेसोहा
लिकास्तथा अशोकवर्तिकाश्चैवसप्तमेमासिकारयेत् अष्टमेशर्करामिश्रैःखांडवैश्चयुधिष्ठिर विप्रायवायनंदद्याद्व्रतीभो
जनमाचरेत् एवंक्रमेणकर्तव्यंबुधाष्टम्यांयुधिष्ठिर बांधवैःसहमित्रैश्चभोक्तव्यंप्रीतिपूर्वकं सौम्यमाख्यानकंश्रुण्वन्नरके
भ्योविमुच्यते सोमात्मजात्मकमशेषसुखमदंतंयःपूजयेत्सकलनीरयुतंचकुंभं पक्वान्नपात्रसहितंसहिरण्यवस्त्रंपश्य

त्यसोयमप्सुरीनंकदाचिदेव युधिष्ठिरउवा॰ उद्यापनविधिंब्रूहिकृपयाभक्तवत्सल कस्मिन्कालेचकिंद्रव्यंकथंसफलभाग्भवेत्
श्रीकृष्णउ॰ आदौमध्येतथाचांतेकुर्यादुद्यापनक्रियां सप्तम्यांप्रयतोभूत्वाकुर्याद्दंतप्रधावनं आचम्यकुर्यात्संकल्पंदशविप्रान्नि
मंत्रयेत् अष्टम्यांप्रातरुत्थायशुचिर्भूत्वाव्रतीततः गंगाद्यादिमहातीर्थेस्नात्वानित्यकृतक्रियः गृहमध्येशुचौदेशेरंगव-
ल्याविराजिते पुण्याहवाचनंकृत्वाकुर्याद्दीक्षाविधानकं प्राणानायम्यविधिवत्कृत्वासंकल्पनादिकं तिथ्याद्युल्लेखनांतत्र
व्रतनामप्रकीर्तयेत् मयाकृतंबुधाष्टम्याव्रतंसांगफलाप्तये उद्यापनंकरिष्येहमित्यक्षतकुशोदकं कृत्वाचार्यादिवरणंकु-
र्याद्वस्त्रादिभिःफलैः ब्राह्मणंवृणुयात्तत्रवस्त्रतांबूलभूषणैः ततःपूजादिकंकुर्याद्ग्रहयज्ञपुरःसरं ततस्त्वष्टदलंकुर्यान्मध्ये
कर्णिकयासह पंचवर्णैःसमापूर्यसकेसरदलानिच कर्णिकायांन्यसेद्धान्यंपंचप्रस्थप्रमाणतः दलेषुचदलाग्रेषुयथाशक्त्या
विनिक्षिपेत् तत्रैवंस्थापयेत्कुंभान्मध्येपूर्वादिदिक्षुच गंगाजलेनसंपूर्यवस्त्रादिभिरलंकृतान् पंचत्वक्पल्लवोपेतान्नवकुं
भान्यथाविधि तदुत्तरेग्रहान्सर्वान्मंडलेस्थापयेत्ततः तत्पूर्वेस्थापयेत्कुंभंवारुणंचविशेषतः वस्त्रत्वक्पल्लवयुतैःपंचरत्नैः
सकांचनैः तत्तन्मंत्रैःप्रतिष्ठाप्यपूजयेच्चयथाविधि सप्तजन्मार्जितंचौर्यंपातकादिचयत्कृतं तद्दोषपरिहारायबुधाष्टमीव्रतं
कृतं तस्यसांगफलप्राप्त्यैपूजांहोमंकरोम्यहं बुधप्रीत्यैचतत्सर्वमितिसंकल्प्यपूजयेत् कर्षमात्रेणराजेंद्रतदर्धार्धेनवापुनः

बुधस्यप्रतिमांकुर्यात्स्ववर्णेनविचक्षणः कर्णिकायांमध्यकुंभेताम्रपात्रेबुधंन्यसेत् पंचामृतेनस्नपनंवस्त्रयुग्मेनवेष्टयेत् आ
त्रेयंपीतवस्त्रंचपीतपुष्पाक्षतादिभिः उपचारैःषोडशभिःपुरुषसूक्तविधानतः तद्दक्षिणेविष्णुमिदंविष्णुरित्यधिदैवतं सहस्र
शीर्षापुरुषवामेप्रत्यधिदैवतं दलेषुविन्यसेद्देवान्प्रागारभ्यप्रदक्षिणं रविंचंद्रंकुजगुरूशुक्रकार्किराहुकेतुकौ अनंतंवामनं
विष्णुंशौरिंसत्यंजनार्दनं हंसंनारायणंचाष्टौदलाग्रेषुचपूजयेत् धूपैर्दीपैश्चनैवेद्यैःफलैश्चविविधैर्यजेत् बहिरिंद्रादयःपू
ज्यादशदिक्पालकास्तथा यमंचचित्रगुप्तंचश्यामलांदक्षिणेन्यसेत् कुंभेषुवंशपात्रेषुअष्टावष्टौचलड्डुकान् यज्ञोपवीतान्
कलशान्दक्षिणासहितान्यजेत् पूजयित्वाततोहोमंशाखोक्तविधिनासुधीः मंडलात्पश्चिमेभागेस्थंडिलंचतुरस्रकं कृ
त्वातुलेखनादीनिकृत्वाग्निंस्थापयेत्सुधीः इध्मदर्भैःपरिस्तीर्यपात्रासादनमाचरेत् पूर्णपात्रनिधानांतेब्रह्मासनमतःपरम्
इध्माधानमुखंमांतेप्रधानाहुतिहावनम् अपामार्गसमिद्भिश्चयवव्रीहितिलैर्घृतैः गोधूमैश्चसितैर्होमंपृथक्पृथगतंद्रितः उद्बु
ध्यस्वेतिमंत्रेणहोममष्टोत्तरंशतं विष्णुमंत्रेणजुहुयात्तथानारायणंहुनेत् अधिप्रत्यधिदेवोचमंत्राभ्यांजुहुयात्तथा ग्रहादि
भ्यश्चजुहुयात्स्मायश्चित्तादिकंतथा पूर्णाहुतिंचजुहुयात्कुर्याद्ब्रह्मविसर्जनम् पूर्णपात्रोद्वासनंचबलिदानमतःपरम् वल्या
दिपूजनंकृत्वादेवतोद्वासनंततः अभिषिच्याथतिलकंरक्षाबंधनमेवच आचार्यंचसपत्नीकंपूजयित्वायथाविधि प्रतिमा-

वस्त्रकलशान्गोदानंदक्षिणांतथा दत्त्वाब्रह्मादिविप्रेभ्यः कलशांश्चसदक्षिणान् ब्राह्मणान्भोजयेत्तस्मादाशिषोवाचयेत्तथा इ
ति श्रीभविष्योत्तरपुराणेबुधाष्टमीव्रतोद्यापनंसं॰ अथशक्लादिश्रावणकृष्णाष्टम्यांदशाफलव्रतं सानिशीथव्यापिनीग्राह्या त
त्रपूजाविधिः नमद्भुतंबालकमंबुजेक्षणंचतुर्भुजंशंखगदाद्युदायुधं श्रीवत्सलक्ष्मंगलशोभिकौस्तुभंपीतांबरंसांद्रपयोदसौ
भगं महार्हवैडूर्यकिरीटकुंडलत्विषापरिष्वक्तसहस्रकुंतलं उद्दामकाच्यंगदकंकणादिभिर्विराजमानंवसुदेवनंदनं कृष्णाय॰
ध्यानं वासुदेवाय॰ आवाह॰ शेषशायिने॰ आसनं॰ तीर्थपादाय॰ पाद्यं॰ गंगाजनकाय॰ अर्घ्यं॰ यमुनावेगसंहारिणेन॰ आचम॰
नित्यमुक्ताय॰ पंचामृतस्ना॰ श्रीगोपालाय॰ स्नानं॰ पीतवाससेन॰ वस्त्रं॰ यज्ञप्रियाय॰ यज्ञोपवी॰ सर्वेश्वराय॰ चंदनं॰ अधोक्ष-
जाय॰ अक्षतान्॰ कमलाप्रियाय॰ पुष्पा॰ तुलसी॰ नामपूजा कृष्णाय॰ विष्णवेन॰ हरयेन॰ शेषशायिने॰ गोविंदाय॰ गरुडध्वजाय॰
दामोदराय॰ हृषीकेशाय॰ पद्मनाभाय॰ उपेंद्राय॰ १॰ अथदोरकबंधनं संसारार्णवमग्नानांनराणांपापकर्मणां इहमोक्षफ
लावाप्तिंकुरुष्वपुरुषोत्तम इतिदोरकबंधनं पारिजातापहाराय॰ धूपं॰ ज्ञानप्रदीपाय॰ दीपं॰ चक्रिणेन॰ नैवेद्यं॰ अघनाशिनेन॰
तांबूलं॰ सर्वव्यापिने॰ दक्षिणां॰ पद्मनाभाय॰ नीराजनं॰ अनंताय॰ पुष्पांजलिं॰ देवदेवनमस्तेस्तुभक्तप्रियदयानिधे गृहाणार्घ्यं
मयादत्तंदेवक्यासहितप्रभो विशेषार्घ्यं त्रिलोकनाथोदेवेशः सर्वभूतदयानिधिः दानेनानेनसंप्रीतोभवत्विहसदामम

दायनमंत्रः श्रीकृष्णःप्रतिगृण्हातिश्रीकृष्णोवैददातिच श्रीकृष्णस्तारकोभाभ्यांश्रीकृष्णायनमोनमः इतिवायनं यस्यस्मृत्येति
प्रार्थना अथकथा सूतउ॰ शृणुध्वमृषयःसर्वेनैमिषारण्यवासिनः पुराचद्वापरस्यांतेकृष्णदेवेनभाषितं तद्व्रतंचप्रवक्ष्यामिसां
गोपांगंमुनीश्वराः पुरावैद्वापरस्यांतेपांडवाःकौरवास्तथा द्यूतंप्रचक्रिरेसर्वेधनमानेनमोहिताः निर्जिताःपांडवादुःखाद्वनंप्रा
पुर्मुनीश्वराः कुंतीविदुरगेहेतुसंस्थिताचमहायशाः तच्छ्रुत्वाकृष्णदेवोपिकृपयापरयायुतः आययौगरुडारूढोविदुरस्यगृहं
प्रति तदापश्यन्महाबाहुंकुंतीपरमहर्षिना विदुरेणार्चितःकृष्णःकुंतींचैवाहभक्तितः नमामित्वामहंकुंतिसंश्रुतंचविडंबनम्
त्वत्पुत्रास्तुमहादुःखात्प्राययुर्गहनंवनं नचापिस्कुमहद्दुःखंसर्वदानन्यमामियं कुंत्युवा॰ हृषीकेशमहाबाहोमहादुःखेनक
र्शिता कृपयापरयादेवरक्षितावयमीदृशाः ममचैवमहादुःखंत्वंजानासिचवैप्रभो मत्पुत्रास्तुमहादुःखात्प्रविष्टागहनंवनम्
कृपयाविदुरोमह्यंकौरव्यःप्रस्थसंमितं ददातिप्रीतिदःकृष्णजीवनायमहामतिः गृहस्यपश्चिमेभागेवसामिचजनार्दन दर्शि
ताकौरवाणांहिसर्वेषांकुमतिस्तथा इतितस्यवचःश्रुत्वाकृष्णःपरमधर्मवित् आहचैनांवासुदेवोभक्तप्रियतमस्तदा व्रतंते
कथयिष्यामियेनदुःखात्प्रमुच्यते पुत्रपौत्रैःपरिवृतास्वंराज्यंप्राप्स्यसेचिरात् दशाफलमितिख्यातंतद्व्रतंकुरुसुव्रते कुंत्यु
वा॰ कस्मिन्कालेतुकर्तव्यंतद्व्रतंकेशवप्रभो वदमांप्रतिइत्युक्तोजगादयादवेश्वरः श्रावणस्यासितेपक्षेअष्टम्यांचनिशीथके

देवक्यांवासुतःदेवस्यप्रादुर्भूतोनसंशयः तस्याग्रेदशगुणितंसूत्रंस्थाप्यप्रपूजयेत् हस्तेबध्वातुतत्सूत्रंदशाहंव्रतमाचरेत् संसारा
र्णवमग्नानांनराणांपापकर्मणां इहामुत्रफलावाप्तिंकुरुष्वपुरुषोत्तम अनेनदोरकंबध्वादशवर्षंव्रतंचरेत् देवस्यपुरतोनित्यंद
शपद्मानिकारयेत् ततश्चशृणुयात्पुण्यांकथामेतांशुभावहां तुलस्याःकृष्णवर्णायादलैर्दशभिरर्चयेत् कृष्णंविष्णुंहृषीकेशं
गोविंदंगरुडध्वजं दामोदरंहृषीकेशंपद्मनाभंहरिंप्रभुं एतैश्चनामभिर्नित्यंकृष्णदेवंसमर्चयेत् नमस्कारंततःकुर्यात्प्रदक्षि
णसमन्वितं एवंदशदिनंकुर्याद्व्रतानामुत्तमंव्रतं आदौमध्येतथाचांतेहोमंकुर्याद्विधानतः कृष्णमंत्रेणजुहुयाच्चरुणाष्टोत्तरंश
तं ततोहोमांतेविधिवत्आचार्यंपूजयेत्सुधीः सौवर्णेताम्रपात्रेवामृन्मयेवेणुपात्रके सौवर्णंतुलसीपत्रंकारयित्वासुलक्षणं
प्रतिमांचतथाकृत्वाअर्चयित्वाविधानतः निधायप्रतिमांतत्रआचार्यायनिवेदयेत् दातव्यागौःसवत्साचवस्त्रालंकारभूषिता
दशहोमेतुकृष्णायपूरिकादशचार्पयेत् दापयेत्तुब्राह्मणायस्वयंभुक्त्वातथैवच उपायनंचगृण्हीष्वसर्वोपस्करसंयुतम् सं
सारार्णवमग्नानांपाहित्वंदेवकीसुत एवंचोपायनंदत्वानमस्कृत्वाक्षमापयेत् दक्षिणाभिर्युतंदेविकर्तव्यंकृष्णसन्निधौ व्रतां
तेदशविप्रेभ्यःप्रत्येकंदशपूरिकाः एवंदशसुवर्षेषुव्रतंकुर्यादनंदिनः एवंव्रतंत्वयादेविकर्तव्यंकृष्णसन्निधौ एवमुक्त्वातुकृ
ष्णोनकुंतीश्रुत्वामुदान्विता उवाचकृष्णदेवंसाममवित्तंनविद्यते मत्तुवाचहृषीकेशस्त्ववित्तंभविष्यति एवमुक्त्वाययौकृष्णः

कर्णंद्रष्टुंसुरवान्वितः कर्णोपिचमहात्मानंकृष्णंदृष्ट्वाप्रहर्षितः सिंहासनंददौतस्मैपाद्यमर्घ्यंतथैवच कर्णोप्युवाचदेवेशंकिमर्थंत-
वचागमः इत्युक्तःकृष्णदेवोथतवमातानिदुःखिता कर्णउ० भूरिभक्त्यानथाकृष्णमातरंप्रणमाम्यहं कथंवादुःखिता
मातामप्रमुच्येतवदस्वमे श्रीकृष्णउ० सुवर्णपात्रेसंपूर्यपायसंक्षीरसंयुतं सहस्रशतनिष्कंतुदातव्यंवायुहस्तके तवमातातथा
प्रीताभविष्यतिनसंशयः एवमुक्तातथाकृष्णोद्वारकामाजगामह कृष्णवाक्यंततःश्रुत्वाकर्णश्चक्रेमहायशाः पंचभक्ष्यसमायुक्तं-
पात्रंस्वर्णेनपूरितम् शतनिष्कसमायुक्तंवायुहस्तेप्रदायसः प्रहसंतीतथाकुंतीपात्रंदृष्ट्वाथहर्षिता देवस्यसन्निधौकुंतीव्रतंचक्रेथभ
क्तितः कृष्णेनकारितंसर्वंममभाग्यायवैध्रुवं कृष्णपूजांततःकृत्वाकथांश्रुत्वाथभक्तितः उपायनंददौतत्रब्राह्मणेभ्योयथाक्रमम्
तुलसीदलंस्वर्णेनकारयित्वासुलक्षणं प्रतिमांविष्णुभक्तायस्वर्णपात्रेनिधायच गोदानेनसमायुक्तामाचार्यायमहासते कुं
तीददौमहादेवीविष्णुर्नःप्रीयतामिति व्रतंदशसुवर्षेषुचकारोद्यापनंततः तद्व्रतस्यप्रभावेण तनूजाश्चागतास्ततः हत्वाश-
त्रून्मृधेसर्वान्कृष्णस्यैवप्रसादतः युधिष्ठिरस्तुधर्मात्मास्वंराज्यंप्राप्तवान्सुधीः सोवाचेदंव्रतंकुंतीद्रौपदींचपतिव्रताम् द
शाफलमितिख्यातंकृष्णदेवेनभाषितं यूयंसर्वेमहादुःखंनिस्तीर्यस्वपुरींगताः व्रतस्यास्यप्रभावेणकृष्णस्यैवप्रसादतः
त्वमप्येवंव्रतंभद्रेकुरुष्वसुसमाहिता पुत्रपौत्रैःपरिवृतासर्वान्कामानवाप्स्यसि आचरव्योतद्व्रतंतस्यैकुंतीपरमहर्षिता सा

पित्रर्कमहाभागाद्रौपदीव्रतमुत्तमं तस्मात्सर्वप्रयत्नेनकर्तव्यंसुजनैःसदा सुभक्त्याकुरुतेनारीव्रतानामुत्तमंव्रतम् सर्वान्कामानवा
प्नोतिविष्णुलोकेमहीयते इदंव्रतंमहापुण्यंव्रतानामुत्तमंव्रतं वदतांशृण्वतांचैवविष्णुलोकोभवेद्ध्रुवम् इतिश्रीभविष्योत्तर
पु॰ दशाफलव्रतोद्या॰ सं॰ अत्रमूलंचिंत्यं अथकृष्णादिमासेनभाद्रकृष्णाष्टम्यांजन्माष्टमीव्रतं तच्चअर्धरात्रव्यापिन्यांका
र्यं रोहिण्यासहिताकृष्णामासिभाद्रपदेष्टमी अर्धरात्रेतुयोगोयंतारापत्युदयेतथा नियतात्माशुचिःसम्यक्पूजांतत्रप्र
वर्तयेत् इतिविष्णुधर्मोत्तरे तस्यकालतत्वेप्युक्तं दिनद्वयेअर्धरात्रव्याप्तावव्याप्तौवापरैवप्रातःसंकल्पकालसत्वाद्दिवारा
त्रियोगात् वर्जनीयाप्रयत्नेनसप्तमीसंयुताष्टमी ब्रह्मवैवर्ते सप्तमीयुक्तानिषेधाच्च यदापूर्वेद्युर्निशीथेकेवलाष्टमीउत्तरे
द्युर्निशीथास्पर्शिन्यष्टमीरोहिणीयुक्तातदापूर्वैवग्राह्या कर्मकालसत्वाद्रोहिणीयोगस्तुकेवलं फलार्थोतिशयार्थोनवमीबु
धादियोगवत् नतुनिर्णयोपयोगी प्रेतयोनिगतानांतुप्रेतत्वंनाशितंनरैः यैःकृताश्रावणेमासिअष्टमीरोहिणीयुता किं
पुनर्बुधवारेणसोमेनापिविशेषतः किंपुनर्नवमीयुक्ताकुलकोट्यास्तुमुक्तिदा उदयेचाष्टमीकिंचिन्नवमीसकलायदि भ
वेत्तुबुधसंयुक्ताप्राजापत्यर्क्षसंयुता अपिवर्षशतेनापिलभ्यतेयदिवानवा तत्रउदयशब्दश्चंद्रोदयपरः सूर्योदयपरत्वे
तुयदापूर्वेद्युर्निशीथेकेवलाष्टमी उत्तरेद्युर्निशीथस्पर्शिन्यष्टमीरोहिणीयुक्तासतीबुधयुक्तातदैवोत्तरास्यात् तदभावेपि

यावद्वचनवाचनिकमितियावत् यदितुबुधभावेपिरोहिणीयोगमात्रात्दैवोत्तरोच्यते तदारोहिणीयोगाभावेपिबुधमात्रस-
द्भावात् उत्तरा ऋक्षयोगवद्वारस्यापिप्राशस्त्यहेतुत्वाच्च किंच यथापूर्वेद्युर्निशीथेऽष्टमीमात्रसत्वेउत्तरेद्युश्चनिशीथात्पूर्वम्
ऋक्षयोगेबुधसत्वेचएतद्वचनादुत्तरेद्युर्व्रतम् एवंपूर्वेद्युर्निशीथेसऋक्षाष्टमीबुधाधिक्यादुत्तरेद्युर्व्रतापत्तिरिति यच्चविष्णु
रहस्ये प्राजापत्यृक्षसंयुक्ताकृष्णानभसिचाष्टमी मुहूर्तमपिलभ्येतसोपोष्याच्चमहाफला अत्रापिमुहूर्तपदंनिशीथाख्यं
यदाहिशुद्धाप्यष्टम्यर्धरात्रेवर्तमानाग्राह्या तदारोहिणीसहितामुहूर्तमप्यहोरात्रेयस्मिन्नित्युक्तंहि लभ्यते अष्टम्यारोहि-
णीऋक्षंतासुपुण्यमुपावसेत् विष्णुरहस्येएवस्पष्टैर्वाहोरात्रसंबंधियत् किंचिन्मुहूर्तप्रतीतिरितिकालतत्वविवेचने
तद्विपरीतं ऋक्षयोगस्यवातात्कालिकत्वेनसार्थक्यात् किंचैतद्वचनद्वयगतापिशब्दस्यस्वार्थेतात्पर्याभावेनऋक्ष-
योगात्प्राशस्त्यबोधकत्वस्यैवउचितत्वादिति यत्तुनस्तत्रोक्तं कर्मकालव्याप्तिशास्त्रादेवप्रधानभूतायाअष्टम्याएवअ
र्धरात्रसत्वेनप्राप्तग्राह्यत्वम् दिवावायदिवारात्रौनास्तिचेद्रोहिणीकला रात्रियुक्तांप्रकुर्वीतविशेषेणेंदुसंयुतां इतिव
चनेनरोहिणीयोगाभावविषयंक्रियतेस्वतस्यार्थः दिनावच्छेदेनरात्र्यवच्छेदेनवाकलामात्रापिचेत् रोहिणीअष्टम्यांना
स्तितदैवचंद्रोदयसंयुता अर्धरात्रव्यापिनीतियावत् दिनद्वयेपितादृश्याअभावेबहुरात्रिसंयुतामुत्तरांप्रकुर्वीतेति नेदं

कर्मकालशास्त्रबाधकमन्यथाप्यर्थसंभवात् तथाहि दिनद्वयेवैषम्येणनिशीथेस्पर्शेअहोरात्रावच्छेदेनरोहिणीयोगाभावेच
विशेषेणाधिक्येनइंदुसंयुता अधिकनिशीथव्यापिनीग्राह्येतियावद्रोहिणीयोगेत्वधिकनिशीथव्यापिनीमपिविहायस्व
ल्पापिनिशीथयोगिनीरोहिणीयुतैवग्राह्येतिव्याख्यांतरं मयूखेद्रष्टव्यं पारणंतुतिथिभांतेकार्यम् तदाहभृगुः जन्माष्ट-
मीरोहिणीचशिवरात्रिस्तथैवच पूर्वविद्धैवकर्तव्यातिथिभांतेचपारणं निषेधोपिब्रह्मवैवर्ते अष्टम्यामथरोहिण्यांनकु-
र्यात्पारणंक्वचित् हन्यात्पुराकृतंकर्मउपवासार्जितंफलं तिथिरष्टगुणंहंतिनक्षत्रंचचतुर्गुणं तस्मात्प्रयत्नात्कुर्वीत
तिथिभांतेचपारणं तत्रदिवसेउभयांतेपारणमितिमुख्यःपक्षः एकतरांतेत्वनुकल्पः यदातुतिथिनक्षत्रयोरन्यतरस्यैव
दिनांतस्तदाहोरात्रेपारणानिषेधादन्यतरांतेपारणाभ्यनुज्ञानात्तर्हिवैवान्यतरांतेकार्या अतएववन्हिपुराणे भांतेकुर्या
त्तिथेर्वापिशस्तंभारतपारणं इतिजन्माष्टमीनिर्णयः अथव्रतविधिः व्रतपूर्वदिनेदंतधावनंकृत्वा उपवासदिनेप्रातरु
त्थायतत्रकृत्यम् श्रावणस्यासितेपक्षेशौचमाचमनंकृतं तस्यांमध्यान्हसमयेनद्यादौविमलेजले कृत्वापामार्गसमिधा
दंतधावनमादितः तिलामलककल्केनस्नानंमृत्स्नानपूर्वकम् नद्यादिकेतदास्नात्वाकृत्वानियममेवच परिधायनवेशु
द्धेवाससीसुसमाहितः ब्राह्मणःक्षत्रियोवैश्यःशूद्रश्चापितथाचरेत् कृत्वानैमित्तिकंकर्मगत्वानिजगृहंपुनः वेदींसम्य

क्मकुर्वीतगोमयेनोपलिप्यतां सूर्यःसोमोयमःकालःसंध्येभूतान्यहःक्षपा पवनोदिक्पतिर्भूमिराकाशंखेचरानराः ब्रह्मशास
नमास्थायकल्पंतामिहसंनिधिं इत्युक्त्वासफलंपुष्पाक्षतजलपूर्णं ताम्रपात्रमादायमासपक्षाद्युल्लिख्य अमुकफलकामःपाप
क्षयकामोवाकृष्णप्रीतयेकृष्णजन्माष्टमीव्रतंकरिष्ये तथा वासुदेवंसमुद्दिश्यसर्वपापप्रशांतये उपवासंकरिष्यामिकृष्णाष्टम्यां
नभस्यहम् अद्यकृष्णाष्टमींचंद्ररोहिण्यासहितंचवै अर्चयित्वोपवासेनभोक्ष्येहमपरेहनि एनसोमोक्षकामोस्मियद्गोविंदनि-
योजितं तन्मेमुंचतुमांत्राहिपतितंशोकसागरे आजन्ममरणंयावद्यन्मयादुष्कृतंकृतं तत्प्रणाशायगोविंदप्रसीदपुरुषोत्तम
इत्युक्त्वापात्रस्थंजलंनिक्षिपेत् ततःकदलीस्तंभवासोभिराम्रपल्लवयुतसजलपूर्णकलशैर्दीपैःपुष्पमालाभिर्युतंस्वगरुधूपि
तं अमरखड्गकृष्णच्छागरक्षामणिद्वारंन्यस्तमुसलादियुतंमंगलोपेतं षष्ठ्यादेवक्यासूतिकागृहंविधायतस्यसमंताद्भित्ति
षुकुंकुमांजलौन्देवगंधर्वादीन्खड्गचर्मधरवसुदेवदेवकीनंदयशोदागर्भगोपीगोपान्कंसनियुक्तान्गोधेनुकुंजरान्य
मुनांतन्मध्येकालियंअन्यच्चतत्कालीनंगोकुलचरितंयथासंभवंलिखित्वासूतिकागृहमध्येमच्छाद्यवृत्तमंचकंस्थापयेत् अ
थपूजाविधिः कृत्वानैमित्तिकंकर्मस्नात्वानिजगृहंपुनः येभ्योमातेवापित्रेतिमंत्रान्जपित्वा आगमार्थंतुघंटानादंकृत्वा
अपसर्पंत्विति छोटिकामुद्रांतीक्ष्णदंष्ट्रेतिक्षेत्रपालंप्रार्थ्य आचम्यप्राणानायम्यसंकल्प्य ममसहकुटुंबस्यक्षेमस्थैर्यवि

जयाभयायुरारोग्यैश्वर्याभिवृध्यर्थं धर्मार्थकाममोक्षचतुर्विधपुरुषार्थसिध्यर्थं निशीथे सपरिवारश्रीकृष्णप्रीत्यर्थं च पुराणोक्तम
कारेण पुरुषसूक्तविधानेन च यथासंभवनियमेन यथोपचारमीलितद्रव्यैः जन्माष्टमीव्रतांगत्वेन परिवारसहितश्रीकृष्णपूजन
महं करिष्ये कलशार्चनं शंखार्चनं च कुर्यात् पुरुषसूक्तेन न्यासं कुर्यात् रंगवल्लीसमायुक्ते सर्वतोभद्रमंडले अव्रणं सजलं-
कुंभं ताम्रमृन्मयमेव वा संस्थाप्य वस्त्रसंवीतं कंठदेशे स्रक्शोभितं पंचरत्नसमायुक्तं फलगंधाक्षतैर्युतं सहिरण्यं समासा
द्य ताम्रेण पटलेन वा वंशमृन्मयपात्रेण यवपूर्णेन चैव हि आच्छादयेत् चैलेन लिखेदष्टदलं ततः काञ्चनी राजती ताम्री पित्तली मृन्म
यी च वा वार्क्षी मणिमयी चैव वर्णकैर्लिखिताथवा इत्युक्तान्यतमेन प्रतिमां विधाय अग्न्युत्तारणं कृत्वा प्रतिमाकपोलौ स्पृष्ट्वा
तद्देवतानाममूलमंत्रं प्रणवादिचतुर्थ्यंतं नाम अस्मै देवतासंस्थायै स्वाहेति मंत्रं पठन् प्राणप्रतिष्ठां कुर्यात् अस्माद् त्यस्यस्था
नेतत्तद्देवतानामयात्द्यं गायद्भिः किंनराद्यैः सततपरिवृता वेणुवीणानिनादैः शृंगारादर्शकुंतप्रवरकृतकरैः किंनरैः सेव्यमा-
ना पर्यंके स्वास्तृता या मुदिततरसुखी पुत्रिणी सम्यगास्ते सा देवी देवमाता जयति सुवदना देवकी दिव्यरूपा इति देवकीमंच
कोपरि बालकं स्कंसं पर्यंके स्तनपायिनं श्रीवत्सवक्षसं शांतं नीलोत्पलदलच्छविं एवं देवकीसहश्रीकृष्णं ध्यात्वा ॐ नमो देव्यै
श्रियै इति श्रियं देवकीसहितं वसुदेवं यशोदासहितं नंदं श्रीकृष्णसहितं बलदेवं चंडिकां च नमोंतैर्नाममंत्रैः पूजयेत् तत्र मंत्रः

योगेश्वरायदेवाययोगिनांपतयेविभो योगोद्भवायनित्यायगोविंदायनमोनमः स्नानं यज्ञेश्वरायदेवायतथायज्ञोद्भवायच योगानां
पतयेनाथगोविंदायनमोनमः वस्त्रं कृष्णाय॰ चंदनं॰ कृष्णाय॰ यज्ञोप॰ पुष्पाणि॰ अथांगपूजा गोविंदाय॰ पादौपू॰ माधवायजंघे॰
मधुसूदनाय॰ कटीपू॰ पद्मनाभाय॰ नाभिं॰ हृषीकेशाय॰ हृदयं॰ संकर्षणाय॰ स्तनौ॰ वामनाय॰ बाहू॰ दैत्यसूदनाय॰ हस्तौपू॰ हरि
केशाय॰ कंठं॰ चारुमुखाय॰ मुखंपू॰ त्रिविक्रमाय॰ नासिकां॰ पुंडरीकाक्षाय॰ नेत्रेपू॰ नृसिंहायन॰ श्रोत्रे॰ उपेंद्राय॰ ललाटं॰ हरये॰
शिरःपूजयामि श्रीकृष्णाय॰ सर्वांगपू॰ कृष्णाय॰ धूपं॰ कृष्णाय॰ दीपं॰ विश्वेश्वरायदेवायतथाविश्वोद्भवायच विश्वानांपतयेतु-
भ्यंगोविंदायन॰ नैवेद्यं॰ यज्ञाययज्ञेश्वराययज्ञपतयेयज्ञसंभवायगोविंदायनमोनमइति आदौसर्वेषांयज्ञपदानांस्थानेयोग
पदाद्युक्त्वा अयमेवमंत्रः स्नानेविश्वाय॰ विश्वेश्वरायइत्युक्त्वा नैवेद्यं॰ आचमनीयं॰ करोद्वर्तनं॰ फलं॰ तांबूलं॰ दक्षिणांनीराज
नं॰ पुष्पांजलिं॰ धर्मायधर्मेश्वरायेत्यादिस्वाहांतस्तिलहोमे विश्वायविश्वेश्वरायेत्यादिशयने सोमायसोमेश्वरायेत्यादिचंद्र
पूजायांइतिमंत्राउक्ताः ततोगव्यघृतेनाग्नौवसोर्धारांकश्चिद्दद्युरुघृतेनेति ततोजातकर्मनालच्छेदषष्ठीपूजानामकर्माणिसंक्षेपेण-
कार्याणि ततश्चंद्रोदयेरोहिणीयुतंचंद्रंस्थंडिलेप्रतिमायांवानाममंत्रेणसंपूज्य शंखपूर्णतोयंसमादायसपुष्पकुशचंदनं जानुभ्या
मवनिंगत्वाचंद्रायार्घ्यंनिवेदयेत् क्षीरोदार्णवसंभूतअत्रिगोत्रसमुद्भव गृहाणार्घ्यंशशांकेदंरोहिण्यासहितोमम ज्योत्स्ना

याः पतये तुभ्यं ज्योतिषां पतये नमः नमस्ते रोहिणीकांत सुधावास नमोस्तु ते नमो मंडलदीपाय शिरोरत्नाय धूर्जटेः कलाभिर्व
र्धमानाय नमश्चंद्राय चारवे इति प्रणमेत् अनंतं वामनं शौरिं वैकुंठं पुरुषोत्तमं वासुदेवं हृषीकेशं माधवं मधुसूदनं वराहं पुं
डरीकाक्षं नृसिंहं दैत्यसूदनं दामोदरं पद्मनाभं केशवं गरुडध्वजं गोविंदमच्युतं कृष्णमनंतमपराजितं अधोक्षजं जगद्बीजं
सर्गस्थित्यंतकारणं अनादिनिधनं विष्णुं त्रिलोकेशं त्रिविक्रमं नारायणं चतुर्बाहुं शंखचक्रगदाधरं पीतांबरधरं नित्यं व
नमालाविभूषितं श्रीवत्सांकं जगत्सेतुं श्रीकृष्णं श्रीधरं हरिम् शरणं त्वां प्रपद्येहं सर्वकामार्थसिद्धये प्रणमामि सदा देवं वा
सुदेवं जगत्पतिं इति मंत्रैः प्रणम्य त्राहि मां सर्वलोकेश हरे संसारसागरात् त्राहि मां सर्वपापघ्न दुःखशोकार्णवात्प्रभो सर्व
लोकेश्वर त्राहि पतितं मां भवार्णवे देवकीनंदन श्रीश हरे संसारसागरात् त्राहि मां सर्वदुःखघ्न रोगशोकार्णवाद्धरे दुर्गतांस्त्रा
यसे विष्णो ये स्मरंति सकृत्सकृत् सोहं देवातिदुर्वृत्तस्त्राहि मां शोकसागरात् पुष्कराक्ष निमग्नोहं मायाविज्ञानसागरे त्राहि
मां देवदेवेश त्वत्तो नान्योस्ति रक्षिता यद्बाल्ये यच्च कौमारे यौवने यच्च वार्धके तत्पुण्यं वृद्धिमाप्नोति पापं हर हलायुध इति मंत्रैः प्रा
र्थयेत् ततः स्तोत्रं पठन् पुराणश्रवणादिना जागरणं कुर्याद्द्वितीयेह्नि प्रातःकाले स्नानादि नित्यं कृत्वा पूर्ववद्देवं पूजयित्वा ब्राह्म
णान्भोजयेत् तेभ्यः सुवर्णधेनुवस्त्रादि दत्वा कृष्णो मे प्रीयतामिति वदेत् नमस्ते वासुदेवाय गोब्राह्मणहिताय च शांतिरस्तु

शिवंचास्त्वित्यु॰ प्रतिमासुद्धास्य तांब्राह्मणाय दत्त्वा पारणंकृत्वाव्रतंसमापयेत् सर्वायसर्वेश्वरायसर्वेषांपतयेनमः सर्वसंभवायगोविं-
दायनमोनमइतिपारणं॰ भूताय भूत पतयेनमइतिनमस्कारः इतिपूजाविधिः अथकथा युधिष्ठिरउ॰ जन्माष्टमीव्रतंब्रूहिवि
स्तरेणममाच्युत कस्मिन्कालेसमुत्पन्नंकिंपुण्यंकोविधिःस्मृतः श्रीकृष्णउ॰ मल्लयुद्धेपरावृत्तेशमितेकुकुरांधके स्वजनैर्बहु
भिःस्त्रीभिःसमैःस्निग्धैःसमावृते हतेकंसासुरेदुष्टेमथुरायांयुधिष्ठिर देवकीमांपरिष्वज्यकृत्वोत्संगेरुरोदह वसुदेवोपित
त्रैववात्सल्यात्प्ररुरोदह समालिंग्याश्रुवदनः पुत्रपुत्रेत्युवाचह सगद्गदस्वरोदीनोबाष्पपर्याकुलेक्षणः बलभद्रंचमांचैवप-
रिष्वज्यमुदापुनः अद्यमेसफलंजन्मजीवितंचसुजीवितं उभाभ्यामद्यपुत्राभ्यांससमुद्भूतःसमागमः एवंहर्षेणदांपत्यंत्दृष्टं
पुष्टंतदाह्यभूत् प्रणिपत्यजनाःसर्वेबभूवुस्तेप्रहर्षिताः एवंमहोत्सवंदृष्ट्वासमाजेमधुसूदनं जनाऊचुः प्रसादःक्रिय
तामस्यलोकस्यार्तस्यदुःखहन् यस्मिन्दिनेचप्रासूतदेवकीत्वांजनार्दनं तद्दिनंदेहिवैकुंठकुर्मस्तत्रमहोत्सवं एवंस्तुतेज
नौघेनवसुदेवोमयेक्षितः विलोक्यबलभद्रंचमांचत्दृष्टतनूरुहः उवाचसमसादेशाल्लोकान्जन्माष्टमीव्रतं मथुरायांततः
पश्चात्पार्थसम्यक्प्रकाशितं कुर्वंतुब्राह्मणाःसर्वेव्रतंजन्माष्टमीदिने क्षत्रियाश्चैववैश्याःशूद्रायेन्येपिधर्मिणः युधिष्ठि
रउवाच कीदृशंतद्व्रतंदेवसर्वैर्देवैरनुष्ठितं जन्माष्टमीतिसंज्ञंचपवित्रंपापनाशनं येनत्वंतुष्टिमायासिकार्त्स्न्येनप्रभवाव्य

य एतन्मेतत्वतोब्रूहिसविधानंसविस्तरं श्रीकृष्णउ० मासिभाद्रपदेष्टम्यांनिशीथेकृष्णपक्षके शशांकेवृषराशिस्थेऋक्षेरोहिणि
संज्ञके योगेस्मिन्वसुदेवाद्धिदेवकीमामजीजनत् भगवत्याश्चतन्नैवक्रियतेस्म महोत्सवः योगेस्मिन्कथितेष्टम्यांसिंहराशिग
तेरवौ सप्तम्यांलघुभुक्कुर्याद्दंतधावनपूर्वकं उपवासस्यनियमंरात्रौस्वपेज्जितेंद्रियः केवलेनोपवासेनतस्मिन्जन्मदिनेमम
सप्तजन्मकृतात्पापान्मुच्यतेनात्रसंशयः उपावृत्तस्तुपापेभ्यो यस्तुवासोगुणैःसह उपवासःसविज्ञेयःसर्वभोगविवर्जितः
ततोष्टम्यांतिलैःस्नात्वानद्यादौविमलेजले सुदेशेशोभनंकुर्याद्देवक्याःसूतिकागृहम् सितपीतैस्तथारक्तैःकर्बूरैर्हरितैरपि
वासोभिःशोभितंकृत्वासमंतात्कलशैर्नवैः पुष्पैःफलैरनेकैश्चदीपालिभिरितस्ततः पुष्पमालाविचित्रंचचंदनागरुधूपितं अनि
रम्यमनोपम्यंरक्षामणिविभूषितं हरिवंशस्यचरितंगोकुलंचविलेखयेत् ततंवादित्रनिनदैर्वीणावेणुरवाकुलम् नृत्यगीत
क्रमोपेतंमंगलैश्चसमंततः वेष्टकारीलोहखड्गंकृत्वानादंचयत्नतः द्वारेविन्यस्यमुसलंरक्षितंरक्षपालकैः षष्ठ्यादेव्याधिष्ठि
तंचतद्गृहंचोत्सवैस्तथा एवंविभवसारेणकृत्वातत्सूतिकागृहम् तन्मध्येप्रतिमास्थाप्यासाचाप्यष्टविधास्मृता कांचनीरा
जतीताम्रीपैत्तलीमृन्मयीतथा वार्क्षीमणिमयीचैववर्णकैर्लिखिता तथा सर्वलक्षणसंपूर्णांपर्यंकेचाष्टशल्यके प्रतप्तकांच
नाभासंसुप्ताहर्षितांसुतपस्विनीं प्रसूतांचप्रसुप्तांचस्थापयेन्मंचकोपरि मांतत्रबालकंसुप्तंपर्यंकेस्तनपायिनम् श्रीवत्सव-

क्षसंशांतंनीलोत्पलदलच्छविं यशोदांतत्रचैकस्मिन्प्रदेशेसूतिकागृहे तद्वच्चकल्पयेत्सार्थप्रसूतांवरकन्यकाम् तथैवममपार्श्व
स्थाःकृतांजलिपुटान्नृप देवाग्रहास्तथानागायक्षविद्याधरामराः प्रणताःपुष्पमालाग्रचारुहस्ताःसुरासुराः संचरंतइवाकाशेप्र
हारैरुदितोदितैः वसुदेवोपितत्रैवखङ्गचर्मधरःस्थितः कश्यपोवसुदेवोयमदितिश्चैवदेवकी शेषोवैबलदेवोयंयशोदादिति
रन्वभूत् नंदःप्रजापतिर्दक्षोगर्गश्चापिचतुर्मुखः गोप्यश्चाप्सरसश्चैवगोपाश्चापिदिवौकसः एषावतारोराजेंद्रकंसोयंकाल
नेमिजः तत्रकंसनियुक्ताश्चमोहितायोगनिद्रया गोधेनुकुंजराश्चैवदानवाःशस्त्रपाणयः नृत्यंतश्चाप्सरोभिस्तेगंधर्वागीत
तत्पराः लेखनीयश्चतत्रैवकालियोयमुनाह्रदे इत्येवमादियत्किंचिद्विद्यतेचरितंमम लेखयित्वाप्रयत्नेनपूजयेद्भक्तितत्परः
रम्यमेवंबीजपूरैःपुष्पमालादिशोभितं कालदेशोद्भवैःपुष्पैःफलैश्चापियुधिष्ठिर पाद्यार्घ्यैःपूजयेद्भक्त्यागंधपुष्पाक्षतैःस
ह मंत्रेणानेनकौंतेयदेवकींपूजयेन्नरः गायद्भिःकिंनराद्यैःसततपरिगतावेणुवीणानिनादैर्भृंगारादर्शकुंभप्रकटकृतकरैः
किन्नरैःसेव्यमाना पर्यंकेस्वास्तृतेयामुदिततरसुखीपुत्रिणीसम्यगास्ते सादेवीदेवमाताजयतुचसस्रुतादेवकीकांतरूपा
पादावभ्यंजयंतीसाध्वीदेव्याश्चरणांतिके निशीथेपंकजेपूज्यादिव्यगंधानुलेपनैः पंकजैःपूजयेद्देवींनमोदेव्यैश्रियेइति दे
ववत्सेनमस्तेस्तुकृष्णोत्पादनतत्परा पापक्षयकरीदेवीतुष्टियानुमयार्चिता प्रणवादिनमोंतंचपृथक्नामानुकीर्तनम् कु

यांत्पूजांविधिज्ञश्चसर्वपापप्रणुत्तये देवक्यैववसुदेवाय वासुदेवायचैवहि बलदेवायनंदाययशोदायैपृथक्पृथक् क्षीरादिस्नप
नंकृत्वाचंदनेनानुलेपयेत् विध्यंतरमपीच्छंतिकेचिदत्रैवसूरयः चंद्रोदयेशशांकायअर्घ्यंदत्वाहरिंस्मरन् अनंतंवामनंशौरिं
वैकुंठंपुरुषोत्तमं वासुदेवंहृषीकेशंमाधवंमधुसूदनं वराहंपुंडरीकाक्षंनृसिंहंब्रह्मणःप्रियम् गोपीशंपुंडरीकाक्षंसृष्टिस्थि
त्यंतकारकं अनादिनिधनंविष्णुंत्रैलोक्येशंत्रिविक्रमं नारायणंचतुर्बाहुंशंखचक्रगदाधरं पीतांबरधरंनित्यंवनमालावि
भूषितं श्रीवत्सांकंजगत्सेतुंश्रीपतिंश्रीधरंहरिम् योगेश्वरायदेवाययोगिनांपतयेनमः योगोद्भवायनित्यायगोविंदायन-
मोनमः यज्ञेश्वरायदेवायतथाजलशयायच यज्ञानांपतयेनाथगोविंदायनमोनमः एभिर्मंत्रैःसमाराध्यअर्चयेत्पूजयेद्धरिं जग
न्नाथनमस्तुभ्यंसंसारभयनाशन जगदीशायदेवायभूतानांपतयेनमः धर्मेश्वरायधर्मायशंभवायजगत्पते धर्मज्ञायचदेवाय
गोविंदायनमोनमः मंत्रेणानेननैवेद्यंशयनादितथैवच चंद्रायार्घ्यंचमंत्रेणअनेनैवाथदापयेत् क्षीरोदार्णवसंभूतअत्रिगोत्रस
मुद्भव गृहाणार्घ्यंशशांकेशरोहिण्यासहितोमम ज्योत्स्नापतेनमस्तुभ्यंज्योतिषांपतयेनमः नमस्तेरोहिणीकांतअर्घ्यंनःप्र
तिगृह्यतां स्थंडिलेस्थापयेद्देवंशशांकंरोहिणीयुतं देवक्यावसुदेवंचनंदंचैवयशोदया बलदेवंमयासार्धंभक्त्यापरमया
नृप संपूज्यविधिवद्देहीकिंनाप्नोत्यतिदुर्लभं एकादशीनांविंशत्यःकोट्योयाःप्रकीर्तिताः ताभिःकृष्णाष्टमीतुल्याततोनंतच

तुर्दशी अर्धरात्रे वसोर्धारांपातयेद्गव्यसर्पिषा ततोवर्द्धापयेन्नालंषष्ठीनामादिकंमम कर्तव्यंतत्क्षणाद्रात्रौप्रभातेनवमीदिने
यथाममतथाकार्योभगवत्यामहोत्सवः ब्राह्मणान्भोजयेद्भक्त्यातेभ्योदद्याच्चदक्षिणां हिरण्यंमेदिनीगावोवासांसिकुसु-
मानिच यद्यदिष्टतमंतत्तत्कृष्णोमेप्रीयतामिति यंदेवंदेवकीदेवीवसुदेवादजीजनत् भौमस्यब्रह्मणोगुप्त्यैतस्मैब्रह्मात्मने
नमः नमस्तेवासुदेवायगोब्राह्मणहितायच शांतिरस्तुशिवंचास्तु इत्युक्त्वातांविसर्जयेत् ततोबंधुजनौघंचदीनानाथांश्चभोज
येत् भोजयित्वासुशांतांस्तान्स्वयंभुंजीतवाग्यतः एवंयःकुरुतेदेव्यादेवक्याःसुमहोत्सवम् प्रतिवर्षंविधानेनसभक्त्याधर्मनंद
न नरोवाय दिवानारीयथोक्तंलभतेफलं पुत्रसंताननमारोग्यंसौभाग्यमतुलंलभेत् इहधर्मरतिर्भूत्वामृतोवैकुंठमाप्नुयात् तत्र
देवविधानेनवर्षलक्षंयुधिष्ठिर भोगान्नानाविधान्भुक्त्वापुण्यशेषादिहागतः सर्वकामसमृद्धेचसर्वाशुभविवर्जिते कुलेनृपा
तिशीलानांजायतेत्वच्छयोपमः यस्मिन्सदेवदेशेतुलिखितंतुपदार्पितम् ममजन्मदिनंपत्रसर्वालंकारभूषितं पूजयेत्पांडवश्रे
ष्ठजनैरुत्सवसंयुतैः परचक्रभयंतत्रनकदापिभवेत्तुनः पर्जन्यःकामवर्षीस्यादीतिभ्योनभयंभवेत् गृहेवापूज्यतेतत्र देवक्या
श्चरितंमम तत्रसर्वंसमृद्धंस्यान्नोपसर्गादिकंभवेत् पशुभ्योनकुलाद्व्यालात्पापरोगाच्चपातकात् राजतश्चोरतोवापिनकदा
चिद्भयंभवेत् संसर्गेणापियोभक्त्याव्रतंपश्येदनाकुलं सोपिपापविनिर्मुक्तःप्रयातिहरिमंदिरं जन्माष्टमीजनमनोनयनाभि

रामापापापहाकृष्णोतिर्नेविदधातिगोपाः योदेवकींसूनसुतांचभजेद्धिनस्त्यांपुनानवाप्यससुपैतिपदंसविष्णोरिति व्यासउ० निवृ
त्तेभारतेयुद्धे कृतशौचोयुधिष्ठिरः उवाचवाक्यंधर्मात्माकृष्णंदेवकिनंदनं युधिष्ठिरउ० त्वत्प्रसादाच्चगोविंदनिहताःशत्रवोरणे
कर्णश्चनिहतःसैन्येत्वत्प्रसादाज्जनार्दन मासंनिष्कंटकंराज्यंकृत्वाकर्मसुदुष्करं आचारोदंडनीतिश्चराजधर्माःक्रियान्विताः
अधुनाश्रोतुमिच्छामिशकृद्वंजन्माष्टमीव्रतं जन्माष्टमीव्रतंब्रूहिविस्तरेणममाच्युत कुतःकालेसमुत्पन्नंकिंपुण्यंकोविधिःस्मृतः
श्रीकृष्णउ० शृणुराजन्प्रवक्ष्यामिव्रतानामुत्तमंव्रतं यतःप्रभृतिविख्यातंफलेनविधिनान्वितं राजवंशसमुत्पन्नैर्दैत्यानीकैःसु
पीडिता धराभारभराक्रांताब्रह्माणंशरणंययौ ज्ञात्वातदाप्रभुर्ब्रह्माभूमेर्भारंसमाहितः श्वेतद्वीपंसमागत्यसर्वदेवसमन्वि
तः समाहितमतिर्ब्रह्मामांतुष्टावविशांपते स्तुत्यानयाहंसंप्रीतस्तेषांदृग्गोचरोभवम् दृष्ट्वामांप्रणिपत्याशुभक्तिभावसम-
न्वितः ब्रह्माणमग्रतःकृत्वातुष्टाःसर्वेदिवौकसः विजिज्ञपुर्महाराजभूमिभारापनुत्तये उपधार्यतदातेषांवचनंचान्वचिं
तयम् केनोपायेनहंतव्यादानवाःक्षत्रियोद्भवाः स्वधर्मनिरताःसर्वेमहाबलपराक्रमाः ततोनिश्चित्यमनसाब्रह्माणमहमब्रु
वं वसुदेवोदेवकीचप्रजाकामौपुरानृप भक्त्यामांभजमानौतौतेनसर्वंतौमहत्तपः तयोःप्रसन्नःसंप्रीतोयाचतांवरमुत्तमं अब्रु
वंतावपिननौवरयामासतुःकिल यदिदेवप्रसन्नोसित्वादृशोनौभवेत्सुतः तथेतिचमयानाभ्यामुक्तंप्रीतेनचेतसा तत्कामपूरणा

र्थायसंभविष्याम्यहंतयोः दिवौकसोपिस्वांशेनसंभवंतुसुरस्त्रियः योगमायाचनंदस्ययशोदायांभविष्यति देवक्याजठरेगर्भमनं
तंधाममामकं संनिकृष्यततस्तूर्णंरोहिण्याजठरेकुरु इतिसंदिश्यतान्सर्वानहमंतर्हितोभवम् ततोदेवैःसमंब्रह्मातांदिशंप्रणिप
त्यच आश्वास्यचमहींदेवींवसुधात्रींजगामह ततोहंदेवकीगर्भमविशंस्वेनतेजसा हतेषुषट्सुबालेषुदेवक्याऔग्रसेनिना
कारागृहस्थितायांचवसुदेवेनवैसह गतेर्धरात्रसमयेसुप्तेसर्वजनेनिशि भाद्रमास्यसितेपक्षेऽष्टम्यांब्रह्मर्क्षसंयुजि सर्वग्रह
शुभेकालेप्रसन्नहृदयाशये आविरासंनिजेनैवरूपेणत्वद्यवनीपते वसुदेवोपिमांदृष्ट्वाहर्षशोकसमन्वितः भीतःकंसादतितरां
तुष्टावचकृतांजलिः पुनःपुनःप्रणम्याथप्रार्थयामाससादरं वसुदेवउ० अलौकिकमिदंरूपंदुर्दर्शंयोगिनामपि यत्तेजसारिष्टगृ
हमभवत्संप्रकाशितं उद्विग्नोभगवन्कंसाद्योमेबालानघातयत् उपसंहरतस्माच्चएतद्रूपमलौकिकं शंखचक्रगदापद्मलसत्कौ
स्तुभमालिकं किरीटहारमुकुटकेयूरवलयांकितं तडिद्वसनसंवीतंक्वणत्कांचनमेखलं स्फुरद्राजीवताम्राक्षंस्निग्धांजनसम
प्रभं महामरकतस्वच्छंकोटिसूर्यसमप्रभं कृष्णउ० एवंसंप्रार्थितोराजन्वसुदेवेनवैतदा तेनैवनिजरूपेणभूत्वाहंप्राकृतःशिशुः
नयमांगोकुलमितिवसुदेवमचोदयम् समादायागमत्सोपिनंदगोकुलमंजसा द्वाराण्यपावृतान्यासन्मत्प्रभावात्स्वयंप्रभो द
दौमार्गंचकालिंदीजलकल्लोलमालिनी ततोयशोदाशयनेन्यस्यचानकदुंदुभिः तत्पर्यंकेस्थितांगृह्यदारिकामगमत्पुनः द्वाराणि

॥

पिहितान्यासन्पूर्ववन्निगडंततः विन्यस्यपादयोरास्तेशयनेन्यस्यदारिकां ततोरुरोदमहतास्वरेणापूर्यसादिशः तस्यारुदितशब्दे
नउत्थितारक्षकागृहात् कंसायागत्यचाचरव्युःप्रसूतादेवकीतिच सोपितल्पात्समुत्थायभयेनातीवविह्वलः जगामसूतिकागे
हेदेवक्याःप्रस्खलन्पथि दारिकांशयनात्गृह्यरुदंत्याश्चैवस्वस्रसः अपोथयत्शिलापृष्ठेसापितस्यकराच्च्युता उवाचकंसमा
भाष्यदेवीत्याकाशगासती किंमयाहतयामंदजातःकुत्रापितेरिपुः इत्युक्तोसौसकंपोभूत्परमोद्विग्नमानसः आज्ञापयामासत
तोबालानांकदनायवै दानवाअपिबालानांकदनंचक्रुरुद्यताः वनेषूपवनेचैवपुरग्रामवनेष्वपि अहंचगोकुलेस्थित्वापूतनांबा
लघातिनीं स्तनंदातुंप्रवृत्तांचप्राणैःसममशोषयम् तृणावर्तबकारिष्टान्धेनुकंकेशिनंतथा अन्यानपिखलान्हत्वास्वप्रभाव
मदर्शयं ततश्चमथुरांगत्वाहत्वाकंसादिदानवान् ज्ञातीनांपरमंहर्षंकृतवानस्मिसादरं देवकीवसुदेवौचपरिष्वज्यमुदाम
म आनंदजैर्जलैर्मूर्ध्निसिषेचयामासतुर्नृप तस्मिन्पुरवरेमल्लान्हत्वाचाणूरमुख्यकान् गजंकुवलयापीडंकंसभ्रातॄननेक
शः एवंहतेसुरेकंसेसर्वलोकैककंटके अन्येषुदुष्टदैत्येषुसर्वलोकभयंकरे लोकाःसमुत्सुकाःसर्वेऊचुर्मांचसमावृताः कृष्ण
कृष्णमहायोगिन्भक्तानामभयप्रद प्रसीदपाहिनोदेवशरणागतवत्सल अनाथनाथसर्वज्ञसर्वभूतहितेरत किंचिद्विज्ञ
प्तुकामोहंतन्नोवक्तुंत्वमर्हसि तवजन्मदिनंलोकेनज्ञातंकेनचित्क्वचित् ज्ञात्वाचतत्वतःसर्वेकुर्मोवर्धापनोत्सवं तेषांहृ

मयाभक्तिः श्रद्धाचमयिसौह्रदं मयाजन्मदिनं तेभ्यः ख्यातं निर्मलचेतसा श्रुत्वातेपितथाचक्रुर्विधिनायेनतच्छृणु पार्थतद्दिवसेप्रा
से दंतधावनपूर्वकम् स्नात्वापुण्यजलेशुद्धेवाससीपरिधायच निर्वर्त्यावश्यकंकर्मव्रतसंकल्पमाचरेत् अद्यस्थित्वानिराहारः
श्वोभूतेतुपरेहनि भोक्ष्यामिपुंडरीकाक्षशरणंमेभवाच्युत गृहीत्वानियमंचैवसंपाद्यार्चनसाधनं मंडपंशोभनंकृत्वापुष्पमाला
दिभिर्युतं तस्मिन्मांपूजयेद्भक्त्यागंधपुष्पाक्षतैः क्रमात् उपचारैःषोडशभिर्द्वादशाक्षरविद्यया सद्यःप्रसूतांजननींवसुदेवंच-
मारिष बलदेवसमायुक्तांरोहिणींगुणशोभिनीं नंदंयशोदांगोपींश्चगोपानुगाश्चैवसर्वशः गोकुलंयमुनांचैवयोगमायांचदारि
कां यशोदाशयनेसुप्तांसद्योजातांवरप्रभां एवंसंपूजयेत्सम्यक्नाममंत्रैःपृथक्पृथक् सुवर्णरौप्यताम्रारमृदादिभिरलंकृ-
ताः काष्ठपाषाणरचिताश्चित्रमप्यथलेखिताः प्रतिमाविविधाःप्रोक्तास्तासुमांचनरोयजेत् रात्रौजागरणंकुर्याद्गीतनृत्यादिभिः
सह पुराणैःस्तोत्रपाठैश्चजातनामादिभूत्सवैः श्वोभूतेपारणंकुर्याद्द्विजान्संभोज्ययत्नतः एवंकृतेमहाराजव्रतानामुत्तमव्रतम्
सर्वान्कामानवाप्नोतिविष्णुलोकेमहीयते मोहान्नकुरुतेयस्तुयातिसंसारगह्वरे तस्मान्नकुर्वन्प्रयत्नेननिष्पापोजायतेनरः अत्रै
वोदाहरंतीममितिहासंपुरातनं अंगदेशोद्भवोराजामित्रजिन्नामनामतः तस्यपुत्रोमहातेजाःसत्यजित्सत्पथेस्थितः पालया
मासधर्मज्ञोविधिवद्वंजयन्प्रजाः तस्यैवंवर्तमानस्यकदाचिद्दैवयोगतः पाखंडैःसहसंवासोबभूवबहुवासरं तत्संसर्गात्सनृ

पतिरधर्मनिरतोभवत् वेदशास्त्रपुराणानिविनिंद्यबहुशोनृप ब्राह्मणेषुतथाधर्मेविद्वेषंपरमंगतः एवंबहुतिथेकालेगतेभरतसत्तम
कालेननिधनंप्राप्तोयमदूतवशंगतः बध्वापाशैर्नीयमानोयमदूतैर्यमांतिकं पीडितस्ताड्यमानोसौदुष्टसंगवशंगतः नरकेपतितः
पापोयातनाबहुवत्सरं भुक्त्वापापस्यशेषेणपैशाचींयोनिमास्थितः तृषाक्षुधासमाक्रांतोभ्रमन्सममरुधन्वसु कस्यचित्त्वथवैश्य-
स्यदेहमाविश्यसंस्थितः सहतेनैवसंप्राप्तोमथुरांपुण्यदांपुरीम् तत्रत्यैरक्षकैःसोथतद्देहात्तुबहिष्कृतः बभ्रामविपिनेसोपिऋषी
णामाश्रमेष्वपि कदाचिद्दैवयोगेनममजन्माष्टमीदिने क्रियमाणांमहापूजांव्रतिभिर्मुनिभिर्द्विजैः रात्रौजागरणंचैवनामसंकीर्तना
दिभिः ददर्शसर्वविधिवच्छुश्रावचहरेःकथाः निःपापस्तत्क्षणादेवशुद्धनिर्मलमानसः प्रेतदेहंसमुत्सृज्यविष्णुलोकेविमानगः
ममदूतैःसमानीतोदिव्यभोगसमन्वितः ममसान्निध्यमापन्नोव्रतस्यास्यप्रभावतः नित्यमेवव्रतंचैतत्पुराणेसार्वकालिकं गीयते
विधिवत्सम्यक्मुनिभिस्तत्त्वदर्शिभिः सार्वकालिकमेवैतत्कृत्वाकामानवाप्नुयात् एतत्तेसर्वमाख्यातंव्रतानामुत्तमंव्रतम् मम
सान्निध्यकृद्राजन्किंभूयःश्रोतुमिच्छसि युधिष्ठिरउ० उद्यापनविधिंब्रूहिसर्वदेवदयानिधे येनसंपूर्णतांयातिव्रतमेतदनुत्त
मम् श्रीकृष्णउ० पूर्णांतिथिमनुप्राप्यवित्तचिंतादिसंयुतः पूर्वेद्युरेकभक्ताशःस्वपन्मांसंस्मरन्हृदि प्रातरुत्थायसंस्मृत्यपुण्य
श्लोकान्समाहितः निर्वर्त्यावश्यकंकर्मब्राह्मणान्स्वस्तिवाचयेत् गृहमानीयधर्मज्ञंवेदवेदांगपारगम् वृणुयादृत्विजश्चैववस्त्रा

लंकरणादिभिः पलेनवातदर्धेननतदर्धार्धेनवापुनः शक्त्यावापिनृपश्रेष्ठवित्तशाठ्यविवर्जितः सौवर्णीप्रतिमाकार्यापाद्यार्घ्यांचमनीय
कं पात्रंसंपाद्यविधिवत्पूजोपकरणंतथा गोचर्ममात्रंसंलिप्यमध्येमंडलमाचरेत् ब्रह्माद्यादेवतास्तत्रस्थापयित्वाप्रपूजयेत् मंड
पंरचयेत्तत्रकदलीस्तंभमंडितं चतुर्द्वारसमोपेतंफलपुष्पादिशोभितं वितानंतत्रबध्नीयाद्विचित्रंचैवशोभनं मंडलेस्थापयेत्कुंभं
ताम्रंवामृन्मयंशुचिं तस्योपरिन्यसेत्पात्रंराजतंवैणवंतुवा वाससाछाद्यकौंतेयपूजयेत्तत्रमांबुधः उपचारैःषोडशभिर्मंत्रैरेतैःस
माहितः ध्यात्वावात्ह्यामृतीकृत्यस्वागतादिभिरादरात् ध्यात्वाचतुर्भुजंदेवंशंखचक्रगदाधरं पीतांबरयुगोपेतंलक्ष्मीयुक्तंविभूषितं
लसत्कौस्तुभशोभाढ्यंमेघश्यामंसुलोचनं ध्यानं आगच्छदेवदेवेशजगद्योनेरमापते शुद्धेत्वस्मिन्नधिष्ठानेसंनिधेहिकृपांकुरु
आवाह॰ देवदेवजगन्नाथगरुडासनसंस्थित गृहाणचासनंदिव्यंजगद्धातर्नमोस्तुते आसनं नानातीर्थाहृतंतोयंनिर्मलंपुष्प-
मिश्रितं पाद्यंगृहाणदेवेशविश्वरूपनमोस्तुते पाद्यं गंगादिसर्वतीर्थेभ्योभक्त्यानीतंसुशीतलं गंधपुष्पाक्षतोपेतंगृहाणार्घ्यंन
मोस्तुते अर्घ्यं कृष्णावेणीसमुद्भूतंकालिंदीजलसंयुतं गृहाणाचमनंदेवविश्वकायनमोस्तुते आचम॰ दधिक्षौद्रघृतंशुद्धंक
पिलायाःसुगंधियत् सुस्वादुमधुरंशौरेमधुपर्कंगृहाणमे मधुपर्कंपुनराचमनं पयोदधिघृतंचैवशर्करामधुसंयुतं पंचामृते
नस्नपनंलक्ष्मीकांतनमोस्तुते पंचामृ॰ मंदाकिनीगौतमीचयमुनाचसरस्वती ताभ्यःस्नानार्थमानीतंगृहाणशिशिरंजलम्

स्नानं॰ शुद्धजांबूनदमरव्येनाडिद्धास्फुरशोन्विषी मयोपपादिनेतुभ्यंवाससीप्रतिगृह्यतां वस्त्रद्व॰ यज्ञोप॰ किरीटकुंडलादीनिकां
चीवलययुग्मकं कौस्तुभंवनमालांच भूषणानितवप्रभो भूषणानि मलयाचलसंभूतंघनसारंमनोहरं हृदयानंदनंचारुचंदनंप्र
तिगृह्यतां चंदनं अक्षताश्चसुरश्रेष्ठाः॰ अक्षतान् मालतीचंपकादीनियूथिकाबकुलानिच तुलसीपत्रमिश्राणिगृहाणसुरसत्त
म पुष्पाणि इतिपरिवारदेवतापूजा अथांगपूजा भयनाशनाय॰ पादौपू॰ वामनाय॰ गुल्फौपू॰ शौरये॰ जंघेपू॰ वैकुंठवासिने॰ ऊ
रू॰ पुरुषोत्तमाय॰ मेढ्रंपू॰ वासुदेवाय॰ कटीपू॰ हृषीकेशाय॰ नाभिंपू॰ माधवाय॰ हृदयंपू॰ मधुसूदनाय॰ कंठंपू॰ वराहाय॰ बा
हूपू॰ नृसिंहाय॰ हस्तौ॰ दैत्यसूदनाय॰ मुखंपू॰ दामोदराय॰ नासिकांपू॰ पुंडरीकाक्षाय॰ नेत्रेपू॰ गरुडध्वजाय॰ श्रोत्रेपू॰ गोविंदा
य॰ ललाटंपू॰ अच्युताय॰ शिरःपू॰ कृष्णाय॰ सर्वांगंपू॰ देवकींवसुदेवंचरोहिणींसबलांतथा सात्यकिंचोद्धवाक्रूरावुग्रसेनादिया
दवान् नंदंयशोदांतत्कालेप्रसूतांगोपगोपिकाः कालिंदींकालियंचैवपूजयेन्नाममंत्रतः वनस्पतिरसोद्भूतंकालागरुसमन्वितं धूपं
गृहाणगोविंदगुणसागरगोपते धूपं॰ आज्यंचव॰ दीपं॰ शाल्योदनंपायसंचसितापृतविमिश्रितं नानापक्वान्नसंयुक्तंनैवेद्यंप्र॰ नैवे॰
उत्तरापोश॰ इदंफलमितिफलं॰ पूगीफलमितितांबूलं॰ हिरण्यगर्भेतिदक्षिणां नीराजयेत्ततोभक्त्यामंगलंसमुदीरयन् जयमंगल
निर्घोषैर्देवदेवंसमर्चयेत् नीराज॰ दत्वापुष्पांजलिंचैवप्रदक्षिणपुरःसरं प्रणमेद्दंडवद्भूमौभक्तिप्रह्वःपुनःपुनः स्तुत्वानानाविधै

स्तोत्रैः प्रार्थयीतजगत्पतिं नमस्तुभ्यंजगन्नाथदेवकीतनयप्रभो वसुदेवात्मजानंतयशोदानंदवर्धन गोविंदगोकुलाधारगोपीकांत
नमोस्तुते ततस्तुदापयेदर्घ्यंइंदोरुदयतःशनैः कृष्णायप्रथमंदद्याद्देवकीसहितायच नारिकेरेणशुद्धेनदद्यादर्घ्यंविचक्षणः कृ
ष्णायपरयाभक्त्याशयेकृत्वाविधानतः जातःकंसवधार्थायभूभारोत्तारणायच गृहाणार्घ्यंमयादत्तंदेवकीसहितोहरे कृष्णार्घ्य
मंत्रः शंखेकृत्वाततस्तोयंसपुष्पफलचंदनं जानुभ्यामवनिंगत्वाचंद्रायार्घ्यंनिवेदयेत् क्षीरोदार्णवसंभूतअत्रिगोत्रसमुद्भव गृ
हाणार्घ्यंमयादत्तंरोहिण्यासहितःप्रभो ज्योत्स्नापतेनमस्तुभ्यंनमस्तेज्योतिषांपते नमस्तेरोहिणीकांतगृहाणार्घ्यंनमोस्तुते चं
द्रार्घ्यमंत्रः इत्थंसंप्रार्थ्यदेवेशंरात्रौजागरणंचरेत् गीतनृत्यादिनाचैवपुराणश्रवणादिभिः प्रत्यूषेविमलेस्नात्वापूजयित्वाजगद्गुरुं
पायसेनतिलाज्यैश्चमूलमंत्रेणप्रार्चितः अष्टोत्तरशतंहुत्वाततःपुरुषसूक्ततः इदंविष्णुरितिप्रोक्ताजुहुयाद्घृताहुतीः होमशेषंसमा
प्यायपूर्णाहुतिमतःपरं आचार्यंपूजयेद्भक्त्याभूषणाच्छादनादिभिः गामेकांकपिलांदद्याद्व्रतसंपूर्णहेतवे पयस्विनींसुशीलांचसव
त्सांसगुणांतथा स्वर्णशृंगींरौप्यखुरींकांस्यदोहनिकायुतां रत्नपुच्छांताम्रपृष्ठींकंठेघंटासमन्वितां वस्त्रच्छन्नांदक्षिणाढ्यामेवंसंपूर्ण
तांयजेत् कपिलायाअभावेतुगौरन्यापिप्रदीयते ततोदद्याच्चऋत्विग्भ्योअन्येभ्यश्चैवदापयेत् ब्राह्मणान्भोजयित्वाथभुंजीतसहबं
धुभिः एवंकृतेमहाराजव्रतोद्यापनकर्मणि निःपापस्तत्क्षणादेवजायतेविबुधोपमः पुत्रपौत्रसमायुक्तोधनधान्यसमन्वितः भुक्त्वा

भोगान्चिरंकालमंतेममपुरंव्रजेत् इतिश्रीभविष्यपुराणेकृष्णयुधि॰ जन्माष्टमीव्रतोद्यापनंसंपूर्णं अथभाद्रशुक्लाष्टम्यांज्येष्ठर्क्षेज्ये
ष्ठाव्रतम् इदंचज्येष्ठायोगवशेनपूर्वविद्धायांपरविद्धायांवाकार्यम् दिनद्वयेतद्योगेपरैवनोचेत्पूर्वा ज्येष्ठापूजनंलिंगे कन्यास्थार्केऽष्ट
मीशुक्लाज्येष्ठर्क्षेमहतीस्मृता अलक्ष्मीपरिहारायज्येष्ठांतत्रप्रपूजयेत् कन्यार्कयोगोत्रकेवलस्तावकएव मासस्तु भाद्रपदस्त्वांद्
वचनात्धः मासिभाद्रपदेशुक्लेपक्षेज्येष्ठर्क्षसंयुते यस्मिन्कस्मिन्दिनेवापिज्येष्ठादेवींप्रपूजयेत् हेमाद्रौ नवम्यासहकार्यास्यादष्टमी-
नात्रसंशयः मासिभाद्रपदेशुक्लेपक्षेज्येष्ठर्क्षसंयुता रात्रौयस्मिन्दिनेकुर्याज्ज्येष्ठायाःपरिपूजनं यस्मिन्दिनेभवेज्ज्येष्ठामध्यान्हा
दूर्ध्वमप्यणुः तस्मिन्हविष्यंपूजाचन्यूनाचेत्पूर्ववासरे पूजादिनात्पूर्वदिनेअनूराधायामावाहनमुत्तरदिनेमूलेचविसर्जयेत् तथा
चस्कांदे मैत्रेणावाहयेद्देवींज्येष्ठायांतुप्रपूजयेत् मूलेविसर्जयेद्देवींत्रिदिनंव्रतमुत्तमं अथपूजा तिथ्यादिसंकीर्त्य ममसनवंध्यादि
दोषपरिहारार्थंपुत्रपौत्रादिवृद्धयेदरिद्रनाशार्थंयथामीलितोपचारैःज्येष्ठापूजनंकरिष्ये त्रिलोचनांशुक्लदतींबिभ्रतींकांचनीतनूम्
विरक्तांरक्तनयनांज्येष्ठांध्यायाभिसुंदरीं ध्यानं एत्येहित्वंमहाभागेसुरासुरनमस्कृते ज्येष्ठात्वंसर्वदेवानांमत्समीपंगताभव आ
वाह॰ श्वेतसिंहासनस्थांतुश्वेतवस्त्रैरलंकृतां वरदंपुस्तकंपात्रंबिभ्रतींवैनमोनमः आसनं॰ ज्येष्ठेश्रेष्ठेतपोनिष्ठेधर्मिष्ठेसत्यवा-
दिनि समुद्रमथनोत्पन्नेपाद्यंगृण्हनमोस्तुते पाद्यं॰ क्षीरखंडकपूरयुतंतोयंपुष्पेणसंयुतं गृहाणार्घ्यंमयादत्तंज्येष्ठादेविनमोस्तुते

अर्घ्यं॰ ज्येष्ठायैतेनमस्तुभ्यंश्रेष्ठायैतेनमोनमः ज्येष्ठश्रेष्ठतपोनिष्ठेब्रह्मिष्ठेसत्यवादिनि आचम॰ पयोदधिघृतंचैवक्षौद्रशर्करयान्वितं
पंचामृतंमयानीतंस्नानंगृह्णहसुरेश्वरि पंचामृ॰ मंदाकिन्याःसमानीतंहेमांभोरुहवासितं स्नानार्थंतेमयानीतंस्नानंकुरुजगन्मये स्ना
नं सूक्ष्मतंतुभवेश्वेनेधौतेनिर्मलवारिणा वारणेलोकलज्जायावाससीप्रतिगृह्यतां वस्त्रयु॰ आचम॰ हरिद्राकुंकुमंचैवकंठसूत्रं-
चताडकं सिंदूरंकज्जलंचारुषड्सौभाग्यंगृहाणभोः सौभाग्य॰ श्रीखंडंचं॰ चंदनं अक्षतान्श्च॰ अक्षतान् नूपुरेमेखलाकांचीकं-
कणानिसुशोभने नासिकायांमयादत्तामुक्ताकांचनसंयुता अलंकारान् चंपकादिसुगंधीनि॰ पुष्पाणि॰ वनस्पति॰ धूपं॰ आज्यंचे
ति॰ दीपं॰ गोधूमपिष्टशाल्यादितंडुलानांचकारयेत् कृत्वाप्रसृतिमात्रास्तुपूरिकाघृतपाचिताः शाल्योदनंसूपयुक्तंदधिदुग्धंघृतंत
था नानाव्यंजनसंयुक्तंनैवेद्यंप्र॰ नैवेद्यं॰ उत्तरापोशनं॰ करोद्वर्तनं॰ फलं॰ तांबूलं॰ हिरण्यगर्भेतिदक्षिणां नीराज॰ मंत्रपुष्पं॰ प्रदक्षि॰
नमस्कारः शार्ङ्गबाणासिखड्गारिप्रासतोमरमुद्गरैः अन्यैरप्यायुधैर्युक्तांज्येष्ठेत्वामर्चयाम्यहं पुष्पांज॰ त्वंलक्ष्मीस्त्वंमहादेवी त्वंज्ये
ष्ठेसर्वदामरैः पूजितासिमयादेविवरदाभवमेसदा इतिप्रार्थना पूजावि॰ अथकथा युधिष्ठिरउ॰ मृतवंध्यातुयानारीकाकवंध्या
तथापरा गर्भस्रावीन्तृतीयाचनानादोषैस्तुदूषिता निर्धनाश्चनरायेवैदारिद्र्येणहतास्त्वये कर्मणाकेनमुच्यंतेतन्मेब्रूहिजनार्दन
श्रीकृष्णउ॰ मासिभाद्रपदेशुक्लेपक्षेज्येष्ठायदाभवेत् रात्रौजागरणंकुर्याद्गीतवादित्रनिःस्वनैः एवंविधिविधानज्ञोएभिर्मंत्रैश्च

पूजयेत् एह्येहित्वंमहाभागेसुरासुरनमस्कृते ज्येष्ठासिसर्वदेवानांमत्समीपंगताभव श्वेतसिंहासनस्थात्वंश्वेतवस्त्रैरलंकृता
वरदंपुस्तकंपात्रंपाशहस्तेनमोनमः ज्येष्ठेश्रेष्ठेतपोनिष्ठेधर्मिष्ठेसत्यवादिनि समुद्रमथनोत्पन्नेज्येष्ठायैतेनमोनमः शार्ङ्गबाणाब्ज
खड्गारिप्रासतोमरमुद्गरैः अन्यैरप्यायुधैर्युक्तांज्येष्ठेत्वामर्चयाम्यहं त्वंलक्ष्मीस्त्वमुमादेवीत्वंज्येष्ठेसर्वदामरैः पूजितासिमया
देविवरदाभवमेसदा प्रार्थना पुत्रदारविवृद्ध्यर्थंलक्ष्म्याश्चैवविवृद्धये अलक्ष्म्याश्चविनाशायसर्वकालंद्विजोत्तम गुरुंसंपूजयेद्व
स्त्रावस्त्रैराभरणादिभिः ततोद्वादशवर्षाणिपूजनीयाप्रयत्नतः यावज्जन्मतथापूर्वविधिनानेनमानवैः ददातिवित्तंपुत्रांश्चअर्च
नीयासदास्त्रिया अनेनविधिनाप्रोक्तायोहिपूजयतेनरः ज्येष्ठांतुपूजयेन्नारीतस्यालक्ष्मीर्विवर्धते वंध्यातुलभतेपुत्रान्दुर्भगासुभगा
भवेत् एवंविधिविधानेनज्येष्ठादेवींसमर्चयेत् विघ्नास्तस्यप्रणश्यंतियथाप्सुलवणंतथा तथाग्राह्यंकुरुश्रेष्ठज्येष्ठायाःशोभनंव्रतं
नीराजनंकृतंचैवदीपोग्राह्यःसुभक्तितः नैवेद्यसहितंप्राश्यव्रतीत्वग्रेयुधिष्ठिर गुरुहस्तात्सदाग्राह्योदीपःप्रज्वलितोमहान् व्रत
स्थोभक्तियुक्तश्चशुचिःप्रयतमानसः अनेनविधिनाचैवव्रतंकार्यंयुधिष्ठिर ज्येष्ठानामपरंदेवीभुक्तिमुक्तिप्रदायिनी यस्तुपूज
यतेराजन्तस्मैसर्वंप्रयच्छति कृष्णउ॰ मासिभाद्रपदेशुक्लपक्षेज्येष्ठर्क्षसंयुते तस्मिन्दिनेव्रतीकुर्याज्ज्येष्ठायाःपरिपूजनं तत्रा
ष्टम्यांयदावारोभानोर्ज्येष्ठर्क्षमेवच प्रतिवर्षंव्रतंयच्चविहितंकेवलेशुभे प्रातःस्नानंनरःकुर्यात्तस्यादेव्यादिनेशुभे भक्तियुक्तःशु

निः कुर्याज्ज्येष्ठादेव्यास्तुपूजनम् जलाशयात्तु पूर्वेद्युरानयेत्पंचशर्कराः देवीरूपं च तत्रैव कृत्वा वास्थापयेत्ततः गोमयेनोपलिप्ते च हैमीं वा
कारयेद्बुधः स्थापयेद्राजतीं ताम्रीं लेख्यां वा पटकुड्ययोः आवाहयेत्ततो देवीमथवा पुस्तकेऽपि वा त्रिलोचनां शुक्लदतीं बिभ्रतीं राजतीं ननूम
विरक्तां रक्तनयनां ज्येष्ठां ध्यायामि सुंदरीं इति मंत्रेण तां देवीमावाह्य सुकृती व्रती स्नानं दद्यात्तथा यच्च पादयोरुभयोर्द्विज श्रीखंड
कर्पूरयुतं दद्यादर्घ्यं च भक्तितः पंचामृतं तथा स्नानं निर्जलेन जलेन च वस्त्रं गंधं तथा पुष्पं धूपदीपादिकं च यत् पूजयित्वा च सौभाग्यै
र्द्रव्यैर्नानाविधैः शुभैः गोधूमशालितंडुलैर्नानाद्रव्यैश्च निर्मितं कृत्वा प्रसृतमात्रास्तु पूरिका घृतपाचिताः भक्त्या मया सुरेशानि य
द्दत्तं दीयते तव तद्गृहाण महादेवि ज्येष्ठे श्रेष्ठे नमोऽस्तु ते निवेदनीयं यत्किंचिद्द्याद्द्रव्यं प्रयत्नतः ततस्तु तां महादेवीं सर्वकामफलप्र
दां ज्येष्ठायै तेन मस्तुभ्यं श्रेष्ठायै ते नमो नमः ज्येष्ठे श्रेष्ठे तपोनिष्ठे धर्मिष्ठे सत्यवादिनि ततः क्षमाप्य तां देवीं स्तुवीत स्तवनोत्तमैः ब्राह्म
णान्भोजयेत्पश्चात्सुवासिन्यस्तथा बहु दास्यो दासाश्च संभोज्या दीनांधकृपणास्तथा देवीं विप्रमनुज्ञाप्य स्वयं भुंजीत वाग्यतः
भक्षयित्वा तथाचम्य देवीं नत्वा पुनः पुनः शयीत ब्रह्मचर्येण कुर्यात्प्रातर्विसर्जनम् एवमेवं प्रकुर्वीत व्रतं तु परिवत्सरं ज्येष्ठावि
सर्जनांते तु शर्करां वारिणि क्षिपेत् दध्योदनं तया साकं देयं स्वस्य शुभाप्तये ज्येष्ठे देवि नमस्तुभ्यमलक्ष्मीनाशहेतवे पुनरेहि वत्सरां
ते मम गेहे शुभप्रदे एवं संप्रार्थ्य तां देवीं गीतवाद्यपुरःसरैः अपूपवटकान्दद्याद्ब्राह्मणेभ्यस्ततो द्विज कुर्यादेवं प्रयत्नेन सार्वं वाय

विसर्जयेत् विद्यार्थीमाप्नुयाद्विद्यांस्त्रीकामः स्त्रियमेवच लक्ष्मीवान्जायतेमर्त्यः स्त्रीतुमोदेतभर्तरि विनायकेनसहितांदेव्याः कुर्याद्विस
र्जनं सौवर्णीराजतींताम्रीं मृन्मयींवापिशक्तितः व्रतंस्वयंच कृतवान् सिद्धंचाप्यकृतार्हणः देव्यामहत्वंकथितंतवेदंविधिश्चसंमार्चन
संयुतस्तथा मंत्रोपिसायुज्यकरोव्रतस्यतथामयातेकथितंसदेव अथोद्यापनम् यस्याः सिंहोरथेयुक्तोव्याघ्रश्चापिमहाबलः
ज्येष्ठामहमिमांदेवींप्रपद्येशरणंशुभां तामग्निवर्णांतपसाज्वलंतीमित्यावाह्य आपोहिष्ठेतितिसृभिः हिरण्यवर्णेतितिसृभिः अभि
षिंचेत् कृत्वाचाष्टदलंपद्मंस्थापयेत्तत्रसव्रती नाममंत्रेणकुर्वीतपाद्यमर्घ्यमथासनं स्नानमाचमनंचैवमधुपर्कंच्चकंचुकी वस्त्रगं
धाक्षताःपुष्पधूपदीपोप्रयत्नतः नैवेद्याचमनीयंचकरोद्वर्तनकंशुभं तांबूलदक्षिणादानंततोनीराजयेच्छुभां स्थापितेग्नौततःप
श्चाद्धोममष्टोत्तरंशतं द्रव्यैर्दधिमधुक्षीरघृतैःकुर्यात्प्रयत्नतः तर्पणंचततःकुर्यादेभिर्मंत्रैर्विचक्षणः ज्येष्ठायै॰श्रेष्ठायै॰सत्यायै॰कलि
नाशिन्यै॰विद्यायै॰वैनायक्यै॰तपोनिष्ठायै॰श्रियै॰कृष्णायै॰ब्रह्मिष्ठायै॰विसृज्यततोदेवींब्राह्मणायनिवेदयेत् व्रतांतेप्रतिमांद
द्यात्सौवर्णीपलसंमितां कृष्णवस्त्रेणसंयुक्तामाचार्यायनिवेदयेत् वस्त्राभरणमाल्यादिलेपनैःपूजयेद्द्विजम् प्रणिपत्यततःप
श्चात्तस्मैसर्वंनिवेदयेत् अनेनविधिनायस्तुब्राह्मणानांचतुष्टये ब्राह्मणान्भोजयेत्पश्चात्स्वयंभुंजीतवाग्यतः ब्राह्मणांश्चततो
नत्वा याचयेत्सर्वमंगलं एवंसुवासिनीर्भोज्यापूज्याःसर्वसमृद्धये एवंकृतेव्रतेसम्यक्सर्वशांतिःप्रजायते धनधान्यसमृ-

द्धिश्चआरोग्यंभवतिध्रुवम् इतिश्रीभविष्योत्तरपुराणेज्येष्ठादेवीव्रतोद्यापनंसं० तत्रैवभाद्रशुक्लाष्टम्यांदूर्वाष्टमीव्रतं सापूर्वाग्रा-
ह्या श्रावणीदुर्गनवमीदूर्वाष्टमिहुताशनी पूर्वविद्धातुकर्तव्याशिवरात्रिर्बलेर्दिनं इतिवृद्धयमवचनात् शुक्लाष्टमीतिथिर्यातु
नोत्तरासाविधीयते इतिहेमाद्रिः मुहूर्तेरौहिणेष्टम्यांपूर्वावायदिवापरा दूर्वाष्टमीतुसाकार्याज्येष्ठामूलंचवर्जयेत् इतिउक्तं
तत्पूर्वत्रज्येष्ठामूलयोगेकर्मकालव्याप्त्यभावेचद्रष्टव्यम् दूर्वाष्टमीसदात्याज्याज्येष्ठामूलर्क्षसंयुता तथाच मासेभाद्रपदेमा-
सिशुक्लाष्टम्यांतुभारत दूर्वामभ्यर्चयेद्भक्त्याज्येष्ठांमूलंचवर्जयेत् ऐंद्रर्क्षेपूजितादूर्वाहंत्यपत्यानिनान्यथा भर्तुरायुर्ह-
रामूले तस्मात्तांपरिवर्जयेत् इतिमदनरत्नेस्कांदे शुक्लेभाद्रपदेमासिदूर्वासज्ञातथाष्टमी सिंहार्कएवकर्तव्यानकन्यार्केक-
दाचन सिंहस्थेसोत्तमासूर्येऽनुदिनेमुनिसत्तम मदनरत्नेस्कांदोक्तेः अगस्त्यउदितेवातपूजयेदमृतोद्भवाम् वैधव्यंपुत्रशो-
कंच दशजन्मानिपंचच यदातुभाद्रशुक्लाष्टम्यांअगस्त्योदयस्तदातत्पूर्वकृष्णाष्टम्यांकार्यम् शुक्लपक्षाभावेपिपौर्णिमांतमासेन
भाद्रपदमासलाभात् यदातुभाद्रपदोधिकस्तदासिंहार्कएवेतिउदाहृतवचनात् अधिमासेतुसंप्राप्तेनभस्यउदयेमुनेः अर्वा-
गेवव्रतंकार्यंपरतोनतुकुत्रचिदितिनिर्णयदीपके स्कांदाच्चाधिकेएवकर्तव्यं इदंस्त्रीणांनित्यं यानपूजयतेदूर्वांमोहादिहय-
थाविधि त्रीणिजन्मानिवैधव्यंलभतेनात्रसंशयः तस्मात्सर्वप्रयत्नेनप्रतिवर्षंवधूजनैः ज्येष्ठामूलादिरहितापूजयेच्चाष्टमीं-

शुभ्रा कर्तव्याचैकभक्तेनज्येष्ठामूलंयदाभवेत् दूर्वामभ्यर्चयेद्भक्त्यानवंध्यंदिवसंनयेत् इतिभविष्योत्तरेत्तुकल्प्यानुष्ठानंनतु-
सर्वतोलोपः अथदूर्वाष्टमीव्रतं हेमाद्रौभविष्ये ब्रह्मन्भाद्रमदेमासिशुक्लाष्टम्यामुपोषितः पूजयेच्छंकरंभक्त्यायोनरः
श्रद्धयान्वितः सयातिपरमंस्थानंयत्रदेवस्त्रिलोचनः गणेशंपूजयेद्यस्तुदूर्वयासहितंमुने गणेशःशिवः फलानांशकले
र्दिव्यैर्गंधपुष्पैर्विलेपनैः दूर्वांपूजयतेशानंमुच्यतेसर्वपातकैः शुचौदेशेप्रजातायांदूर्वायांब्राह्मणोत्तम स्थाप्यलिंगंततोगं
धैःपुष्पैर्धूपैःसमर्चयेत् खर्जूरैर्नारिकेरैश्चमातुलिंगफलैस्तथा पूजयेच्छंकरंभक्त्यादूर्वायांविधिवद्द्विज दध्यक्षतैर्द्विजश्रे
ष्ठअर्घ्यंदद्यात्रिलोचने दूर्वाशमीभ्यांसंपूज्यमानवःश्रद्धयान्वितः सर्वेस्तुकृतजन्मस्यात्सर्वदेवैस्तुवंदितः विद्यांप्राप्नोतिवि
द्यार्थीपुत्रार्थीपुत्रमाप्नुयात् धर्मान्प्राप्नोतिधर्मार्थीकन्यार्थीलभतेचतां मनसायद्यदिच्छेततत्तदाप्नोतिमानवः यएवंपूजयेद्दू
र्वांभूतेशंमानवःफलैः सप्तजन्मजपापौघैर्मुच्यतेनात्रसंशयः कृतोपवासःसप्तम्यामष्टम्यांपूजयेच्छिवं दूर्वासमेतंनिर्मंत्र
दध्यक्षतफलैःशुभैः दूर्वामंत्रः त्वंदूर्वेमृतजन्मासिवंदितासिसुरैरपि सौभाग्यंसंततिंदेहिसर्वकार्यकरीभव यथाशा-
खाप्रशाखाभिर्विस्तृतासिमहीतले तथाविस्तृतसंतानंदेहित्वमजरामरे तल्लिंगमंत्रैरीशानमर्चयेत्प्रयतःशुचिः ततःसं
पूजयेद्विप्रान्फलैर्नानाविधैर्द्विज अनग्निपक्वमश्नीयात्अन्नंदधिफलंतथा अक्षारलवणंब्रह्मन्नाश्नीयान्मधुनान्वितं दद्या-

त्फलानिविप्रेषुफलाहारः स्वयंभवेत् प्रणम्यशिरसादूर्वांशिवंशिवमुपाश्नुते एवंयः कुरुतेभक्त्यामहादेवस्यपूजनं गणत्वंयात्यसौ
ब्रह्मन्मुच्यतेब्रह्महत्यया एवंपुण्यापापहराअष्टमीदूर्वसंज्ञिता चतुर्णामपिवर्णानांस्त्रीजनानांविशेषतः शुक्लाष्टम्यांतुसंप्राप्तेमा
सिभाद्रपदेतथा दूर्वांप्रशस्तांसुश्वेतामुत्तराशाभिगामिनीं पूजयेद्गृहमानीयगंधमाल्यानुलेपनैः फलैर्मूलैस्तथाचैवधूपदीपैश्चपू
जयेत् अनग्निपक्वंयत्सर्वंनैवेद्यंचकथंचन भोक्तव्यंचतथाब्रह्मन्नग्निपक्वंविसर्जयेत् दूर्वांकुरस्थांसंपूज्यप्रतिमांशंकरस्यच यौवनं-
स्थिरमायातियत्रयत्राभिजायते अष्टम्यांफलपुष्पैश्चखर्जूरैर्नारिकेरकैः द्राक्षामोदकपिष्टैश्चदाडिमैर्बदरैस्तथा नारिंगैर्जंबुकैश्चै
वतथैवबीजपूरकैः दध्यक्षतैः स्रजोभिश्चधूपैरेवसदीपकैः मंत्रेणानेनराजेंद्रशृणुष्वावहितोनृप दत्वापिष्टानिविप्रेभ्यः फलंचविवि
धंप्रभो तिलपिष्टकगोधूमधान्यपिष्टानिपांडव भोजयित्वासुहृद्भित्रंस्वयंबंधुजनैस्तथा ततोभुंजीततच्छेषंस्वयंश्रद्धासमन्वितः
कर्तव्यान्नैकभक्तेनज्येष्ठमूलंयदाभवेत् दूर्वामभ्यर्चयेद्भक्त्यानवंध्यंदिवसंनयेत् पक्षेभाद्रपदस्यैवंशुक्लाष्टम्यांयुधिष्ठिर दूर्वाष्टमी
व्रतंपुण्यंयः करोतीहमानवः नतस्यक्षयमाप्नोतिसंततिः सप्तपौरुषी नंदतेवर्धतेनित्यंयथादूर्वातथाकुलम् इतिश्रीभविष्य॰
दूर्वाष्टमीव्र॰ संपूर्णं अथभाद्रशुक्लाष्टमीमारभ्यषोडशदिनपर्यंतंमहालक्ष्मीव्रतम् तच्चार्धरात्रमतिक्रम्यवर्तिन्यांअष्टम्यांका
र्यम् तदुक्तंचंद्रप्रकाशेस्मृत्यंतरे अर्धरात्रमतिक्रम्यवर्ततेयोत्तरातिथिः तस्यांज्येष्ठायुतायांप्रारंभः कार्यः तथाचस्कांदे मा-

व्र॰रा॰
१३९

सिभाद्रपदेशुक्लेपक्षेज्येष्ठायुताष्टमी प्रारब्धव्यंव्रतंतत्रमहालक्ष्म्यायतात्मभिः तदभावेकेवलायामपिकार्यम् समापनंतुकृष्णा
ष्टम्यांचंद्रोदयव्यापिन्यांकार्यम् चंद्रोदयव्रतेचैवतिथिस्तात्कालिकीभवेत् दिनद्वयेचंद्रोदयसत्वेचकृष्णपक्षेष्टमीचैवेत्यादिवा-
क्यात्पूर्वैव अपरदिनेचंद्रोदयोत्तरंत्रिमुहूर्तांचेत्परैव तदुक्तंमदनरत्नेपुराणसमुच्चये पूर्वावापरविद्धावाग्राह्याचंद्रोदयेसदा
त्रिमुहूर्तातुसापूज्यापरतश्चोर्ध्वगामिनी अथव्रतविधिः हेमाद्रौस्कांदे अथपूजनं आलयंतेहिकथितंकमलंकमलालये विमले
कमलेत्वस्मिन्स्थितिंत्वंकृपयाकुरु आवाह॰ कमलेपाहिमेदेविस्वर्णसिंहासनंशुभं गृहाणेदंमयादत्तंभक्तियुक्तेनचेतसा
आस॰ गंगादिसलिलाधारंतीर्थमंत्राभिमंत्रितं दूरयात्राश्रमहरंपाद्यंमेप्रतिगृ॰ पाद्यं॰ अर्घ्यं॰ आचम्यजगदाधारेसिद्धिलक्ष्मि
जगत्प्रिये चपलेदेवितेदत्तंतोयंगृण्हनमोस्तुते आचम॰ पयोदधिघृतंक्षौद्रंसितयाचसमर्पितं स्नानंपंचामृतेनाद्यकुरुदेविदयानि
धे पंचामृ॰ इदंनवमहालक्ष्म्याः कर्पूरागरुवासितं तीर्थेभ्यःसुसमानीतंस्नानार्थंप्रतिगृ॰ स्नानं॰ सूक्ष्मतंतुभवंवस्त्रंनिर्मितंविश्व-
कर्मणा लोकलज्जाहरंदेविगृहाणसुरसत्तमे वस्त्रंकंचुकीं नानासौभाग्यद्रव्यं मलयाचलसंभूतंघनसारंमनोहरं शीतलंबहु
लामोदंचंदनंप्र॰ चंदनं॰ नीलोत्पलंमहामोदंमत्तालिकुलसंकुलं आनंदिनंदनोत्पन्नंपद्मंगृण्हनमोस्तुते पुष्पाणि॰ अथनामपू॰
श्रियैन॰ लक्ष्म्यै॰ वरदायै॰ विष्णुपत्न्यै॰ क्षीरसागरवासिन्यै॰ हिरण्यरूपायै॰ सुवर्णमालिन्यै॰ पद्मवासिन्यै॰ पद्मप्रियायै॰ मुक्ता

अ
९

१३९

लंकारिण्यै॰ तूर्यायै॰ चंद्राननायै॰ विश्वमूर्त्यै॰ मुक्त्यै॰ मुक्तिदात्र्यै॰ ऋध्यै॰ समृध्यै॰ तुष्ट्यै॰ पुष्ट्यै॰ धनेश्वर्यै॰ श्रद्धायै॰ भोगिन्यै॰ भोगदायै॰
धात्र्यै॰ गंधसंभारसन्नद्धकस्तूरीमोदसंभवम् मृगाङ्कनरारानंदिधूपं देवि गृहाण मे धूपं॰ मार्तंडमंडलाखंडचंद्रबिंबाग्नितेजसां
निधानं देवि दीपोयं निर्मितस्तव भक्तितः दीपं॰ देवनारूयपातालभूतलाधारधान्यजं षोडशाकारसंभारं नैवेद्यं तेन मःसदा नैवेद्यं॰
स्नानादिकं विधीयंते यतः शुद्धिः प्रजायते एतदाचमनीयं च महालक्ष्मि विधीयतां आचमं॰ करोद्वर्तनम् पातालतलसंभूतं वद
नांभोजभूषणं नानागुणसमाकीर्णं तांबूलं प्रतिगृ॰ तांबूलं॰ हिरण्यगर्भेति दक्षिणां आज्यं चेति नीराजनं शारदेंदुकलाकांतिः
स्निग्धनेत्रा चतुर्भुजा पद्मयुग्माचाभयदा करध्यस्त करांबुजा पुष्पांजलिं विष्णोर्वक्षसि पद्मे च शंखे चक्रे गदावरे लक्ष्मी देवि यथासि
त्वं मयि नित्यं तथा भव प्रार्थना उत्तार्य दोरकं बाहो लक्ष्मीपार्श्वे निवेदयेत् लक्ष्मी देवि गृहाण त्वं दोरकं यन्मया धृतं कथां श्रुत्वा सुव-
र्णांच दत्वाचार्याय दक्षिणां एवं निर्वर्त्य विधिवत्पूजनं बटुकस्य च चातुर्वर्ण्यं च संभोज्यं यथाशक्त्या च दक्षिणां दीपांश्च षोडशापूपान्
गोधूमानां द्विजातये दत्वा नत्वा संरक्ष्य यामभुक्त्वा रात्रौ जागरणं चरेत् चंद्रोदये च संजाते अर्घ्यं दद्यात्ततो व्रती मंत्रेणानेन विप्रेंद्र शंखेनांबु-
फलान्वितं नमोस्तु ते निशानाथ लक्ष्मीभ्रातर्नमोस्तु ते व्रतसंपूर्णतां यातु गृहाणार्घ्यं नमोस्तु ते अर्घ्यं॰ प्रातर्विसर्जयेद्देवीं मंत्रेणानेन
मृगव्रत पंकजं देवि संत्यज्य मम वेश्मनि संविश यथा मत्पुत्रभृत्योहं सुखी स्यां त्वत्प्रसादतः विसर्जनं इति पूजनं अथ कथा स्कंद

उ॰ सौभाग्यजननंस्त्रीणांदौर्भाग्यपरिहृत्तनं परमैश्वर्यजननंतद्व्रतंब्रूहिशंकर ईश्वरउ॰ साधुसाधुमहाबाहोयत्पृष्टोहंत्वयानघ त
त्राहंसंप्रवक्ष्यामिव्रतानामुत्तमंव्रतं येनचीर्णेननरोदुर्गतिंयातिकर्हिचित् सुभगादुर्भगावापिस्त्रियोवाविधवागुह अस्तिदेव्या
व्रतंपुण्यंमहालक्ष्म्याःषडानन नारीणांचनराणांचसर्वदुःखापहंतथा देवासुरमभूद्युद्धंपूर्णमब्दशतंपुरा वृत्रेसुराणा
मधिपेदेवानांचपुरंदरे तत्रदेवैर्महावीर्यैर्नारायणबलाश्रयात् असुरानिर्जिताःसर्वेपातालतलमाययुः केचिद्विलंघिताःकेचित्ग
विष्टावरुणालयं गिरिदुर्गंसमाश्रित्यकेचित्तस्थुर्महाबलाः तत्रकोलासुरोनाममहावीर्योमहाबलः गोमंतंदुर्गमंदुर्गंगिरिमाश्रित्य
निर्भयः याराजकन्यकालोकेरूपवत्योमहागुणाः आनीयगिरिदुर्गस्थोरमयामाससर्वशः रमयित्वापितास्तत्रकामरूपीविहं
गमः एतस्मिन्नेवकालेतुआगतोमुनिसत्तमौ श्रुतिप्रभावसंपन्नौपुलस्त्योगोतमस्तथा तीर्थयात्राप्रसंगेनश्रुत्वावाक्यंजन
स्यतत् कोलासुरजयमितिकन्याहेतोःशिखिध्वज तावूचतुर्जनंसर्वमगस्त्योस्तिमहामुनिः येनतोयनिधिःपीतोविंध्याचल
निवासिना वातापील्वलनामानौदैत्यौयेनविनाशितौ तंगच्छामोवयंसर्वेकोलासुरवधायच इत्यामंत्र्यजनाःसर्वेगत्वानमभिवा-
द्यच उक्तःसर्वैर्यथावृत्तंकोलासुरविचेष्टितं तच्छ्रुत्वाभगवानाहमैत्रावरुणिरग्र्यधीः सृष्टिस्थितिविनाशानांकारणंभक्तवत्स
लाः रामस्यादौतपस्यंतिब्रह्मविष्णुमहेश्वराः तिस्रःसंध्यामूर्तिमत्यस्तेषांशुश्रूषणेरताः प्रविश्यतामहालक्ष्मीःशक्तिरूपेण

संस्थिता सर्वशक्तियुतादेवीलोकानांहितकाम्यया इत्युक्त्वात्वरितंगत्वाकोलासुरवधासये निवेद्यनिखिलंतेभ्यस्तस्थुःप्रांजलयो
जनाः तच्छ्रुत्वानिखिलंतेभ्योब्रह्मविष्णुमहेश्वराः संध्यात्रयंसमाहूयवाचंमोचुर्जनेश्वराः हनिष्यतिमहालक्ष्मीर्युद्धेकोलासुरं
रिपुं भगवत्योमूर्तिमत्योदंडशूलादिभिर्वरैः आयुधैर्विविधैःहत्वाजयमाप्स्यथसंयुगे युष्माकंतुसहायोसौयुष्मत्क्रोधसमुद्भ
वः भूतनाथोभूतमन्युर्यःसहायोभविष्यति इत्युक्त्वात्वरितंगत्वारुरुधुःकोलराक्षसं निरुध्यन्तपुरींदेव्योजगर्जुर्जलदस्वनाः
भिंदंत्यश्चदिशस्तद्वद्वर्धयंत्यश्चतत्क्रुधं कोलासुरोपितच्छ्रुत्वामोत्पपातमहासनात् रोषेणक्रोधताम्राक्षोमेरोरिवमृगांतकः हस्त्यश्व
रथपादातचतुरंगबलान्विता निर्ययौपृतनायोद्धुंकालिकायाइवाशनिः सकुंडलशिरस्त्राणकवचीधृतबाणधीः बद्धगोधांगुलित्रा
णः क्रुद्धोवृत्रइवापरः ततोराक्षससैन्यंतद्भूतनाथेनसंगतम् देवनारीमनोल्लासीयुद्धंचक्रेतिभीषणं महारावैर्भीमघोषैर्बाणैःक्रें
कारनिस्वनैः गोरवराणांनिनादैश्चलोकःशब्दमयोभवत् जयभिंधीतिवदतांधावतामितरेतरं ववृधेसमरंघोरंसुष्ठमुष्टीकचाक
ची उद्धत राक्षसबलेभूतनाथोमहाबलः ममर्दराक्षसानीकंशरवर्षैश्चदारुणैः हतंदृष्ट्वासुरबलंक्रुद्धःकोलासुरोरणे अभिद्रुत्यग
दापाणिस्ताडयामासभैरवं ययौमूर्छांमहावीर्यस्तेनाभिहतमस्तकः ततोदेव्योतिवेगेनत्वभिदुद्रुवुरुद्धते त्रिशूलैरभिजघ्नु-
स्तंपट्टिशैश्चव्यघातयन् मुष्टिभिस्ताडयामास नरवैश्चापिव्यदारयन् पादघातैःसमाजघ्नुःसिंहःकरिवरंयथा सकुंडलशिर

रुद्राणोदष्टोष्ठोरक्तलोचनः कृतभ्रूकुटिवक्त्रोऽसौराक्षसस्तांमुहुर्मुहुः गदयाताडयामासशिरःकंठांसकुक्षिषु बभंजुस्तांगदांतांतुहसंत्य
स्तामदाकुलाः ततोधनुर्धरोभूत्वाबाणजालमवाकिरत् तासांशरीरमर्माणिभिंदन्शरःपुरोगमैः ननादबहुवैरेसोत्हृदयंचाभिनद्ब
रैः ततःक्रुद्धतरास्तास्तुपादेनजगृहुर्भृशं आकाशेभ्रामयित्वातंविक्षिपुर्गगनेक्रुधा कोलासुरोपिपतितोयावदुत्थातुमिच्छति ता
वन्निर्गत्यलक्ष्मीस्तंपादाभ्यामत्यपीडयत् तत्पादपीडितोदैत्योविवृत्यनयनेभृशं मुक्तकंठस्वनंकृत्वाततोमोहमुपेयिवान् ततोदेवाः
सगंधर्वामनुष्याऋषयोस्तुवन् देवनाथाश्चदेव्यश्चननृतुःकुसुमदाकुलाः देवदुंदुभयोनेदुःपुष्पवृष्टिःपपातह दिशःप्रसेदुर्मरुतो
ववुर्मंदरवंजगत् सुरासुरशिरोरत्नापीडितांघ्रिसरोरुहाः देव्योदिव्येनयानेनयांतिकोलापुरंप्रति आयांतींपद्मजांवीक्ष्यसु
रूपार्दविश्वंस्खलः तुष्टावपरयाभक्त्याराजकन्यागणोमुदा राजकन्याऊचुः वंदारुवीरसुरवृंदकिरीटरत्नरोचिश्छटानिकरक
ल्पितरत्नदीपं देवित्वदीयचरणंशरणंजनानांसेवामहेसकलमंगलवर्धनाय उत्फुल्लकैरवदलायतलोचनायैगंडोल्लसच्चपलकुंड
लमंडितायै राकाशशिप्रतिभटाननकोमलायैतस्यैनमःकमललोचनवल्लभायै सद्भक्तकल्पलतिकांकरिकंठभूषांकेयूरहेमकट
कोज्ज्वलकंकणांकां संसारसागरसुखेपततोममाद्यदेहित्वदीयकरयष्टिमनंगमातः इत्थंदेविजनाजयायविविधाब्रह्माधिप
त्यंगताविष्णुर्वक्षसियांचकारतरलांलीलाब्जमालाभ्रमं केशाग्रमहितंत्वदीयचरणद्वंद्वाब्जसेवारतंकारुण्यामृतसारपूरितदृ

श्यामामंबपाहीश्वरि मल्लिकाफुल्लकुसुमोज्ज्वलमध्यभागधम्मिल्लभारजिततारकवृंदशोभां उत्तप्तहेमनिकषोज्ज्वलकायकांतिर्ल
क्ष्मीस्त्वयंप्रणमतांश्रियमातनोति इतिस्तुत्वामहालक्ष्मींभक्तानामिष्टदायिनीं योगिन्योद्यभविष्यध्वमितितासांवरंददौ दृष्टानास्तु
मुदादेवीसारूप्यंचप्रदापयत् ताभिर्निषेविनादेवीवरंवर्यंददौमुदा राजकन्यास्ततःसर्वामुक्ताःस्वपुरमाययुः ततःप्रभृतिलो
केषुपूज्यास्युःसर्वकामदाः ताश्चतुःषष्टियोगिन्योमहालक्ष्मीपरिग्रहात् नृत्यंतिनिवहैस्तत्रगीतवादित्रनिःस्वनैः पुरादेव्याम
हालक्ष्म्याकरहाटपुरेनिशि एवंप्रभावामादेवीविष्णुरामाषडानन व्रतस्यास्यविधानंचशृणुमत्तोविधानतः मासिभाद्रपदेशुक्ले
पक्षेज्येष्ठायुताष्टमी प्रारब्धव्यंव्रतंतत्रमहालक्ष्म्यायतात्मभिः करिष्यामिव्रतंदेवित्वद्भक्तस्त्वत्परायणः तदविघ्नेनमेयातुसमा
प्तिंत्वत्प्रसादतः इत्युच्चार्यततोबध्वादोरकंदक्षिणेकरे षोडशाग्रंथिसहितंगुणैःषोडशभिर्युतं ततोन्वहंमहालक्ष्मींपूजयेन्निय
तात्मवान् गंधपुष्पैःसनैवेद्यैर्यावत्कृष्णाष्टमीदिनं तस्मिन्व्रतदिनेतुसंप्राप्तेकुर्यादुद्यापनंव्रती वस्त्रमंडपिकांकृत्वामाल्याभरणशो
भितां त्रिभूमिंकांचनश्लक्ष्णांनानादीपैश्चशोभितां चतस्रःप्रतिमाःकृत्वासौवर्णीस्तत्स्वरूपिणीः स्नपनंकारयेत्तासांपंचामृत
विधानतः षोडशैरुपचारैश्चधूपदीपादिभिस्तथा जागरंतत्रकर्तव्यंगीतवादित्रनिःस्वनैः ततोनिशीथेसंप्राप्तेभ्युदितेमृतदीधितौ
कृत्वातुस्थंडिलेपद्मंषडंगंपूजयेत्ततः दद्यादर्घ्यंचरागेणव्रतीतस्मैसमाहितः क्षीरोदार्णवसंभूतचंद्रलक्ष्मीसहोदर पीयूषधामन्

रोहिण्यासहितोर्घ्यंगृहाणत्वे क्षीरोदार्णवसंभूते कमले कमलालये प्रयच्छसर्वकामान्मेविष्णुवक्षस्थलालये पुत्रान्देहियशोदेहिसौ
ख्यंसौभाग्यमेवच कालिकालिमहाकालिविकरालिनमोस्तुते त्रैलोक्यजननित्राहिवरदेभक्तवत्सले एकनाथेजगन्नाथेजमदग्नि
प्रियेनघे रेणुकेत्राहिमांदेविशममानःशिवंकुरु कुरुश्रियंमहालक्ष्मीअप्रियंत्वाशुनाशय मंत्रैरेतैर्महालक्ष्मींप्रार्थ्यश्रोत्रिययोषि
तः श्रीसूक्तेनतथावह्नौपद्मानिजुहुयाच्छुचिः पायसंचैवबिल्वानितदलाभेतथाघृतं ग्रहेभ्यश्चैवहोतव्यंसमिच्चरुतिलादिकं चंद
नंतालपत्रंचपुष्पमालादिकंतथा नवंशरावंभक्ष्याणिक्षिप्त्वाबहुविधानिच प्रत्येकंषोडशैतानिपूगपूर्णानिचैवहि तान्यन्येनसमा
च्छाद्यव्रतीदद्यात्समंत्रकं क्षीरोदार्णवसंभूतालक्ष्मीचंद्रसहोदरा व्रतेनानेनसंतुष्टाप्रीयतांविष्णुवल्लभा इंदिराप्रतिगृह्णातिइंदि
रावैददातिच इंदिरातारकोभाभ्यांइंदिरायैनमोनमः दद्यादुपायनादीनिश्रोत्रियाणांचयोषितां चतस्रःप्रतिमास्तास्तुब्राह्मणा
यनिवेदयेत् एवंकृत्यंतुनिर्वर्त्यव्रतीभोजनमाचरेत् स्कंद उ० केनेदंस्त्रीकृतंपूर्वंकथमस्मिन्प्रकाशितं ब्रूहिमेतत्वतोदेवयद्यहं
तववल्लभः शंकर उ० आसीद्राजासार्वभौमोमंगलार्णइतिश्रुतः कौंडिण्येनगरेरम्येतस्यपद्मावतीप्रिया तमागतःकश्चिदे
कःसेवकोब्राह्मणोत्तमः अज्ञातनाम्नस्तस्यासौनामचक्रेनृपस्तदा तवल्लुकइतिख्यातोबभूवद्विजसत्तमः कदाचिन्मृगयासक्तो
भूपालोवनमाविशत् तत्रबिध्वावराहादीन्मृगान्हत्वासहस्रशः क्षुत्तृट्परिगतःश्रांतोवृक्षमूलमुपाश्रितः उदकान्वेष

णोन्चारान्प्रेषयामाससर्वशः वनेजलंतुनापश्यन्क्वचिच्छ्रांताःप्रयत्नतः तेनत्वान्नृपतिंप्रोचुःनात्रांभइतिदुःखिताः तवल्लकोपिव
भ्रामविपिनेंतदन्तंद्रितः भ्रममाणस्तदापश्यन्कस्मिंश्चिद्वनगह्वरे रम्यंसरोवरंदिव्यंकुमुदोत्पलमंडितं तत्रापश्यद्देवकन्यादि
व्यरूपमनोरमाः चार्वंगीश्चारुनयनाःपीनोन्नतपयोधराः हारकंकणकेयूरनूपुरालंकृताःशुभाः पूजयंतीर्महालक्ष्मींव्रतरूपे
णचादरात् तवल्लकोपिपप्रच्छकिमिदंकथ्यतामिति स्त्रियऊचुः महालक्ष्मीव्रतमिदंसर्वकामफलप्रदम् क्रियतेस्माभिरेकाग्र
मनोभिस्त्वत्तुभक्तितः तवल्लकोपितच्छ्रुत्वाव्रतंजग्राहभक्तिमान् तदनुज्ञांगृहीत्वाचजलमादायसत्वरः आजगामजलंतस्मैद
त्वाचांभोजनैःसह जलंपीत्वानृपस्तस्यहस्तवान्दोरकंकरे किमिदंदोरकंविद्वन्किंव्रतंह्यतवानसि राज्ञापृष्टस्तवल्लोपिकथ
यामासतद्व्रतं तच्छ्रुत्वाराजशार्दूलोव्रतंजग्राहभक्तिमान् तवल्लकेनसहितोराजास्वपुरमाययौ पद्मावत्यागृहेगत्वातयारंतुंग
तःसह रममाणाथसादेवीतेनराज्ञाप्रियेणवै तंदृष्ट्वादोरकंहस्तेकुपितात्यंतकोपना कयात्वंवंचितोब्रूहिकयादत्तःस्वदोरकः ज्वाला
मालाकुलेवह्नौक्षिप्तवत्यतिकोपिता हाहाकष्टमिदंपापं हृतंमूढतयात्वया इतिनिर्भर्त्स्यतांराजातत्याजवनगह्वरे साचहानिंययौपश्चा
त्तत्रहानिंययौनृपः महालक्ष्म्यापचारेणसारण्येजलवर्जिते मृगमाणावनेतस्मिन्नकश्चिद्धतिमाप्नुयात् विचरंतीवनेतत्रकृषेःक
स्यचिदाश्रमं ददर्शमृगसंकीर्णंशांतकृष्णमृगान्वितं तत्रापश्यद्वनेरम्येवसिष्ठंमुनिपुंगवम् ववंदेचरणौतस्यविसंज्ञादुःखकर्शि

ता चिरंध्यात्वासुनिस्तस्याज्ञानवान्दुःखकारणं महालक्ष्म्यापचारणज्ञानंविज्ञानचक्षुषा तद्व्रतंकारयामासतस्यादुःखोपशांतये तद्दुः
खंतत्क्षणादेवविनष्टमभवत्तदा पुनश्चमृगयासक्तो भूपालोवनमाविशत् कश्चिन्मृगंसमाविध्यबाणेनैकेनबाहुमान् अन्वगच्छन्मृग
पदंतस्याभूच्चयदागमः वरंमुनिंददर्शाग्रेवसिष्ठंवीतकल्मषं कृतातिथ्यक्रियोदृष्ट्वाचरंतींबहिरंतिके हावभावकटाक्षैश्चहरंतींहरि
णेक्षणां मदांनिर्गत्यनृपतिःप्रोवाचसस्मितंवचः रंभोरुकासिकल्याणिकिमर्थंचरसेवने किन्नरीमानुषीवालंयक्षिणीचारुहासि
नि किमत्रबहुनोक्तेनभजमानंभजस्वमां नृपेणतेनभक्त्योक्तासस्मितावाक्यमब्रवीत् पुनर्भजामिचाहंत्वामवेहिमहिषींनव म
हालक्ष्म्यापचारेणत्वयाहीनावसाम्यहं मुनींद्रस्याश्रमेरम्येतरुगुल्मोपशोभिते ममोपरिनृपाविष्टोमहालक्ष्मीव्रतोत्तमं कारयामास
विधिवत्सर्वविघ्नोपशांतये तयोक्तंवचनंश्रुत्वासचोत्फुल्लविलोचनः ऋषेरनुज्ञामादायप्रियामादायसत्वरः हृष्टपुष्टजनैर्जुष्टंपता
काध्वजशोभितं प्रविवेशनयासार्धंसपौरैरभिवंदितः महालक्ष्मीव्रतंभूयस्तयासहचकारह भुंक्त्वेहभोगान्विपुलान्पुत्रपौत्रसमाव्रृ
तः भूपालःसार्वभौमोभूत्तवल्लोमात्यतांययौ महालक्ष्म्याःप्रसादेनसन्निधिःसर्वसंपदाम् एवंप्रभावासादेवीवराणामिष्टदायिनी
सर्वपापहरादेवीसर्वदुःखापहारिणी एवंषोडशवर्षेषुकर्तव्यंव्रतमुत्तमं याकरिष्यतिमेप्रीत्यास्वयंसिद्धिमुपासते लोकपालाश्च
तुष्यंतिदास्याइवमनोरथान् नारीवापुरुषःकरिष्यतिमुदाभक्त्याव्रतंयत्नतः सेवंतेहरिरुद्रपद्मजस्मराःकुर्वंतितस्यप्रियम् तत्सादं

१४३

परिरंजयंतिमनुजाः मौलिप्रभामंडलैस्तस्मिन्नेवकुटुंबिनीवसतिसा लक्ष्मीः स्वयंविष्णुना सप्रभक्त्यावाप्यभक्त्यावाकुर्वंतिव्रतमुत्तमम्
अंतकालेत्वयंविष्णुः संसारात्परिरक्षति यइदंशृणुयान्नित्यंश्रावयेद्वासमाहितः नसंत्यजतितंलक्ष्मीरलक्ष्मीर्नैवजायते सर्वपापवि
निर्मुक्तः स्वर्गलोकेमहीयते युधिष्ठिरउवाच स्वस्थानलाभपुत्रायुः सर्वैश्वर्यफलप्रदं व्रतमेकंसमाचक्ष्वविचार्यपुरुषोत्तम कृष्णउवाच
दुर्वारेनैवदेत्यैंद्रे परिव्याप्तेत्रिविष्टपे एतदेवकृतस्यादौ देवेंद्रः प्राहनारदम् तस्यश्रुत्वाततोवाक्यंसमुनिः प्रत्यभाषत नारदउ०
पुरंदरपुरापूर्वंपुरमासीत्फलशोभितं रत्नगर्भाभवद्भूमिर्यत्ररत्नाढ्यभूधराः यत्रांगनाजनापांगभ्रूंगालोचनसायकैः त्रैलोक्यंस्व
वशंचक्रे देवः कुसुमसायकः चतुर्वर्गजनिर्यत्रतच्चविश्वस्यभूषणं विश्वकर्मापियद्वीक्ष्यकंपयत्यनिशंशिरः तत्राभवन्महापालोराजाभू
न्मंगलालयः विल्लदेवीप्रियातस्यदुर्भगैकाबभूवह अन्यातुचोलदेवीयामहिषीसायशस्विनी कदाचिन्मंगलोराजाचोलदेवीसहा
यवान् प्रासादशिखरारूढः स्थलीमेकामपश्यत तामालोक्यमहीपालः स्मरस्मेरमुखांबुजः चोलदेवींप्रतिप्राहदंतद्योतितदिङ्
मुखः चंचलाक्षिनवोद्यानंकांतिनिंदितनंदनं कारयामितयोद्दिष्टस्तत्रोद्यानमकारयत् संपन्नंतुतदुद्यानंनानाद्रुमलतान्वितं नाना
फलसमायुक्तंनानापक्षिसमावृतं तत्रागत्यमहाक्रोडस्तत्रुन्यस्तनभस्थलः प्रावृट्कालघनश्यामश्चक्षुःक्षिप्तसंचलः दंष्ट्रावलष्ट
चंद्रार्कः प्रलयांभोधरध्वनिः उद्यानंभंजयामासनानाद्रुमलतान्वितं कांश्चिदुत्पाटयामासपादपान्पादनंदन कांश्चिद्दंतप्रहारेण-

कांश्चिद्दंतप्रघर्षणैः जघानकांश्चित्पुरुषान्रक्षकानंतकोपमः तद्धुनत्कीर्तिनिविज्ञायसंहत्योद्यानपालकाः सभयास्तस्यवृत्तांतमूचुश्चनृपतेःपुरः
तदाकर्ण्यततोराजाक्रोधारुणितलोचनः वधायदंष्ट्रिणस्तस्यसंदिदेशाविलंबतं ततश्चचालभूपालस्त्रिगंडगलितैर्गजैः आप्लावयन्महीं
सर्वांवाजिवृंदवृतोवरां चालयन्सकलान्शैलान्स्यंदनौघमरुद्गवैः पदातिभिर्महावीरैः पूरयन्निखिलादिशः ततोगाढंसमावृत्यतदुद्या
नंनरेश्वरः पत्तिव्रातमहाध्वानैः पूरयन्निखिलादिशः पथियस्यवराहोयंप्रयात्युपवनांतरं तस्यावश्यंशिरश्छेदंविदधामिरिपोरिव त
स्यभूपस्यतद्वाक्यंसमाकर्ण्यसशूकरः जगामास्थैवमार्गेणप्राणिनांनैष्ठितंयथा ततःसशूकरःसक्तःकशयातंप्रताड्यच वीडाकुलं
कितस्थैंदुर्मार्गेतस्यैवसोगमत् गत्वाथविपिनंघोरंसिंहशार्दूलसंकुलं तमालतालहिंतालशालार्जुनलतान्वितं झिल्लीझंकारसंभार
वाचालितदिगंतरं क्रोलोवेलामवाप्याथसोभवद्राजसंमुखः भल्लेनसोवधीत्क्रोलंवज्रेणाद्रिंयथाहरिः अथव्योम्निविमानस्थःस्मर
सुंदरविग्रहः क्रोडरूपंपरित्यज्यसोब्रवीन्मंगलंनृपं गंधर्वउ॰ स्वस्तितेस्तुमहीपालत्वयामुक्तिःकृतामम तमाकर्णयवृत्तांतंयेनाहं
जातईदृशः एकदादेवतावृंदैःसंवृतःकमलासनः चंचत्पुटादिभिस्तालैःषड्जाद्यैःसप्तभिःस्वरैः मंद्रादिभिस्त्रिभिर्मानैर्गीयमानं
मयानृप नानास्थानगुणोपेतमश्रौषीद्गीतमुत्तमं गीयमानश्च्युतस्थानात्ततोहंकर्मणामुना शप्तश्चित्ररथस्तेनब्रह्मणासृष्टिकर्मणा
ब्रह्मोवा॰ क्रोलोभवत्वंमेदिन्यांमुक्तिस्तेतुनदाभवेत् निर्जिताखिलभूपालोमंगलस्त्वांहनिष्यति तदद्यघटितंसर्वंत्वत्प्रसादान्महीप

ने मद्ब्राह्मणवरंभूपदेवस्यापिसुदुर्लभं महालक्ष्मीव्रतंदिव्यंचतुर्वर्गफलप्रदं लभस्वसार्वभौमत्वंगच्छराज्यंनिजंद्रुतं नारदउ॰ चित्रर
थोथगंधर्वउक्त्वेदंभूपतिंप्रति अंतर्धानंगतस्तुष्टः शरत्कालइवांबुदः अथमंगलभूपालः पार्श्वस्थंद्विजमागतं विलोक्यबटुकंकंचि
त्कक्षानिक्षिप्तशंबलं उवाचमधुरांवाचंस्मितपूर्वांशुचिस्मितां देवस्त्वंदानवस्त्वंवागंधर्वोवाथराक्षसः सत्यंवद बटोकस्मात्किमर्थंत्व
मिहागतः श्रुत्वेतच्छिष्यभावंत्वंमाहत्वद्देवसंभवः अहंसार्थत्वयायातस्त्वदादिशयथोचितं राजाथतमुवाचेदंत्वंबटोनूनमाइ
यः अपांस्थानंविलोक्यत्वंतूर्णंतोयंममानय अथविश्रम्यभूपालंबटुकोवटपादपे तथाहूत्यतुरंगंचसमारुह्यमहामतिः –
जगामपक्षिघोषेणयत्रास्तेसुंदरंसरः कमलैकनिवासेनरथांगाभरणेनच वनमालालयत्वेनदधन्नारायणींतनूम् भग्नवग्रुश
तद्योगमक्षारंविषवर्जितं नाशितागस्तितृष्णार्तिप्रसन्नंसागराधिकं पंकेमग्नोथतत्राश्वः पृष्ठादुत्तीर्यतस्यसः चतुर्दिशंनिरीक्ष्या
थतस्यैवसरसस्तटे दिव्यवस्त्रपरीधानंदिव्याभरणभूषितं कथयंतंकथांदिव्यांस्त्रीणांसार्थमपश्यत उपसृत्याथतंसोथस्ववृ
त्तांतंनिवेद्यच कृतांजलिरितिप्राहबटुर्मधुरयागिरा बटुरुवा॰ एतत्किंक्रियतेसार्थत्वयाभक्तिपरेणवै कोविधिःकिंफलंचास्यब्रू
हितन्मेयथातथं श्रुत्वाचतमुवाचेदंसार्थःकरुणयागिरा सार्थउ॰ शृणुविप्रैकचित्तेनश्रद्धाभक्तिसमन्वितः यामायामहृतिःशक्ति
स्त्रैलोक्येप्यभिधीयते व्रतमेतन्महालक्ष्म्यास्तस्याःसर्वफलप्रदं आकर्णयविधिंचास्यकथ्यमानंमयाबटो भाद्रेमासिसितष्टम्या–

प्रारंभोस्यविधीयते प्रातःषोडशाहत्वस्तु प्रक्षाल्यांघ्रीकरौसुरवं तंतुषोडशसंमिश्रं ग्रंथिषोडशसंयुतं मालतीपुष्पकर्पूरचंदनागरुच-
र्चितं लक्ष्म्यैनमोथमंत्रेणप्रतिग्रंथ्यभिमंत्रितं धनंधान्यंधरांधर्मंकीर्तिमायुर्यशःश्रियं तुरगान्दंतिनःपुत्रान्महालक्ष्मीप्रयच्छमे मं
त्रेणानेनबध्वाथदोरकंदक्षिणेकरे कांडानिषोडशादायदूर्वायाश्चाक्षतांस्तथा एकचित्तःकथांश्रुत्वापूजयेत्तेश्चदोरकं ततस्तुप्रात-
रारभ्ययावत्स्यादसिताष्टमी तावत्प्रक्षाल्यहस्तौतुपादादीनिकथांतथा शृणुयात्प्रत्यहंविप्रतत्संख्यैरक्षतादिभिः अथकृष्णाष्ट
मींप्राप्यनक्तकालेजितेंद्रियः स्नातःशुक्लांबरधरोव्रतीपूजागृहंविशेत् तत्रोपविश्यपूर्वास्यश्चारुधौतासनोपरि श्वेतपत्रेलिखेदष्ट
दलंकमलमुत्तमम् ऐंद्र्यादिशक्तिसंयुक्तंपार्श्वेपत्रंसकेसरं कर्णिकायांततोलक्ष्मींकर्पूरक्षोदपांडुरां शुक्लवस्त्रपरीधानांमुक्ताभर
णभूषितां पंकजासनसंस्थानांस्मेराननसरोरुहां शारदेंदुकलाकांतिस्निग्धनेत्रांचतुर्भुजां पद्मयुग्माभयदांकरव्यग्रकरांबुजां
अभितोगजयुग्मेनसिंच्यमानांकरांबुना संचिंत्यैवंलिखेद्देवींकर्पूरागरुचंदनैः ततस्त्वावाहनंकुर्यान्मंत्रेणानेनसुव्रती महालक्ष्मि
समागच्छपद्मनाभपदादिह पंचोपचारपूजेयंत्वदर्थंदेविकल्पिता षोडशाहेतुसंपूर्णेकुर्याद्युद्यापनंव्रती विधिनायेनविप्रेंद्रशृणु
श्रद्धासमन्वितः दातव्याधेनुरेकावैस्वर्णशृंगादिसंयुता श्रोत्रियायसुवर्णंचतथान्नवसनादिकं यथाशक्त्यासुवर्णंचदत्वापूर्णंप्र
वेद्व्रतं द्विजेभ्यःषोडशेभ्यश्चप्रदद्यादासनादिकं सार्ध३॰ एतत्तेकथितंविप्रव्रतानामुत्तमंव्रतं तद्विधानादनायासाल्लभतेवांछि

तंफलं हृत्वाप्रबंपरंविमल्वंराज्ञातत्त्वकारय व्रतमेतत्त्वथाविप्रदेयंश्रद्धावतेपरं नास्तिकानांपुरस्तात्तुनप्रकाश्यंकथंचन नमस्कृत्वाथतं
सार्थिपंकादुत्थाप्यवाजिनं सरसोंभस्तथादायपद्मिनीपद्मयंत्रितं आरुह्यतुरगंविप्रोराज्ञांतिकमुपागमत् निवेद्यतद्व्रतंविप्रोराजान
मथकारयत् नानाप्रकारसंभूतंमाबलंबहुकस्यच व्रतप्रभावादभवत्सभूभुक्भूभृतांवरः अथारुह्यमहीपालोबहुवर्षाणितंह
यम् तद्व्रतस्यप्रभावेनतूर्णंस्वपुरमागतः तमायांतंसमालोक्यराजानंभूपुरंदरं उत्सवंचक्रिरेपौरास्तोर्यादिकस्वरःसराः च
लत्य ताकदोर्मीलंलसत्कलशमौलिकं पुरंनृत्यदिवाभानिछन्नघंटोघघर्घरैः अथोत्तलिकयाकाश्चिद्धावंतिस्मवरांगनाः स्व
र्णमुक्तालताजालैश्चबुकमिवकुर्वती काश्चिद्विमुक्तकेशैवपरागान्नयनांजसा काश्चिन्निर्तंबभारार्ताकाचित्पीनपयोधरा अथा
विशन्महीपालोबहुनासहितोगृहं पौरनारीजनाक्षिप्तलाजैःपूरितविग्रहः अथोत्तीर्यहयात्तस्माद्बहुबाहुवलंबितः जगा-
मसंगलोराजाचोलदेवीतुयत्रवै दृष्ट्वातुचोलदेवीसादोरकंराजबाहुके विमृश्यमनसाक्रुद्धाशंकांचक्रेनृपेतिमाम् आखेटक
स्यव्याजेनगतोन्यांवल्लभांप्रति सौभाग्यायतयाबद्धोदोरकोदक्षिणेकरे तथैवबहुकृत्वायद्दृष्टुंमांप्रेषितोध्रुवं ततोदृष्ट्वैवबहु
धात्माकोपाच्छित्त्वादोरकं निक्षेपचमहीपृष्ठेस्वसौभाग्यंस्वरैःसह नबुबोधचतांराजात्रोटयंतींचदोरकं सामंतमंत्रिभृ
त्याद्यैःकुर्वन्वार्ताविनोदवां चिल्लदेव्यास्तदाकाचिद्दासीदृष्टुंसमागता तयादोरकमादायबहुमानपुरस्कृतं तद्व्रतस्यविधा

नार्थं स्वस्वामिन्यै निवेदितं ततो नूतनमाहूय चिल्लदेव्यकरोद्भृतं अथ संवत्सरे तीते लक्ष्मीपूजादिने नृप नौर्य त्रिकस्य निःस्वानं चि
ल्लदेव्या गृहे श्रृणोत् तदाकर्ण्य महीपालो नूतनं बटुमब्रवीत् अहह्यद्य दिनं लक्ष्म्याः सम्रतस्य कदोरवः इति पृष्टो नृपं प्राह दोरवत्रो
टनक्रमं तच्छ्रुत्वा मंगलो राजा चोलदेव्यै प्रकुप्यत मयाद्य पूजनं कार्यं चिल्लदेवी गृहं प्रति अथ मंगलभूपालो बटुबाहुवलंबितः
चचाल क्रमतो वासौ चिल्लदेवी गृहं प्रति अत्रांतरे महालक्ष्मीर्वृद्धारूपं विधाय च जिज्ञासार्थं गृहं तस्याश्चोलदेव्याः समागता
गच्छ गच्छाद्य दुष्टे किं इहागत्य करोषि मे तया दुराशया त्यर्थं लक्ष्मीः साप्यवमानिता ततः क्रुद्धा महालक्ष्मीश्चोलदेवीमभाषत
शशापाथ महालक्ष्मीश्चिल्लदेवीनिकेतनम् बहुधा चिल्लदेव्या सा लक्ष्मीः संमानितार्चिता वृद्धारूपं परित्यज्य प्रत्यक्षा साभवत्त
दा पंचोपचारपूजाभिः श्रियं राज्ञी ननोर्चयत् अतिदुष्टा ततो लक्ष्मीश्चिल्लदेवीमुवाच ह लक्ष्मीरुवा० अर्चनात्ते प्रसन्नास्मि
चिल्लदेवी वरं श्रृणु वव्रे वरं ततो राज्ञी चिल्लदेवी शुभाशया चिल्लदेव्यु० ये करिष्यंति ते देवि व्रतमेतत्सुरेश्वरि तद्गेहमनत्वया
त्याज्यं यावच्चंद्रदिवाकरौ अद्यारभ्य तथा त्वेषा भूपसंबंधिनी तथा ख्यातिं यातु क्षितौ देवि भक्तिर्भवतु मे त्वयि सद्भावेन क
थामेतां ये श्रृण्वंति पठंति च तेषां च वांछितं सर्वं त्वया देयं सदेव हि तथेत्युक्त्वा महालक्ष्मीस्तत्रैवांतरधीयत अथ मंगलभूपाल
स्तत्रागत्य श्रियोर्चनं चक्रे परमया भक्त्या चिल्लदेव्या समन्वितः अथ र्ष्ययादुराचारा चिल्लदेवी गृहं प्रति चोलदेवी समायाता

१५६

द्वारस्थैर्वारिताजनैः ततोजगामविपिनंयत्रासीदंगिरामुनिः अथालोक्याद्भुताकारांज्ञानदृष्ट्याविचिंत्यताम् मुनिस्तुश्रीव्रतंदिव्यंचोलदेवीमकार
यत् व्रतेकृतेथसंजाताचोलदेवीमहायशाः दाक्षिण्यकेलिलीलाभिर्लावण्यैकनिकेतनम् ततःकदाचिदागत्यवनमाखेटनंनृपः मुनेर्वेश्मनिरा
जातांददर्शवामलोचनां अथराजामुनिंप्राहकेयंधन्येतिकथ्यताम् तद्वृत्तांतंसमाख्यायराज्ञेतांप्रददौमुनिः अथागत्यनिजंराज्यंचिल्लुदेवी
समन्वितम् चिल्लुदेव्यात्वसहितोबुभुजेमंगलोनृपः चिल्लुदेवीवरंवव्रेचोलदेवीसमागमम् समुद्रस्ययथागंगायमुनेसंगतेसदा तथामंगलभू
पस्यआलिंग्येवामलोचने परस्पराधिकेतेतुप्रियेमान्येबभूवतुः चिल्लुदेव्यासमंसोथचोलदेव्यासहाखिलाम् सप्तद्वीपवतींपृथ्वींबुभुजेमं-
गलोनृपः व्रतस्यास्यैवसामर्थ्याद्बुद्बुकःसोपिनूतनः अभून्मंगलभूपस्यमंत्रीतवयथागुरुः भुक्त्वाथसकलान्भोगानमंगलोभूभुजांवरः
सपुनःस्वर्गमित्याभून्नक्षत्रंविष्णुदेवतम् नारदउवाच एतत्तेकथितंशक्रव्रतानामुत्तमव्रतम् यत्कथाश्रवणेनापिलभन्तेवांछितंफलम् म
यागाभिवतीर्थेषुदेवेषुभगवानिव नदीषुचयथागंगाव्रतेष्वेतत्तथाव्रतम् धर्मंचार्थंचकामंचमोक्षंचयदिवांछसि तर्हीदंचव्रतंशक्रकुरुश्रद्धा
समन्वितः धनंधान्यंधरांधर्मंकीर्तिमायुर्यशःश्रियम् तुरंगान्दंतिनःपुत्रान्महालक्ष्मीप्रयच्छति इतिश्रीभविष्योत्तरपुराणेमहालक्ष्मीव्र-
तोद्यापनंसंपूर्णं अथआश्विनशुक्लाष्टमीमहाष्टमी तत्राष्टम्यांभद्रकालीदक्षयज्ञविनाशिनी प्रादुर्भूतामहाघोरायोगिनीकोटिभिर्वृता
देवीपुराणे सप्तमीवेधसंयुक्तायैःकृतातुमहाष्टमी पुत्रदाराधनैर्हीनाभ्रमंतीहपिशाचवत् शरज्जन्माष्टमीपूज्यानवमीसंयुतासदा सप्तमी

संयुतानित्यंशोकसंतापकारिणी जंभेनसप्तमीयुक्तापूजितात्वमहाष्टमी इंद्रेणनिहतोजंभस्तस्यांदानवपुंगवः तस्मात्सर्वप्रयत्नेनसप्तमीसहिताष्ट
मी वर्जनीयाप्रयत्नेनमनुष्यैः शुभकांक्षिभिः सप्तमीकलयायत्रपरतश्चाष्टमीतथा तेनशल्यमिदंप्रोक्तंपुत्रपौत्रक्षयप्रदम् पुत्रान्हंतिपशून्हं
तिराष्ट्रंहंतिसराज्यकम् हंतिजानपदांश्चापिसप्तमीसहिताष्टमी शुक्लपक्षेष्टमीचैवशुक्लपक्षेचतुर्दशी पूर्वविद्धानकर्तव्याकर्तव्यापरसंयुता
अत्रत्रिमुहूर्तन्यूनासत्यपिसप्तमीवर्जनप्रयोजिका नत्रिमुहूर्तैव सप्तमीस्वल्पसंयुक्तावर्जनीयासदाष्टमी स्तोकापिसातिथिःपुण्यायस्यांसूर्यो
दयेसति नवमीयुक्तायाअलाभेतुसप्तमीयुतैवकार्या उपवासंमहाष्टम्यांपुत्रवान्नसमाचरेत् सप्तशत्यास्तुपाठेननोषयेज्जगदंबिकाम् अ
थआश्विनकृष्णाष्टम्यांअशोकाष्टमीव्रतम् हेमाद्रौआदित्यपुराणे आश्विनस्यासितेपक्षेपूजनीयात्वशोकिका गंधमाल्यनमस्कारधूपदी
पैश्चसर्वदा तस्मिन्नहनियाभुंक्तेनक्तमिंदुविवर्जिते भवत्यथविशोकासायत्रयत्राभिजायते पूर्वाष्टमीषुसर्वासुनवेच्छन्तीतिवैमुने मौष-
पद्यामतीतायांयास्यात्कृष्णाष्टमीयुता तत्रकार्यंव्रतंत्वेतत्सर्वकामफलप्रदम् इतिअशोकाष्टमी अथमार्गशीर्षकृष्णाष्टम्यांकाशीखंडे
कालभैरवस्यपूजोक्ता मार्गशीर्षासिताष्टम्यांकालभैरवसन्निधौ उपोष्यजागरंकुर्वन्सर्वपापैःप्रमुच्यते इतिकाशीखंडात् रुद्रव्रतेषुसर्वे
षुकर्तव्यासंमुखीतिथिः इतिब्रह्मवैवर्ताच्च दिनद्वयेंशतोराभिव्याप्तौउत्तरैवभैरवोत्पत्तिः प्रदोषकालव्यापिनीतिकेचित् तत्र शिवरहस्ये
मध्याह्नेभैरवोत्पत्तेस्तच्छ्रवणात् तत्रैवनित्ययात्रादिकंकृत्वामध्याह्नेसंस्थितेरवाविद्युपक्रम्यततोप्ररूपान्नवधीत्ततःश्रीकालभैरवः आ-

विरासीत्तदालोकान्प्रभाषयन्नखिलान्प्रति कृत्वाचविविधांपूजांमहासंभारविस्तरैः नरोमार्गासिताष्टम्यांवार्षिकंविप्रसुत्सृजेत् तीर्थेकालो
दकेस्नात्वातर्पणांविधिपूर्वकम् विलोक्यकालराजानंनिरयाद्दूरेतिनृप सूतउवाच व्रतानिचप्रवक्ष्यामिशृणुध्वंमुनिपुंगवाः तत्रकृष्णा
ष्टमीपुण्यासर्वपापप्रणाशिनी विष्णुत्वंप्राप्तवान्विष्णुःसुरेशत्वंशचीपतिः कुबेरोयक्षराज्यत्वंनियंतृत्वंयमःस्वयम् चंद्रश्चंद्रत्वमाप-
न्नोगणेशत्वंगणाधिपः स्कंदःसेनापतित्वंचतथाचान्येगणेश्वराः कृत्वाचैश्वर्यमापन्नाःसौभाग्यंदेववल्लभाः व्रतस्यास्यप्रभावेनलक्ष्म्याः
पतिरभूद्धरिः ययातिःसार्वभौमत्वंतथाचान्येनृपोत्तमाः ऋषयोमुनयःसिद्धगंधर्वाणांचकन्यकाः कृत्वावैपरमांसिद्धिंप्राप्तास्त्रमुनिपुंगवाः
नंदीश्वरेणयत्प्रोक्तंनारदायमहात्मने कृष्णाष्टमीव्रतंश्रेष्ठंसर्वकामफलप्रदं मेरोर्यद्दक्षिणंशृंगंसुरासुरनमस्कृतम् तत्रनंदीश्वरंदृष्ट्वा
सर्वज्ञंशंभुवल्लभम् उपास्यमानंमुनिभिःस्तूयमानंमरुद्गणैः सर्वानुग्रहकर्तारंस्तुत्वातुविविधैःस्तवैः अब्रवीत्प्रणिपत्याथदंडवन्नारदो
मुनिः नारदउ० भगवन्सर्वतत्त्वज्ञसर्वेषामभयप्रद केनव्रतेनभगवंस्तपोवृद्धिःप्रजायते सौभाग्यंकांतिरैश्वर्यमपत्यंचयशस्तथा शा
श्वतीमुक्तिरंतेचकर्मपाशविमोचनी भगवंस्तद्व्रतंब्रूहिकारुण्याच्छंकरप्रिय नंदिकेश्वरउ० कृष्णाष्टमीव्रतंश्रेष्ठमस्तिनारदतच्छृणु
गणेशत्वंमयालब्धंयेनपुण्येनभोमुने मासिमार्गशिरेप्राप्तेकृष्णाष्टम्यांजितेंद्रियः अश्वत्थदंतकाष्ठेनकृत्वावैदंतधावनम् स्नानंकृ-
त्वातुविधिवत्तर्पणंचैवनारद आगच्छभवनेचैवपूजयेच्छंकरंप्रभुम् गोमूत्रंप्राश्यविधिवदुपवासीभवेन्निशि अतिरात्रस्ययज्ञस्यफलं

चाष्टगुणंभवेत् सर्पिषःप्राशनंपौषेदंतकाष्ठंचतत्स्मृतम् पूजयेच्छंभुनामानंअंगवंतंमहेश्वरम् वाजपेयाष्टकंपुण्यंप्राप्नोतिश्रद्धयान्वितः माघे
वटस्यकाष्ठंचगोक्षीरंप्राशयेत्स्मृतम् महेश्वरंसकृत्संपूज्यगोमेधाष्टगुणंफलम् फाल्गुनेचैवतदेवोक्तंसर्पिषःप्राशनंचयत् संपूजयेन्महादेवंराज
सूयाष्टकंफलम् काष्ठमौदुंबरंचैवप्राशनेप्रार्जितायवाः पूजयेच्छंभुनामानमश्वमेधफलंलभेत् शिवंसंपूज्यवैशाखेपीत्वाचैवकुशोदकम्
नारमेधाष्टकंपुण्यंप्राप्नोत्येवहिनारद ज्येष्ठेप्लक्षंभवेत्काष्ठंसंपूज्यपशुपतिंविभुम् गवांशृंगोदकंप्राश्यस्वपेद्देवस्यसन्निधौ गवांकोटिप्र
दानस्यतत्फलंतदवाप्नुयात् आषाढेचोग्रनामानंइष्ट्वासंप्राश्यगोमयम् सौत्रामणेस्तुयज्ञस्यफलमष्टगुणंभवेत् पालाशंश्रावणेप्रोक्तंसर्वं
संपूज्यनारद प्राशयित्वार्कपत्राणिकल्पंशिवपुरेवसेत् मासेभाद्रपदेष्टम्यांत्र्यंबकंसंप्रपूजयेत् प्राशनंबिल्वपत्रस्यसर्वदीक्षाफलंलभे
त् आश्विनेजंबुवृक्षस्यदंतकाष्ठमुदीरितम् ईश्वरंपूजयेद्भक्त्याप्राशयेत्तंदुलोदकम् पौंडरीकस्ययज्ञस्यफलमष्टगुणंभवेत् मासेतु-
कार्तिकेष्टम्यांईशानाख्यंप्रपूजयेत् पंचगव्यंसकृत्पीत्वाअग्निष्टोमफलंलभेत् उद्यापनंचवर्षांतेप्रकुर्याद्भक्तितत्परः विरच्यलिंगतोभद्रं
पूजयेत्सर्वदेवताः वितानंतत्रबध्नीयात्पंचवर्णंसुशोभनम् आचार्यंवरयित्वाचऋत्विजोरुद्रसंयुतान् सुवर्णप्रतिमांतत्रवृषभंरजत
स्यच कलशेपूजयित्वावरात्रौजागरमाचरेत् प्रभातेचपुनःपूज्यअग्निस्थापनमाचरेत् हुनेदष्टशतंचैवतिलद्रव्यंघृतप्लुतम् त्र्यंबकेनच-
मंत्रेणगौर्याश्चैवपृथक्पृथक् वर्षांतेभोजयेद्विप्रान्शिवभक्तिसमन्वितान् पायसंघृतसंयुक्तंमधुनाचपरिप्लुतम् शक्त्याहिरण्यवासां

सिभक्त्यातेभ्योनिवेदयेत् देवायचापिदद्यान्नंवितानंध्वजचामरम् कृष्णांपयस्विनींगांचघंटांकंदुकवाससी सरत्नांतत्रकलशांअलंकृत्यचना
रद अलंकारंचवस्त्रंचदक्षिणांचस्वशक्तितः भक्त्याप्रणम्यविधिवदाचार्यायनिवेदयेत् करोत्येवंव्रतंपुण्यंवर्षमेकंनिरंतरम् महापातकनि
र्मुक्तः सर्वैश्वर्यसमन्वितः कल्पकोटिशतंसाग्रंशिवलोकेमहीयते कृष्णाष्टमीव्रतंसम्यक् देवर्षेः कथितंमया यदुक्तंदेवदेवेनदेव्यैविश्वस्य
जायुरा सूतउवाच एवंनंदीश्वराच्छ्रुत्वानारदोमुनिपुंगवः कृष्णाष्टमीव्रतंपुण्यंययौबदरिकाश्रमम् व्रतस्यास्यप्रभावेयः पठेद्वाश्रृणुयाद
पि सयातिपरमंस्थानंयत्रदेवोमहेश्वरः इतिश्रीआदित्यपुराणेकृष्णाष्टमीव्रतंनामएकादशोऽध्यायः इतिकालभैरवाष्टमी इत्य
ष्टमीव्रतानिसमाप्तानि अथनवमीव्रतानिलिख्यंते तत्रचैत्रशुक्लनवम्यांरामनवमीव्रतम् इदंचपरविद्धायांमध्याह्नव्यापिन्यांकार्यं
तदुक्तंअगस्त्यसंहितायां चैत्रशुक्लातुनवमीपुनर्वसुयुतायदि सैवमध्याह्नयोगेनमहापुण्यतमाभवेत् दिनद्वयेऋक्षयोगेमध्या-
ह्नव्याप्तावेकदेशव्याप्तौवापराऽन्यथापूर्वा तदुक्तंतत्रैव नवमीचाष्टमीविद्धात्याज्याविष्णुपरायणैः उपोषणंनवम्यांवैदशम्यांपारणंभवेत्
चैत्रमासेनवम्यांतुजातोरामःस्वयंहरिः पुनर्वस्वृक्षसंयुक्तासातिथिःसर्वकामदा श्रीरामनवमीप्रोक्ताकोटिसूर्यग्रहाधिका केवलापिस
दोपोष्यानवमीशब्दसंग्रहात् तस्मात्सर्वात्मनासर्वैःकार्यंवैनवमीव्रतम् अथागस्त्यसंहितायाम् चैत्रेनवम्यांप्राक्पक्षेदिवापुण्येपु-
नर्वसौ उदयेगुरुगौरांशोःस्वोच्चस्थेग्रहपंचके मेषेपूषणिसंप्राप्तेलग्नेकर्कटकाह्वये आविरासीत्सकलयाकौशल्यायांपरःपुमान्

प्राक्पक्षेशुक्लपक्षेउदयेलग्नेगुरुगौरांशेगुरुनवांशे तस्मिन्दिनेतुकर्तव्यमुपवासव्रतंसदा तत्रजागरणंकुर्याद्रघुनाथपरोभुवि प्रविद्धतिरवद्व
दिव्यावृत्त्यर्थं प्रातर्दशम्यांकृत्वातुसंध्याद्याःकालिकाःक्रियाः संपूज्यविधिवद्रामंभक्त्यावित्तानुसारतः ब्राह्मणान्भोजयेद्भक्त्यादक्षिणा
भिश्चतोषयेत् गोभूतिलहिरण्याद्यैर्वस्त्रालंकारभूषणैः रामंभक्त्याप्रयत्नेनपूजयेत्तत्परयामुदा एवंयःकुरुतेभक्त्याश्रीरामनवमीव्रतम्
अनेकजन्मसिद्धानिपातकानिबहून्यपि भस्मीकृत्वाव्रजंत्येवतद्विष्णोःपरमंपदम् सर्वेषामप्ययंधर्मोभुक्तिमुक्त्यैकसाधनः अशुचिर्वा-
पिपापिष्ठःकृत्वेदंव्रतमुत्तमम् पूज्यःस्यात्सर्वभूतानांयथारामस्तथैवसः यस्तुरामनवम्यांवैभुंक्तेसचनराधमः कुंभीपाकेषुघोरेषुपच्य-
तेनात्रसंशयः अकृत्वारामनवमीव्रतंसर्वव्रतोत्तमम् व्रतान्यन्यानिकुरुतेनतस्यफलभाग्भवेत् रहस्यानिचपापानिप्रख्यातानिबहून्य
पि महांतिचप्रणश्यंतिश्रीरामनवमीव्रतात् एकामपिनरोभक्त्याश्रीरामनवमींमुने उपोष्यकृतकृत्यःस्यात्सर्वपापैःप्रमुच्यते नरोराम
नवम्यांतुश्रीरामप्रतिमाप्रदः विधानेनमुनिःश्रेष्ठसमुक्तोनात्रसंशयः सुतीक्ष्णउवाच श्रीरामप्रतिमादानंविधानंवाकथंमुने कथय-
स्वमुनिश्रेष्ठभक्तस्यममविस्तरात् अगस्त्यउ० कथयिष्यामितद्दिव्यंप्रतिमादानमुत्तमम् विधानंचापियत्नेनचनरस्तुवैष्णवोत्तमः अ
ष्टम्यांचैत्रमासेतुशुक्लपक्षेजितेंद्रियः दंतधावनपूर्वंतुप्रातःस्नायाद्यथाविधि नद्यांतडागेकूपेवाह्रदेप्रस्रवणेपिवा ततःसंध्यादिकाः
कार्याःसंस्मरन्राघवंहृदि गृहमासाद्यविप्रेंद्रकुर्यात्पूजादिकंपरम् दांतंकुटुंबिनंविप्रंवेदशास्त्रपरंमुदा श्रीरामपूजानिरतंसुशीलंदं

भवर्जितं विधिज्ञंराममंत्राणांराममंत्रैकसाधनं आहूयभक्त्यासंपूज्य वृणुयात्प्रार्थयन्निति श्रीरामप्रतिमादानंकरिष्येहंद्विजोत्तम भक्त्याचार्योभवप्रीतःश्री
रामोसिलमेवच इत्युक्त्वापूज्यविप्रेंद्रंस्नापयित्वाततःपरं तैलेनाभ्यज्यचस्नायाच्चिंतयन्राघवंहृदि तैलेनाभ्यज्यस्नापयित्वेत्यन्वयः श्वेतांबरधरःश्वेतगं
धमाल्यानिधारयेत् अर्चितोभूषितश्चैवकृतमध्याह्निकक्रियः अर्चितःकृतार्चनः आचार्यंभोजयेद्भक्त्यासात्विकान्नैःसविस्तरं भुंजीतस्वयमप्येवंहृ
दिराममनुस्मरन् एकभक्तव्रतीतत्रसहाचार्योजितेंद्रियः शृण्वन्रामकथांदिव्यामहःशेषंनयेन्मुने सायंसंध्यादिकाःकुर्यात्क्रियाराममनुस्मरन् आ
चार्यसहितोरात्रावधःशायीजितेंद्रियः वसेत्स्वयंनचैकांतेश्रीरामार्पितमानसः ततःप्रातःसमुत्थायस्नात्वासंध्यांयथाविधि प्रातःसर्वाणिकर्मा
णिशीघ्रमेवसमापयेत् ततःस्वस्थमनाभूत्वाविद्वद्भिःसहितोनघ स्वगृहस्योत्तरेदेशेद्वारस्योत्तरमंडपम् स्वगृहसमीपे चतुर्द्वारंपताकाढ्यंसवि-
तानंसतोरणं मनोहरंमहोत्सेधंपुष्पाद्यैःसमलंकृत शंखचक्रहनूमद्भिःप्राग्द्वारेसमलंकृतं गरुत्मच्छार्ङ्गबाणैश्चदक्षिणेसमलंकृतम् गदाखड्गां-
गदैश्चैवपश्चिमेसुविभूषितम् पद्मस्वस्तिकनीलैश्चकौबेरेसमलंकृतं मध्येहस्तचतुष्कायवेदिकायुक्तमायतं प्रविशयन्नृत्यगीतैश्चवाद्यैश्चापि
सुसंयुतं पुण्याहंवाचयेत्तत्रविद्वद्भिःप्रीतमानसः ततःसंकल्पयेद्देवंराममेवस्मरन्मुने अस्यांरामनवम्यांचरामाराधनतत्परः उपोष्याष्टसुयामेषु
पूजयित्वायथाविधि इमांस्वर्णमयींरामप्रतिमांचप्रयत्नतः श्रीरामप्रीतयेदास्येरामभक्तायधीमते प्रीतोरामोहरत्वाशुपापानिसुबहूनिमे अ
नेकजन्मसिद्धानिअभ्यस्तानिमहांतिच विलिखेत्सर्वतोभद्रंवेदिकोपरिसुंदरं मध्येतीर्थोदकैर्युक्तंपात्रंसंस्थाप्यचर्चितम् सौवर्णंराजतंता

त्रपात्रेषट्कोणमालिखेत् ततःस्वर्णमयींरामप्रतिमांपलमात्रतः निर्मितांद्विभुजांदिव्यांवामांकस्थितजानकीम् बिभ्रतींदक्षिणकरेज्ञानमुद्रांमहा
मुने वामेनाधःकरेणेशांदेवीमालिंग्यसंस्थितां सिंहासनेराजतेत्रपलद्वयविनिर्मिते पंचामृतस्नानपूर्वंसंपूज्यविधिवत्ततः मूलमंत्रेणनियतो
न्यासपूर्वमतंद्रितः दिवैवंविधिवत्कृत्वारात्रौजागरणंततः दिव्यांरामकथांश्रुत्वारामभक्तैःसमन्वितः नृत्यगीतादिभिश्चैवरामस्तोत्रैरनेकधा
रामाष्टकैस्तथापूजागंधपुष्पाक्षतादिभिः कर्पूरागरुकस्तूरीकल्हाराद्यैरनेकधा पूजयेद्विधिवद्भक्त्यादिवारात्रंनयेद्बुधः ततःप्रातःसमुत्थाय
स्नानसंध्यादिकाःक्रियाः समाप्यविधिवद्रामंपूजयेद्विधिवन्मुने ततोहोमंप्रकुर्वीतमूलमंत्रेणमंत्रवित् पूर्वोक्तपद्मकुंडेवास्थंडिलेवासमाहितः
लौकिकाग्नौविधानेनशतमष्टोत्तरंततः आज्येनपायसेनैवस्मरन्राममनन्यधीः ततोभक्त्यासमभ्यर्च्यआचार्यंपूजयेन्मुने कुंडलाभ्यांसरत्नाभ्या
मंगुलीयैरनेकधा गंधपुष्पाक्षतैर्वस्त्रैर्विविधैःसुमनोहरैः ततोरामंस्मरन्दद्यादेवंमंत्रमुदीरयेत् इमांस्वर्णमयींरामप्रतिमांसमलंकृतां चित्र
वस्त्रयुगच्छन्नांरामोहंराघवायते श्रीरामप्रीतयेदास्येतुष्टोभवतुराघवः इतिदत्वाविधानेनदद्यादेवंदक्षिणांपुनः अन्येभ्यश्चयथान्यायंगोहिर
ण्यादिशक्तितः दद्याद्वासोयुगंधान्यंयथाविभवमादृतः ब्राह्मणैःसहभुंजीततेभ्योदद्याच्चदक्षिणाम् ब्रह्महत्यादिपापेभ्योमुच्यतेनात्रसंश
यः तुलापुरुषदानादिफलंप्राप्नोतिसुव्रतः अनेकजन्मसंसिद्धपापेभ्योमुच्यतेध्रुवम् बहुनाकिमिहोक्तेनमुक्तिस्तस्यकरेस्थिता कुरुक्षेत्रेमहा
पुण्येसूर्यपर्वण्यशेषतः तुलापुरुषदानाद्यैःकृतैर्यल्लभ्यतेफलम् तत्फलंलभतेमर्त्योदानेनानेनसद्व्रती इतिरामप्रतिमादानोद्यापनविधिः

अथरामपू॰ आचम्यमा॰ मासपक्षाद्यु॰ सकलपापक्षयकामोश्रीरामप्रीतयेरामनवमीव्रतमहंक॰ तदंग॰ रामपूजांक॰ तथाराममंत्रेणषडंगन्यासंकलशार्च
नंचक॰ फलपुष्पाक्षतसहितंजलपूर्णताम्रपात्रंगृहीत्वाउपोष्यनवमींत्वद्ययामेष्वष्टस्वराघव तेनप्रीतोभवत्वंमेसंसारात्त्राहिमांहरे इतिमंत्रेणपात्रस्थंजलंक्षि
पेत् ततःशक्तितःहैमींरामप्रतिमांकृत्वा अग्न्युत्तारणपूर्वकंक॰ पोत्वोस्पृक्षा मूलमंत्रंप्रणवादिचतुर्थ्यंतंनामरामायदेवत्वंसंरव्यायस्वाहेतिमंत्रंपठन्
प्राणप्रतिष्ठांकु॰ ततः कोमलाक्षंविशालाक्षमिंद्रनीलसमप्रभं दक्षिणांगेदशरथंपुत्रावेक्षणतत्परं पृष्ठतोलक्ष्मणंदेवंसच्छत्रंकनकप्रभं पार्श्वेभरतशत्रु
घ्नौतालवृंतकरावुभौ अग्रेव्यग्रंहनूमंतंरामानुग्रहकांक्षिणं इतिध्या॰ अथषोडशोपचारैःपू॰ आवाहयामिविश्वेशंजानकीवल्लभंप्रभुं कौशल्यातनयंवि-
ष्णुंश्रीरामंप्रकृतेःपरं सहस्र॰ आवा॰ श्रीरामागच्छभगवन्रघुवीरनृपोत्तम जानकीसहराजेंद्रसुस्थिरोभवसर्वदा रामचंद्रमहेष्वासरावणांतकराघव याव
त्पूजांसमाप्स्येहंतावत्त्वंसन्निधौभव इतिसन्निधापनं रघुनायकराजर्षेनमोराजीवलोचन रघुनंदनमेदेवश्रीरामाभिमुखोभव इतिसंमुखीकरणं रा
जाधिराजराजेंद्ररामचंद्रमहीपते रत्नसिंहासनंतुभ्यंदास्यामिस्वीकुरुप्रभो पुरुषए॰ आसनं त्रैलोक्यपावनानंतनमस्तेरघुनायक पाद्यंगृहाणराज
र्षेनमोराजीवलोचन एतावान॰ पाद्यं॰ परिपूर्णपरानंदनमोरामायवेधसे गृहाणार्घ्यंमयादत्तंकृष्णाविष्णोजनार्दन त्रिपादूर्ध्व॰ अर्घ्यं॰ नमःसत्या
यशुद्धायनित्यायज्ञानरूपिणे गृहाणाचमनंनाथसर्वलोकैकनायक तस्माद्वि॰ आच॰ नमःश्रीवासुदेवायतत्वज्ञानस्वरूपिणे मधुपर्कंगृहाणेदंजानकी
पतयेनमः मधुप॰ पंचामृतंमयानीतंपयोदधिघृतंमधु शर्करामधुसंयुक्तंरामत्वंप्रतिगृ॰ पंचामृत शुद्धोदकेनस्नानं पुष्पं धूपं दीपं नैवेद्यम् -

निर्माल्यविसर्जनम् ब्रह्मांडोदरमध्यस्थैस्तीर्थैश्चरघुनंदन स्नापयिष्याम्यहंभक्त्यात्वंग्रहाणजनार्दन पुरुषसूक्तेनस्नानम् तप्तकांचनसंका
शंपीतांबरमिदंहरे संगृहाणजगन्नाथरामचंद्रनमोस्तुते तंयज्ञमितिवस्त्रं श्रीरामाच्युतयज्ञेशश्रीधरानंतराघव ब्रह्मसूत्रंसोत्तरीयं-
गृहाणरघुनंदन तस्माद्यज्ञादितियज्ञोपवीतम् कुंकुमागरुकस्तूरीकर्पूरैश्चंदनंतथा तुभ्यंदास्यामिराजेंद्रश्रीरामस्वीकुरुप्रभो तस्माद्य
ज्ञात्सर्वहुतेतिगंधम् अक्षताःपरमादिव्या॰ अलंकारार्थेअक्षतान् तुलसीकुंदमंदारजातीपुन्नागचंपकैः कदंबकरवीरैश्चकुसुमैःश-
तपत्रकैः नीलांबुजैर्बिल्वपत्रैरर्चयेद्राघवंविभुम् पूजयिष्याम्यहंभक्त्यासंगृहाणजनार्दन तस्मादश्वेतिपुष्पाणि अथांगपूजा श्रीरा
मचंद्रायनमः पादौपूजयामि राजीवलोचनाय॰ गुल्फौपू॰ रावणांतकाय॰ जानुनीपू॰ वाचस्पतये॰ ऊरूपू॰ विश्वरूपाय॰ जंघेपू॰ लक्ष्मणा
ग्रजाय॰ कटीपू॰ विश्वमूर्तये॰ मेंढ्रंपू॰ विश्वामित्रप्रियाय॰ नाभिंपू॰ परमात्मने॰ हृदयंपू॰ श्रीकंठाय॰ कंठंपू॰ सर्वास्त्रधारिणेन॰ बाहूपू॰
रघूद्वहाय॰ मुखंपू॰ पद्मनाभाय॰ जिह्वांपू॰ दामोदराय॰ दंतान्पू॰ सीतापतये॰ ललाटंपू॰ ज्ञानगम्याय॰ शिरःपू॰ सर्वात्मनेन॰ सर्वांगंपूज॰
वनस्पतिरसोद्भूतोगंधाढ्योगंधउत्तमः रामचंद्रमहीपालधूपोयंप्रतिगृह्यताम् यत्पुरुषेतिधूपं ज्योतिषांपतयेतुभ्यंनमोरामायवेध
से गृहाणदीपकंचैवत्रैलोक्यतिमिरापहं ब्राह्मणोस्येतिदीपं इदंदिव्यान्नममृतंरसैःषड्भिःसमन्वितम् रामचंद्रेशनैवेद्यंसीतेशप्रति-
गृह्यताम् चंद्रमामनसइतिनैवेद्यं ततःआचमनं इदंफलमितिफलं नागवल्लीदलैर्युक्तंपूगीफलसमन्वितं तांबूलंगृह्यतांरामकर्पूर

रादिसमन्वितं इतितांबूलं हिरण्यगर्भेतिदक्षिणां नाभ्याआसीतिप्रदक्षिणां नृत्यैर्गीतैश्चवाद्यैश्चपुराणपठनादिभिः पूजोपचारैरखि
लैःसंतुष्टोभवराघव मंगलार्थंमहीपालनीराजनमिदंहरे संगृहाणजगन्नाथरामचंद्रनमोस्तुते नीराजनं नमोदेवाधिदेवायरघुना-
थायशार्ङ्गिणे चिन्मयानंतरूपायसीतायाःपतयेनमः सप्तास्यासन्निति नमस्कारः सर्वलोकशरण्यायरामचंद्रायवेधसे ब्रह्मानंदै
करूपायसीतायाःपतयेनमः यज्ञेनयज्ञमितिमंत्रपुष्पांजलिं यानिकानिचपापानिब्रह्महत्यासमानिच तानितानिविनश्यंतिप्रदक्षिण
पदेपदे इतिप्रदक्षिणां अशोककुसुमैर्युक्तंरामायार्घ्यंनिवेदयेत् दशाननवधार्थायधर्मसंस्थापनायच राक्षसानांवधार्थायदैत्या
नांनिधनायच परित्राणायसाधूनांजातोरामःस्वयंहरिः गृहाणार्घ्यंमयादत्तंभ्रातृभिःसहितोनघ इत्यर्घ्यं इतिपूजनम् अथक-
था अगस्त्यउवा॰ रहस्यंकथयिष्यामिसुतीक्ष्णमुनिसत्तम चैत्रमासेनवम्यांतुशुक्लपक्षेरघूत्तमः प्रादुरासीत्ततोब्रह्मन्ब्रह्मानंदै-
ककेवलः तत्रजागरणंकुर्याद्रामस्यपुरतोबुधः प्रतिमायांयथाशक्तिपूजाकार्यायथाविधि प्रातर्दशम्यांस्नात्वैवकृत्वासंध्यादिकाःक्रियाः
संपूज्यविधिवद्रामंभक्त्यावित्तानुसारतः ब्राह्मणान्भोजयेत्सम्यक्दक्षिणाभिश्चतोषयेत् गोभूतिलहिरण्याद्यैर्वस्त्रालंकारभूषणैः
रामभक्त्याप्रयत्नेनप्रीणयेत्परयामुदा एवंयःकुरुतेभक्त्याश्रीरामनवमीव्रतम् अनेकजन्मजातानिपापानिसुबहूनिच भस्मीभवंति
पापानियातिविष्णोःपरंपदम् सर्वेषामप्ययंधर्मोभुक्तिमुक्त्येकसाधनः अशुचिर्वापिपापिष्ठः कृत्वेदंव्रतमुत्तमम् पूज्यःस्यात्सर्व

भूतानांयथारामस्तथैवसः यस्तुरामनवम्यांवैभुंक्तेसतुनराधमः कुंभीपाकेषुघोरेषुपतत्येवनसंशयः अकृत्वारामनवमीव्रतंसर्वोत्तमंव्रतम् व्र
तान्यन्यानिकुरुतेनतस्यफलभाग्भवेत् महांत्यपिप्रणश्यंतिपापानिनवमीव्रतात् एकामपिनतोभक्त्याश्रीरामनवमींव्रती उपोष्यकृतकृत्यः-
स्यात्सर्वपापैःप्रमुच्यते ततोरामनवम्यांतुश्रीरामप्रतिमापरः विधानेननरःश्रेष्ठसमुक्तोनात्रसंशयः सु॰तीक्ष्णउवा॰ श्रीरामप्रतिमादानं
विधानंवाकथंमुने कथयस्वयथारामभक्तस्यममविस्तरात् अगस्त्यउवा॰ कथयिष्यामितेभक्त्याप्रतिमादानमुत्तमम् विधानंवापियत्नेन
यतस्त्वंवैष्णवोत्तमः अष्टम्यांचैत्रमासेतुशुक्लपक्षेजितेंद्रियः दंतधावनपूर्वंतुप्रातःस्नात्वायथाविधि नद्यांतडागेकूपेवाह्रदेप्रस्रवणेपिवा
संध्यादिकाःक्रियाःकुर्यात्संस्मरन्राघवंहृदि गृहमागत्यविप्रेंद्रकुर्याद्दौपासनादिकं दांतंकुटुंबिनंविप्रंवेदशास्त्रविदांवरम् श्रीरामपूजा
निरतंशुचिंदंभविवर्जितं सर्वज्ञंराममंत्राणांराममंत्रैकसाधनम् आहूयभक्त्यासंपूज्यवृणुयात्प्रार्थयेद्बुतम् श्रीरामप्रतिमादानंकरिष्येहं
द्विजोत्तम तत्राचार्योभवप्रीतःश्रीरामोसित्वमेवच इत्युक्त्वाप्रोक्तुमायातंस्थापयित्वाततःस्वयम् तदैवाभ्यज्यचस्नायाच्चिंतयेद्राघवं
हृदि श्वेतांबरधरंदेवंगंधमाल्यादिधारयेत् अर्चितोभूषितश्चैवकृत्वामाध्याह्निकींक्रियाम् आचार्यंपूजयेत्तस्मात्सात्विकान्नैःसुविस्तरं
भुंजीयात्स्वयमप्येवंरामंहृदिअनुस्मरन् एकभक्तंव्रतंतत्रसहाचार्योजितेंद्रियः शयीतभूतलेसम्यक्श्रीरामार्पितमानसः ततःप्रातःसमु
त्थायस्नात्वासंध्यांयथाविधि प्रातःसर्वाणिकर्माणिशीघ्रमेवसमापयेत् ततःस्वस्थमनाभूत्वाविद्वद्भिःसहितोनघ स्वगृहेचोत्तरेभागेमंड

पंश्लक्ष्णसुज्ज्वलम् मंडपंचचतुर्द्वारंध्वजाःकार्याःसुविस्तरैः फलैर्नानाविधैर्युक्तंपुष्पमालासुशोभनम् कदलीस्तंभसंयुक्तंयज्ञियैस्तैरलंकृतं
सुतोरणैर्मनोरम्यैःपुष्पाद्यैःसमलंकृतं शंखचक्रहनूमद्भिःप्राग्द्वारेसमलंकृतं गरुत्मच्छार्ङ्गबाणैश्चदक्षिणेसुविभूषितं गदाखड्गांगदैश्च
पश्चिमेचविभूषितम् पद्मस्वस्तिकनीलैश्चकौबेर्यांसमलंकृतम् मध्येतुचतुरस्रांचवेदिकांहस्तमायतां विप्रैश्चनृत्यगीतैश्चवाद्यैश्चापि-
समन्वितं पुण्याहंवाचयित्वाचविद्वद्भिःप्रीतमानसैः ततःसंकल्पयेद्देवरामस्यैवमनुस्मरन् अस्यांरामनवम्यांतुरामाराधनतत्परः उपो-
ष्याष्टसुयामेषुपूजयित्वायथाविधि इमांस्वर्णमयींरामप्रतिमांतुप्रयत्नतः श्रीरामप्रीतयेदास्येरामभक्तायधीमते स्तुतोरामोदहत्वाशु
पापानिसुबहूनिमे अनेकजन्मसंप्राप्तानिअभ्यस्तानिमहांतिच विलिखेत्सर्वतोभद्रंवेदिकोपरिसुंदरं मध्येतीर्थोदकैर्युक्तंपात्रंसंस्थाप्यचर्चितं
सौवर्णेराजतेताम्रेपात्रेषट्कोणमालिखेत् ततःस्वर्णमयींरामप्रतिमांपलमात्रतः निर्मितांद्विभुजांरम्यांवामांकस्थितजानकीं बिभ्रतींदक्षिणे
हस्तेज्ञानमुद्रांमहासुने वामेनाधःकरेणैतांदेहमालिंग्यसंस्थितां सिंहासनंराजतंचपलद्वयविनिर्मितं पंचामृतस्नानपूर्वंसंपूज्यविधिवत्ततः
मूलमंत्रेणनियतोदद्याच्चैवमतंद्रितः एवंसंपूज्यविधिवद्रात्रौजागरणंतथा दिव्यांरामकथांश्रुत्वारामभक्तिसमन्वितः गीतनृत्यादिभि
श्चैवरामस्तोत्रैरनेकधा रामाष्टकेनसंस्तुत्यगंधपुष्पाक्षतादिभिः कर्पूरागरुकस्तूरीकल्हाराद्यैरनेकधा संपूज्यविधिवद्भक्त्यादिवारात्रिंन
येद्बुधः ततःप्रातःसमुत्थायस्नानसंध्यादिकाःक्रियाः संस्नाप्यविधिवद्रामंपूजयेद्विधिवन्मुने ततोहोमंप्रकुर्वीतमूलमंत्रेणमंत्रवित् पूर्वो

त्कुंडेगृह्योक्तस्थंडिलेवासमाहितः लौकिकाग्नौविधानेनशतमष्टोत्तरंमुने आज्येनपायसेनैवस्मरन्नाममतंद्रितः ततोभक्त्यासदावृद्धआचार्यं
पूजयेन्मुने कुंडलाभ्यांसुवर्णाभ्यामंगुलीयैरनेकधा गंधपुष्पाक्षतैर्वस्त्रैर्विचित्रैस्तुमनोहरैः ततोरामंस्वयंदद्यादिमंमंत्रमुदीरयेत् इमां-
स्वर्णमयींरामप्रतिमांसमलंकृतां चित्रवस्त्रयुगच्छन्नांरामोहंराघवायते श्रीरामप्रतिमांदास्येप्रीतोभवतुराघवः इतिदत्वाविधानेनद
द्यादेदक्षिणांमुवं अन्येभ्यश्चयथाशक्त्यागोहिरण्यादिभक्तितः दद्याद्दासोधनंधान्यंयथालंकरणानिच अगस्त्यउवा० एवंयःकुरुते
रामप्रतिमादानमुत्तमं ब्रह्महत्यादिपापेभ्योमुच्यतेनात्रसंशयः तुलापुरुषदानेनफलमाप्नोतिसुव्रतात् अनेकजन्मसंसिद्धपापेभ्योमु
च्यतेध्रुवम् बहुनात्रकिमुक्तेनमुक्तिस्तस्यकरेस्थिता तुलापुरुषदानेनमुनेयल्लभतेफलं तत्फलंलभतेमर्त्योदानेनानेनसुव्रत सुती-
क्ष्णउवा० प्रायेणहिनराःसर्वेदरिद्राःकृपणामुने अगस्त्यउवा० दरिद्रस्यमहाभागस्वस्यवित्तानुसारतः पलार्धेनतदर्धेनतदर्धार्धेनवा-
पुनः वित्तशाठ्यमकृत्वैवकुर्यादेवंव्रतंमुने यदियोरतरंदुष्टंपातकंनेहृतंक्वचित् अकिंचनोपियत्नेनउपोष्यनवमीदिने एकचित्तोनियत्नेनस
र्वपापैःप्रमुच्यते प्राप्तेश्रीरामनवमीदिनेमर्त्योविमूढधीः उपोषणंनकुरुतेकुंभीपाकेषुपच्यते यत्किंचिद्रामसुद्दिश्यक्रियतेनस्वशक्तितः
रौरवेसतुमूढात्मापच्यतेनात्रसंशयः सुतीक्ष्णउवा० यामाष्टकेतुपूजावैनत्वचोक्तामहामुने मूलमंत्रेणसंयुक्तातांकथांवदसुव्रत अ
गस्त्यउ० सर्वेषांराममंत्राणांमंत्रराजंषडक्षरं इदंतुस्कांदेमोक्षखंडे श्रीरामंप्रतिरुद्रगीतायांरुद्रवाक्यम् मुमूर्षोर्मणिकर्ण्यांतेअ

धौंदकनिवासिनः अहंददिशामितेमंत्रंतारकस्योपदेशतः श्रीरामरामरामेतिएतत्तारकमुच्यते अतस्त्वंजानकीनाथपरंब्रह्माभिधीयते तार
कंब्रह्मचेत्युक्तंतेनपूजाप्रशस्यते पीठांगदेवतानांतुआवृत्तीनांतथैवच आदावेवप्रकुर्वीतदेवस्यप्रीतमानसः उपचारैःषोडशभिःपूजाका
र्यायथाविधि आवाहनंस्थापनंचसंमुखीकरणंतथा एवंमुद्राप्रार्थनांचपूजामुद्रांप्रयत्नतः शंखपूजांप्रकुर्वीतपूर्वोक्तविधिनाततः कल
शंवामभागेचपूजाद्रव्याणिचादरात् पीठंसंपूज्ययत्नेनआत्मानंमंत्रमुच्चरेत् पात्रासादनमप्येवंकुर्याद्यामेषतंद्रितः पीतांबराणिदेवाय
प्रार्पयन्नर्चयेत्सुधीः स्वर्णयज्ञोपवीतानिदद्याद्देवायभक्तितः नानारत्नविचित्राणिदद्यादाभरणानिच हिमांबुघृष्टरुचिरंयनसारंम
नोहरं क्रमात्तुमूलमंत्रेणउपचारान्प्रकल्पयेत् कल्हारैःकेतकैर्जात्यैःपुन्नागाद्यैःप्रपूजयेत् चंपकैःशतपत्रैश्चसुगंधैःसुमनोहरैः पाद्य
चंदनधूपैश्चतत्तन्मंत्रैःप्रपूजयेत् भक्ष्यभोज्यादिकंभक्त्यादेवायविधिनार्पयेत् येनसोपस्करंदेवंदत्वापापैःप्रमुच्यते जन्मकोटिकृतै
र्घोरनानारूपैश्चदारुणैः विमुक्तःस्यात्क्षणादेवरामएवभवेन्मुने श्रद्दधानस्यदातव्यंश्रीरामनवमीव्रतं सर्वलोकहितायेदंपवित्रंपाप
नाशनं लोहेननिर्मितंवापिशिलयादारुणापिवा एकेनैवप्रकारेणयस्मैकस्मैयथवामुने कृतंसर्वंप्रयत्नेनयत्किंचिदपिभक्तितः जपेदेकांत-
मासीनोयावत्सदशमीदिनं अनेनस्यात्पुनःपूजादशम्यांभोजयेद्द्विजान् भक्त्याभोज्यैर्बहुविधैर्दद्याद्भक्त्याचदक्षिणां कृतकृत्योभवे
त्तेनसद्योरामःप्रसीदति तूष्णींतिष्ठन्नरोवापिपुनरावृत्तिवर्जितः द्वादशाब्दकृतेनापियत्पापंचापिमुच्यते विलयंयातितत्सर्वंश्रीराम-

नवमीव्रतात् जपञ्चराममंत्राणांयोनजानातितस्यैवै उपोष्यसंस्मरेद्रामंन्यासपूर्वमतंद्रितः गुरुलब्धोथमंत्रस्तुन्यसेन्न्यासपुरःसरः यामे
यामेचविधिनाकुर्यात्पूजांसमाहितः मुमुक्षुश्चसदाकुर्यात्श्रीरामनवमीव्रतम् मुच्यतेसर्वपापेभ्योयातिब्रह्मसनातनं इतिश्रीस्कंदपुरा
णेअगस्त्यसंहितायांअगस्तिसुतीक्ष्णसंवादेरामनवमीव्रतोद्यापनंसंपू० अथरामनामव्रतम् तत्रैवरामनवमीमारभ्यअथचसर्वका
लेपिरामनामजपलेखनंकुर्यात् आचम्यप्राणानायम्यमासपक्षाद्युल्लिख्यसकलपापक्षयकामो विष्णुलोकप्राप्तिकामोवाश्रीरामप्री
तयेरामनामजपलेखनंकरिष्ये इतिसंकल्प्य अथरामनामपूजा नाममंत्रेणषोडशोपचारैःपूजयेत् अथकथोद्यापनंच पार्वत्युवा०
धन्यास्म्यनुगृहीतास्मिकृतार्थास्मिजगत्प्रभो विच्छिन्नोमेघसंदेहग्रंथिर्भवदनुग्रहात् त्वन्मुखाद्गलितंदेवत्वत्तोमृतरसायनं पिबंत्यामे
मनोदेवनतृप्यतिभवापहम् श्रीरामस्यामृतंनामश्रुतंसंक्षेपतोमया इदानींश्रोतुमिच्छामिविस्तरेणस्फुटाक्षरं श्रीमहादेवउ० शृणु
देविप्रवक्ष्यामि गुह्याद्गुह्यतरंमहत् प्राप्नोतिपरमांसिद्धिंदीर्घायुःपुत्रसंपदां रामनामलिखेद्यस्तुलक्षकोटिशतावधि एकैकमक्षरंपुंसां
महापातकनाशनं सकामोपिलिखेद्यस्तुनिःकामेनतुकिंपुनः इहैवसुखमाप्नोतिअंतेचपरमंपदम् आदावंतेचमध्येचव्रतस्योद्यापनंच
रेत् उद्यापनंविनानैवफलसिद्धिमवाप्नुयात् तस्मात्सर्वप्रयत्नेननाम्नउद्यापनंकुरु पार्वत्युवाच नतास्मिदेवदेवेशभक्तानुग्रहकारक
नाम्नउद्यापनंब्रूहिविस्तरेणममप्रभो श्रीशिवउ० शृणुदेविप्रवक्ष्यामिविस्तरेणयथाविधि नाम्नउद्यापनंचात्रभक्त्याभवदनुग्रहात्

सौवर्णसुंदरंकुर्यात्सीतारामंसलक्ष्मणम् हनूमत्प्रतिमांतत्रचतुर्थांशेनहाटकैः सुवर्णस्यप्रमाणंतुपलाष्टकमुदीरितं अशक्तश्चेत्पलेनै
वतदर्धार्धेनवापुनः श्रीरामप्रतिमांकृत्वावित्तशाठ्यंनकारयेत् राजतेनासनंकुर्यान्मासैः षोडशसंमितैः पीनवस्त्रेणसंवेष्ट्यस्थापयेत्तंदु
लोपरि तंडुलानांप्रमाणंतुभवेद्द्रोणचतुष्टयम् शस्तेदेशेगृहेतीर्थेमंडपंकारयेत्सुधीः तोरणानिचतुर्द्वारेबंधयेदाम्रपल्लवैः भूमौगोमय-
लिप्तायांसर्वतोभद्रसंज्ञकं रचयेत्सप्तधान्येननानारंगैःसुशोभनं कुंभानष्टौचपूर्वादौस्थापयेदव्रणान्शुभान् कुंभमेकंमध्यदेशे
स्थापयेत्तंदुलोपरि गंगाजलेनसंपूर्यपंचरत्नैःसपल्लवैः नारीकेरफलान्यष्टौएकंरामायदापयेत् आचार्यंवरयेत्तत्रवेदशास्त्रवि-
शारदम् ब्रह्मादिकर्त्विजानांतुवरणंकारयेत्ततः मधुपर्केणसंपूज्यवस्त्रालंकारभूषणैः ऋत्विजःषोडशानष्टौवरयेद्वेदपारगा
न् स्नात्वानित्यंविधायादौपूजयेद्गणनायकं पुण्याहंवाचयित्वातुपूजयेद्रामचंद्रकं ततोग्निप्रतिष्ठांच स्वशाखोक्तविधानतः विष्णुसूक्ते-
नहोतव्यंमूलमंत्रेणवापुनः नवग्रहांश्चदिक्पालानावाहनपूर्वकांश्चहोमयेत् पुरुषसूक्तेनहोतव्याःसमिदाज्यंचरुस्तिलाः अष्टोत्तरसहस्रंतु
राममंत्रेणहोमयेत् होमांतेपूजनंकुर्याद्रामचंद्रादिदेवताः पूजयित्वाततोहुत्वाबलिंपूर्णाहुतिंतथा श्रेयःसंपाद्यदानंचअभिषेकंसमापयेत् रामंन
त्वार्चयित्वाचप्रार्थयित्वापुनःपुनः आचार्यंपूजयेत्पश्चात्सुवर्णवस्त्रधेनुभिः प्रतिमांदानमंत्रेणआचार्यायनिवेदयेत् नतोस्मिदेवदेवेशबहुबुद्धिमहात्मभिः
यश्चिंत्यतेकर्मपाशात्स्यंदिनित्यंमुमुक्षुभिः माययागुणमय्यात्वंसृजस्यवसिलुंपसि अनस्त्वत्पादपद्मेस्मिस्त्वद्भक्तिरस्तुनिश्चियोधिका प्रतिमेवहिवांछितलब्ध

क्ताः सारवेदिनः अनस्त्वत्पादकमले भक्तिरेवसदास्तुमे संसारामयतप्तानां भैषज्यं भक्तिरेवते सीतासौमित्रहनुमद्भरतयुक्तनरेश्वरः दानेनानेनमेराम
भक्तिमुक्तिप्रदोभव प्रतिमादानसिद्ध्यर्थंशक्त्यास्वर्णंतुदापयेत् दानंयद्दक्षिणाहीनंतत्सर्वंनिष्फलंभवेत् ब्राह्मणान्शतसाहस्रंभोजये
न्मधुसर्पिषा पक्वान्नैः पायसैः खाद्यैर्लड्डुकैः शर्करान्वितैः ऋत्विग्भ्योदक्षिणांदद्याद्भूयसींदक्षिणांददेत् तदंतेघृतपात्रंचतिलपात्रं
चदापयेत् शय्यांचरथदानानिदशदानानिशक्तितः अशक्तश्चेत्स्वर्णमेकंदत्वाराममनंतयेत्पुनः तिलकंकारयेत्तस्मादभिषिंचेत्सपल्लवैः द्विजे
स्तुआशिषोदेयानत्वास्तुत्वाविसर्जयेत् उमामहेश्वरौपूज्यौभोजयेद्बटुकंतथा कुमारीणांशतंभोज्यंयोगिराजंचभोजयेत् क्षेत्रपाल
बलिंदत्वाध्यात्वारामंसदाजपेत् ब्रह्मादिभिस्तुतत्पुण्यंवक्तुंशक्तंनकिंचन अश्वमेधसहस्राणिवाजपेयशतानिच एकेनराममना
म्नातुतत्फलंलभतेनरः नारीवापुरुषोवापिशूद्रोवाप्यधमोनरः रामनाम्नातुमुक्तास्तेसत्यंसत्यंवरानने मूलेकल्पद्रुमस्याखिलमणिवि
लसद्रत्नसिंहासनस्थंकोदंडंधारयंतंललितकरयुगेनार्पितंलक्ष्मणेन वामांकन्यस्तसीतंभरतधृतमहामौक्तिकच्छत्रकांतंशत्रुघ्नचामराभ्यां
विलसितमनिशंरामचंद्रंभजेहं वंदेतत्रमहेशानंचंडकोदंडखंडनं जानकीहृदयानंदवर्धनंरघुनंदनं चरितंरघुनाथस्यशतकोटिप्रवि-
स्तरं एकैकमक्षरंपुंसांमहापातकनाशनं इतिश्रीभविष्योत्तरपुराणेउमामहेश्वरसंवादेरामनामलेखनोद्यापनंसंपू॰ अथादुःखन
वमीव्रतं भाद्रपदशुक्लनवम्यांमुहूर्तमात्रसत्वेपिपरयुतायांअदुःखनवमीव्रतं देशकालौस्मृत्वाममेहजन्मनिजन्मांतरेचभर्त्रासह

सकलपातकादिदुःखनाशार्थं व्रतखंडकल्पोक्तफलावाप्त्यर्थं श्रीगौरीदेवताप्रीत्यर्थं भाद्रपदशुक्लनवमीव्रतपूजनमहं करिष्ये तत्रादौ निर्विघ्नता-
सिद्ध्यर्थं स्वस्तिपुण्याहवाचनं च करिष्ये इति संकल्प्य गोमयेनोपलिप्तभूमौ वेदिकां गुडक्षिप्तां इक्षुच्छादितां अपूपपायसान्वितां उपरि
मंडपिकायुतां कृत्वा तत्र पीठे आसनादि कलशप्रतिष्ठां च कृत्वा अग्न्युत्तारणपूर्वकं गौरीप्रतिमां संस्थाप्य गणपतिचतुष्टयं इंद्रादिलोकपालां-
श्चावाह्य गौरीमिमामयेति नमो देव्या इति वा मंत्रेण संपूज्य देवपात्रधरां देवीं विभूतिं च त्रिलोचनीं दुग्धान्नदाननिरतां गौरीं त्वां चिंत-
याम्यहं ध्यानं गौरीं दुःखहरां देवीं शिवस्यार्धांगधारिणीं सुनीलवस्त्रसंयुक्तां सुमामावाहयाम्यहं आवाहनं प्रसन्नवदने मातर्नित्यं
देवर्षिसंस्तुते मया भावेन यद्दत्तं पीठं तत्प्रतिगृह्यतां आसनं सर्वतीर्थमयं दिव्यं सर्वभूतोपजीवनं यन्मया दत्तं पानीयं पाद्यार्थं प्रतिगृ-
ह्यतां पाद्यं० गंगादिसर्वतीर्थेभ्यो भक्त्यानीतं सुशीतलं गंधपुष्पाक्षतोपेतं गृहाणार्घ्यं नमोस्तु ते अर्घ्यं मातः सर्वाणि तीर्थानि गंगाद्यास्सत-
थानदाः स्नानार्थं तव देवेशि मयानीतानि शोभनाः स्नानं सर्वभूषाधिके सौम्ये लोकलज्जानिवारणे मयोपपादिते तुभ्यं वाससी प्रति०
वस्त्रं श्रीखंडमिति चंदनं माल्यादीनीति पुष्पं० वनस्पतिरसद्भूत इति धूपं आज्यं चेति दीपं अन्नं चतुर्विधमिति नैवेद्यं पूगीफलमिति-
तांबूलं हिरण्यगर्भेति दक्षिणां स्कंदमातर्नमस्तुभ्यं दुःखव्याधिविनाशिनि उत्तिष्ठ गच्छ भवनं वरदा भव पार्वति इति पूजा अथ-
कथा ऋषय ऊचुः कदाचिन्नैमिषारण्ये व्यासं धर्मविदां वरं कथयंतं कथां दिव्यामिदमूचुर्महर्षयः यज्ञधर्मविदां श्रेष्ठ व्रतानि विविधानि

च विपाकाः कर्मणांचैव प्राणिनांविविधागतिः आकर्ण्यविस्मिताः सर्वेकौतूहलसमन्विताः नत्रप्तिमधिगच्छामोनाभियंचकथामृतं श्रृणुमश्चव
यंसद्योवनंदुःखहरंखिदं येनचीर्णेनधर्मज्ञाःज्ञानदुःखंनजायते कृपांकुरुमहाबुद्धेब्रूहिदुःखहरंव्रतं व्यासउ० श्रृण्वंतुपुरुषाः सर्वे-
शौनकाद्यामहर्षयः येनरापुण्यकर्माणोदंभाहंकारवर्जिताः श्रद्धयायमिनोनित्यमहिंसानिरनाश्चये यथामीलितभोक्तारः सुखिनस्तेन
तेनहि गुह्यंचान्यच्चवक्ष्यामिदुःखनाशनसूत्तकम् येदुःखनवमींप्राप्यनराश्चैवाप्यपंडिताः शिवांगच्छंतिशरणामुत्पत्तिस्थितिकारिणीम्
जन्मांतरशतेवापिनतेदुःखस्यभागिनः ऋषयऊ० अदुःखनवमीनामत्वयाकेयंनिरूपिता भविष्यतिकदाचेयंयदाकार्यंभविष्यति पू-
जनीयाकथंगौरीविधानंकीदृशंतथा एतत्सर्वंविधानेनवक्तुमर्हस्यशेषतः व्यासउवा० एतद्गुह्यतमंपुण्यंश्रृणुध्वंगदतोमम नदेयंना
स्तिकायैतदभक्तायशठायच अहंवः श्रद्दधानेभ्योविधिंसर्वमशेषतः समाहितमनाविच्मिभवन्तःपुण्यदायकम् सर्वस्याद्याम
हादेवीत्रिगुणापरमेश्वरी नित्यानंदमयीदेवीतमःपारेप्रतिष्ठति ब्रह्मांडजननीचेयमुत्पत्तिस्थितिकारिणी पुरुषः प्रकृतिश्चेयमात्मा
नंबिभिदेद्विधा यथाशिवस्तथागौरीयथागौरीतथाहरः यथागौरीतथालक्ष्मीर्दुःखपापापहारिणी नास्यांपूजाविधानेननक-
श्चिदुःखभाग्भवेत् नभस्यस्यशुक्लनवमीयावापूर्णातिथिर्भवेत् अस्तदोषादिरहितासर्वदुःखहरापरा प्रशस्तायांनरः स्नात्वाकृत्वा-
नित्यविधिंततः मौनेनगृहमागत्यसंयतस्तत्परायणः अदुःखदायीभूत्वाचशुचिस्थानगतस्तथा गोमयेनविलिप्तायांशुच्चौमंड-

पिकांशुभां शुकुंभंस्थापयेत्तत्रकुंकुमालिप्तभित्तिके आच्छादितांसुधूपैस्तांसुमामानंददायिनीं आचार्यानुज्ञयातस्यांजगद्धात्रींप्रपूज
येत् पूजयित्वोपचारैस्तां न त्वानत्वापुनःपुनः वायनंचददेत्तस्यांपक्वान्नफलसंयुतं शक्तश्चेदुपवासेननिशांचजागरैर्नयेत् अशक्तेनच
भोक्तव्यंपयःप्राश्यमथापिवा फलंवापिप्रयत्नेननहिंसारतचेतसा रात्रौजागरणंकार्यंनृत्यगीतादिभिस्तथा प्रभातेविमलेजातेकृत्वानित्य
विधिंपुनः ब्राह्मणान्भोजयेच्छक्त्यासपत्नीकान्शुचींस्तथा देवींविसर्जयेत्पश्चादाचार्यंपूजयेत्तथा आचार्यस्तुस्वशाखोक्तोनववर्षाणि
कारयेत् सौवर्णैर्भूषणैर्वस्त्रैर्नत्वातंचसमर्पयेत् पंचवाअथवाचैकंनारीकेरैश्चवायनं पक्वान्नंनवसंख्याकंब्राह्मणायनिवेदयेत् पश्चा
द्बंधुजनैःसार्धंभुंजीयान्नियतःशुचिः श्रुत्वाकथांपुण्यतमांवाग्यतस्तत्परोयतः सकदाचिन्नदुःखेनयुज्यतेनात्रसंशयः भुक्त्वाभो
गान्यथाकामंसयातिपरमंपदं अत्रैवोदाहरंतीममितिहासंपुरातनं अरण्येविषमेप्राप्यश्वापदग्धाश्रमाःकिल आसीज्जातिस्मरा
काचित्तिर्यग्योनिंसमागता कुक्कुटीनामतोख्यासीत्सदादुःखेनपीडिता तत्सखीमर्कटीनामतेचोभेशोककर्शिते अथतस्मिन्वनो
द्देशेपरस्परहितेरते उभेअभूतांसहितेविचरंत्यौदिशोदश ततःकालेनसहितावर्षांतेचागतातिथिः अदुःखनवमीनामदुःखव्याधि
विनाशिनी गत्वातांकुक्कुटीप्राहमर्कटींदैवयोगतः अद्यकिंचिन्नभोक्तव्यमावाभ्यांशृणुकारणं तिर्यग्योनिगतेचावांपूर्वकर्मविपाक
तः दुःखप्राप्तयेचावनभोक्ष्येहंत्वयासह त्वंचेशशरणंगत्वानवमींसुव्रतस्थिता कृत्वाचलमशक्त्वाचेद्भुक्ष्वशीर्णफलानिच महा

मायाप्रसादेनयाहिभद्रेमहिंसया इत्युक्त्वाकुक्कुटीतूष्णींबभूवानसूतीनदा मर्कट्यप्सुरीकृत्यप्रशस्तेसंबभूवतुः अथसामर्कटीनाम्नगत्वापूर्वे
वनंप्रति स्थित्वावर्द्दिनशेषंतुक्षुधिनापीडिताभृशं अजानतीतमेवार्थपूर्वकर्मविशेषतः निशांतेतरसागत्वावनदेशेविचिन्वती ददर्शबार्हि
णोंडानिभ्रतीवक्षुधितानदा भक्षयित्वामर्कटीसासुखंप्रक्षाल्यवारिणा पुनस्तदंतिकंप्रासादर्शयंतीक्षुधोव्यथां कुपिताकुक्कुटीवाक्यमुवाच
मर्कटींप्रति किंचिदुक्तंत्वयादुष्टेप्रजलंहारिसंयुता व्रतभ्रष्टास्थिताचाथवारिवासितयात्वये नाकरोस्त्वंममवचःप्राणाःकिंनगतास्तव के
दारंशरणंयाहिमयासहभयंकरि देहात्योगेनयोगेनगच्छावःपरमंपदं अथतेनिर्गतेचोभेकेदारंभूतभावनं गत्वामनःसमाधायकुक्कुटी
मनसास्मरत् उत्पत्स्येसत्कुलेचाहंधनाढ्येवेदपारगे इतिमत्वास्वदेहंसावन्हिमध्येन्यपातयत् पुनर्भवेराजपत्नीइतिमत्वाचमर्कटी अक
रोत्स्वतनुत्यागंतद्वाक्येनैवबाधिता कुक्कुटीसामहादेव्याःप्रसादेनतथाकुले विप्राणांकन्यकाभूत्वाभर्तीविमलरत्नदः दिव्यवर्धनशीलासा
निरतापतिसेवने इतराराजपत्नीत्वंप्राप्तासावथमर्कटी उभेजातिस्मरेजातेमहादेव्याःप्रसादतः अथसाकुक्कुटीपंचपुत्रान्जज्ञेपितुःसमा
न् बभूवधनसंपन्नारूपशीलगुणान्विता मर्कटीपुत्रशोकार्ताबभूवव्यथिताभृशं पूर्वकर्मस्मरंतीसाकदाचिद्दैवयोगतः अपश्यत्कुक्कुटीपु
त्रान् पंचैवचपितुःसमान् अमारयत्स्वभृत्यैस्तान्पुत्रान्सामर्कटीतदा तच्छिरांसिगृहीत्वातुकुक्कुट्यैवाणकंददौ अदुःखनवमींप्राप्यव्रत
स्थानबभूवसा गौरीरूपाविजननीजननीभक्तवत्सला शिरांस्यादायसर्वेषांपुत्रकांस्तानजीवयत् तद्वाणकंसुवर्णस्यशिरोभिःपर्यक

ल्पयत् कुक्कुटीपूजयांचक्रे गौरीं दुःखविनाशिनीं ततः सद्भाजीवतोयं भोक्तुं गृहमगात्ततः तदानन्नब्राह्मणंप्रेक्ष्यसुवर्णंप्रेषितापशून् स्वभर्त्रे
पुत्रयुक्ताय इत्थ्यावेदयन्नंदिनी पुनर्वनागतांस्तांस्तुसादद्दर्शालिपत्रकान् दृष्ट्वापुनःपुनःसाथरुरोदभृशदुःखिता आत्मानंनिंदयामासम
र्कटीविह्वलासती आगत्यसख्याःसदनमात्मानंसान्यवेदयत् पापिन्यहंदुराचारादुर्भगाश्रुतपूर्वकम् बालहत्यात्मकंपापंचरितंनात्रसं-
शयः इत्याकर्ण्यसखीवाक्यंकुक्कुटीविस्मिताभवत् अपृच्छत्कारणंक्षिप्रंशोकसागरदायकम् इदंशीलंकथंभद्रेतस्माद्रुदसिचात्म
वान् विभोगाराजपत्नीत्वंमान्यासमसखीत्वपि मर्कटीकुक्कुटीवाक्यंश्रुत्वावृत्तंन्यवेदयत् गत्वाचकुक्कुटीपुत्रैःप्रायश्चित्तमकारयत् स्म
रंतीचव्रतंदेव्याःकुरुत्वंचयथाविधि अथदेव्याःप्रसादेनमर्कटीसुषुवेसुतं सुंदरंसुवरंनामपृथ्वीभारसहंवरं राजपत्नीविप्रपत्नी
सुखिन्यौसंबभूवतुः इहलोकेदुःखितस्यभदुःखनवमीव्रतम् सीतयायत्कृतंचैतद्दमयंत्याकृतंत्विदं अन्याभिर्बहुभिः
स्त्रीभिर्व्रतमाचरितंत्विदं याकरोतिव्रतमिदंशृणोतिचकथामिमां सादुःखभाङ्नभवतिसत्यंसत्यंवदाम्यहं सर्वदुःखहरंलोके
किमन्यच्छ्रोतुमिच्छथ इति॰स्कं॰अ॰मा अथआश्वि॰शु॰न॰देवीव्र॰हेमाद्रौविष्णुधर्मे अथपू॰विधिनापूजयेत्तेनभद्रकालींनराधिप नवम्यामा
श्विनेमासिशुक्लपक्षेनरोत्तम पुष्करउ॰पूर्वोत्तरेतुदिग्भागेशिववास्तुमनोहरे भद्रकाल्यागृहंकार्यंचित्रवस्त्रैरलंकृतं भद्रकालीगृहंकृत्वातत्रसंपू
जयेद्द्विज अष्टादशभुजाकार्याभद्रकालीमनोहरा आलीढस्थानसंस्थानाचतुःसिंहरथेस्थिता अक्षमालात्रिशूलंचखड्गचर्मांकुशास्तथा बाणचा

पेचकर्तव्येशंखपद्मेतथैवच स्त्रुक्स्त्रुवौचतथाकार्यौतथावेदिकमंडलू दंडशक्तीचकर्तव्येतथापाशहुताशनौ हस्ताभ्यांभद्रकाल्याश्चभवेत्कांतिकरःपरः
एवंसाध्यमहाभागरत्नपात्रधराभवेत् आश्विनेशुक्लपक्षस्यअष्टम्यांप्रयतःशुचिः तत्रचायुधचर्मांद्यंछत्रंवस्त्रंचपूजयेत् पुष्पैर्मद्यैःफलैर्भक्ष्यैर्भोज्यैश्च
सुमनोहरैः बलिभिश्चविचित्रैश्चप्रेक्ष्यादानैस्तथैवच रात्रौजागरणंकुर्यात्तत्रैववसुधाधिप उपोषितोद्वितीयेह्निपूजयेत्पुनरेवतां आयुधाद्यंच
सकलंपूजयेद्वसुधाधिप एवंसंपूजयेद्देवींवरदांभक्तवत्सलां कात्यायनींकामगमांबहुरूपांवरप्रदाम् पूजितासर्वकामैःसापुन-
र्विवसुधाधिप एवंहिसंपूज्यजगत्प्रधानांयात्रानुदेयावसुधाधिपेन प्राप्नोतिसिद्धिंपरमांमहेशाज्जनस्तथान्योपिचवित्तशक्त्या
ब्रह्मोवाच शृणुसर्वंप्रवक्ष्यामियथात्वंपरिपृच्छसि महासिद्धिप्रदंधान्यंसर्वशत्रुनिबर्हणं सर्वलोकोपकारार्थंपूजयेत्सर्ववृत्तिषु कृत
र्थंब्राह्मणाद्यैश्चक्षत्रियैर्भूमिपालने गोधनार्थंवत्सवैश्यैः शूद्रैःपुत्रसुखादिभिः सौभाग्यार्थंतथास्त्रीभिर्धनार्थंधनकांक्षिभिः म
हाव्रतंमहापुण्यंशक्त्याढ्यैश्चअनुष्ठितं कर्तव्यंदेवराजेंद्रदेव्याभक्तिसमन्वितैः कन्यासंस्थेरवौशुक्लेदेवीमाराध्यनंदिकां नंदिकाप्रति
पत् अयाचितस्तथैवैकाशीनक्ताशीतथवाव्ययः प्रातःस्नायीदिनद्वंद्वंत्रिकालंशिवपूजकः शिवश्चशिवाचशिवौ जपेहोमेसदाभक्तःकृ
न्यकांभोजयेत्सदा अष्टम्यांनवमेचाह्निदारुजानिशुभानिच एवंवाचित्तभावेनकारयेत्सुसुरोत्तमं तस्मिन्देवीप्रकर्तव्याहैमीवाराज
तीत्तुवा मृन्मयीक्षालवणोपेतारवङ्गशूलेचपूजयेत् सर्वोपहारसंपन्नवस्त्ररत्नफलादिभिः कारयेद्रथलोहादिपूजांचबलिंदेविकाम् ब

लिमाग्राहिणोदेवभैरवाद्याविनायकाः तत्संबंधिनींबलिंदैविकीम् पुष्पैश्चद्रोणबिल्वाद्यैर्जातीपुन्नागचंपकैः द्रोणःकुरुबकः विचित्रांरचये
त्पूजामष्टम्यामुपवासयेत् गुरुंचशरणंगत्वागृह्णीयान्मंत्रमुत्तमं दुर्गाग्रतोजपेन्मंत्रंदुर्गापाठेनसंस्तुता तदर्धयामिनीशेषेविजयार्थंनृपोत्त
म पंचाब्दंलक्षणोपेतंमहिषाख्यंसुपूजितं विधिवत्कालिकालीतिजप्त्वाखड्गेनघातयेत् तस्योत्थंरुधिरंमांसंगृहीत्वापूजनादिषु नैर्ऋ
तायप्रदातव्यंमहाकौशिकमंत्रितं तस्याग्रतोनृपस्नायाच्छत्रुंकृत्वातुपिष्टजं खड्गेनघातयित्वातुदद्यात्स्कंदविशाखयोः ततोदेवींपुनःप्री
तःक्षीरसर्पिर्जलादिभिः कुंकुमागरुकर्पूरचंदनैश्चापिधूपयेत् हेमादिपुष्परत्नानिवासांसिभूषणानिच नैवेद्यंपायसंचैवदेयंदेव्याःसुभाविभिः
देवीभक्तान्पूजयीतकन्यकाःप्रमदादिच द्विजानीनथपाखंडानन्नदानेनतोषयेत् दुर्गाभक्तिपरायेतुमहाव्रतपराश्चये पूजयेत्तान्विशेषेण
तद्रूपाश्चार्चकायतः मातॄणांचैवदेवीनांपूजाकार्यातदानिशि ध्वजच्छत्रपताकादीनुच्छ्रयेच्चंडिकागृहे रथ्यायांचबलिक्षेपंपटुवाद्यरवा-
कुलं कारयेत्तुष्यतेयेनदेवीशास्त्रविधानतः अश्वमेधमवाप्नोतिभक्तिमान्सुरसत्तम महानवम्यांपूजेयंसर्वकामप्रदायका सर्वेषुवर्णेषुत
वभक्त्याप्रकीर्तिता कृत्वाप्नोतियशोराज्यंपुत्रायुर्धनसंपदः ब्रह्मोवाच आश्वयुक्शुक्लपक्षस्यनवम्यांप्रयतात्मवान् भक्त्यासंपूजये
द्देवदेवींसंप्रार्थयेत्ततः महिषघ्निमहामायेचामुंडेमुंडमालिनि द्रव्यमारोग्यविजयंदेहिदेविनमोस्तुते भूतप्रेतपिशाचेभ्योरक्षोभ्यश्चम
हेश्वरि देवेभ्योमानुषेभ्यश्चभयेभ्योरक्षमांसदा उमेब्रह्माणिकौमारिविश्वरूपेप्रसीदमे कुमारीर्भोजयित्वाचदद्याद्दाच्छादनादिकम्

नवमसमाष्टकंचैवस्वस्थवित्तानुसारतः शास्त्रंचयस्ययन्नेवसतदन्नेनपूजयेत् ततःशास्त्रेषुसादेवीनिवसत्येवसंततं शास्त्रमितिपाठः शास्त्रंत
त्पुस्तकं येमूर्धमूर्धगतसंघट्टकृताभिषेकांपंचामृतैर्गिरिसुतामभिषेचयंति तेदिव्यकल्पमनुभूयसुवेषरूपाराज्याभिषेकमतुलंपुनराप्नुवं
ति दुर्गाभक्तितरंगिण्यांदेवीपुराणे सुगंधिपुष्पतोयेनस्नापयित्वानरःशिवां नागलोकंसमासाद्यक्रीडंतेपन्नगैःसह द्रोणपुष्पंबिल्व
पत्रंकरवीरोत्पलानिच स्नानकालेप्रयोज्यानिदेव्यैप्रीतिकराणिच भगवत्येनरोदत्वाविष्णुलोकेमहीयते स्नापयित्वानरोदुर्गांनवम्यांहे
मवारिणा सौवर्णयानमारूढोवसुभिःसहमोदते रत्नोदकैर्विष्णुलोकंलभतेबांधवैःसह घृतेनस्नापयेद्यस्तुतस्यपुण्यफलंशृणु द
शपूर्वान्दशपरानात्मानंचविशेषतः भवार्णवात्समुद्धृत्यदुर्गालोकेमहीयते क्षीरेणस्नापयेद्यस्तुश्रद्धाभक्तिसमन्वितः चंडिकांवि-
धिवद्वीरइंद्रलोकेमहीयते स्नापयेद्विधिनावीरदध्नादुर्गांमहीपते राजतेनविमानेनशिवलोकेमहीयते पंचगव्येनयोदुर्गांतथाचकुशवा-
रिणा स्नापयेद्विधिवन्मंत्रैर्ब्रह्मस्नानंहितत्स्मृतं एकाहेपिचयोदुर्गांपंचगव्येनचंडिकां स्नापयेन्नृपशार्दूलसगच्छेद्विष्णुसन्निधौ चंडीगाय
त्री नारायण्यैचविद्महेचंडिकायैचधीमहि तंनोचंडिःप्रचोदयात् कात्यायन्यैचविद्महेकन्यकुमारिधीमहि तन्नोदुर्गिःप्रचोदयात्
कपिलांपंचगव्येनदधिक्षीरघृतेनच स्नानंशतगुणंप्रोक्तमितरेभ्योनराधिप चंडिकांस्नापयेद्यस्तुनरइक्षुरसेनच गरुडेनसयानेनवि
ष्णुनासहमोदते पितृन्नुद्दिश्ययोदुर्गांमधुनापयसापिच स्नापयेत्तस्यपितरस्तृप्तावर्षसहस्रकं चतुर्दश्यांनवम्यांवाअष्टम्यांवानरा-

धिप स्नापयित्वातीर्थजलैर्वाजपेयफलंलभेत् स्नापयित्वानदीतोयैर्गंधिचंदनवारिणा चंद्रांशुनिर्मलःश्रीमान्चंद्रलोकेमहीयते
स्नापयेद्यस्तुवैदेवींनरःकर्पूरवारिणा सगच्छतिपरंस्थानंयत्रसाचंडिकास्थिता चंडिकांस्नापयित्वातुअद्गयागरुवारिणा इं
द्रलोकंसमासाद्यक्रीडतेसहकिन्नरैः वाराहतंत्रे षडक्षरेणमंत्रेणपाद्यादीनथषोडश इतरैरुपचारैश्चपूर्वप्रोक्तैश्चभैरवम्
द्वादशांगेनयोर्घेणचंडिकांपूजयेन्नरः दशपद्मसहस्राणिवर्षाणांमोदतेदिवि आपःक्षीरंकुशाग्राणिअक्षतादधितंडुलाः
सहसिद्धार्थकादूर्वाकुंकुमंरोचनंमधु अर्घोयंकुरुशार्दूलद्वादशांगउदाहृतः महासिदेवी कुमारीउपक्रम्य अनेनपूजये-
द्यस्तुसयातिपरमांगतिं अष्टांगार्घ्यंसमापूर्यदेव्यामूर्ध्निनिवेदयेत् दशवर्षसहस्राणिदुर्गालोकेमहीयते आपःक्षीरंकुशाग्राणिदधि-
सर्पिश्चतंडुलाः तिलाःसिद्धार्थकाश्चैवअष्टांगोर्घःप्रकीर्तितः रक्तबिल्वाक्षतैःपुष्पैर्दधिदूर्वाकुशैस्तिलैः सामान्यःसर्वदेवानामर्घोयंप
रिकीर्तितः मृत्पात्रेणनरोदत्वावाजपेयफलंलभेत् ताम्रपात्रार्घ्यदानेनपौंडरीकफलंलभेत् दत्वासौवर्णपात्रेणलभेद्बहुसुवर्ण-
कं हेमपात्रेणसर्वाणिईप्सितानिलभेद्भुवि अर्घ्यंदत्वातुरौप्येणआयूराज्यंफलंलभेत् पलाशपद्मपत्राभ्यांगोसहस्रफलंलभेत्
रौप्यपात्रेणदुर्गायैविष्णुयागफलंलभेत् विलिप्यकृष्णागरुणावाजपेयफलंलभेत् कस्तूरीलेपनंकृत्वाज्योतिष्टोमफलंलभेत् चंद
नागरुकर्पूरैःश्लक्ष्णपिष्टैःसकुंकुमैः दुर्गामालिप्यविधिवत्कल्पकोटिवसेद्दिवि चंदनंमदकर्पूररोचनंचचतुष्टयं एतेनलेपयेद्देवींस

वैकामानवाप्नुयात् मल्लिका उत्पलं पद्मं शमीपुन्नागचंपकं अशोकं कर्णिकारंच द्रोणपुष्पंविशेषतः करवीरंशमीपुष्पंकुसुंभंनागकेसरम्
कुंदश्चयूथिकामल्लीपुन्नागश्चंपकंनव जपाचकेतकीमल्लीबृहतीशतपत्रिका तथाकुमुदकल्हारबिल्वपाटलमालती यावनीबकुलाशोककर
कनीलोत्पलानिच दमनंमरुबकंचैवशतथापुण्यवृद्धये केतकीचातिमुक्तश्चबंधूकंबकुलान्यपि कुमुदंकर्णिकारंचसिंदूराभंसमृद्धये
भविष्ये मत्येकमुक्तपुष्पेषुदशानिष्कफलंलभेत् स्रगबद्धेषुचतेष्वेवद्विगुणंकांचनस्यतु बिल्वपत्रैरखंडाद्यैःसकृद्देवींप्रपूजयेत् -
सर्वपापविनिर्मुक्तःशिवलोकेमहीयते मणिमौक्तिकमालांचवितानंदुकूलंतथा यंटादिसर्वंदादत्वाहेमपुष्पंतुशक्तितः तावद्भिश्चकृताः
पुत्रैःपौत्रैश्चैवसमंततः श्रियासहैवयुज्यंतेहेमपुष्पैःशिवार्चनात् करवीरस्रजोभिश्चपूजयेद्यस्तुचंडिकां सोग्निष्टोमफलंलब्ध्वासू
र्यलोकेमहीयते पूजयित्वानरोभक्त्याचंडिकांपद्ममालया ज्योतिष्टोमफलंप्राप्यसूर्यलोकेमहीयते शमीपुष्पस्रजाभिश्चआर्यां
संपूज्ययत्नतः गोसहस्रफलंप्राप्यविष्णुलोकेमहीयते पूजयित्वातुराजेंद्रश्रद्धयाविधिवन्नृप कुशपुष्पस्रजाभिस्तुपितृलोक-
मवाप्नुयात् सुगंधयुतपुष्पैस्तुपूजयेद्यस्तुचंडिकां मालाभिर्मालयावापिसोश्वमेधफलंलभेत् सुवर्णानांसुवर्णस्यशतेदत्तेफ
फलंलभेत् मालयाबिल्वपत्राणांनवम्यांगुग्गुलेनच नीलोत्पलस्रजाभिश्चपूजयेद्यस्तुचंडिकां वाजपेयफलंप्राप्यरुद्रलोकेमहीयते
नीलोत्पलसहस्रेणयोवैमालांप्रयच्छति वर्षकोटिसहस्राणिवर्षकोटिशतानिच दुर्गानुचरतांयातोरुद्रलोकेमहीयते तथा वि

लिसांपूजयेद्दुर्गांदिव्यपुष्पाधिवासिनां तालवृंतेनसंवीज्यमहासत्रफलंलभेत् भविष्ये सर्वेषामेवधूपानांदुर्गायागुग्गुलुःप्रियः मंत्रस्तु
धूपोयंदेवदेवेशिघृतगुग्गुलुयोजितः गृहाणवरदेमातर्दुर्गेदेविनमोस्तुते कृष्णागरुंनरोदत्वागोसहस्रफलंलभेत् माहिषाख्यघृता
भ्यक्तंदत्वाबिल्वमथापिवा वाजपेयफलंप्राप्यसूर्यलोकेमहीयते सकृष्णागरुधूपेनमाहिषाख्येनमंगला शोधयेत्पापकलिलंय-
थाग्निरिवकांचनं कृष्णागरुंसकर्पूरंचंदनंसिंहकंतथा तथाशब्दसमुच्चये भगवत्येनरोधूपमिमंदत्वानराधिप इहकामानवाप्यां
तेदुर्गालोकेमहीयते घृतदीपप्रदानेनचंडिकांपूजयेन्नरः सोश्वमेधफलंप्राप्यदुर्गायास्तुगणोभवेत् तैलदीपप्रदानेनपूजयित्वाचचंडि
कां वाजपेयफलंप्राप्यमोदतेसहकिन्नरैः अग्निर्ज्योतिरविज्योतिश्चंद्रज्योतिस्तथैवच ज्योतिषामुत्तमोदुर्गेदीपोयंप्रतिगृह्यतां देदी
प्यतेसकनकोज्ज्वलपद्मरागरत्नप्रभाभरणहेममयेविमाने दिव्यांगनापरिवृतेनयनाभिरामंप्रज्ज्वाल्यदीपममलंभवनेभवान्याः विशे
षतोनवम्यांतुभक्त्याश्रद्धासमन्वितः यावंतंदीपसंयातंघृतेनापूर्यबोधितं तावत्कल्पसहस्राणिदुर्गालोकेमहीयते दीपप्रदानंयोदद्याद्दे
वेषुब्राह्मणेषुच तेनदीपप्रदानेनअक्षय्यांगतिमाप्नुयात् गुडखंडंघृतान्नंचतथाशर्करयापिच घृतेनपरिपक्वान्नंदत्वाचब्रह्मणःपदम्
स्यादितिशेषः शाल्योदनंरसालंचपानंबदरजंतथा यःप्रयच्छतिदुर्गायैसगच्छतिशिवालयं ईषदाम्लदधिशर्करापयःसाधितेंदुमरि
चंसुगालितं पित्तनाशमरुचिंचनिहंतिवैमोदनंचकुरुतेरसालयाम् गौडमम्लमनम्लंवापानकंसुरभीकृतं तदेवखंडमृद्वीकाशर्करास

हितंपुनः साम्लंसक्षौद्रंसहितंपानकंस्यान्निरत्ययं श्रद्धयापायसंयुतंशार्करासहितंनरः यःप्रयच्छतिदुर्गायैनस्यराज्यंकरेस्थितम् आ
भिक्षांपरमान्नंचदधिचापिसशर्करं महादेव्यैनिवेद्यैववाजपेयफलंलभेत् दुर्गामुद्दिश्यपानीयंकेनकोपुष्पवासितं यःप्रयच्छतिरौ
द्राणांसगणाधिपतिर्भवेत् आम्रंचनारिकेरंचखर्जूरीबीजपूरकं यःप्रयच्छतिदुर्गायैसयातिपरमंपदं भक्ष्यंभोज्यंचखाद्यंचपेयंचोष्यं
चपंचमं परमान्नंपिष्टकंचयावकंकृसरंतथा मोदकंस्थुकादीनिदेव्यैपक्वानिचोत्सृजेत् दद्यादित्यर्थः निवेदयेन्महादेव्यैसर्वाणि-
व्यंजनानिच क्षीरादीनिचगव्यानिमाहिषाणिचसर्वशः तांबूलानिचदत्वातुगंधर्वैःसहमोदते तंतुसंतानसन्नद्धंरंजितंरागवस्तुना दु
र्गेदेविभजस्वेदंवासस्तेपरिधीयतां वस्त्राणितुविचित्राणिसूक्ष्माणिचमृदूनिच यःप्रयच्छतिदुर्गायैसगच्छतिशिवालयं यावंतस्तं
तवोर्वारतेषुवस्त्रेषुसंस्थिताः तावद्वर्षसहस्राणिमोदतेचंडिकागृहे अलंकारैस्तुयोदद्याद्धेमायाथसरायवा सगच्छेद्वारुणंलोकंना-
नाभूषणभूषितः जातःपृथिव्याःकालेननतोद्वीपपतिर्भवेत् विभूषणप्रदानेनराजाभवतिभूतले सुवर्णतिलकंयस्तुभगवत्यैप्रय
च्छति सगच्छतिपरंस्थानंयत्रसापरमाकला सौवर्णीराजतेवापिअक्षिणीयःप्रयच्छति गोसहस्रफलंप्राप्यसूर्यलोकेमहीयते श्रोणि
सूत्रप्रदानेनमहींसागरमेखलां प्रशास्तिनिहतामित्रःमित्रवृंद्यानमोदते हेमनूपुरदानेनस्थानंसर्वत्रविंदति देदीप्यनेकनकदंड
विराजितैश्चसच्चामरैःप्रचलकुंडलसुंदरीभिः दिव्यांगनास्तनविराजितभूषितांगःकृत्वातुचामरयुतांवरवस्त्रपूजां गौरिकस्यतुपात्रा

णिदुर्गायैयः प्रयच्छति तस्यपुण्यफलंप्रोक्तंतारांगणपदंदिवि गैरिकंसुवर्णं निष्ककोटिप्रदानाद्धिरजतस्यततोधिकं हेमपात्राणि-
यद्दत्वापुण्यंस्याद्वेदपारगे ताम्रपात्रप्रदानेनदेव्यैशतगुणंभवेत् तस्माच्छतगुणंप्रोक्तंदत्वामृन्मयमादरात् मृन्मयंकरकादि उपस्करम
दानेनप्रियमाप्नोत्यनुत्तमं उपस्करःप्रपूजार्थंधूपदीपादिपात्रकम् चंद्रांशुनिर्मलंस्वच्छंदर्पणंमणिभूषितं पद्मोपशोभितंदत्वादि
व्यमाल्यानुलेपनैः दुर्गायाःपुरतःकृत्वाविष्णोर्वाशंकरस्यवा राजसूयफलंप्राप्यहंसलोकेमहीयते हंसःसूर्यः दत्वातुयःपरमभ
क्तियुतोभवान्यायंटाविनानमथचामरमातपत्रं केयूरहारमणिकुंडलभूषितोसौरत्नाधिपोभवतिभूतलचक्रवर्ती शंखकुंदेंदुसंका
शंप्रवालमणिभूषितं हेमदंडमयंछत्रंदुर्गायैयःप्रयच्छति सच्छत्रेणविचित्रेणकिंकिणीजालमालिना धार्यमाणेनशिरसिशिवलो
केमहीयते यानंशय्यांमणिंछत्रंपादुकेवाप्युपानहौ वाहनंगांगृहंवापित्रिदशायैप्रयच्छति वायुलोकंसमासाद्यक्रीडतेवायुनासह
आर्यायाश्चामरंदत्वामणिदंडविभूषितं सुवर्णरूपंचित्रंवादुर्गालोकेमहीयते मयूरपिच्छव्यजनंनानारत्नविभूषितं भगवत्यैन
रोदत्वासलभेच्चसुवर्णकं तालवृंतंमहाबाहोचित्रकर्मोपशोभितं भगवत्यैनरोदत्वावैष्णावस्यफलंलभेत् वैष्णावोयज्ञः यंदानिवे
दयेद्यस्तुलभतेवांछितंफलं हिनस्तिदैत्यतेजांसिस्वनेनापूर्ययाजगत् सायंटापातुनोदेविपापेभ्योनःसुतानिव इतिसंपूज्यनिवेदये
त् भनःशक्रस्मातरीतिकोशात् यःशय्यांतुप्रयच्छेतदेवेषुचगुरुष्वपि ज्ञानवृद्धेषुविप्रेषुदानाननरकंव्रजेत् रत्नोपकरणैर्युक्तांसार

दारुमयींशुभां शय्यांनिवेदयेद्यस्तुभगवत्यैनराधिप दुकूलवस्त्रतंतूनांपरिसंख्यातुयावती तावद्वर्षसहस्राणिदुर्गालोकेमहीयते पादु
कासनदानेनभगवत्यैकृतेनतु अग्निष्टोमफलंप्राप्यविष्णुलोकेमहीयते योगांपयस्विनींशुद्धांतरुणींशीलमंडनाम् भगवत्यैनरोदद्यादश्वमे
धफलंलभेत् वृषभंपरिपूर्णांगमुदासीनंशशिप्रभम् यस्तुदद्यानन्तोभक्त्याभगवत्यैसद्भनरः यावंतिरोमकूपाणिवृषदेहस्थितानितु ता
वत्कल्पसहस्राणिरुद्रलोकेमहीयते सुविनीतांस्त्रियंदासींभृत्यकंवानराधिप प्रयच्छतिचदुर्गायैराजसूयाश्वमेधभाक् प्रतिपाद्यतथाभक्त्या
ध्वजंत्रिदशवेश्मनि निर्दहत्याशुपापानिमहापातकजान्यपि ध्वजंश्वेतपताकादिअथवापंचरंगिकां किंकिणीजालसंवीतांश्वेतपद्मोप
शोभिनां दत्वादेव्यैमहाबाहोशक्रलोकेमहीयते ध्वजमालाकुलंयस्तुकुर्याद्दैवंचंडिकालयं महाध्वजाष्टकंवापिदिशासुविदिशासुच
कल्पानांतुशतंसाग्रंदुर्गालोकेमहीयते यावद्धनुःप्रमाणेनपताकाप्रतिपादिता तावद्वर्षसहस्राणिदुर्गालोकेमहीयते चतुर्हस्तंध
नुः प्रभूतबलिदानंचनवम्यांविधिवच्चरेत् कूष्मांडमिक्षुदंडंच मद्यमांसानिचैवहि एतेबलिसमाःप्रोक्तास्तृप्तौच्छागसमामताः नतत्र
देशेदुर्भिक्षंनचदुःखंप्रवर्तते नाकालेम्रियतेकश्चित्पूज्यतेयत्रचंडिका शरत्कालेमहाष्टम्यांचंडिकांयःप्रपूजयेत् विमानंवरमा
रुह्यमोदतेब्रह्मणासह अथावरणपूजा देव्यादक्षिणेसिंहंप्रपूजयेत् पूर्वादिक्रमेण एकादशदेवीर्नाममंत्रेणपूजयेत् ॐ
ह्रींजयंत्यैनमः ॐ ह्रींमंगलायै॰ ॐ ह्रींकाल्यै॰ ॐ ह्रींभद्रकाल्यै॰ ॐ ह्रींकपालिन्यै॰ ५ ॐ ह्रींदुर्गायै॰ ॐ ह्रींक्षमायै॰ ॐ ह्रींशिवा

यै॰ ॐ ह्रीं धात्र्यै॰ ॐ ह्रीं स्वधायै॰ ॐ ह्रीं स्वाहायै॥१इतिप्रथमावरणंनामपूजनं अनयारीत्यासर्वत्रादौ ॐकारः ह्रींकारश्चपठनीयः ॐ ह्रीं-
उग्रचंडिकायै॰ १ ॐ ह्रीं प्रचंडायै॰ २ ॐ ह्रीं स्वाहायै॰ ३ ॐ ह्रीं प्रहारायै॰ ४ ॐ ह्रीं चंडवत्यै॰ ५ ॐ ह्रीं चंडरूपायै॰ ६ ॐ ह्रीं उग्रदंष्ट्रायै॰ ७ ॐ ह्रीं
महादंष्ट्रायै॰ ८ ॐ ह्रीं दंष्ट्राकरालायै॰ ९ ॐ ह्रीं बहुरूपिण्यै॰ १० ॐ ह्रीं भीमसेनायै॰ ११ ॐ विशालाक्ष्यै॰ भ्रामर्यै॰ मंगलायै॰ मंगलदायै॰
नंदिन्यै॰ भद्रायै॰ लक्ष्म्यै॰ कामदायै॰ भोगदायै॰ पृथिव्यै॰ मेधायै॰ साध्व्यै॰ यशोवत्यैन॰ शोभायै॰ बहुरूपायै॰ धृत्यै॰ आनंदायै॰ सुनंदायै॰
नंदायै॰ विजयायै॰ मंगलायै॰ महीधृत्यै॰ शिवायै॰ क्षमायै॰ सिद्ध्यै॰ तुष्ट्यै॰ जयायै॰ पुष्ट्यै॰ ऋद्ध्यै॰ रत्यै॰ दीप्त्यै॰ कान्त्यै॰ पद्मायै॰ लक्ष्म्यै॰ ईश्व
र्यै॰ वृद्धिदायै॰ शक्त्यै॰ जयवत्यै॰ ब्राह्म्यै॰ ५० जयंत्यै॰ अपराजितायै॰ अजितायै॰ मानिन्यै॰ श्वेतायै॰ दित्यै॰ मायायै॰ मोहिन्यै॰ रतिप्रियायै॰
लालसायै॰ तारायै॰ विमलायै॰ कौमार्यै॰ शरण्यै॰ गौरूपिण्यै॰ कामाक्ष्यै॰ मत्यै॰ दुर्गायै॰ क्रियायै॰ अरुंधत्यै॰ घंटायै॰ करालायै॰ कपा-
लिन्यै॰ रौद्र्यै॰ कालिकायै॰ त्रिनेत्रायै॰ सुरूपायै॰ बहुरूपायै॰ रिपुहंत्र्यै॰ अंबिकायै॰ चर्चिकायै॰ देवपूजितायै॰ वैवस्वत्यै॰ कौमार्यै॰ माहेश्व
र्यै॰ वैष्णव्यै॰ महालक्ष्म्यै॰ काल्यै॰ कौशिक्यै॰ शिवदूत्यै॰ चामुंडायै॰ शिवप्रियायै॰ मुंडहंत्र्यै॰ दुर्गपारायै॰ महिषमर्दिन्यै॰ ख्यात्यै॰ तृ-
ष्णायै॰ धूम्रायै॰ अतिसौम्यायै॰ रौद्रायै॰ वाराह्यै॰ १०० रुद्राण्यै॰ मयूरवाहिन्यै॰ विंध्यवासिन्यै॰ गंगायै॰ महाचंडायै॰ नवचंड्यै॰ चंडि
कायै॰ १०८ इतिनाममंत्रैःपू॰ ततःकालिकालीस्वा॰ हृद॰ कालिकालिलोहदंडायैस्वा॰ मु॰ कालिका॰ लो॰ यैस्वा॰ नेत्रे पुरतःअथपंचवक्त्राणि ईशानाय॰ शिरः॰ कालिकालि

तत्पुरुषाय॰मु॰ वज्रेश्वरीघोरायै॰हृद॰ ओहदंडायै॰नाभौ वामदेवायै॰पादयोस्त्वां॰सद्योजातायै॰सर्वांगेपू॰ अथआयुधानि दक्षिणोर्ध्वकरादि त्रिशूलं खड्गं
बाणं शक्तिं वामे खेटं पाशं अंकुशं घंटां ततः वज्रनखदंष्ट्रायुधाय महासिंहासनाय ॐ हुंफट्नमः इतिसिंहं महिषासनाय॰नागपा
शाय॰ इतिपूजा वर्षैःपद्मसहस्रैस्तु यत्पापंसमुपार्जितं तत्सर्वंविलयंयाति घृताभ्यंगेनवैनृप घृतेनपयसादध्नास्नापयेच्चंडिकांनृप
निंबपत्रैश्चगंधाद्यैर्धूपैर्धूपयेद्यत्नतस्ततः इतिमहानवमीदुर्गाव्रतविधिः अथअक्षय्यनवमीव्रतमारंभः बालखिल्याऊचुः का-
र्तिकेशुक्लनवमीतत्राभूद्द्वापरंयुगं पूर्वापराह्णगाग्राह्याक्रमाद्दानोपवासयोः अत्रकूष्मांडकोनाममहतोदैत्यस्तुविष्णुना तद्रोमभिः
समुद्भूतावल्यःकूष्मांडसंभवाः तस्मात्कूष्मांडदानेनफलमाप्नोतिनिश्चितं कूष्मांडंबहुबीजाढ्यंब्रह्मणानिर्मितंपुरा दास्यामिविष्णा-
वेतुभ्यंपितृणांतारणायच कूष्मांडंपूजयेच्चैवगंधपुष्पाक्षतादिना पंचरत्नैःसमायुक्तंगोघृतेनसमन्वितं फलान्नदक्षिणायुक्तंब्रा-
ह्मणायनिवेदयेत् देवस्यत्वेतिमंत्रेणपितृणांदत्तमक्षयं अस्यामेवनवम्यांतुकुर्यात्कृष्णेनयोनरः स्वशाखोक्तेनविधिनातुलस्याः
करपीडनं कन्यादानफलंतस्यजायतेनात्रसंशयः कार्तिकेशुक्लनवमींसमवाप्यजितेंद्रियः हरिंविधायसौवर्णंतुलस्यासहितंशु
भं पूजयेद्विधिवद्भक्त्याव्रतीतत्रदिनत्रयम् एवंयथोक्तविधिनाकुर्याद्वैवाहिकंविधिं ग्राह्यंत्रिरात्रमत्रैवनवम्यामनुरोधतः मध्यान्ह
व्यापिनीग्राह्यानवमीपूर्वविधिना धात्र्यश्वत्थौचएकत्ररोपयित्वासमुद्वहेत् ननश्यतेतस्यपुण्यंकल्पकोटिशतैरपि अत्रैवोदाहरंती॰

ममितिहासंपुरातनं बभूवविष्णुकांच्यांतुश्चप्रियः कनकाभिधः धनाढ्योवैश्यवृत्तिश्चवैष्णवोराजपूजितः बहुकालोगतस्तस्यविना
पत्यंमुनीश्वराः ततोनानाप्रयत्नैर्जाताकन्याकमललोचना सरूपालक्षणोपेतानानागुणसमन्विता पितातस्यानामचक्रेकिशोरीतिच-
विश्रुतं एकदातगृहेयातोजन्मपत्रनिरीक्षकः दर्शयित्वाजन्मपत्रंकथंकन्याभवत्वियं ततस्तेनक्षणंध्यात्वाकनकंप्रशृणुमेवचः य
दिब्रवीमिसत्यंचेत्त्वदुःखंभविष्यति यद्यसत्यमहंब्रूयांमिथ्यात्वंममजायते तस्मात्सत्यंवदिष्यामियद्योचितंतथाकुरु अस्याःकर
ग्रहंकुर्यादसौवज्रान्मरिष्यति इतितद्वचनंश्रुत्वाकनकोदुःखितोभवत् नचाकारिविवाहोस्याःसाचब्राह्मणपूजने नियुक्तान्यद्गृहं
सातुनानेयामन्मुखायतः दृष्ट्वेमांरूपसंपन्नांदुःखंमेबाधयिष्यति स्थित्वान्यस्मिन्गृहेसातुद्विजातिथ्यमचीकरत् कदाचिद्दैवयोगे
नतत्रागाद्द्विजपुंगवः यत्रार्थंविष्णुकांच्यास्तुवैशाखेमासिशंकरः कनकोविमर्शः ऋषिज्ञात्वात्रैवसमागतः आगत्यांगणमध्येतु
उपविष्टोद्विजोत्तमः किशोर्यागत्यचातिथ्यंशंकरस्यकृतंतदा दृष्ट्वातांतरुणींरम्यांसद्वेषांविनयान्विताम् अजातकरपीडांचसर्वां
दृष्ट्वाश्चुवाचसः शंकरउवा॰ चंदनेवदशीघ्रंत्वंकिशोरीनविवाहिता किमत्रकारणंजातंतरुणीकामरूपिणी इतितद्वचनंश्रुत्वा
चंदनासर्वमब्रवीत् तदारूपालुनातेननत्स्पितृत्रयेनिवेदितम् अस्यैमंत्रंप्रयच्छामिश्रीविष्णोर्द्वादशाक्षरं करोतुवर्षत्रितयंजपम-
स्यसलोचना मातस्नानवतीचास्तुतुलसीवनमालिका कार्तिकस्यसितेपक्षेनवम्यांविष्णुनासह सौवर्णेनतुलस्याश्चविवाहंकार

यत्त्वियम् तेनव्रतप्रभावेनविधवानभविष्यति ततस्त्रापितथेत्युक्त्वासायश्चित्तंसदत्तवान् किशोर्यैवैष्णवंधर्मंसमग्रंचादिदेशसः द्विजेनते
नयस्त्रोक्तं किशोर्यपितथाकरोत् वर्षत्रयंयथाशक्त्याकिशोर्यातद्व्रतंकृतं चतुर्थेकार्त्तिकेमासिकिशोरीस्नपनायच प्रातःकालेगताबा
ला तस्मिन्मार्गेस्फलोचना क्षत्रियेणयदादृष्टाप्रापमोहंजडात्मकः दृष्ट्वेतस्यास्तुसंलग्नोभावयंस्तामनिंदितां केचित्तांददृशुर्दूरा
त्केचित्पश्यंतिशुषितः स्त्रियोपितांप्रपश्यंतिपुरुषाणांतुकाकथा यथाद्वितीयाचंद्रस्यदर्शनेचोत्सुकाजनाः तथारात्रौप्रतीक्षंति
तद्द्वारेसकलाजनाः निमेषमात्रमर्केणदृष्टास्थित्वातुबालिका अधिकंकिंवर्णनीयंतत्सौंदर्यंमुनीश्वराः केचिद्वदंतिदेवीयंनागकन्ये-
तिचापरे रुद्रसंमोहनार्थायजातासाविश्वमोहिनी सानपश्यतिलोकांश्चनमार्गेनसखीगणं ध्यायंतीहृदयेविष्णुंतुलसींदेवरूपि
णीम् तांग्रहीतुंमनश्चक्रेविलेपीद्रव्यवान्बली नानाभेदाःकृतास्तेननलेभेचांतरंक्वचित् मालाकारगृहंगत्वातस्यैद्रव्यमयच्छत येन
केनप्रकारेणकिशोर्यासहसंगमः यथास्यात्क्रियतांभद्रेदेयमस्माच्चतुर्गुणं प्रतिमासंकिशोर्यादीयमानाद्द्रव्यादधिकंददामि न
याचबहवोपायादृष्टास्तद्ग्रहणायच नददर्शनतोपायमवदत्साविलेपिनं नदृश्यतेमयोपायस्त्वयायस्त्रोच्यतेधुना मयातदेवकर्तव्यं
द्रव्यग्रहणसिद्धये विलेपीउवा० नवकन्यातुभूत्वाहंनयामिकुसुमानिच अग्रेयद्भाविभवतुग्रहाणाह्निशतंशतं तयापिचतथेत्युक्ते
ससम्यांनिश्चयःकृतः अष्टम्यांसागतातत्रकिशोरीतामुवाचह मालाकारेश्वोनवमीतुलस्याःपाणिपीडनं तिष्ठत्यतस्त्वयानेयासुकु

टाः पुष्पसंभवाः मालिन्युवाच मत्कन्याचागताग्रामान्नानाकौतुककारिणी यद्यस्योक्तंत्वयाबालेसमानेष्यतिसत्वरं तयापिचतथेत्युक्त्वामा
लिनीस्वगृहंययौ कथितःसर्ववृत्तांतोविलेप्यग्रेननोभवत् यासामहेंद्रपदवीत्येवंसुखमवापसः मालिन्यारचितारात्रौमुकुटाविविश्वास्त
दा विष्णुकांच्यांतदाराजाजयसेनोबभूवह तस्यपुत्रोमुकुंदोभूत्सूर्यभक्तिपरायणः किशोर्यास्तुश्रुतातेनवार्तायमतिसुंदरा तदातेन
मुकुंदेनसंकल्पःकृतएवहि किशोरीयदिभार्यामेभविष्यतिदिवाकर तदान्नमहमश्नामि अन्यथास्यान्मतिर्मम कृतेत्थंसतुसंकल्पसु-
एवासान्यचक्रमे ससमेहनिसूर्योसौस्वप्नेवचनमब्रवीत् सूर्यउवाच किशोर्याविधवायोगोवर्ततेसौकथंभवेत् सातेपत्नीमदा
स्यामित्वन्यांपद्मायतेक्षणाम् मुकुंदउवाच यदिदेवप्रसन्नोसिविश्वंसृजसित्वंप्रभो बालवैधव्ययोगंचहंतुंत्वंचक्षमोत्यसि इति
तस्यवचःश्रुत्वासांत्वनाबहुलाहृना नमन्यनेमुकुंदोसौतथेत्युक्त्वागतोरविः तुलसीव्रतमाहात्म्यात्त्वमोभूत्कनकस्यतु इयंकन्यालयादे-
यामुकुंदायमहामते तुलस्युद्वाहमाहात्म्याद्विधवात्वंगमिष्यति रात्रौस्वप्नःकिशोर्यास्तुतस्यामेवाभ्यजायत आगताकन्यका
काचिद्धत्रीसहसमन्विता भर्तारंवदतिस्वप्नेममानाकिशोरिका नन्द्धत्रीपितथेत्युक्तंप्रदास्येबलिमुत्तमं एतद्धस्तेनपश्चात्तुविवा
होस्याभविष्यति श्रुत्वाबलिप्रदानंसास्वप्नेचिंतातुराभवत् क्वद्वादशाक्षरीविद्याक्वेदंविष्णुसमर्चनं नरकद्वारमूलंक्वमद्धस्ता-
त्पशुमारणं एवंसातुसमुत्थायस्वप्नोयमितिनिश्चितं भावयित्वासमाहूयचंदनांवाक्यमब्रवीत् निवेद्यदृष्टंस्वप्नंतुकीदृगस्यफ-

इहलोकेपरत्रापिविपुलंसद्यशोलभेत् यतिवर्षंतुयःकुर्यात्तुलसीकरपीडनं भक्तिमान्धनधान्यैश्चयुक्तोभवतिनिश्चितं इतिश्रीसनत्कुमार
संहितायांकार्तिकशु॰व्रतंसं॰ अथमार्गशीर्षकृष्णैकादशीव्रतं अर्जुनउ॰ ॐनमोनारायणायाव्यक्तायात्मस्वरूपिणे सृष्टिस्थि-
त्यंतकर्त्रेचकेशवायनमोस्तुते त्वमेवजगतांनाथअंतर्यामीत्वमेवच शास्त्राणांचकवीशश्चवक्तात्वंजगत्पते एकादशीकथंस्वामिन्नु
त्पन्नाइतिगीयते एतंहिसंशयंमेद्यछेत्तुमर्हसित्वंप्रभो ब्रूयुःस्निग्धस्यशिष्यस्यगुरवोगुह्यमप्युत ममोपरिकृपांकृत्वाइदानींवक्तुमर्हसि
मार्गशीर्षेकृष्णपक्षेकिंनामैकादशीभवेत् किंनामकोविधिस्तस्याःकोदेवस्तत्रपूज्यते कृताकेनपुरादेवएतद्विस्तरतोवद श्रीकृष्ण॰
शृणुराजन्प्रवक्ष्यामिकथांपातकनाशिनीं पृष्टाचयात्वयाराजन्लोकानांहितकाम्यया मार्गशीर्षेकृष्णपक्षेचोत्पत्तिर्नामनामतः तस्या
सुपोषणेनैवधार्मिकोजायतेनरः धर्माद्भवतिसत्यंवैलक्ष्मीःसत्यानुसारिणी पुरावैमुरनाशायउत्पन्नामामवल्लभा येकुर्वंतिनराराजन्तेषां
सौख्यंभवेद्ध्रुवं तथापापानिनश्यंतितेनयांतियमालयं अर्जुनउ॰ उत्पन्नासाकथंदेवकथंपुण्याधिकाशुभा कथंदेवपवित्रावैकथं
चदेवताप्रिया श्रीकृष्णउ॰ पुराकृतयुगेपार्थमुरनामेतिदानवः अत्यद्भुतोमहारौद्रःसर्वलोकभयंकरः इंद्रउछेदितस्तेनत्वाद्योदेवः
पुरंदरः आदित्याश्चशिवोब्रह्मावायुरग्निस्तथैवच नवंप्रतिष्ठितंतेनएवमादिधनंजय देवतानिर्जितास्तेनअत्युग्रेणतुपांडव स्वर्गान्नि
राकृतादेवाविचरंतिमहीतले साशंकाभयभीतास्तेगताःसर्वेमहेश्वरम् इंद्रेणकथितंसर्वमीश्वरस्यापिचाग्रतः स्वर्गलोकंपरित्यज्य-

विचरंतिमहीतले मर्त्येषुसंस्थितादेवानशोभंतेमहेश्वर उपायंब्रूहिमेदेवभ्रमराणांतुकागतिः शिवउवाच गच्छगच्छसुरश्रेष्ठयत्रास्तिगरु
डध्वजः शरणागतदीनार्तपरित्राणपरायणः ईश्वरस्यवचःश्रुत्वादेवराजोमहामतिः त्रिदशैःसहितःसर्वैर्गतस्तत्रधनंजय अप्सरोग-
णगंधर्वैःसिद्धविद्याधरोरगैः यत्रैवसजगन्नाथःस्तसोस्तिचजनार्दनः कृतांजलिपुटोभूत्वाइदंस्तोत्रमुदीरयत् ॐनमोदेवदेवेशदेवा
नामीपूर्वदित दैत्यारेपुंडरीकाक्षत्राहिमांमधुसूदन नमस्तेस्थितिनाशायनमस्तेस्तुजगत्पते नमोदैत्यविनाशायत्राहिमांमधुसूदन सु
राःसर्वेसमायुक्ताभयभीताःसमागताः शरणंत्वांजगन्नाथत्राहिमांभयविह्वल त्राहिमांदेवदेवेशत्राहिमांत्वंजनार्दन त्राहिमांत्वंसुरा
नंददानवानांविनाशक त्वंगतिस्त्वंमतिर्देवत्वंकर्तात्वंपरायणः त्वंमातासर्वगोसित्वं त्वमेवहिजगत्पिता अत्युग्रेणतुदैत्येननिर्जितास्त्रि
दशाःप्रभो स्वर्गंत्यक्त्वाजगंनाथविचरंतिमहीतले इंद्रस्यवचनंश्रुत्वाविष्णुर्वचनमब्रवीत् विष्णुरुवाच कीदृशोवोभवच्छत्रुःकिन्नामाकी
दृशंबलं किंस्थानंतत्रदुष्टस्यकिंवीर्यंकःपराक्रमः इंद्रउवाच बभूवपूर्वंदेवेशासुरोब्रह्मसमुद्भवः तालजंघेतिनाम्नाचअत्युग्रोतिम
हाबलः तस्यपुत्रोतिविख्यातोमुरनामेतिदानवः उत्कटश्चमहावीर्योब्रह्मलब्धवरोमहान् पुरीचंद्रवतीनामतत्रस्थानेवसत्यसौ नि
र्जितादेवताःसर्वाःस्वर्गाच्चैवनिराकृताः इंद्रोन्यश्चकृतस्तेनअन्योदेवोहुताशनः चंद्रसूर्यौकृतौचान्यौयमोवरुणएवच सर्वमात्मी-
कृतंतेनसत्यंसत्यंजनार्दन तस्यतद्वचनंश्रुत्वाकोपाविष्टोजगत्पतिः हनिष्येदानवंदुष्टमित्याहभगवान्हरिः त्रिदशैःसहितस्तत्रगत

चंद्रवतीं पुरीं दृष्ट्वा देवान्समयुद्ध्यद्युधे दानवो बलदर्पहा असंख्यातैश्च शस्त्रास्त्रैर्दिव्यप्रहरणायुधः हन्यमानास्तु तैर्देवा असुरैश्च पुनः पुनः त्रस्तादे वास्ततः सर्वे गताः सर्वे दिशो दश हरिं निरीक्ष्य तत्रस्थं तिष्ठ तिष्ठेत्यब्रवीद्वचः स तं निरीक्ष्य मोवाच असुरं मधुसूदनः रे दानव दुराचार मम बाहुं नि रीक्ष्य च चक्रं चैव समायातं स क्रोधी रक्तलोचनः ततस्ते संमुखाः सर्वे विष्णुना दानवा हताः हतो बाणैः पुनर्दिव्यैर्बभूव सोऽतिविह्वलः चक्रं मु क्तं तु कृष्णेन दैत्यसैन्ये च पांडव तेनैव छिन्नशिरसो बहवो निधनं गताः एकां गो दानवस्तत्र युध्यमानो मुहुर्मुहुः नष्टाः सर्वे सुरास्तेन निर्जितो मधुसूदनः निर्जितेन च दैत्येन बाहुयुद्धं च याचितं बाहुयुद्धं कृतं तेन दिव्यं वर्षसहस्रकं विष्णुश्चिंतां प्रपन्नश्च नष्टाः सर्वे दिवौकसः विष्णुः पराजितस्तेन गतो बदरिकाश्रमं गुहां सिंहवतीं नाम तत्र सुप्तः स जनार्दनः दानवः पृष्ठतो लग्नः प्रविष्टस्तां गुहोत्तमां प्रसुप्तं तत्र मां दृष्ट्वा दान वेन सुभाषितं हनिष्यामि न संदेहो असुराणां भयंकरः इत्येवमुक्ते वचने दैत्येनामित्रकर्षिणा निर्गता कन्यका चैका जनार्दनशरीरतः रू पेणातिस्वरूपाढ्या दिव्यप्रहरणायुधा विष्णुतेजःसमुद्भूता महाबलपराक्रमा मोहितो दानवस्तत्र मुरनामेति पांडव सा कन्यायुयुधे ते न सर्वयुद्धविशारदा निहतो दानवस्तत्र तथा देवः प्रबुद्धवान् पतितं दानवं दृष्ट्वा ततो विस्मयमागतः केनेत्थं निहतो रौद्रो मम शत्रुर्भयं करः न देवेन च गंधर्वैर्न समोऽस्यास्ति भूतले एवं पार्थ तदा जातो विस्मितो मधुसूदनः अकस्मादेव सोवाच वाचा दिव्याशरीरिणी एकाद श्युवाच मया च निहतो दुष्टो देवासुरभयंकरः जिता येन सुराः सर्वे स्वर्गाच्चैव निराकृताः तस्यास्तद्वचनं श्रुत्वा विष्णुर्वचनमब्रवीत् वि

ष्णुरुवाॱ उपकारस्त्वयाभद्रेममकारुण्यभावतः दानवोनिहतोदुष्टःसुराणांचभयंकरः सोहंविनिर्जितोयेनकंसोयेननिपातितः विष्णोस्तद्व
चनंश्रुत्वादेवीवचनमब्रवीत् एकादश्यस्म्यहंविष्णोःसर्वशत्रुविनाशिनी मयाचनिहतोदैत्यःसुराणांत्रासकारकः इत्येतद्वचनंश्रुत्वादे
वदेवोजनार्दनः प्राहतुष्टोस्मिभद्रेतेवरंवरययांछितं निहतेदानवेंद्रेचसंतुष्टास्तत्रदेवताः हृष्टपुष्टास्ततोगत्वाआनंदंचसमागताः आ
नंदस्त्रिषुलोकेषुमुनयोमुदमागताः ब्रूहित्वंवचनंभद्रेयच्चेमनसिवर्तते ददामिचनसंदेहःसुराणामपिदुर्लभं एकादश्युवाॱ यदि
तुष्टोसिमेदेवसत्यमुक्तंजनार्दन यदिसत्यंजगन्नाथस्तिस्त्रोवाचोददस्वमे श्रीभगवानुवाॱ सत्यमेतन्मयाप्रोक्तमवश्यंतवसुव्रते ति
स्रोवाचोमयादत्तास्तववाक्यंप्रवोदिति एकादश्युवाॱ त्रैलोक्येषुचदेवेशमन्वंतरयुगेष्वपि अहंचलक्ष्मियानित्यंयथास्यात्कुरुमेव
रं सर्वतिथिप्रधानाचसर्वविघ्नविनाशिनी सर्वपापापहंत्रीचआयुर्बलविवर्धिनी येउपोष्यंतितेमर्त्यामहाभक्त्याजनार्दन सर्वसि-
द्धिर्भवेत्तेषांयदितुष्टोसिमाधव श्रीकृष्णउॱ यत्त्वंवदसिकल्याणितत्सर्वंचभविष्यति धर्मार्थकाममोक्षंचयस्त्वामेवंकरिष्यति म
मभक्त्याश्चयेलोकायेचभक्तास्तवापिच चतुर्युगेषुविख्यातास्त्रिषुलोकेषुवैपरं त्वांचभक्तामहंमन्येएकादशिव्रतेस्थिताः ममपूजांक
रिष्यंतिएकादश्यांनसंशयः सर्वतिथ्युत्तमात्वंचमत्प्रसादाद्भविष्यसि एवमुक्त्वाततःसातुतत्रैवांतरधीयत पुराकेकटकेदेशेकर्णीके
नगरेषुच कर्णसेनेतिराजर्षिर्न्यवसत्कृद्धिमत्प्रजः ब्राह्मणैःक्षत्रियैर्वैश्यैःशूद्रैश्चैवानुमोदितः नदुर्भिक्षंनदारिद्र्यंतस्मिन्राज्ञिस्थि

तेप्रभो अकालमृत्युर्नाव्याधिर्नैवतस्करस्तथापिच संततिसंपद्विहीनश्चकोपितत्रनविद्यते पुत्रदुःखंपिताक्वापिनपश्यतिचकुत्रचित् एतादृशे
महाराजेप्रशासतिप्रजाःप्रभो धनहीनोद्विजःकोपिकश्चित्क्षामोविपद्गतः कुटुंबभरणासक्तःकष्टांतमनुवर्तते भर्तुःशुश्रूषणेसक्ता-
सदाचारेगृहेस्थिता सुदामानामविप्रर्षिभार्यासाध्वीचसत्तमा रहःपृष्टानिभर्तारंम्लानतावदनेनसा स्वामिन्पापकृतेपूर्वंधर्महीन
स्तुजायते धर्महीनेधनंनास्तिधर्महीनेक्रियानहि तस्मात्केनाप्युपायेनधर्मस्यजननंकुरु एतस्मिन्नंतरेराजन्देवर्षिःसमुपागतः दंप
तीचोत्थितौतत्रमधुपर्कंगृहाणप्रभो आसनेतिष्ठभोस्वामिन् अर्घ्यंगृहाणनमोस्तुते अद्यमेसफलंजन्मअद्यमेसफलाःक्रियाः अद्यमेस
फलंसर्वंभवतोदर्शनेनच अस्मिन्पुरेतुयेस्वामिन्सर्वेतेसुखिनोजनाः अहंतुधनहीनत्वान्महादुःखेनपीडितः कथयस्वप्रसादेनध
नाढ्यःस्यामहंकथं धनहीनस्यलोकेस्मिन्वृथाजन्ममनोरथाः एवंश्रुत्वातुराजेंद्रवचनंनारदोब्रवीत् नारदउवा० मार्गशीर्षसितेपक्षे
उत्पत्तिर्नामनामतः तस्यास्तुपोषणेनैवधनाढ्योजायतेध्रुवं तथापापानिनश्यंतिएतन्मत्यंवदामिते सर्वसौख्यकरंनृणांहरिवासरमुत्तमं
गतेतुनारदेपश्चाद्व्रतंचक्रेसप्रयत्नतः तस्याव्रतप्रभावेनसुप्रसन्नोजनार्दनः स्वयमेवाश्रितालक्ष्मीर्यत्रासीद्विजमंदिरं भोगान्सविपुला
न्भुक्त्वागतोवैकुंठसन्निधौ एतस्मात्कारणाद्राजन्कर्तव्यंहरिवासरं अंतरंनैवकर्तव्यंप्रशास्तव्रतकारिभिः तिथिरेकाभवेत्सर्वापक्ष
योरुभयोरपि उदयेएकादशीस्वल्पाअंतरेचत्रयोदशी मध्येचद्वादशीपूर्णात्रिस्पृहासाहरिप्रिया एकाउपोषितावैवसहस्रैकादशीफ-

लं सहस्रगुणितंदानंएकादश्यांतुपारणे अष्टम्येकादशीषष्ठीतृतीयाचचतुर्दशी पूर्वविद्धानकर्तव्याकर्तव्यापरसंयुताः एकाद्युपोषयेत्तांतुद्वा
दशींविष्णुवल्लभां दशमीवेधसंयुक्ताहंतिपुण्यंपुराकृतं एकादशीअहोरात्रंप्रभातेयदिद्वाभवेत् सातिथिःपरिहर्तव्याउपोष्याद्वादशीयुता
एवंविधामयाप्रोक्तापक्षयोरुभयोरपि एकादश्यामकुर्वीतउपवासंनसंशयः सयातिपरमंस्थानंयत्रास्तेगरुडध्वजः धन्यास्तेमानवालो
केविष्णुभक्तिपरायणाः एकादश्याश्चमाहात्म्यंपर्वकालेतुयःपठेत् गोसहस्रफलंतस्यपुण्यंभवतिभारत दिवावायदिवारात्रौयःशृ
णोतीहभक्तितः कुलकोटिसमायुक्तोविष्णुलोकेवसेत्ध्रुवं एकादश्याश्चमाहात्म्यंपठ्यमानंशृणोतियः ब्रह्महत्यादिपापानिनश्यंतेनात्र
संशयः एकादशीसमानास्तिसर्वपातकनाशिनी इतिश्रीभविष्योत्तरपुराणेमार्गशीर्षकृष्णैकादशीउत्पत्तिर्नाममाहात्म्यंसंपूर्णम्
अथमार्गशीर्षशुक्लैकादश्यांवैतरणीव्रतं हेमाद्रौभविष्ये कृष्णउवा॰ शरतल्पगतभीष्मंपर्यपृच्छद्युधिष्ठिरः व्रतेनयेनपुण्येनय
मलोकोनदृश्यते नारीवापुरुषोवापियमलोकंनपश्यति तत्समाचक्ष्वधर्मज्ञपितामहकृपांकुरु भीष्मउवा॰ एकादशीवैतरणींना
कृत्वाचविमुच्यते यमलोकंनपश्यंश्चशोकंचैवनविंदति युधिष्ठिरउवा॰ केनतावविधानेनकर्तव्यासामहाफला पितामहसमाख्या
हितद्विधानंममप्रभो भीष्मउवा॰ एकादशींतिथिंकृत्वामार्गशीर्षगतांशुभां तामासाद्यनरःसम्यक्गृण्हीयान्नियमंशुचिः एका
दशीतिथिःकृष्णानाम्नावैतरणीशुभा साव्रतेनतयाकार्यावर्षनक्तोपवासिना मध्यान्हेतुनरःस्नात्वानित्यानिर्वर्त्यसत्क्रियाः रात्रौ

सुरभिमानीयकृष्णामर्चेद्यथाविधि सापूर्वाभिमुखीकार्याकृष्णागौः किलभूतले अग्रपादात्समारभ्यपश्चात्पादद्वयाव धि गोपुच्छंतुसं
मासाद्यकुर्याद्वापितृतर्पणं ततःपूजाप्रकर्तव्याशास्त्रदृष्टविधानतः गांचैवंश्चदृद्यासुक्तश्चंदनेनानुलेपितां गंधतोयेनचरणौशृंगेप्र-
क्षाल्यशक्तितः ततोनुपूजयेद्भक्त्यापुष्पैर्गंधादिवासितैः मंत्रैःपुराणसंप्रोक्तैर्यथास्थानंयथाविधि ततोगोरग्रपादाभ्यांगोरास्याय
नमोस्तुते गोशृंगाभ्यांचसंपूज्यगोस्कंधाभ्यांतथैवच गोःपुच्छायनमस्तेस्तुगोःपृष्ठात्पादयोस्तथा गोःसर्वांगेषुसंपूज्यस्थाने-
स्थानेषुदेवताः स्थानेष्वेतेषुगंधांश्चप्रक्षिपेच्छुद्धमानसः पश्चात्प्रदापयेद्धूपंगौर्दीपःप्रतिगृह्यतां असिपत्रादिकंघोरंनदींवैतरणींत
था प्रसादात्तेतरिष्यामिगौर्मातस्तेनमोनमः यज्ञसाधनभूतायाविश्वस्याघौघनाशिनी विश्वरूपधरोदेवःप्रीयतामनयागवा सु
खेनतीर्यतेयस्मान्नदीवैतरणीध्रुवं तस्मादेकादशीकृत्वानाम्नावैतरणींनरः हेमशृंगीरौप्यखुरींसघंटाभरणांबरां ताम्रपृष्ठींकां
स्यदोग्ध्रींसुवर्णोत्तरदक्षिणां सवत्सांद्विजमुख्यायपूजयित्वासमर्पयेत् आनंदकृत्सर्वलोकेदेवानांचसदाप्रिया गौस्त्वंपाहिजग
न्नाथदीपोयंप्रतिगृह्यतां आच्छादनंगवेदद्यात्सम्यक्शुक्लंसुनिर्मलं सुरभिर्वस्त्रदानेनप्रीयतांपरमेश्वरी मार्गशीर्षादिकंप्र-
त्यावर्षमेकंतुपूजयेत् मासिमासिप्रकुर्वीतमासद्वादशकव्रतं उद्यापनंततःकुर्यात्पूर्णेसंवत्सरेतदा युधिष्ठिरउवा॰ मार्गशीर्षेसि
तिपक्षेउद्यापनविधिंवद कृष्णउवा॰ यइच्छेत्सफलंजन्मजीवितंचसुजीवितं विनाशंसर्वपापानांसकुर्याद्द्वादशीमिमां युधिष्ठिर-

किमिष्टेनशिष्टैरन्यैरनुष्ठितैः दुस्तरानीतरदुर्गाणितोषयस्वचकेशवं मार्गशीर्षेसितेपक्षेद्वादश्यांकारयेदिदं यद्वावाभक्तिरुत्पन्नादेवदे
वंजनार्दनं एकादश्यांनिराहारोमासिमास्यर्चयेद्धरिं द्वादश्यांद्वादशैतानिनामानिपरिकीर्तयेत् केशवंमार्गशीर्षेचपौषेनारायणंवि
दुः माधवंमाघमासेतुगोविंदमथफाल्गुने चैत्रेविष्णुंतथाविंद्याद्वैशाखेमधुसूदनं त्रिविक्रमंतथाज्येष्ठेआषाढेवामनंविदुः श्रावणे-
श्रीधरंविद्धिहृषीकेशंतुभाद्रके आश्विनेपद्मनाभंचऊर्जेदामोदरंविदुः कृष्णोनंतोच्युतश्चक्रीवैकुंठोथजनार्दनः उपेंद्रोयज्ञपुरुषोवा
सुदेवस्तथाहरिः योगीशःपुंडरीकाक्षोमासनामान्यनुक्रमात् एतानिश्रावकृत्यायायःपठेत्पुरुषःसदा अपिदुर्गतिकास्तस्यपितरःस्व
र्गमाप्नुयुः तिलपात्रद्वादशकंयोदद्यात्प्रत्यहंद्विजे एवंद्वादशभिर्मासैर्व्रतंपारंगमिष्यति व्रतांतेब्राह्मणान्शांतान्मासससंख्यान्निमंत्र
येत् द्वादशाश्वत्थपत्रेषुस्थापयेच्छुक्लतंदुलैः ॐ तस्मैनमआयातुइतिआवाहयेत्पृथक् संस्थाप्याग्निंततःप्राच्यांध्यायेद्यआत्मसंप्सुरवा
न् आसनंपाद्यमर्घ्यंचगंधपुष्पादिनातथा धूपदीपांश्चवासांसिहोमशेषंसमापयेत् दत्वाचाचमनंपश्चाद्धोमशेषंनिवेदयेत् अष्टाष्टस
मिधोहोमेहुत्वाष्टाष्टघृताहुतीः यवस्याहुतिमेकैकामष्टाष्टौचतिलाहुतीः अग्निमनिष्टितंहोमंदेवेभ्यश्चनिवेदयेत् पूर्णाहुतौभवेन्मंत्रस्त
द्विष्णोःपरमंपदं एवंकृतेतुहोमांतेगाःकृष्णाद्वादशाथवा षट्चतस्रोपिवादेयाएकावापिपयस्विनी शय्यासतूलिकाका-
यादंपत्योःपरिधानकम् सवत्साकृष्णवर्णातुधेनुर्देयापयस्विनी सौवर्णांसुरभिंकृत्वास्थापयेत्तूलि-

कोपरि सुरभिं पूजयेन्मंत्रैः पूर्वोक्तैर्भक्तिसंयुतः ततस्तु गुरवे दद्यात्सर्वं तत्र समापयेत् कृष्णभक्ताय शांताय विधिज्ञाय महात्मने ते
प्रीयतामिति प्रोच्य दद्याद्द्वादशमासिकान् मामेव सुन्दरस्त्वेति गवां वाच्यः परिग्रहः मासि मासि भवेत्तेषु तिलपात्रेषु तैर्घटैः तस्मिन्काले
प्रदातव्या धरास्ते मासनामभिः समाप्य तु व्रतं पुण्यं तस्माद्धर्म्यं प्रदापयेत् उद्धारयेत्सितृगणान्दश पूर्वान्दशापरान् आत्मानमेकविंशञ्च
कृष्णैकादश्युपोषणात् भारो लोहस्य दातव्यः कार्पासो द्रोणसंयुतः वैतरण्यां समास्यर्थं ब्राह्मणाय कुटुंबिने नारी वा पुरुषो वापि व्र
तस्यास्य प्रभावतः राज्यं बहुदिनं भुक्त्वा स्वर्गलोके महीयते इति श्रीभविष्योत्तरपुराणे मार्गशीर्षकृष्णैकादश्यां वै
तरणीव्रतोद्यापनं संपूर्णम् इति एकादशीव्रतानि समाप्तानि ॐ ॐ ॐ ॐ ॐ

अथद्वादशीव्रतानिलिख्यंते तत्रचैत्रशुक्लद्वादश्यांदमनोत्सवः द्वादश्यांचैत्रमासस्यशुक्लायांदमनोत्सवः बौधायनादिभिःप्रोक्तः
कर्तव्यःप्रतिवत्सरं रामार्चनचंद्रिकायां ऊर्जेव्रतंमधौदोलांश्रावणेतंतुपूजनं चैत्रेचदमनारोपमकुर्वाणोव्रजत्यधः इदंशुक्रास्तादा
वपिकार्यं उपाकर्मोत्सर्जनंचपवित्रंदमनार्पणं ईशानस्यबलिंविष्णोःशयनंपरिवर्तनं कुर्याच्छुक्रेगुरौमूढेवृद्धगार्ग्येणउच्यते इति
चैत्रद्वादशी वैशाखशुक्लद्वादश्यांयोगविशेषोहेमाद्रौ पंचाननस्थौगुरुभूमिपुत्रौमेषेरविःस्याद्यदिशुक्लपक्षे पाशाभिधानाकरभे
णयुक्तातिथिर्व्यतीपातइतीहयोगः अत्रस्नानादिकंकुर्याद्धोमंवस्त्रहिरण्यकैः नरैःपापंप्रमुच्येतमाधवस्यतुपूजनात् पंचाननःसिंहरा
शिःपाशाभिधानाप्रतिथिर्द्वादशी करभोहस्तः इतिवैशाखद्वादशी आषाढशुक्लद्वादश्यांअनूराधायोगरहितायांपारणंकुर्यात्
तथाचहेमाद्रौभविष्ये आभाकासितपक्षेषुमैत्रश्रवणरेवती संगमेनहिभोक्तव्यंद्वादशद्वादशींहरेत् आषाढभाद्रकार्तिकशुक्लद्वा
दशीषुअनूराधाश्रवणरेवतीयोगेपारणंनकुर्यात् अत्रविष्णुधर्मे मैत्राद्यपादेस्वपितीहविष्णुःपौष्णांत्यपादेप्रतिबोधमेति श्रुतेश्च
मध्येपरिवर्तमेतिसुप्तिप्रबोधपरिवर्तनमेववर्ज्यं इतिआषाढशुक्लद्वादशी अथश्रावणशुक्लद्वादश्यांदधिव्रतं तक्रादीनांननिषे
धः तत्रनदधिव्यवहारात् तत्रैवद्वादश्यांविष्णोःपवित्रारोपणमुक्तं हेमाद्रौविष्णुरहस्ये श्रावणस्यसितेपक्षेकर्कटस्थेदिवाकरे
द्वादश्यांवासुदेवायपवित्रारोपणंस्मृतं द्वादश्यांश्रावणेवापिपंचम्यामथवाद्विज अनुकूलेषुकर्तव्यंपंचदश्यामथापिवा पवित्रा

रोपणंविघ्नाच्छ्रावणेनभविष्यति कार्त्तिक्यवधिशक्तास्तेकर्तव्यमितिनारदः हेमरौप्यताम्रक्षौमैःसूत्रैःकौशेयपद्मजैः कुशैःकाशैश्चकार्पा-
सैर्ब्राह्मण्याकर्तितैःशुभैः कृत्वात्रिगुणितंसूत्रंत्रिगुणीकृत्यशोधयेत् तत्रोत्तमंपवित्रंतुषष्ट्यासहशतैस्त्रिभिः समत्यासहितंद्वाभ्यां
शताभ्यांमध्यमंस्मृतं साशीतिनाशतेनैवकनिष्ठंतत्समाचरेत् साधारणपवित्राणित्रिभिःसूत्रैःसमाचरेत् उत्तमंतुशतग्रंथिपंचा-
शद्ग्रंथिमध्यमं कनिष्ठंतुपवित्रंस्यात्षट्त्रिंशद्ग्रंथिशोभितं षट्त्रिंशच्चचतुर्विंशत्द्वात्रिंशदितिकेचन चतुर्विंशद्द्वादशाष्टावित्ये-
केमुनयोविदुः शिवपवित्रंतुतत्रैव एकादशभिर्वासूत्रैस्त्रिंशतावाष्टयुक्तया पंचाशतावाकर्तव्यंतुल्यंग्रंथ्यंतरालकं द्वादशांगुल
नामानिव्यासादष्टांगुलानिच लिंगविस्तारमानानिचतुरंगुलकानिच नकरोतिविधानेनपवित्रारोपणंतुयः तस्यसांवत्सरीपूजानिः
फलामुनिसत्तम तस्माद्भक्तिसमायुक्तैर्नरैर्विष्णुपरायणैः वर्षेवर्षेप्रकर्तव्यंपवित्रारोपणंहरेः इतिश्रीभवि· श्रावणशुक्लद्वाद-
श्यांविष्णुपवित्रारोपणविधिः अथभाद्रशुक्लद्वादश्यांश्रवणद्वादशीयोगेव्रतंकार्यं तथाचमात्स्ये द्वादशीश्रवणस्पृष्टास्पृशे
देकादशींयदि सएववैष्णवोयोगोविष्णुशृंखलसंज्ञितः तस्मिन्नुपोष्यविधिवन्नरःसंक्षीणकल्मषः प्राप्नोत्यनुत्तमांसिद्धिंपुनरा
वृत्तिदुर्लभां विष्णुधर्मे एकादशीद्वादशीचविष्णवृक्षमपियत्रच तद्विष्णुशृंखलंनामविष्णुसायुज्यकृद्भवेत् एकादशीतिनंत्रेण
द्वादश्यामुपवासकृत् संस्पृश्यैकादशींराजन्द्वादशींयदिसंस्पृशेत् श्रवणंज्योतिषांश्रेष्ठंब्रह्महत्यांव्यपोहति भाद्रशुक्लद्वादश्यां

श्रवणयोगरहितायांपारणंकुर्यात् आभाकासितपक्षेषुद्वादशीदिवोदासोदाहृतवचनात् उपोष्यैकादशींमोहात्पारणंश्रवणेयदि करोति
हंतियत्पुण्यंद्वादशद्वादशीभवम् विशेषेणमहीपालश्रवणंवर्धतेयदि तिथिक्षयेनभोक्तव्यंद्वादशींलंघयेन्नहि इहचश्रवणर्क्षंत्रेधा
विभज्यमध्यविंशतिघटिकायोगंत्यक्त्वापारणंकार्यं तदुक्तंविष्णुधर्मे श्रुतेश्चमध्येपरिवर्तमेतिसुप्तप्रबोधपरिवर्तनमेववर्ज्यं के
चित्तु चतुर्धाविभज्यमध्यपादद्वयमित्याहुः अत्रैवविष्णुपरिवर्तनोत्सवंकुर्यात् अत्रैवशक्रोत्थापनमुक्तमपरार्केगर्गेण द्वादश्यांतु
सितेपक्षेमासिप्रोष्ठपदेतथा शक्रमुत्थापयेद्राजाविश्ववच्छ्रवणवासरे इयमेवश्रवणद्वादशीनाम्ना तत्रैकादश्यांद्वादशीश्रवण
योगेसैवोपोष्याविष्णुशृंखलविशेषयोगात् एकादश्यांश्रवणयोगाभावेपितद्दिनावच्छेदेनश्रवणस्पृष्टद्वादशीयोगादेवविष्णुशृं-
खलमितिहेमाद्रेर्मतं निर्णयामृतेतु श्रवणद्वादशीयोगएव विष्णुशृंखलंनान्यथेति यथानिशीथानंतरंसूर्योदयावधिकलामात्रम
पिश्रवणर्क्षंतदापिपूर्वैव दिवोदासीयेतुरात्रेः प्रथमयामेश्रवणयोगेपूर्वा अन्यथोत्तरेत्युक्तं इयंचबुधवासरेतिप्रशस्ता यदातुए
कादशीश्रवणयुतानद्वादशीनदाएकादश्यामेवव्रतं अशक्तस्तु एकादश्यांगौणोपवासंकृत्वाद्वादशीमुपवसेत् इदंव्रतंकाम्य
मितिगौडाः नित्यमितिदाक्षिणात्याः पारणंतुउभयांतेअन्यतरांतेवाकुर्यात् भाद्रपदेश्रवणेकादश्यांमध्याह्नेवामनावतारः श्रव
णयुक्तशुक्लैकादश्यलाभेतुदशमीविद्धापिश्रवणयुताग्राह्या तथाचमदनरत्ने वह्निपुराणे दशम्येकादशीयत्रसानोपोष्याभवे

त्तिथिः श्रवणेनतुसंयुक्तासोपोष्यासर्वकामदा अस्यांद्वादश्यांदुग्धव्रतसंकल्पः दुग्धव्रतेतुपायसादिकंवर्ज्यं दधिघृतादयस्तुविकाराग्रा
ह्याएव नन्वेवंसंधिन्यादिक्षीरनिषेधेपिदध्यादिग्राह्यंस्यादितिचेत् तत्रवाचनिकनिषेधसत्वात् तदाह अपरार्केशंखः क्षीराणियान्य
भक्ष्याणितद्विकाराशनेबुधः सप्तरात्रंव्रतंकुर्यात्प्रयत्नेनसमाहितः व्रतंगोमूत्रपानकं अथव्रतविधिः कृष्णउवाच विधानंशृ-
णुराजेंद्रयथादृष्टंमनीषिभिः यथोक्तंनियमंकुर्यादेकादश्यामुपोषितः दंतान्संशोध्ययत्नेनवाग्यतोनियतेंद्रियः श्रवणद्वादशीयोगे
समुपोष्यजनार्दनं अर्चयित्वाविधानेनत्रयोदश्यांपरेहनि नदीनांसंगमेस्नायादर्चयेदत्रवामनं सौवर्णंवस्त्रसंयुक्तंद्वादशांगुलमु
च्छ्रिताम् पीतवस्त्रैःशुभैर्वेष्ट्यमृत्पात्रमव्रणंनवं हिरण्मयेनपात्रेणअर्घ्यपात्रंप्रकल्पयेत् दध्यक्षतफलैश्चैवसहिरण्यंसचंदनं नम-
स्तेपद्मनाभायनमस्तेजलशायिने तुभ्यमर्घ्यंप्रयच्छामिबालवामनरूपिणे नमःशार्ङ्गसीरबाणपाणयेवामनायच यज्ञभुक्फलदा
त्रेचवामनायनमोनमः देवेश्वरायदेवायदेवसंभूतिकारिणे प्रभवेसर्वदेवानांवामनायनमोनमः मत्स्यकूर्मवराहेभ्योनारसिंहस्वरू
पिणे रामचंद्रायरामायवामनायनमोनमः श्रीधरायनमस्तेस्तुनमस्तेगरुडध्वज चतुर्बाहोनमस्तेस्तुनमस्तेधरणीधर एवंसंस्तूय
विधिवन्नरःपस्कंदनामभिः रात्रौजागरणंकुर्यात्पुरतोजलशायिनः धृत्वाबालमयंरूपंदेवोत्रीडत्पयोनिधौ ब्रह्मांडमुदरेयस्यमहद्भूते
रधिष्ठितं मायावीवामनःश्रीशःसोत्रायातुजगत्पतिः एवंसंस्तूयतंभक्त्याद्वादश्यामुदयेरवेः श्रृंगारसहितंतंचब्राह्मणायनिवेदयेत्

वामनः प्रतिगृण्हाति वामनो हं ददामि ते वामनं सर्वतोभद्रं द्विजाय प्रतिपादये जलधेनुं तथा दद्याच्छत्रं चैव तु पादुके सहिरण्यानि वस्त्राणि वृष
धेनुं तथा नृप यत्किंचिद्दीयते तेन तत्र तद्दानं प्राप्यते ध्रुवं श्रवणद्वादशीयोगे संपूज्य गरुडध्वजं दत्वा दानं द्विजातिभ्यो वियोगे पारणं ततः सिंहस्थि-
ते तु मार्तंडे श्रवणस्थे निशाकरे युधिष्ठिर उवाच उपवासासमर्थानां किंस्यादेकं सुपोषणं महाफलं महादेव तन्ममाचक्ष्व पृच्छतः श्रीकृष्ण
उवाच याराजन्श्रवणोपेता द्वादशी महती तु सा तस्यां सुपोषितः स्नातः पूजयित्वा जनार्दनं प्राप्नोत्ययत्नाद्धर्मज्ञ द्वादशद्वादशीफलं दध्यो
दनयुतं तस्यां जलपूर्णं तथा घटं वस्त्रसंवेष्टितं दत्वा छत्रोपानहमेव च न दुर्गतिमवाप्नोति गतिमग्र्यां च विंदति अक्षय्यं स्थानमाप्नोति नात्र
कार्या विचारणा श्रवणद्वादशीयोगे बुधवारो भवेद्यदि अत्यंतमहती नाम द्वादशी सा प्रकीर्तिता स्नानं जाप्यं तथा दानं होमः श्राद्धं सुरार्च
नं सर्वमक्षय्यमाप्नोति तस्यां शृणु कुलोद्वह तस्मिन्दिने तथा स्नातो यत्र क्वचन संगमे सगंगास्नानजं राजन्फलं प्राप्नोत्यसंशयं श्रवणे-
संगमाः सर्वे परवृष्टिः मदाः सदा विशेषाद्द्वादशीयुक्ता बुधयुक्ता विशेषतः तथैव द्वादशी प्रोक्ता बुधश्रवणसंयुता शुक्लाश्रवणसंयुक्ता
संगमे विजया स्मृता वारिकुंभप्रदायास्यां दध्योदनसमायुतं प्रेतयोनौ न जायेत पूजयित्वात्र वामनं वंशः समुद्धृतस्तेन मुक्तः पितृऋणा
दसौ नभस्ये संगमे स्नात्वा वामनो येन पूजितः स याति परमस्थानं विष्णुसायुज्यमाप्नुयात् युधिष्ठिर उवाच उपवासासमर्थानां तदेव पु
रुषोत्तम एकायाद्वादशी पुण्या तां वदस्व ममानघ श्रीकृष्ण उवाच मासे भाद्रपदे शुक्ला द्वादशी श्रवणान्विता सर्वकामप्रदा पुण्या उपवास

महाफला संगमेसरितांस्नात्वाद्वादश्यांसमुपोषितः समग्रंसमवाप्नोतिद्वादशद्वादशीफलं त्वमेवतीर्थराजोसित्वमेवसरितांपतिः संगमस्त्वंप्रस
न्नोमेप्रसादंकुरुसंगम साधेतुद्वादशीज्ञेयानस्यांभाद्रपदेशुभा दशम्येकादशीयत्रसानोपोष्याभवेत्तिथिः श्रवणेनतुसंयुक्तासाशुभासर्व-
कामदा पारणंतिथिवृद्धौतुद्वादश्यामुडुसंक्षयात् वृद्धौकुर्यात्त्रयोदश्यांतत्रदोषोनविद्यते इत्येषाकथितारराजन्द्वादश्यांश्रवणेनया कर्तव्या
साप्रयत्नेनइहामुत्रफलप्रदा द्वादश्यामुपवासोत्रत्रयोदश्यांतुपारणं निषिद्धमपिकर्तव्यमित्याज्ञापारमेश्वरी बुधश्रवणसंयुक्तासैवचेद्द्वा
दशीभवेत् अतीवमहतीतस्यांसर्वंकृतमिहाक्षयं द्वादशीश्रवणोपेतायदाभवतिभारत संगमेसरितांस्नात्वागंगादिस्नानजंफलं सोप
वासःसमाप्नोतिनात्रकार्याविचारणा जलपूर्णंतदाकुंभंस्थापयित्वाविचक्षणः पंचरत्नसमोपेतंसोपवीतंसवस्त्रकं तस्योपरिस्थापयि
त्वालक्ष्म्यासहजनार्दनं यथाशक्त्यास्वर्णमयंशंखशार्ङ्गविभूषितं स्थापयित्वाविधानेनसितचंदनचर्चितं सितवस्त्रयुगच्छन्नंछत्रो-
पानद्युगान्वितं ॐ नमोवासुदेवायशिरःसंपूजयेत्ततः श्रीधरायमुखंतद्वत्कंठंकुठायतत्क्षणं नमःश्रीपतयेनेत्रेभुजौसर्वास्त्रधारिणे व्या
पकायनमःकुक्षीकेशवायोदरंनमः त्रैलोक्यजनकायेतिमेढ्रंसंपूजयेद्धरेः सर्वाधिपतयेजंघेपादौसर्वात्मनेनमः अनेनविधिनाराजन्पुष्प
धूपैःसमर्चयेत् ततस्तस्याग्रतोदेयंनैवेद्यंघृतपाचितं द्वादशब्राह्मणान्कुंभान्शक्त्यादद्याच्चदक्षिणां एवंसंपूज्यगोविंदंजागरंतत्रकारयेत्
प्रभातेविमलेस्नात्वासंपूज्यगरुडध्वजं पुष्पधूपादिनैवेद्यैःफलैर्वस्त्रैःसुशोभनैः पुष्पांजलिंततोदत्वामंत्रमेतमुदीरयेत् नमोनमस्तेगो-

विंदबुधश्श्रवणसंज्ञक अघौघसंक्षयंकृत्वासर्वसौख्यमदोभव अनंतरंब्राह्मणोतुवेदवेदांगपारगे पुराणज्ञेविशेषेणविधिवत्संप्रदापयेत् प्रीय
तांदेवदेवेशोममनित्यंजनार्दनः अनेनैवविधानेनदद्यात्सोवानरोत्तमः सर्वंनिवर्तयेत्सम्यक् एक भक्तिरतोपिसन् श्रीकृष्णउवाच अत्रा
प्युदाहरंतीममितिहासंपुरातनं महत्यरण्येयद्वृत्तंभूमिपालश्शृणुष्वतत् देशोदाशार्णकोनामतस्यभागेतुपश्चिमे अस्तिराजन्मरु
देशः सर्वसत्वभयंकरः सुतप्तवालुकाभूमिर्यत्रदुष्टमहोरगाः अल्पच्छायाद्रुमास्तत्रमृतप्राणिसमाकुलाः शमीखदिरपालाशकरीरै
श्चसपीलुभिः यत्रभीमगणावृक्षामर्कटैः परिवेष्टिताः दग्धप्राणिगणाकीर्णायत्रभूर्दृश्यतेक्वचित् अर्कसंतापैः संतप्तापरुषानिस्तृणा
मही ज्वलिताग्निसमंचैवयत्किंचित्तत्रदृश्यते तथापिलोकाजीवंतिसर्वेकर्मनिबंधनात् नोदकंनोतृषाभीताराजंस्तत्रबलाहकाः कदाचिदपिदृश्यं
ते प्लवमानाविहंगमाः तैः कांतारगतैः कैश्चित्तृषितैः शिशुभिः समं सैकतेष्वेवनश्यंतिजलैः सैकतसेतुवत् तस्मिंस्तथाविधेदेशेकश्चिद्दैव
वशाद्वणिक् हरिदत्तइतिख्यातोवणिक्धर्मोपजीवकः निजसार्थपरिभ्रष्टः प्रविष्टोमरुजांगले दृष्टवान्मलिनान्रूक्षान्निर्मांसान्भीमदर्शनान्
बभ्रामभ्रांतहृदयः क्षुत्तृषाश्रमकर्शितः क्वग्रामः क्वजनः क्वाहंक्वयास्यामिकिमाचरे अथप्रेतान्ददर्शासौक्षुत्तृषाव्याकुलेंद्रियां क्षुत्क्षामा
न्लंबवृषणान्निर्मांसान्सत्वकीकसान् स्नायुबद्धास्थिचरणा धावमानानितस्ततः वणिक्सोपितदाश्चर्यंदृष्ट्वाभयमुपागतः भीतभीतस्तु
तैःसार्धंजगामपथिवंचयन् ततोगत्वापिशाचास्तेन्यग्रोधमहद्द्रुमं शीतच्छायंसुविस्तीर्णंतत्रतेसमुपाविशन् निविष्टेषुततस्तेषु ए

कूदेशेऽस्थितोवणिक् प्रेतस्कंधसमारूढमेकं विकृतदर्शनं ददर्शबहुभिःप्रेतैःसमंतात्परिवारितं आगच्छन्नृशवभक्षीसस्तुतिशब्दःपुरःसरम्
प्रेतस्कंधान्महींगत्वातस्यांतिकमुपागतं सोऽपिवाचावणिक्श्रेष्ठमिदंवचनमब्रवीत् अस्मिन्घोरतरेदेशेप्रवेशोभवतःकथं तमुवाचवणिक्धी-
मान्सार्थभ्रष्टस्तदावशः प्रवेशोदैवयोगेनकष्टकर्मकृतेनतु तृष्णामेबाधतेत्यर्थंक्षुत्तृषौचभृशंतथा प्राणाःकंठमनुप्राप्तावचनंनश्यतीवमे
अत्रोपायंनपश्यामिजीवेयंयेनकेनचित् श्रीकृष्णउ० इत्येवमुक्तःप्रेतस्तुवणिजंवाक्यमब्रवीत् पुन्नागमिममाश्रित्यप्रतीक्षस्वमुहूर्तकं मु-
नातिथ्योयथापश्चाद्गमिष्यसियथासुखं एवमुक्तस्तथाचक्रेसवणिक्तृषयार्दितः मध्याह्नसमयेप्राप्तेततस्तंदेशमागतः पुन्नागवृक्षाच्छी-
तोदावारिधानीमनोरमा दध्योदनसमायुक्तेनवर्धमानेनसंयुता अवतीर्यततःसोऽग्रेददावतिथयेतदा दध्योदनंचतोयंचक्षुत्तृड्भ्यांपीडितायवै
दध्योदनेनतोयेनपरांतृप्तिमुपागतः वितृष्णोविज्वरश्चापिक्षणेनचबभूवह ततस्तुप्रेतसंघस्यतस्माद्भाजनकमाद्ददौ दध्योदनात्सपानीयात्प्रेतास्तृप्तिंपरां
गताः अतिथिंतर्पयित्वाचप्रेतलोकंचसर्वशः ततःस्वयंचबुभुजेभुक्तशेषंयथासुखं ततोभक्तवतस्तस्यान्नंपानीयंचस्वयंपपौ प्रेताधिपंततस्तुष्टोवणि-
ग्वचनमब्रवीत् वणिग्उवा० आश्चर्यमेतत्परमंवनेऽस्मिन्प्रतिभातिमे अन्नपानस्यसंप्राप्तिःपरमस्यकुतस्तव स्तोकेनचतथान्नेनबिभर्षिसुबहून्वने तृ-
प्तिंगताःकथंत्वेतेनिर्मांसाभीमकुक्षयः अपरंचकथंत्वेहमवासावापरिक्षयं हिमाचलंचकस्मात्त्वसंप्राप्तोनिर्जलेवने तृप्तश्चासिकथंग्रासमात्रेणै
वशक्तंब्रवीः पिशाचपतिरु० शृणुभद्रप्रवक्ष्यामिदुष्कृतंकर्मचात्मनः शाकलेनगरेरम्येअहमासंसुदुर्मतिः वणिगासंपुराकालेततोभद्रमवापह शाकलेन

गेरस्येनास्तिकस्यदुरात्मनः धनलोभात्तथात्रकदाचिन्मदेरिना नदत्नाभिक्षवेभिक्षात्दृषितेद्युकदाचन मत्निवैश्यस्तुतत्रासी ब्राह्मणोगुणवान्मम श्र
वणद्वादशीयोगेमासिभाद्रपदेतथा सकदाचिन्मयासार्धंतापीनामनदींययौ तस्यास्तुसंगमःपुण्योयत्रासीच्चंद्रभागया चंद्रभागासोमसु
तातापीचैवार्कनंदिनी तयोःशीतोष्णसलिलेसंगमेसुमनोहरे तत्तीर्थवरमासाद्यमतिवैश्यःसमेद्विजः श्रवणद्वादशीयोगेस्नानश्चैवोपवास
कृत् चंद्रभागस्यतोयस्यवारिकुंभनवंदृढं दध्योदनयुतेःसार्धंसंपूर्णवर्धमानकैः छत्रोपानद्युगंवस्त्रंमतिमांविधिवद्दरेः मददौविप्रमुख्यायर
हस्यज्ञोमहामुनिः वित्तसंरक्षणार्थायतस्यापिचततोमया सोपवासेनदत्तावैवारिधानीसुशोभना चंद्रभागस्यविप्रायदध्योदनयुतानदा ए
तत्कृत्वागृहंप्राप्तस्ततःकालेनकेनचित् पंचत्वमहमासाद्यनास्तिक्यात्प्रेततांगतः अस्यामटव्यांघोरायांयथास्तंकुशलंतदा पुरोहितोमयादृष्टो
स्नात्वागृहमुपागतः शिष्यहस्तःसकलशोद्वादश्यांसमुपोषितः तेनापिकथितानात्रश्रवणद्वादशीशुभा सविनयंसोपदेशंव्रतंकृत्वामया
नय तस्येयंकर्मणःपुष्टिर्येयंदृष्टात्वयानघ यदन्नंचमयादत्तंसजलंघटकांचन तत्तन्मांभजतेनित्यंपिशाचत्वेपिनित्यशः सेयंमध्यान्हसम-
येदिवसेदिवसेमम उपतिष्ठतिवैश्येहयथादृष्टंत्वयानघ उपवासफलेनैवजातिस्मरणमेवच दधिभक्तप्रसादेनजलान्नंचाक्षयंमम ब्रह्म-
स्वहारिणस्त्वेतेपापाःप्रेतत्वमागताः परदाररताःकेचित्स्वामिद्रोहरताःपरे मित्रद्रोहरताःकेचिद्देशेस्मिंस्तुसुदारुणे ममैतेभृत्यतांप्रा-
प्ताअन्नदानादिकेनच अक्षय्योभगवान्विष्णुःपरमात्मासनातनः यद्दीयतेतमुद्दिश्यअक्षय्यंतत्प्रकीर्तितं तेनाक्षय्येनचान्नेनतृप्ताएतेपु

नःपुनः प्रेतभावाच्चदौर्बल्यंनमुंचंतिकदाचन अहंचपूजयित्वात्वामतिथिंसमुपस्थितं प्रेतभावाद्विनिर्मुक्तोयास्यामिपरमांगतिं मयाविहीनाः
किंत्वेतेवनेस्मिन्भृशदारुणे पीडामनुभवंत्येतेदारुणांकर्मयोनिजां एतेषांतुमहाभागममानुग्रहकाम्यया अनेकनामगोत्राणिगृण्हीष्वल
खिलंमम अस्तिकक्षागताचैववत्सलसंपुटिकाशुभा हिमवंतमयासाद्यतत्रत्वंलप्स्यसेनिधिं गयाशीर्षंततोगत्वाश्राद्धंकुरुमहामते एक
मेकमथोद्दिश्यप्रेतंप्रेतंयथाक्रमं एवंसंभाष्यमाणस्तंतप्तजांबूनदप्रभः समारुह्यविमानंसस्वर्गलोकमितोगतः स्वर्गतेप्रेतनाथेवैप्र
भावात्सवणिक्क्रमात् नामगोत्राणिसंगृह्यप्रयातःसहिमालयं तत्रप्राप्यनिधिंगत्वाविनिक्षिप्यस्वकंगृहे धनभारमुपादायगयाशीर्षव
टंययौ प्रेतानांक्रमशस्तत्रचक्रेश्राद्धंदिनेदिने यस्ययस्ययथाश्राद्धंसकरोतिदिनेवणिक् सोपितस्यतदास्वप्नेदर्शयत्यात्मनस्तनुं ब्रवी
तिचमहाभागप्रसादेनतवानघ प्रेतभावमिमंत्यक्त्वाप्राप्तोस्मिपरमांगतिं ततस्तुतेविमानस्थाऊचुश्चवणिजंतथा त्वयाहितारिताःसर्वे
किल्बिषाद्वणिजोत्तम प्रयामःस्वर्गतिंसर्वे इदानींत्वत्प्रसादतः साधुसंगोनहिव्यर्थःकदाचिदपिजायते एवमुक्त्वागताःसर्वेविमानैःसूर्य-
सन्निभैः दिव्यरूपधराःसर्वेद्योतयंतोदिशोदश हरिदत्तश्चतान्सर्वान्समुत्सृत्यजगामह स्वदेशस्थंचनगरंस्वगृहंचविवेशह सकृत्वा
धनलोभेनप्रेतानांसङ्गतिंवणिक् जगामस्वगृहंतत्रमासिभाद्रेयुधिष्ठिर श्रवणद्वादशीयोगेपूजयित्वाजनार्दनं दानंदत्वाचविप्रेभ्यःसोप
वासोजितेंद्रियः संगमेचमहानद्योःप्रतिवर्षमतंद्रितः चकारविधिवद्दानंततोदृष्टांतमागतः अवापपरमंस्थानंदुर्लभंसर्वमानवैः यत्रका

मफलावृक्षा नद्यः पायसकर्दमाः शीतलामलपानीयाः पुष्करिण्यो मनोरमाः तद्देशमासाद्य वणिक् महात्मा प्रतप्तजांबूनदभूषितांगः कल्पं सम
ग्रं स्फुरसुंदरीभिः स्वर्गे सरेमे मुदितः सदैव बुधश्रवणसंयुक्ता द्वादशी सर्वकामदा दानं दध्योदनं शस्तमुपवासः परो विधिः सगरेण ककुत्स्थे
न धुंधुमारेण गाधिना एतैश्चान्यैश्च राजेंद्र कामदा द्वादशी कृता याद्वादशी बुधयुता श्रवणेन सार्धं सा वै जयेति कथिता मुनिभिर्नभस्ये ता
मादरेण समुपोष्य नरो हि सम्यक् प्राप्नोति सिद्धिमणिमादिगुणोपपन्नां इति हेमाद्रौ भविष्योत्तरे श्रवणद्वादशीव्रतं अस्यामेव वाम
नजयंतीव्रतं हेमाद्रौ भविष्ये श्रीकृष्ण उवाच द्वादश्यास्तु विधिः प्रोक्तः श्रवणेन युधिष्ठिर सर्वपापप्रशमनः सर्वसौख्यप्रदायकः
एकादशी यदा सा स्याच्छ्रवणेन समन्विता विजया सा तिथिः प्रोक्ता व्रतीनामभयप्रदा पुरा देवगणैः सर्वैः समेत्य च युधिष्ठिर वरदः प्रार्थि
तो विष्णुरिंद्राग्न्यनिलसंयुतैः बलवानजितो दैत्यो बलिर्नाम महाबलः तेन देवगणाः सर्वे पातिता निजमंदिरं त्वं गतिः सर्वदेवानां शीघ्रं कृष्णा
त्समुद्धर दैत्यं जहि महाबाहो बलिं बलवतां वर श्रुत्वा विष्णुस्तदा वाक्यं देवानां करुणोदयं उवाच वाक्यं वाक्यज्ञो देवानां हितकाम्यया वि
ष्णुरुवाच जातं वैरोचनेः पुत्रं बलिं त्रैलोक्यशंकितं तपसा भावितात्मानं शांतं दांतं जितेंद्रियं मद्भक्तं मद्गतप्राणं सत्यसंधं महाबलं प्रजापति
समं स्वात्मप्रजानां प्रियकारकं न गुणास्तस्य शक्यंते वक्तुं केनापि भूतले अवध्यं तपसोपेतं भोक्तव्यं तपसः फलं तपसोंतरस्तु बहुना कालेना
स्य भविष्यति यदा च विजयं दैत्यं ज्ञास्ये कालेन केनचित् समाहृत्य श्रियं तस्य तदा दास्ये दिवौकसां अदितिर्मां प्रयत्नाद्वै पुत्रार्थं पुत्रगंधिनी

तस्यामनीषितंदेवकार्यंविष्णुरचिंतयत् सचिंतयित्वासुचिरंदेव्यांगर्भावधारणं अदितेवरयामासवांछितंतेभविष्यति अथकालेबहुतिथौगते
सागुर्विणीभवत् सुषुवेनवमेमासिपुत्रंसावामनंहरिं ह्रस्वपादंह्रस्वकायंमहाशिरसमर्भकं पाणिपादोदरह्रस्वंह्रस्वजंघोरुकंसरं दृष्ट्वा
तुवामनंजातमदितिर्मोदमाप्तवै भयंबभूवदैत्यानां देवानांतोषआगमत् जातकादीन्शुभकरान्संस्कारान्स्वयमेवहि चकारकश्यपोधीमान्
प्रजापतिसमन्वितः आबद्धमेखलोदंडीजटीयज्ञोपवीतवान् कुशाचर्माजिनधरःकमंडलुविभूषितः बलेर्बलवतोयज्ञंजगाम बहुविस्तरं
दृष्ट्वादैत्यबलंसर्ववामनस्तुजगादह अर्थीत्यहंयज्ञपतेदीयतांममर्मेदिनी पदत्रयप्रमाणोहि पठनार्थंमठोमम दत्तादत्तानवनथाबलिःप्रा
हद्विजोत्तमं ततोवर्धितुमारब्धोवामनोनंतविक्रमः पादौभूमौप्रतिष्ठाप्यशिरसाहृत्यरोदसी ताभ्यांस्वर्गादिकान्लोकान्ललाटेब्रह्मणः
पदं नत्तृतीयंपदंलेभेकिंददेर्ममतद्वद तद्दृष्ट्वामहदाश्चर्यंसिद्धादेववर्षयस्तथा साधुसाध्विनिदेवेशंप्रशशंसुःसुदान्विताः ततोदैत्यगणान्स
र्वान्जित्वात्रिभुवनंवशी बलिंप्राहत्वभोगच्छ पातालंसबलानुगः तत्रत्वमीप्सितान्भोगान्भुक्त्वामद्बाहुपालितः अस्येंद्रस्यावसानेतुत्व
मेवेंद्रोभविष्यसि एवमुक्तोबलिःप्रायान्नमस्कृत्यसुरोत्तमं विसर्ज्यचबलिंदेवोलोकपालानुवाचह स्वानिधिष्ण्यानिगच्छध्वंतिष्ठध्वंविग
तज्वराः देवेनोक्तागतादेवाः प्रहृष्टाःपूज्यवामनं देवःकृत्वाजगत्कार्यंतत्रैवांतरधीयत एतत्सर्वंसमभवदेकादश्यांनराधिप तेनेष्टदेवदे
वस्यसर्वथाविजयातिथिः मासिभाद्रपदेशुक्लेद्वादशीश्रवणान्विता विजयाप्रोच्यतेसद्भिःकोटिकोटिगुणोत्तरा एकादश्यांसोपवासो

रात्रौसंपूजयेद्धरिं रौप्येसुवर्णपात्रेवादारुवंशमयेपिवा सौवर्णंवामनंकुर्यात्स्ववित्तस्यानुसारतः शिखाकमंडलुधरंछत्रयज्ञोपवीनकं एवंल
क्षणसंपन्नंवामनंपूजयेद्धरिं आच्छाद्यपात्रंवासोभिरहतैःफलसंयुतैः मार्गेणचर्मणाकुर्याद्भक्त्यावाशक्त्यपेक्षया तिलोदकेनसंपूर्णंप्रस्थे
नकुडवेनच अलाभेयवगोधूमैः पलैःशुक्लतिलैर्भवेत् अतसीपुष्पसंकाशंनिलकृष्णाजिनोपरि पुष्पैर्गंधैःफलैर्धूपैःकालोत्थैरर्चयेद्धरिं
नानाविधैश्चनैवेद्यैर्भक्ष्यभोज्यैर्गुडोदनैः स्वस्यवित्तानुसारेणसहिरण्यंचकारयेत् एभिर्मंत्रपदैस्तत्र पूजयेद्गरुडध्वजं उपहारैर्नरश्रेष्ठ
शुचिर्भूत्वासमाहितः धृत्वाबालमयंदेवंदेवदेवस्यचक्रिणः ब्रह्मांडमुदरेयस्यमहद्भूतैरधिष्ठितं मायावीवामनःश्रीशोसमायातुजगत्पतिः
युधिष्ठिरउ॰ उपवासासमर्थानांयाचेयंपुरुषोत्तमं एकांचद्वादशीपुण्यावदस्ववदतांवर श्रीकृष्णउवा॰ मासिभाद्रपदेशुक्लेद्वादशीश्रव
णान्विता सर्वकामप्रदापार्थउपोष्यानियमात्सदा सरितांसंगमेस्नात्वाद्वादशींसमुपोषयेत् समग्रंसंप्रवाप्नोतिद्वादश्यांयत्कृतंफलं श्रवणे
नसमायुक्ताद्द्वादशीसमुपोषणात् स्नानंदानंजपोहोमःस्वाध्यायःपितृतर्पणं तस्यांयत्क्रियतेपार्थतदनंतफलंलभेत् युधिष्ठिरउवाच
त्वत्प्रसादाच्छ्रुतंकृष्णमयातुवामनव्रतं इदानींब्रूहिमेकृष्णव्रतोद्यापनमुत्तमं श्रीकृष्णउ॰ शृणुपांडववक्ष्यामिव्रतोद्यापनमुत्तमं कृते
नसफलंपार्थव्रतंभवतिनिश्चितं आदौमध्येतथोचांतेव्रतस्योद्यापनंभवेत् ममइहजन्मनिजन्मांतरेचकृतदोषप्रायश्चित्तार्थंपुत्रपौ
त्राद्यभिवृद्ध्यर्थंवामनजयंतीव्रतमहंकरिष्ये व्रतस्यसंपूर्णतासिध्यर्थंउद्यापनंचकरिष्ये इतिसंकल्प्य श्रवणद्वादशीव्रतांगत्वेन-

पुरुषसूक्तेनषोडशोपचारैः वामनपूजनंचकरिष्ये द्वादशीश्रवणोपेतायदाभवतिभारत सरितांसंगमेस्नात्वाहृदेवापियथाक्रमात् पितृदेवार्चनं
कृत्वाध्यायेच्चपरमेश्वरं जलेनपूरयेत्कुंभंस्थापयित्वाविचक्षणः पंचरत्नसमोपेतंतिलोपरिसुपूजितं तस्मिन्संसूत्रघटितेस्थापयित्वाचवा-
मनं सौवर्णंचयथाशक्त्याशंखचक्रशार्ङ्गविभूषितं सुभगंवस्त्रसंयुक्तंद्वादशांगुलमुच्छ्रितं पीतवस्त्रैः शुभैर्वेष्ट्य अजिनंचकमंडलुं अतसीपु
ष्पसंकाशंतिलकृष्णाजिनोपरि स्थापयित्वाविधानेनचंदनेनानुलेपयेत् धृत्वाबालमयंरूपंदेवदेवस्यचक्रिणः ब्रह्मांडमुदरेयस्यमहद्भू
तैरधिष्ठितं मायावीवामनःश्रीशोसमायातुजगत्पतिः आवाहनं अजयायमहेशायजलजास्यायशंखिने नमस्तेकेशवानंतवासुदेव
नमोस्तुते ध्यानं कमंडलुशिखाधारीकुब्जरूपोसिवामन छत्रदंडधरोदेवपाद्यंगृण्हनमोस्तुते पाद्यं सहस्रशीर्षात्वंदेवश्रवणर्क्षस
मन्वितः अर्घ्यंगृहाणदेवेशरमयासाहितोहरे अर्घ्यं कमंडलुस्थितंचारुगंगोदकप्रपूरितं देवेशाचमनार्थंचतोयंमेप्रतिगृह्यतां आ
चमनीयं गंगासरस्वतीरेवापयोष्णीनर्मदाजलैः स्नापितोसिमयादेवतथाशांतिंप्रयच्छमे स्नानं अतसीपुष्पसंकाशंतिलकृष्णाजिनो
परि कुरुक्षेत्रेप्रतिष्ठाप्यंवामनंस्थापयाम्यहं आसनं प्रसीददेवदेवेशनमस्तेस्वस्तिवामन नमस्तेब्रह्मरूपायपीतनिर्मलवाससे वस्त्रं
श्रीखंडंचंदनंदिव्यंगंधाढ्यंसुमनोहरं विलेपनंसुरश्रेष्ठचंदनंप्रतिगृह्यतां चंदनं मल्लिकाशतपत्रंचजातिपुष्पसुगंधकं चंपकैर्जलजै
र्युक्तंपुष्पंगृण्हनमोस्तुते पुष्पं नमः कमलकिंजल्कपीतनिर्मलवाससे महाहवरिपुस्कंधधृतचक्रायचक्रिणे पूजामंत्रः मत्स्यंकूर्मंवराहंच

नारसिंहंचवामनं रामंरामंरामकृष्णंबौद्धंकल्किं हितेनमः पादाद्येकैकमस्यांगंपूजयेच्छीर्षमंततः पादौमत्स्यायचनमोनमः कूर्मायजानुनी वराह
यनमोगुह्यंनृसिंहायेतिनाभितः उरस्तेवामनायेतिभुजौरामायवैनमः कर्णौरामायचनमःकृष्णायचनमोमुखं बौद्धायचनमोनेत्रेक
ल्किनेचनमःशिरः इत्यंगपूजा धूपोयंदेवदेवेशशंखचक्रगदाधर अच्युतानंतगोविंदवासुदेवनमोस्तुते धूपं त्वमेवपृथिवीज्योतिर्वा-
युराकाशमेवच त्वमेवज्योतिषांज्योतिर्दीपोयंप्रतिगृह्यतां दीपं अन्नंचतुर्विधंस्वादुरसैःषड्भिःसमन्वितं मयानिवेदितंदेवप्रसीदपरमेश्वर
अग्निर्यमोवैश्रवणःपापंमेहंतुचाव्ययः नैवेद्यं आचमनीयं करोद्वर्तनं फलं तांबूलं दक्षिणा नीराजनं मंत्रपुष्पांजलिं प्रदक्षिणा नम
स्कारान् प्रार्थना जगदादिर्जगद्रूपःअनादिर्जगदंतकृत् जलाशयोजगद्योनिःप्रीयतांमेजनार्दनः अनेककर्मनिर्बंधध्वंसिनंजलशायि-
नं नतोस्मिमधुरावासंमाधवंमधुसूदनं नमोवामनरूपायनमस्तेस्तुत्रिविक्रम नमस्तेबलिबंधायवासुदेवनमोस्तुते इत्युक्त्वाथगुरुंनत्वा
पूजयित्वाजनार्दनं भूमौजयेज्जितक्रोधशब्दादिविषयस्तथा उद्यापनंततःकुर्याद्द्वादशैर्वत्सरैस्तदा सौवर्णींराजतींताम्रींमूर्तिंकृत्वा
चतुर्भुजां द्वादश्यास्तुदिनेप्रातर्गुरुमभ्यर्च्यशक्तितः सदाचाररतंपार्थवेदवेदांगपारगं अस्मदीयंव्रतंविप्रविष्णुवासरसंभवं संपूर्णंतुभवे
द्येनतत्कुरुष्वद्विजोत्तम तस्याग्रेनियमःकार्योदंतधावनपूर्वकंस्नानंकृत्वामंत्रपूर्वंनद्यादौविमलेजले तर्पयित्वापितॄन्देवान्पूजयेन्मधुसूदनं
एवंसंपूज्यविधिवद्रात्रौजागरणंचरेत् ततःप्रभातसमयेस्नात्वाचार्यादिभिःसह वामनंपूजयेद्भक्त्याहोमंकुर्याद्विधानतः मंत्रेणेदंविष्णु

रिलसमिदाज्यतिलोदनैः प्रतिद्रव्यं सहस्रंवाशतमष्टोत्तरं हुनेत् ब्राह्मणान्भोजयित्वातु द्वादशाष्टवतीनृप प्रतिमांचतथाधेनुमाचार्यायनिवेदये
त् एवंकृतेतुराजेंद्र गाः कृष्णाद्वादशाष्टवा षट्चतस्रोथवादेयाएकावापिपयस्विनी वामनः प्रतिगृण्हातिवामनोवैददातिच वामनस्तारकोभा
भ्यांवामनायनमोनमः एवंदत्वाततः पानभोजनंघृतदाज्यकं पूर्वंदद्याद्ब्राह्मणेभ्यः पश्चाद्भुंजीतवाग्यतः प्रत्येकंब्राह्मणान्कुंभान्दक्षिणाव
स्त्रचंदनं भूयोयथेच्छयाराजन्सर्वत्रैषविधिःस्मृतः एवंव्रतेकृतेब्रह्मन्यत्पुण्यंतन्निबोधमे यावत्कल्पशतंपूर्णमेकसप्ततिसंख्यया प्रा
प्यविष्णुपुरेभोगान्भुंजतेकालमक्षयं इहागत्यभवेद्राजाराजभिश्चसुसेवितः अथशिक्यदानसंकल्पः कृतस्यश्रवणद्वादशीव्रतांगत्वे
नविहितंश्रीवामनप्रीत्यर्थंइदंदध्योदनसहितंशिक्यदानंकरिष्ये ब्राह्मणपूजनं वायनमंत्रः दध्योदनयुतंशिक्यंवारिधानीयुतंविभो छ
त्रोपानहसंयुक्तंब्राह्मणायददाम्यहं इदंदध्योदनसहितंशिक्यंअमुकशर्मणेब्राह्मणायतुभ्यमहंसंप्रददे इतिवायनं इति॰ भवि॰ वामन
द्वादशीव्रतोद्यापनंसं॰ अथपौषकृष्णाद्वादश्यांसुरूपद्वादशीव्रतं गुर्जरदेशेप्रसिद्धं उमोवा॰ भगवन्प्रष्टुमिच्छामिप्रसादंकुरुमेप्रभो
कथितव्यंप्रसादेनयद्यस्तिमयिसौहृदं व्रतेनकेनचीर्णेनविरूपत्वंप्रणश्यति सौभाग्यंचैवमतुलंप्राप्यतेकस्यपूजनात् तन्मेकथयदेवेशाप
रमाभीष्टदायक ईश्वरउवा॰ शृणुत्वापरमंगुह्यंव्रतंपापहरंशुभं सुरूपाद्वादशीनाममहापातकनाशिनी सुरूपदायिनीचैवमहापातकना
शिनी कुलवृद्धिकरीचैवसर्वसौख्यप्रदायिनी तच्छृणुष्वप्रयत्नेनकथ्यमानंमयानघे पुरावैद्वापरस्यांतेविष्णुर्दैत्यनिषूदनः अवतीर्णोमर्त्यलो

केवसुदेवकुलेविल नेनोढारुक्मिणीनामभीष्मकस्यसुतापुरा अत्यंतरूपसुभगापतिव्रतपरायणा नहितस्याविनाकृष्णा स्तोकंसुदुःहनेसुखं
श्वश्रूःश्वशुरयोःपादौचवंदेसापुनःपुनः केनापिकर्मदोषेणाकुपितातिविष्णुमातरः नप्रसादयतिक्षिप्रमभिमानिज्ञालातुदेवकी कृष्णंप्रोवाचकुपिता
यदितेजननीत्वहं नतस्त्वयाहिवैवाह्याकुलरूपगुणाधिका मद्वाक्यमन्यथाकर्तुंनार्हसित्वंकुलोद्वह कृष्णउवाच मायातुरुक्मिणीत्यक्ताउ
द्वहेहंकथंशुभे यस्तुवैत्यजतेभार्यामविकृतवशरीरिणीं संप्राप्नोतिहिमंदत्वंदौर्भाग्यंससप्तपौरुषं विरूपत्वमवाप्नोतिनसुखंविंदतेक्वचित्
व्याधिर्वाजायतेलोकेनिंदनीयःसदेहिनां इत्यहंदेविजानामिकथंकुर्यांवचस्तव देवक्युवा॰ सर्वेषामेवदेवानांतीर्थादीनामपिध्रुवं मातागु
रुतरापुत्रकस्तस्यावचनंत्यजेत् ममवाक्यस्याकरणात्कथंपापिष्ठताभवेत् जननीपूज्यतेनेनभार्याचयदुनंदन कृष्णउवा॰ परित्यजामि
नोभीरुप्रियांप्राणधनेश्वरीं इतिकृष्णांपराभूतामातरंप्रेक्ष्यकेशवः चिंतयामासपरमंकथंसौख्यंभवेदिति एतस्मिन्नेवकालेतुनारदो-
भगवानृषिः अभ्युज्जगामसहसाविष्णुसंप्रेक्ष्यविस्मितः पूजितःपरयाभक्त्याअर्घ्यंजग्राहनारदः उपविष्टोयथान्यायंपर्यपृच्छद
नामयं नारदउवा॰ किंत्वंखेदंकरोषीत्थंकथमुद्वेगकारणं किंनसिद्ध्यतितेनभीष्टंत्यजोद्वेगंयदूत्तम कृष्णउवा॰ मात्रानियुक्तोदेवर्षेपरिणे
तुंद्विजोत्तम कन्यामुद्वाहयिष्यामिसुरूपांकस्यचित्प्रभो नारदउवा॰ श्रूयतामभिधास्यामिपूर्ववृत्तांतमादरात् लक्ष्मीयुक्तःपुरानाथः-
क्रीडमानोहिनंदते तत्रागमत्सभगवान्दुर्वासाऋषिसत्तमः अभ्युत्थानादिविधिनासत्कृतंज्ञानमूर्तिना प्रेक्ष्यबीभत्सरूपंतंदेव्याहा-

स्यंकृतं तदा सकोपेन महातेजा वैश्वानरसमप्रभः सशाप लक्ष्मीं दुर्वासा मुनिः क्रोधेन संयुतः हसितो हं त्वया मुग्धे आत्मनो रूपवीक्ष्य च वि
रूपा भव दुर्वृत्ते किं न ज्ञातो त्वयहं त्वया इत्युक्त्वा यान्तं यादेव्याय थाशक्त्या प्रसारितः प्रसन्नो जगदे वाक्यं मच्छापो नान्यथा भवेत् जन्मांतरेणा
स्य फलं करिष्यति विरूपा वा सेयं मर्त्ये वतीर्णा हि गोपकस्य गृहे शुभा सत्यभामा विरूपाक्षी विरूप दर्शना तथा कर्णनासानि विकृतानि संजा-
तानि तत्प्रभावतः पाणिपादकटिग्रीवं सर्वं वैरूप्य लक्षणं तत्र गच्छ महाप्राज्ञ स नेकन्यां प्रदास्यति कृष्ण उवाच विरूपवदनां ब्रह्मन् कथं द्रक्ष्या
मि नित्यशः कां गतिं वै गमिष्यामि तां विवाह्य कुरूपिणीं नारद उवाच रुक्मिण्यास्तु प्रसादेन शापान्मुच्येत तत्क्षणात् उत्तमं प्राप्स्यते रूपं
सौभाग्यं परमं सुखं देवक्याश्च प्रसादेन धर्मकामार्थसिद्धये एवं भविष्यति तव संबंधो विहितः सुरैः त्वया च नान्यथा कार्यं गुरूणां वचनं म
हत् माता गुरुतरा भूमेरिति वेदेषु गीयते ईश्वर उवाच एवमुक्त्वा महादेवि नारदस्त्रिदिवं गतः कृष्णोपि मानरं प्राह वैवाह्यं हि विधीयते वि-
वाहितां च सा तेन वेदोक्तविधिना ततः आनीय स्वगृहं मातुर्दर्शयामास तां वधूं पश्य मात्रैव मया भामापरिणीता शुचिव्रता निर्वृत्तिं परमां ग-
च्छ प्रसादस्तु सुखी भव इत्युक्त्वा वीक्ष्य तां कृष्णः प्रणिपत्य च मातरं बभूव कृतकार्याणां कृतकृत्यो महाबलः तां दृष्ट्वा देवमाता च बभौ दुः
खाधिका भृशं ईदृक् विरूपां विकृतां कथं भर्तास्मि गोपितां चिंतामवाप महतीमती वोद्विग्नमानसा कस्यापि नावचक्षे था विरूपं तच्छरीर-
जं अथ कस्मिन्स काले तु रुक्मिणी तत्र भावतः नमस्कृत्य ततः श्वश्रूं संस्पृष्टं गोमयं तदा उवाच प्रस्तुतं वाक्यं भक्तियुक्तं शुभावहं अंबाहं दृष्टु

मिच्छामिसपत्नींकृष्णवल्लभां तांदर्शयतुमेशीघ्रंप्रसादंसकृविधीयतां देव्युवाच श्वश्रूर्ह्यहंतेसुभगेममापिवचनंकुरु पूर्वमाचरितंसश्रूः सुरूपा
द्वादशीव्रतं संप्रयच्छसिचेत्तस्यैदर्शनंतेभविष्यति रुक्मिण्युवाच कृष्टनक्रियतेधर्मोव्रतंचापिसदुष्करं कथंतस्यैप्रयच्छामिफलंदेवैःसुदु
र्लभं देवक्युवाच अर्धंप्रदीयतामस्यैतदर्धमथवापुनः पंचमांशमथोषष्ठंषोडशांशमथापिवा रुक्मिण्युवाच सुरूपाद्वादशीपुण्यंति
लार्धमपिनोत्सहे किंपुनःषोडशांशंतुसपत्न्यांदुःखचेतसि एवमुक्त्वाजगामाशुमंदिरंस्वंशुभेक्षणा पुनःपप्रच्छकृष्णंसामणिपानेन
वैरुषा देवएच्छामितेसर्वंनतुतुष्टोसिमेप्रभो कथंपश्यामितामद्यनवोढांकृष्णवल्लभां श्रीकृष्णाउ॰ दर्शयिष्येत्यहंसश्रूर्विरूपांतां
सुभ्रूश्मे विरूपश्यवणाक्षींतांकुरूपांविकृताननां अद्दष्वैचित्र्यकृतंरूपाद्यत्ननसंशयः इत्युक्त्वारुक्मिणींकृष्णःसत्यभामांतदाब्रवीत्
प्रार्थयाप्रियांसश्रूंसुरूपाद्वादशीव्रतं तिलादीपिहिषष्ठांशंदेहिमेसेवकास्म्यहं सागतातत्सकाशंतुपिधायद्वारमादरात् उवाचरुक्मि
णींसातुसत्यभामाशुचिव्रता एकामप्याहुतिंदेविदेहिभीष्मकनंदिनि अर्धाहुतिर्वामेदेयायद्यस्तिमयिसौहृदं रुक्मिण्युवा॰ कोयंमति
भ्रमस्तेवैसुरूपाद्वादशींप्रति तिलाहुतिंप्रयच्छामिउद्घाटयकपाटकं इत्युक्त्वात्वरितंस्नात्वादत्वात्येकांतिलाहुतिं तस्यांचैवप्रदत्तायांसा
रूपेणाधिकाभवत् तांदृष्ट्वाविस्मयपरांपप्रच्छदयिताहरेः कथ्यतांममकाहित्वंकिमर्थमिहचागता सत्यभामोवा॰ तवाहंभगिनीभद्रे
कृष्णोनोदास्मिधार्मिके सत्यभामेतिमेनामनमामिचरणौतव इतिश्रुत्वातुवचनंविस्मयोत्फुल्ललोचना नोवाचकिंचित्तांवेगीह्यत्यर्थंवि

स्मिन्नाभवत् एतस्मिन्नेवकालेतुवागुवाचाशरीरिणी तवदानप्रभावेनसत्यासीच्चस्वरूपिणी स्वरूपाद्वादशीपुण्यंदेवानामपिदुर्लभं देव्यु
वाच कर्मणाकेनकर्तव्याकिमाचारंवदस्वमे नियमंहोमदानंचप्रसादंमेविधीयतां ईश्वरउवा॰ पौषेकृष्णेतुसंप्राप्तेपुष्यर्क्षंयदाभवेत्
तस्यांरात्रौसंयतात्माध्यात्वाविष्णुंसनातनं श्वेतागौरेकवर्णावातस्याग्राह्यंतुगोमयं अंतरिक्षात्तुपतितंशुचिर्मौनमवस्थितः तस्यकृत्वा
हुतीनांतुशतमष्टोत्तरंतिलैः प्रतीक्षेद्द्वादशींकृष्णांसुपवासपरायणः स्नात्वानद्यांतडागेवाविष्णुमेवाथचिंतयेत् सौवर्णंतुहरिंकृत्वारौ-
प्यंवाभक्तिशक्तितः तिलपात्रोपरिस्थंचततोविष्णुंप्रपूजयेत् इतिसंपूज्यविधिवत्पुष्पधूपैःसदीपकैः नैवेद्यंतिलमिश्रंतुफलानिवि
विधानिच॰ नमःपरमशांतायविरूपाक्षनमोस्तुते इत्यर्घ्यं एवंसंपूज्यदेवेशंकुर्याद्धोमंसमाहितः आवाह्यदेवंलक्ष्मीशंहोमयेद्धोमया
हुतीः शतमष्टाधिकंचैवतिलान्घृतसंयुतान् सहस्रशीर्षेतिमंत्रेणहृदिध्यात्वाजनार्दनं लक्ष्मीयुक्तंचमेघाभंशंखचक्रगदाधरं हो
मांतेकारयेच्छ्राद्धंवैष्णवंद्विजसत्तमैः दत्वाचभोजनंतेभ्योघृतकुंभंसदक्षिणं कथाश्रवणसंयुक्तंजागृयात्तुततोनिशां तं कुंभंवैष्णवींमू
र्तिंविप्रायप्रतिपादयेत् मंत्रहीनंविहीनंचसर्वंतत्क्षमापयेत् ईश्वरउवा॰ एवंयःकुरुतेदेविस्वरूपाद्वादशीव्रतं नरोवायदिवानारीत-
च्चपुण्यंशृणुष्वमे दौर्भाग्यंनश्यतेतस्यअपिजन्मांतरार्जितं अपिधूमस्यसंपर्कोजायतेकारणांतरात् तस्यापिनश्यतेदुःखंवैरूप्यंज
न्मजन्मनि पतिनानवियोगस्यान्नष्टैःसहवियोगता जायतेगोत्रवृद्धिःश्च कीर्तिमान्जायतेभुवि जातिस्मरणमाप्नोतिपदंनिर्वाणमा

सुयात् पठ्यमानमिदंभक्त्यायःशृणोतिसमाहितः पुण्यमाप्नोतिसततंस्वर्गलोकेमहीयते इतिश्रीभविष्योत्तरपुराणेरूपद्वादशीव्रतो
द्यापनंसं॰ इतिद्वादशीव्रतानिसमाप्तानि अथत्रयोदशीव्रतानिलिख्यंते आषाढशुक्लत्रयोदश्यांजयापार्वतीव्रतं भविष्योत्त
रपुराणे श्रीलक्ष्मीरुवाच देवदेवजगन्नाथभुक्तिमुक्तिप्रदायक कथयस्वप्रसादेनलोकानांहितकाम्यया नारीणांतुव्रतंदेवअवैध
व्यकरंशुभं येनचीर्णेननारीणामखंडफलदंभवेत् श्रीभगवानुवाच सत्यमुक्तंत्वयादेविनचमिथ्यात्वयोदितं तद्व्रतंकथयिष्यामिना
ख्यातंकस्यचित्पुरा अकथ्यंपरमंगुह्यंपवित्रंपापनाशनं येनचीर्णेननारीणामवैधव्यंप्रजायते आषाढेचप्रकर्तव्याशुक्लपक्षेत्रयोदशी
गृह्णीयान्नियमंतत्रदंतधावनपूर्वकं तत्रमंत्रः आयुर्बलंयशोवर्चःप्रजाःपशुवसूनिच ब्रह्मप्रज्ञांचमेधांचत्वन्नोदेहिवनस्पते नियमा
त्फलमाप्नोतिनिष्फलंनियमंविना एतत्सर्वंप्रयत्नेनव्रतंनियमपूर्वकं एकभुक्तंव्रतंचैवकरिष्येहंमुदाधुना स्वादहीनेनधान्येनममपापंव्य
पोहतु उमामहेश्वरौकार्यौस्वर्णरजतादिभिः अथवामृन्मयौकार्यौवृषस्कंधोपरिस्थितौ गोष्ठेदेवालयेवापितथाब्राह्मणवेश्मनि
स्थापयेद्वेदमंत्रेणप्रतिष्ठांतत्रकारयेत् तद्दिनेदंतकाष्ठंहियोथिकंचवरानने स्नानंशुद्धिंततःकृत्वाततःपूजांप्रकल्पयेत् सप्तर्षिभिःस
मंतत्रपूजांकृत्वापृथक्पृथक् कुंकुमागरुकस्तूरीसिंदूरैरपुगंधकैः चंपकैःशतपत्रैश्चयूथिकादिकृतूद्भवैः ग्रीवासूत्रेणदूर्वाभिःपूज
यित्वाविधानतः अर्घ्येणवारिशुद्धेनउत्तरीययुगेनच श्रीफलद्राक्षदाडिंबैर्ऋतुजातफलेनच आद्येदेविचशर्वाणिशंकरस्येसदाप्रिये

अर्घ्यंगृहाणदेवेशिममोपरिकृपांकुरु इतिपूजाप्रकर्तव्याकथांश्रृणुयाद्द्विजोत्तमात् श्रीमहालक्ष्मीरुवाच अच्युतायनमस्तुभ्यंपुरुषायादिरूपि
णे व्रताध्यक्षमहाप्राज्ञत्वंवृद्धिक्षयकारक कथयस्वप्रसादेनव्रतानामुत्तमव्रतं केनचादौपुराचीर्णंमर्त्यलोकेचकारकः एतत्सर्वंप्रयत्नेन
ब्रूहिमेजगदीश्वर श्रीभगवानुवाच अथातःसंप्रवक्ष्यामिपार्वत्याश्चकथामिमां यांश्रुत्वासर्वपापेभ्योमुच्यतेनात्रसंशयः आसीत्पुरा
कृतयुगेकौंडिन्येनगरेवरे ब्राह्मणोवेदतत्वज्ञःसत्यशौचपरायणः गुणवान्शीलसंपन्नोवामनोनामनामतः तस्यभार्याप्रियासत्यारूप
लक्षणसंयुता धनाढ्योवेदविदुषोगृहेवैसर्वसंपदः पूर्वकर्मविपाकेनसंतानरहितोभवत् अपुत्रस्यगृहंशून्यंश्मशानसदृशोपमं दंप
तीतेनदुःखेनक्षीणौजातौशरीरतः एकदाशुभकालेतुनारदोगृहमागतः अर्घ्यपाद्यादिकंकृत्वाकथांचक्रेमुनासह वामनउ० नारद-
त्वमृषिश्रेष्ठःसर्वज्ञानपरायणः कथयस्वप्रसादेनकथंदुःखंप्रशाम्यति दानेनकेनदेवर्षेव्रतेननियमेनच तीर्थेनचमुनिश्रेष्ठसंतानंमे
कथंभवेत् नारदउवाच शृणुविप्रप्रवक्ष्यामिसंतानंतेभविष्यति वनस्यदक्षिणेपार्श्वेबिल्वयूथस्यमध्यतः भवानीसहितःशूलीलिं
गरूपेणतिष्ठति सपर्यांकुरुयत्नेनतुष्टोदास्यतिसंततिं अपूज्यंलिंगमभ्यर्च्यसंततिश्चप्रजायते अनाथप्रेतसंस्कारीकोटियज्ञफलंल
भेत् इत्युक्त्वानारदःस्वर्गंगतोवैमुनिपुंगवः वनमध्येगतौद्वौतुदंपतीपुत्रकांक्षिणौ बिल्वमध्येततोदृष्टंशिवलिंगंपुरातनं बिल्वपत्रैश्च
जीर्णैश्चापिपिहितंसर्वतस्ततः विहायबिल्वपत्राणिसममार्जोपलेपनं पंचामृतेनप्रक्षाल्यपूजांचक्रेमनोरमां नित्यंनियमसंयुक्तोपूजयेत्पर

मेश्वरं पंचाब्दं पूजितस्तेन पार्वतीसहितोहरः एकदावनगतः सोथपुष्पार्थे ब्राह्मणोत्तमः कुसुमं गृह्यते यावत्तावद्दृष्टः सपन्नगैः पतितस्तद्वने घोरे
सिंहव्याघ्रसमाकुले तृतीयेन मुहूर्तेन तद्भार्याचिंतयत्तदा केनापिकारणेनैव कथं नायाति मे पतिः रुदंती शोकसंयुक्ता वनमध्ये गतासती
आगतानत्र यत्रास्ते भर्ताच पतितो भुवि भर्तारं पतितं दृष्ट्वा तदा मोहमुपागमत् तत्पश्चाच्चेतनायुक्तासास्मरद्धनदेवतां पार्वतीतु समायाता
यत्र तिष्ठति ब्राह्मणी आक्रंदमानां तां दृष्ट्वा पार्वती वरदाभवत् स्वयं स्वभगहस्तेन विप्रवक्त्रे विमुंचति उत्थितो ब्राह्मणस्तत्र निशीथे निद्रि
तो यथा तावेव चरणौ गृह्य दंपती विनयान्वितौ पार्वत्याः पूजनं भक्त्या चक्रतुस्तौ मुदान्वितौ पार्वत्युवाच त्वत्पूजनादहं प्रीता वरं वरय स्वव्र
ते ब्राह्मण उवाच त्वत्प्रसादेन रुद्राणि मयालब्धं च वांछितं संतानं चैव मे नास्ति एतद्दुःखं च मे हृदि पार्वत्युवा० व्रतं कुरु विधानेन मम
नाम्नाच विश्रुतं जयाममव्रतं नाम त्रैलोक्ये पावनं परं जयापार्वतीव्रतं नाम आषाढे चारुलोचने स्वादहीनेन धान्येन त्याज्यं लवणमुत्तमं
इदं व्रतं च कर्तव्यं भोक्तव्यं दिन पंचकं त्रयोदश्यां व्रतारंभस्तृतीयायां समापनं शुक्लपक्षे व्रतारंभः कृष्णपक्षे समापनं पंचाब्दं गोधुमा
न्नेन व्रतं कार्यं प्रयत्नतः पंचाब्दं हि यवैश्चैव व्रतं तु लवणं विना पंचाब्दं तंदुलैः कार्यं इक्षुरसविवर्जितं मुद्गैः कार्यं पंचवर्षमेवं हायन विंश-
तिः विंशत्यब्दे समाप्ते तु व्रतोद्यापनमाचरेत् दंपत्योः परिधानं हि दद्याद्भूषणपूर्वकं भोजनं च स्ववासिन्यै तृतीयायां यथोदितं विंशति प्र
थमे वर्षे वित्तशाठ्यमतः परं पंचके पंचके कार्यं परिधानैश्च भोजनैः नानारसैः समायुक्तं घृतखंडसमन्वितं सभर्तृकाश्च दातव्यं भोज्यं-

सौभाग्यहेतवे कुंकुमंकज्जलंदेयमद्भुमद्भंस्वशक्तितः रात्रौजागरणंकुर्यादखंडफलदंभवेत् अनेनविधिनायस्तुकुरुतेव्रतमुत्तमं रात्रौजागरणंकार्यंव्रतसंपूर्णहेतवे व्रतेनतुविनानारीविधवाजन्मजन्मनि शोचतीदुःखसंयुक्तानचसौभाग्यभाग्भवेत् नारीणांतुव्रतेदीनैर्यदिभक्त्या नतःपरम् सौभाग्यमतुलंयातिपतिसंतोषदानतः एवमुक्त्वाव्रतमिदंतत्रैवांतरधीयत पश्चात्कुहूंसमागत्यदंपतीचमुदान्वितौ पूर्वोक्तेनविधानेनप्राप्तंपुत्रसुखंतयोः दंपतिभ्यांविशेषेणअवैधव्यंपरंसुखं भुक्त्वाचविविधान्भोगानंतेप्राप्तंशिवालयं एवंयाकुरुतेनारीनचभर्त्रा वियुज्यते कुलत्रयंसमुद्धृत्यनीयतेशिवमंदिरं सान्निध्यसुखमाप्नोतिशिवलोकेमहीयते कथांश्रुत्वाविधानेनसर्वपापात्प्रमुच्यते इतिश्रीभविष्योत्तरपुराणेजयापार्वतीव्रतोद्यापनंसंपूर्णं इतिगुर्जरदेशेगुर्जराचारप्राप्तं अथभाद्रपदशुक्लत्रयोदश्यांगोत्रिरात्रव्रतम् हेमाद्रौभविष्योत्तरे युधिष्ठिरउवाच भगवंस्त्वत्प्रसादेनबहूनिसुकृतानिमे श्रुतानिबहुपुण्यानिकृतानिमधुसूदन सर्वपापहराणि-स्युःसर्वकामप्रदानिच सांप्रतंश्रोतुमिच्छामिव्रतानामुत्तमंव्रतं किंचिद्योगव्रतंब्रूहियदितुष्टोसिमाधव यत्कृत्वासर्वपापेभ्योनरोनारीप्रमुच्यते श्रीकृष्णउवा० कथयामिनृपश्रेष्ठव्रतानामुत्तमंव्रतं यन्नकस्यचिदाख्यातंतच्छृणुष्वनृपोत्तम यान्यान्कामान्कामयतेलभेत्तांस्तांस्तथैवच तत्क्षणादेवमुच्यंतेनरानार्यश्चसर्वशः प्रभोर्भगवतोराजन्कामधेनोःप्रसादतः सौभाग्यंसंपदंलक्ष्मींप्राप्नोतिसुखमुत्तमं युधिष्ठिरउवाच यदितुष्टोसिभगवन्व्रतस्यास्यविधिंशुभं ब्रूहिमेदेवदेवेशकरोमित्वत्प्रसादतः कैर्मंत्राःकेनमस्कारादेव-

नार्थेप्रकीर्तिता: किंदानमत्रमर्घ्यंचकथयस्वसुरोत्तम श्रीकृष्णउ॰ नारदेनपुराराजन्युक्तंसगरादिषु स्मारितंतत्त्वयाराजञ्छृणुष्वैकमनाव्रतं
मासिभाद्रपदेशुक्लेत्रयोदश्यांसमारभेत् त्रयोदश्यांप्रभातेतु समुत्थायशुचिर्भवेत् गृण्हीयान्नियमंपूर्वंदंतधावनपूर्वकं आचम्योद
कमादायइमंमंत्रमुदीरयेत् गोत्रिरात्रव्रतस्यास्योपवासकरणेमम शरणंभवदेवित्वंनमस्तेधेनुरूपिणि प्रसीदंतुमहादेवौलक्ष्मीना
रायणौप्रभू: लक्ष्मीनारायणौदेवौसौवर्णौवास्वशक्तित: पंचामृतेनगव्येनस्नापयेत्कमलापतिं स्थापयेत्सर्वतोभद्रेमंडलेष्टदलेपिवा गं
धपुष्पै:सुनैवेद्यैस्तुतिगीतादिनर्तनै: नारिकेलार्घ्यदानेनप्रीणयेच्छ्रीहरिंतथा लक्ष्मीकांतजगन्नाथगोत्रिरात्रव्रतंमम परिपूर्णंकुरुष्वेदं
गृहाणार्घ्यंनमोस्तुते आर्तिक्यंचततःकुर्याद्भक्त्याकृष्णस्यतुष्टिदं नवकुंभंजलभृतंहविष्यान्नेनपूरितं कृत्वादिनत्रयंपार्थप्रीत्यैविनि
वेदयेत् धेनुपूजांततःकुर्यात्ज्जलधारांप्रदक्षिणां पुरादलातुसुकुटंकुंडलंकुंकुमंतथा अन्नाच्छादनगंधादिदिव्यपुष्पै:सदीपकै: अ
होरात्रभवंकिंचित्तद्धि तद्दीपंदिनत्रयं अर्घ्यदानंततःकुर्यान्नारीकेलादिभि:फलै: अर्घ्यमंत्र: पंचगाव:समुत्पन्नामथ्यमानेमहोद
धौ तासांमध्येतुयानंदातस्यैधेन्वैनमोनम: प्रदक्षिणीकृतायेनधेनुर्मार्गानुसारिणी प्रदक्षिणीकृतातेनसप्तद्वीपावसुंधरा गावोममा-
ग्रत:संतुगावोमेसंतुपृष्ठत: गावोमेहृदयेसंतुगवांमध्येवसाम्यहं आरार्तिक्यंसनैवेद्यंगीतवाद्यमहोत्सवै: कुंकुमंकलशंसूत्रंधेन्वेदद्या
द्विचक्षण: एवंसंपूज्यतांधेनुंसम्यक्भक्त्यादिनत्रयं यवांश्चयवसंचैव चारयेत्पाययेदप: गोमयादागतैर्धान्यैःकुर्यात्तैरेवपारणम्

धेन्वैप्रजागरंकुर्यात्सर्वपापप्रणाशनं त्रिविधान्मुच्यतेपापान्महराधेनपांडव तस्योत्तरात्कृतात्पापान्महराधेनमुच्यते चत्वारिवेणुपात्राणिका
रयित्वाप्रपूरयेत् नारिकेलाम्रकदलद्राक्षाखर्जूरदाडिमैः शकैर्वैरूढैः सिंदूरैर्वस्त्रकुंकुमकज्जलैः प्रथमेबीजपूरार्घ्यंद्वितीयेदाडिमंशु
भं तृतीयेनारिकेलंचदद्यादर्घ्यंदिनत्रयं प्राकारास्तुत्रयःकार्याहविष्यान्नेनपूरिताः लक्ष्मीनारायणंदेवंब्राह्मणंभार्ययासह पूजयेत्कुसुमै
र्वस्त्रैर्हैमसूत्रैर्युधिष्ठिर दंपत्योर्भोजनंदेयंधेनुभक्त्यादिनत्रयं पारणेगौरिणींविप्रान्निष्टबंधूंश्चभोजयेत् गुरुरूपायतांधेनुंद्विजाय
प्रतिपादयेत् सकुंकुमांसवत्सांचघंटासुकुरभूषितां गीतवादित्रनृत्यादिशांतिपाठपुरःसरं योयाद्विप्रगृहंयावत्प्राप्नयेतत्फलस्यवै ए
वंयाकुरुतेपार्थगोत्रिरात्रव्रतोत्तमं दुर्लभंतुसदास्त्रीणांन राणांनृपसत्तम अश्वमेधसहस्राणिवाजपेयशतानिच कृत्वायत्फलमाप्नो
तिगोत्रिरात्रव्रतेकृते प्रभासेचकुरुक्षेत्रेचंद्रसूर्यग्रहेतथा हेमभारशतंदद्यात्फलंतत्प्राप्नुयान्नृप धेनुदानंततःपश्चात्सवत्संसर्वकामदं
सागरांबरसंयुक्तादत्तातेनवसुंधरा एवंयाकुरुतेपार्थत्रिरात्रव्रतमुत्तमं भवांतरकृतात्पापात्त्रिविधान्मुच्यतेनरः यावाकाचिन्नपश्येतभ
र्तुदुःखंनराधिप पुत्रपौत्रकृतंखंनस्याभविष्यतिनसंशयः जन्मांतरेप्यसौनारीवैधव्यंनैवपश्यति वैधव्यंचमहद्दुःखंनभवेत्तुभवांतरे
अपुत्रालभतेपुत्रान्धनहीनाधनंलभेत् कायेनमनसाचैववाक्कर्मणायदुपार्जितं तत्सर्वंविलयंयातिगोत्रिरात्रव्रतेनवै इहभोगान्सविपुला
न्भुक्त्वायुःपूर्णमेवच व्रतस्यास्यप्रभावेनगोलोकेचमहीयते कीर्तिदंधनदंचैवसौभाग्यकरणंनृप आयुरारोग्यकरणंसर्वपापप्रणाशनं

एतस्मात्कारणाद्राजन्सभार्यस्त्वंकुरुव्रतं राज्यंवायदिसत्कीर्तिंनित्यंप्राप्तुमिहेच्छसि तच्छ्रुत्वापांडवश्श्रेष्ठोव्रतंचक्रेसमाहितः व्रतस्यास्यप्रभा
वेनलब्धंराज्यमकंटकं इतिहेमाद्रौभविष्येगोत्रिरात्रव्रतंसं॰ अथआश्विनशुक्लत्रयोदश्यांगुर्जराचारप्राप्तंगोत्रिरात्रव्रतं युधिष्ठिरउवाच
येनलक्ष्मीश्चसकलानराणांभवनेभवेत् संततिर्वर्धतेस्त्रीणांतद्व्रतंवदमेप्रभो श्रीकृष्णउ॰ शृणुराजन्प्रवक्ष्यामिव्रतानामुत्तमव्रतं येनवै
क्रियमाणेनसर्वपापक्षयोभवेत् गोत्रिरात्रमितिख्यातंनृस्त्रीणांफलदायकं वांछितंजायतेतेषांयेषांचेतसिवर्तते युधिष्ठिरउ॰ कीदृशंत
द्व्रतंदेवविधानंतत्रकीदृशं कथमेषासमुत्पन्नाकस्मिन्कालेतुकेशव श्रीकृष्णउ॰ पुराकृतयुगेपार्थमनुर्नामबभूवह वैवस्वतकुलेजातोबभूवपृ
थिवीपतिः तदन्वयेदिलीपश्चप्रसूतःपतिरुत्तमः नृपाःसर्वेवशंतस्यसंजाताःकरदायकाः नित्यंधर्मपरोराजापूजनीयोमनीषिभिः नजाय
तेसुतसंतानंतस्यनोनिमितःसदा वांछयंस्तनयंराजासर्वकोसलपालकः पुत्रार्थंचसपत्नीकोवसिष्ठस्याश्रमंययौ पश्यन्हिपथिकल्याणंसार
सैस्तोरणांकृतं विविधानिअरण्यानिमार्गेषुफलितानिवै राजामहिष्यासहितोगजारूढःसवाहनः संध्यायांयोगिनस्तस्यमहर्षेःप्राप
दाश्रमं सारथिंचसमादिश्यवाजीन्विश्रामयेत्यथ रथादुत्तीर्यदंपत्यौस्वाश्रमंजग्मतुर्मुनेः स्थितंकर्माणिसंध्यायांदिलीपोददृशेगुरुम्
अरुंधत्यासहासीनंसावित्र्येवपितामहं तौप्रणम्यगुरुंतत्रमुनिपत्नींविशेषतः स्थितौतस्यसमीपेतुप्रीतावानंदपूरितौ दिलीपंचतथात्त
र्थधर्मज्ञंलोकपालकं पप्रच्छकुशलंराज्येवसुधायाश्चवैमुनिः दिलीपउवा॰ कुशलंमेसदादेवस्थितेत्वयिगुरौसति सुराणांचमनुष्याणां

रणमात्रेणब्रह्महत्यांव्यपोहति पवित्रंपरमंस्तुत्यंकीर्तयेद्यस्तुमानवः सर्वान्कामानवाप्नोतिव्रतस्यचफलंलभेत् इतिहेमाद्रौब्रह्मपु॰ नृसिंहचतु
र्दशीव्रतकथासमाप्ता अथअनंतचतुर्दशीव्रतं सापराह्णकार्यापूजनकालव्यापित्वात् तथाच अनंतंपूजयेद्यस्तुप्रातःकालेसमाहितः
अनंतांलभतेसिद्धिंचक्रपाणेःप्रसादतः इतिब्रह्मपुराणात् तदभावेपूर्वा उभयदिनेसूर्योदयव्यापित्वे पूर्णायुक्तत्वेनपरैवग्राह्या भा
द्रेसितेचतुर्दश्यामनंतंपूजयेत्सुधीः ह्रासेनसर्वकर्माणिप्रातरेवहिपूजनं शुक्लाभाद्रपदस्यापिअनंताख्याचतुर्दशी उदयव्यापिनीग्रा-
ह्याघटिकैकापियाभवेत् इतिहेमाद्रिः तस्मात्परैवेतिसर्वसंमतं अथअनंतपूजाविधिः प्रातर्नद्यादिकेस्नात्वानित्यकर्मसमाप्यच
अनंतंहृदयेकृत्वाशुचिस्तत्रसमाहितः अव्रणंकलशंचैववस्त्रयुग्मेनवेष्टितं मुष्टिमात्रेणदर्भैस्तुफणिराजंचकारयेत् स्थापयेत्कलशा
स्याग्रेजगदाधारमव्ययं आराधयेदनंतंचतस्मिन्कुंभेविशेषतः गोचर्ममात्रमालिप्यगोमयेनविचक्षणः तन्मध्येस्थंडिलंकृत्वापद्ममष्ट
दलंलिखेत् तस्योपरिन्यसेत्कुंभंचूतपल्लवसंयुतं प्राणायाममतःकृत्वातिथ्यादिपरिकल्पयेत् ममसकुटुंबस्यक्षेमस्थैर्यायुरारोग्यचतु
र्विधपुरुषार्थसिध्यर्थंममआचरितस्यआचीर्यमाणस्यव्रतस्यसंपूर्णफलप्राप्त्यर्थंश्रीमदनंतपूजनमहंकरिष्ये तथाचासनादिकलशपू
जनंचकरिष्ये कलशस्य॰ सर्वेसमुद्रा॰ सितासिते॰ कलशेवरुणंसंपूज्य ततोशंखंघंटांचपूजयेत् अपवित्रःपवित्रोवा॰ पूजाद्रव्याणि-
आत्मानंचप्रोक्ष्य यमुनांपूजयेत् श्रीमदनंतव्रतांगत्वेनश्रीयमुनापूजनंक॰ तद्यथा लोकपालस्तुतांदेवीमिंद्रनीलसमुद्भवां यमुने

त्वामहंध्यायेसर्वकामार्थसिद्धये ध्यानं सरस्वतिनमस्तुभ्यंसर्वकामप्रदायिनि आगच्छदेवियमुनेव्रतसंपूर्णहेतवे इमंमेगंगेइत्यावाह्य
सिंहासनेसमारूढेदेवशक्तिसमन्विते सर्वलक्षणसंपूर्णेयमुनायैनमोस्तुते आसनं रुद्रपादेनमस्तुभ्यंसर्वलोकहितेप्रिये सर्वपाप
प्रशमनिनरंगिण्यैनमोस्तुते पाद्यं गरुडपादेनमस्तुभ्यंशंकरप्रियभामिनि सर्वकामप्रदेदेवियमुनेतेनमोनमः अर्घ्यं विष्णुपादो
द्भवेदेविसर्वाभरणभूषिते कृष्णामूर्तेमहादेविकृष्णावेण्यैनमोनमः आचमनं सर्वपापहरेदेविविश्वस्यप्रियदर्शिनि सौभाग्यंय
मुनेदेहियमुनायैनमोस्तुते मधुपर्कं नंदिपादेमहादेविशंकरार्धशरीरिणि सर्वलोकहितेदेविभीमरथ्यैनमोस्तुते पंचामृतस्नानं
सिंहपादोत्तमेदेविनारसिंहसमप्रभे सर्वलक्षणसंपूर्णेभवनाशिनितेनमः शुद्धोदकस्नानं विष्णुपादाब्जसंभूतेगंगेत्रिपथगा-
मिनि सर्वपापहरेदेविभागीरथ्यैनमोस्तुते वस्त्रं त्र्यंबकस्यजटोद्भूतेगौतमस्याघनाशिनि सप्तधासागरंयातिगोदावरिन-
मोस्तुते कंचुकीं माणिक्यमुक्तावलिकौस्तुभांश्चगोमेदवैडूर्यसपुष्परागैः वज्रैश्चनीलैश्चसुशोभितानिगृहाणसर्वाभरणानिदे
वि आभरणानि चंदनागरुकस्तूरीरोचनंकुंकुमंतथा कर्पूरेणसमायुक्तंगंधंदद्मिचभक्तितः गंधं श्वेतांश्चचंद्रवर्णाभान्हरिद्रा
रागरंजितान् अक्षतांश्चसुरश्रेष्ठददामियमुनेशुभे अक्षतान् मंदारमालतीजातीकेतकीपाटलैःशुभैः पूजयामिचदेवेशि
यमुनेभक्तवत्सले पुष्पाणि अथांगपूजा चंचलायै० पादौपू० चपलायै० जानुनीपू० भक्तवत्सलायै० कटींपू० हरायै० नाभिंपू० म

न्मथवासिन्यै॰ गुल्फंपू॰ अज्ञानवासिन्यै॰ हृदयंपू॰ भद्रायै॰ स्तनौपू॰ अयहंत्र्यै॰ भुजौ॰ रक्तकंठ्यै॰ कंठंपू॰ भवल्लत्यै॰ मुखंपू॰ गौर्यै॰ नेत्रे॰
भागीरथ्यै॰ ललाटंपू॰ यमुनायै॰ शिरःपू॰ सरस्वत्यै॰ सर्वांगंपू॰ अथनामपूजा यमुनायै॰ सिनायै॰ कमलायै॰ उत्पलायै॰ अभीष्टप्रदा
यै॰ धात्र्यै॰ हरिहररूपिण्यै॰ गंगायै॰ नर्मदायै॰ गौर्यै॰ भागीरथ्यै॰ तुंगायै॰ भद्रायै॰ कृष्णावेण्यै॰ भवनाशिन्यै॰ सरस्वत्यै॰ कावेर्यै॰ न॰
सिंधवे॰ गौतम्यै॰ गोमत्यै॰ गायत्र्यै॰ गरुडायै॰ गिरिजायै॰ चंद्रचूडायै॰ सर्वेश्वर्यै॰ महालक्ष्म्यै॰ सर्वपापहरेदेवि सर्वोपद्रवनाशिनि
सर्वसंपत्प्रदेदेवियमुनायैनमोस्तुते इतिनामपूजा दशांगगुग्गुलोद्भूतश्चंदनागरुसंयुतः कपिलाघृतसंयुक्तोधूपोयंप्रतिगृह्यतां धू
पं॰ घृतवर्तिसमायुक्तंवह्निनायोजितंमया गृहाणदीपकंदेविसर्वैश्वर्यप्रदायिनि दीपं शर्करामधुसंयुक्तंदधिक्षीरंचसर्पिषा पक्व
मन्नंमयादत्तंनैवेद्यंप्रतिगृह्यतां नैवेद्यं॰ पानीयंपावनंश्रेष्ठंगंगादिसरिदुद्भवं हस्तप्रक्षालनंदेविगृहाणसुरवशोधनं हस्तप्रक्षाल॰
मुखप्र॰ कर्पूरेणसमायुक्तंयमुनेचारुचंदनं समर्पितंमयातुभ्यंकरोद्वर्तनकंकुरु करोद्व॰ इदंफलमितिफलं पूगीफलमितिनांबूलं॰
हिरण्यगर्भेतिदक्षिणां त्रैलोक्यपावनेगंगेअंधकारविनाशिनि पंचार्तिक्यंगृहाणेदंविश्वप्रीत्यैनमोस्तुते आर्तिक्यं केतकीजाति
कुसुमैर्मल्लिकामालतीभवैः पुष्पांजलिर्मयादत्तोनवप्रीत्यैनमोस्तुते पुष्पांजलिं यानिकानिचेतिप्रदक्षिणां अन्यथाशरणंनास्ति॰
नमस्कारं सुरासुरेंद्रादिकिरीटमौक्तिकैर्युक्तंसदायत्तवपादपंकजं परावरंपातुवरंसुमंगलंनमामिभक्त्यातवकामसिद्धये भवानि

चमहालक्ष्मीसर्वकामप्रदायिनि व्रतंसंपूर्णतांयातुयमुनायैनमोस्तुते इतिप्रार्थनां इतियमुनापूजासमाप्ता अथानंतपूजा ततस्तुमूल
मंत्रेणनमस्कृत्यजनार्दनं नवाम्रपल्लवाभासंपिंगश्मश्रुविलोचनं पीतांबरधरंदेवंशंखचक्रगदाधरं अलंकृतंसमुद्रस्थंविश्वरूपंविचिं
तये ध्यायामि आगच्छानंतदेवेशतेजोराशेजगत्पते इमांमयाकृतांपूजांगृहाणपुरुषोत्तम सहस्रशीर्षेत्यावाहनं विष्टरंदेहिगो
विंदगोवर्धनधरप्रभो अनंतदीयतेयन्मेरत्नसिंहासनेविश पुरुषएवेदमित्यासनं यथात्वंसर्वदेवानामिंद्रादीनांत्वरक्षसि तथामां-
पालयानंतत्वदंघ्रिशरणागतं एतावानस्येतिपाद्यं अनंतानंतदेवेशअनंतफलदायक अनंतानंतरूपोसिगृहाणार्घ्यंनमोस्तुते त्रिपा
दूर्ध्वइत्यर्घ्यं गंगोदकंसमानीतंहेमकुंभेनयोजितं आचम्यतांहृषीकेशप्रसीदपुरुषोत्तम तस्माद्विराळित्याचमनीयं अनंतगुणरू-
पाय्रविश्वरूपधरायच नमोमहात्म्यदेवायअनंतायनमोनमः यत्पुरुषेणेतिस्नानं ततःपंचामृतस्नानं सुरभेस्तुसमुत्पन्नंदेवानाम
पिदुर्लभं पयोददामिदेवेशस्नानार्थंप्रतिगृह्यतां आप्यायस्वेतिपयस्नानं चंद्रमंडलसंकाशंसर्वदेवप्रियंहियत् दधिददामिदेवे
शस्नानार्थंप्रतिगृह्यतां दधिक्राव्णोअ० दधिस्ना० आज्यंसुराणामाहारआज्यंयज्ञेप्रतिष्ठितं आज्यंपवित्रंपरमंस्नानार्थंप्रतिगृह्यतां
घृतंमिमिक्षे० घृतस्ना० सर्वौषधिसमुत्पन्नंपीयूषसदृशंमधु स्नानायतेमयादत्तंगृहाणपरमेश्वर मधुवातेतिमधु इक्षुदंडात्समुद्भू
तंशर्करांमधुरांशुभां स्नानायतेमयादत्तांगृहाणपरमेश्वर स्वादुःपवस्वेतिशर्करास्ना० शुद्धोदकस्ना० नाममंत्रैःपूजयेत् पुरुषसूक्ते

नअभिषेकः नप्तकांचनवर्णाभंकौशेयंचस्र्सनिर्मितं वस्त्रंगृहाणदेवेशलक्ष्मीसुतनमोस्तुते तंयज्ञमितिवस्त्रं वस्त्रानंतरंआचमनीयं दा
मोदरनमस्तेस्तुत्राहिमांभवसागरात् ब्रह्मसूत्रंसोत्तरीयंगृहाणपुरुषोत्तम यज्ञोपवीतंपरमं॰ तस्माद्यज्ञादित्युपवीतं उपवीतानंतरंआ
चमनीयं श्रीखंडचंद॰ तस्माद्यज्ञात्सर्व॰ चंदनं अक्षतान्स्वस्र्र॰ अक्षतान् माल्यादी॰ तस्मादश्वेतिपु॰ अथग्रंथिपूजा श्रियैनमः
मोहिन्यै॰ पद्मिन्यै॰ महाबलायै॰ अजायै॰ मंगलायै॰ वरदायै॰ शुभायै॰ जयायै॰ विजयायै॰ जयंत्यै॰ पापनाशिन्यै॰ विश्वरूपायै॰ सर्व-
मंगलायै॰ १४ इतिग्रंथिपूजा अथांगपूजा मत्स्यायनमः पादौपू॰ कूर्माय॰ गुल्फौपू॰ वराहाय॰ जानुनीपू॰ नारसिंहाय॰ ऊरूपू॰
वामनाय॰ कटीपू॰ रामाय॰ उदरं॰ श्रीरामायत्हृदयंपू॰ कृष्णाय॰ मुखंपू॰ सहस्रशिरसेन॰ शिरःपू॰ श्रीमदनंताय॰ सर्वांगंपू॰ अथाव
रणपू॰ अनंतस्यदक्षिणपार्श्वेरमायै॰ वामपार्श्वेभूम्यैन॰ इतिप्रथमावरणं आवरणदेवतामावाह्य हस्तंप्रक्षाल्यगंधपुष्पंतर्जनीम
ध्यमांगुष्ठैर्धृत्वामध्येशंखोदकंगृहीत्वामंत्रेणेशंखोदकं भूमौनिक्षिप्यपुष्पंदेवोपरिनिक्षिपेत् दयाब्धेत्राहिसंसारसर्पान्मांशरणागतं
भक्त्यासमर्पयेत्तुभ्यंप्रथमावरणार्चनं इतिमंत्रमुच्चार्यजलंत्यक्त्वापुष्पंदेवोपरिन्यसेत् इतिपूर्वादिक्रमेण वृद्धोल्काय॰ महोल्काय॰
शतोल्काय॰ सहस्रोल्काय॰ दयाब्धेत्राहिसं॰ द्वितीयावरणं २ तथैव वासुदेवाय॰ संकर्षणाय॰ प्रद्युम्नाय॰ अनिरुद्धाय॰ दयाब्धेत्राहि
तृतीयावरणं ३ प्राच्यां केशवाय॰ नारायणाय॰ माधवाय॰ गोविंदाय॰ विष्णवे॰ मधुसूदनाय॰ त्रिविक्रमाय॰ वामनाय॰ श्रीधराय॰ हृषीके

शाय॰ पद्मनाभाय॰ दामोदराय॰ दयाब्धेत्रा॰ चतुर्थाव॰ ४ पूर्वादिक्रमेण मत्स्याय॰ कूर्माय॰ वराहाय॰ नारसिंहाय॰ वामनाय॰ रामाय॰ श्रीरा
माय॰ कृष्णाय॰ बौद्धाय॰ कल्किने॰ अनंताय॰ विश्वरूपिणे॰ दयाब्धेत्रा॰ पंचमावरणार्चनं ५ पूर्वादिक्रमेण अनंताय॰ दक्षिणायां ब
ह्मणेन॰ पश्चिमायां॰ वायवे॰ उत्तरायां॰ ईशानाय॰ आग्नेय्यां॰ वारुण्यै॰ नैर्ऋत्यां॰ गायत्र्यै॰ वायव्यां॰ भारत्यै॰ ईशान्यां॰ गिरिजायै॰
अग्रे॰ गरुडाय॰ वामे सुपुण्याय॰ दक्षिणे दयाब्धे॰ षष्ठाव॰ ६ पूर्वादिक्रमेण इंद्राय॰ अग्नये॰ यमाय॰ निर्ऋतये॰ वरुणाय॰ वायवे॰
सोमाय॰ ईशानाय॰ दयाब्धे॰ सप्तमाव॰ ७ आग्नेय्यां शेषाय॰ नैर्ऋत्यां विष्णवे॰ वायव्यां॰ विधये॰ ईशान्यांप्रजापतये॰ दयाब्धे
त्रा॰ अष्टमावरण ८ आग्नेय्यां गणपतये॰ नैर्ऋत्यां सप्तमातृभ्यो॰ वायव्यां दुर्गायै॰ ईशान्यां क्षेत्राधिपतये॰ दयाब्धेत्रा॰ नवमा
व॰ ९ मध्ये ब्रह्मणेन॰ भास्कराय॰ शेषाय॰ सर्वव्यापिने॰ ईश्वराय॰ विश्वरूपाय॰ महाकामाय॰ सृष्टिकर्त्रे॰ कृष्णाय॰ हरयेन॰
शिवाय॰ स्थितिकारकाय॰ अंनकाय॰ दयाब्धे॰ दशमावर॰ १॰ शौरये॰ वैकुंठाय॰ महाबलाय॰ पुरुषोत्तमाय॰ अजाय॰ पद्म
नाभाय॰ मंगलाय॰ हृषीकेशाय॰ अनंताय॰ कपिलाय॰ शेषाय॰ संकर्षणाय॰ हलायुधाय॰ तारकायनमः सीरपाणयेनमः बलभद्रा
य॰ दयाब्धेत्राहि॰ एकादशावर॰ ११ माधवाय॰ मधुसूदनाय॰ अच्युताय॰ अनंताय॰ गोविंदाय॰ विजयाय॰ अपराजिताय॰ कृष्णाय॰
दयाब्धेत्रा॰ द्वादशावर॰ १२ क्षीराब्धिशायिने॰ अच्युताय॰ भूम्याधाराय॰ लोकनाथाय॰ फणामणिविभूषणाय॰ सहस्रमूर्ध्ने॰ सहस्रा

त्रिंषेन॰ दयाब्धे॰ त्रयोदशावरणं १३ केशवादिचतुर्विंशतिनामभिः दयाब्धे॰ इतिचतुर्दशावरणं १४ अथपत्रपूजा कृष्णाय॰ पलाशप॰ वि
ष्णवे॰ औदुंबरप॰ हरये॰ अश्वत्थप॰ शंभवे॰ भृंगिराजप॰ ब्रह्मणेन॰ जटाधारप॰ भास्कराय॰ अशोकप॰ शेषाय॰ कपित्थप॰ सर्वव्यापिने
वटपत्रं॰ ईश्वरायन॰ आम्रप॰ विश्वरूपिणेन॰ कदलीप॰ महाकायाय॰ अपामार्गप॰ सृष्टिकर्त्रेन॰ करवीरप॰ स्थितिकर्त्रेन॰ पुन्नागप॰ अ
नंताय॰ नागवल्लीप॰ १४ अथपुष्पपूजा ॐ अनंताय॰ पद्मपु॰ विष्णवे॰ जातीपु॰ केशवाय॰ चंपकपु॰ अव्ययाय॰ कल्हारपु॰ सह
स्रजितेन॰ केतकीपु॰ अनंतरूपिणेन॰ बकुलपु॰ इशाय॰ शतपु॰ विशिष्टाय॰ पुन्नागपु॰ शिष्टेष्टाय॰ करवीरपु॰ शिखंडिनेन॰ धत्तू
रपु॰ नहुषाय॰ कुंदपु॰ विश्वबाहवे॰ मल्लिकापु॰ महीधराय॰ मालतीपुष्पं अच्युताय॰ गिरिकर्णिकापु॰ १४ अथाष्टोत्तरशतनाम
भिःपूजयेत् अनंताय॰ अच्युताय॰ अद्भुतकर्मणेन॰ अमितविक्रमाय॰ अपराजिताय॰ अखंडाय॰ अग्निनेत्राय॰ अग्निवपुषेन॰ अ
ग्र्याय॰ अग्निपुत्राय॰ अनुकूलाय॰ अनाशिने॰ अनघाय॰ अभ्रनिलयाय॰ अहरहाय॰ अष्टमूर्तयेन॰ अनिरुद्धाय॰ अनिर्विष्टाय॰
अचंचलाय॰ अब्दादिकाय॰ २० अचलरूपाय॰ अखिलधराय॰ अव्यक्ताय॰ अनुरूपाय॰ अभयंकराय॰ अक्षताय॰ अवपुषेन॰ अयो
निजाय॰ अरविंदाक्षाय॰ अशनवर्जिताय॰ ३० अधोक्षजाय॰ अदितिपुत्राय॰ अंबिकापतिपूर्वजाय॰ अपस्मारनाशिने॰ अव्ययाय॰
अनादिने॰ अप्रमेयाय॰ अयशत्रवेन॰ अमरारिघ्नाय॰ अनीश्वराय॰ अजाय॰ अयोशयन॰ अनादिनिधनाय॰ अमरप्रभवे॰ अग्रा-

त्याय॰ अक्रूराय॰ अनुत्तमाय॰ अरूपाय॰ अङ्गेन॰ अमोघाधिपतये॰ ५० अजाय॰ अक्षमाय॰ अमृताय॰ अघोरवीर्याय॰ अव्यंगाय॰ अवि-
घ्नाय॰ अतींद्रियाय॰ अमिततेजसेन॰ अमितयेन॰ अस्पृष्टमूर्तयेन॰ अनिलाय॰ अकशाय॰ अणोरणीयसेन॰ अशोकाय॰ अरविंदाय॰ अ-
धिष्ठाय॰ असितनयनाय॰ अरण्यवासिनेन॰ अप्रमत्तायन॰ अनंतरूपाय॰ अमलाय॰ अनिमिषायन॰ अस्त्ररूपायन॰ अग्रगण्यायन॰
अप्रमितायन॰ अंतकायन॰ अचिंत्यायन॰ अपांनिधये॰ अतिसुंदरायन॰ अमरप्रियाय॰ ८० अष्टसिद्धिप्रदाय॰ अरविंदप्रियायन॰
अरविंदोद्भवायन॰ अनघाय॰ अर्थाय॰ अक्षोभ्याय॰ अचिंत्यतेन॰ अनेकमूर्तयेन॰ अनंतब्रह्मांडपतये॰ अनंतशायनाय॰ अमराधि
पतये॰ अनाधाराय॰ अनंतनाम्नेन॰ अनंतश्रियेन॰ अक्षराय॰ अमाय॰ आश्रमस्थाय॰ आश्रमातीताय॰ अन्नादाय॰ आत्मयोनये॰
अवनीपतये॰ अवनीधराय॰ अनादिने॰ आदित्याय॰ अमृताय॰ अपवर्गप्रदाय॰ अनंताय॰ १०८ इत्यष्टोत्तरशतनामपूजा
दशांगगुग्गुलोद्भूतं चंदनागरुसंयुतं सर्वेषामुत्तमं धूपं गृहाण सुरपूजित यत्पुरुषं व्यदधुरिति धूपं साज्यं च वर्तिसंयुक्तं वह्निना योजितं मया
दीपं गृहाण देवेश त्रैलोक्यतिमिरापह ब्राह्मणोस्येति दीपं अन्नं चतुर्विधं स्वादु पयोदधिघृतैस्तथा नानाव्यंजनशोभाढ्यं नैवेद्यं प्रतिगृह्य
तां चंद्रमामनसो॰ नैवेद्यं॰ नैवेद्यम॰ उत्तरापोशनार्थं ते दद्मि तोयं सुवासितं गृहाण सुरश्रेष्ठ भूत्वा अनंताय नमो नमः उत्तरापो॰ सुरश्रे॰
हस्तप्रक्षालनं करोद्वर्तनकं देव मया दत्तं हि भक्तितः चारुचंद्रप्रभं दिव्यं गृहाण जगदीश्वर करोद॰ इदं फलं मया देव॰ नारिकेलफलं॰

पूगीफलंमहद्दिव्यंनागवल्यादलैर्युतं कर्पूरेणसमायुक्तंतांबूलंप्रतिगृह्यतां तांबूलं हिरण्यगर्भेतिदक्षिणां यानिकानि॰ नाभ्याआसीदं॰
प्रदक्षिणां नमस्तेभगवन्भूयोनमस्तेधरणीधर नमस्तेसर्वनागेंद्रनमस्तेमधुसूदन सप्तास्येतिनम॰ नमस्तेदेवदेवेशनमस्तेगरुडध्वज
नमस्तेकमलाकांतअनंतायनमोनमः यज्ञेनयज्ञमितिमंत्रपुष्पं अथदोरकप्रार्थना अनंतायनमस्तुभ्यंसहस्रशिरसेनमः नमोस्तुपद्मनाभा
यनागानांपतयेनमः अनंतःकामदःश्रीमाननंतोमेप्रयच्छतु अनंतदोररूपेणपुत्रपौत्रान्प्रवर्धतु इतिदोरकं अथदोरकबंधनमंत्रः
अनंतसंसारमहासमुद्रमग्नंसमभ्युद्धरवासुदेव अनंतरूपेविनियोजयस्वह्यनंतसूत्रायनमोनमस्ते इतिबध्वा अथजीर्णदोरकविस
र्जनमंत्रः नमःसर्वहितार्थायजगदानंदकारक जीर्णदोरमसुंदेवविसृज्येहंत्वदाज्ञया इतिविसृजेत् अथवायनमंत्रः गृहाणेदंद्वि-
जश्रेष्ठवायनंदक्षिणायुतं त्वत्प्रसादादहंदेवमुच्येयंकर्मबंधनात् प्रतिगृह्णद्विजश्रेष्ठअनंतफलदायक पक्वान्नफलसंयुक्तंदक्षिणाघृत
संयुतं अथजीर्णदोरकदानमंत्रः अनंतःप्रतिगृह्णातिअनंतोवैददातिच अनंतस्तारकोभाभ्यामनंतायनमोनमः इतिदद्यात् ततः
यथाशक्तिब्राह्मणान्भोजयेत् अनेनकृतपूजनेनश्रीमदनंतःप्रीयतां इतिपूजाविधिः अथकथा सूतउवा॰ पुरातुजान्हवीतीरेय
सौधर्मपराक्रमः जरासंधवधार्थायराजसूयमुपाक्रमत् कृष्णेनसहधर्मात्मासौभीमार्जुनसमन्वितः यज्ञशालांप्रकुर्वीतमहेंद्रालयसन्निभां
यज्ञार्थान्भूपतीन्सर्वान्समानीयप्रयत्नतः गांधारीतनयोराजाएकदानृपनंदनः दुर्योधनइतिख्यातःसमागत्यमखालयं दृष्ट्वादुर्यो

धनेनात्र भांगणंजलसन्निभं ऊर्ध्वंकृत्वातुवस्त्राणितत्रगच्छन्शनैःशनैः स्मितवक्त्रास्तनाःसर्वाद्रौपद्यादिवरांगनाः दुर्योधनस्ततोगच्छन्जल
मध्येपपातह पुनःसर्वेनृपास्त्वेवंक्षयस्तपोधनाः उपहासंचचक्रुस्ताद्रौपद्यादिस्फलोचनाः महाराजाधिराजासौमहाक्रोधपरायणः
विनिर्गत्यस्वकंराष्ट्रमातुलेनाहतोनृपः तस्मिन्कालेतुशकुनिःप्रोवाचमधुरंवचः शृणुराजन्महारोषपुरतःकार्यगौरवात् गंतुमुत्तिष्ठराजें
द्रसत्रात्स्वसदनंप्रति तथेत्युक्त्वामहाराजासमागत्यमखालयात् विनिर्गच्छन्नृपाःसर्वेत्यक्त्वायज्ञंस्वराष्ट्रकं राजभिःससमागत्यदु
र्योधनगजाह्वयं आनीयपांडुपुत्राणांधर्मभीमार्जुनान्वरान् द्यूतारंभंचकुरुतस्वराज्यंप्राप्नुयात्ततः द्यूतेनैवजिताःसर्वेपांडवावीतक
ल्मषाः ततोरण्यांतरेगत्वावर्ततेवनचारिणः ततोवृत्तांतमापन्नोभ्रातृभिःसहपांडवः सूतउवाच अरण्येवर्तमानास्तेपांडवादुःख
कर्शिताः कृष्णांदृष्ट्वामहात्मानंप्रणिपत्ययथाक्रमं युधिष्ठिरउवाच अहंदुःखीहसंजातोभ्रातृभिःपरिवारितः कथंमुक्तिर्वदास्मा
कमनंताद्दुःखसागरात् कंदेवंपूजयिष्यामिराज्यंप्राप्स्याम्यनुत्तमं अथवाकिंव्रतंकृत्वात्वत्प्रसादाद्भवेद्धितं श्रीकृष्णउ० अनंतव्रत
मस्त्येकंतिथावस्यामनुत्तमं सर्वपापहरंनृणांस्त्रीणांचैवयुधिष्ठिर शुक्लपक्षेचतुर्दश्यांमासिभाद्रपदेभवेत् तस्यानुष्ठानमात्रे
णसर्वपापंव्यपोहति युधिष्ठिरउ० कृष्णकोयमनंतेतिप्रोच्यतेयस्त्वयाविभो किंशेषनागआहोस्विदनंतस्तक्षकःस्मृतः परमा
त्माथवानंतउताहोब्रह्मगीयते कएषोनंतसंज्ञोवैतथ्यंमेब्रूहिकेशव कृष्णउवाच अनंतइत्यहंपार्थममरूपंनिबोधतत् आदित्या-

ब्र.रा
२६९

दिग्रहात्मासौयः कालइतिपठ्यते कलाकाष्ठामुहूर्तादिदिवारात्रिशरीरवान् पक्षमासर्तुऋक्षाणियुगकालव्यवस्थया योयंकालोमयाख्या-
तोसोनंतइतिकीर्त्यते सोहंकृष्णोवतीर्णोत्रभूभारोत्तारणायच दानवानांवधार्थायवसुदेवकुलोद्भवं मांविद्धिसततंपार्थसाधूनांपा-
लनायच अनादिमध्यनिधनंकृष्णंविष्णुंहरिंशिवं वैकुंठभास्करसोमसर्वव्यापिनमीश्वरं विश्वरूपंमहाबाहोयोगिध्येयमनुत्तमं
विश्वरूपमनंतंचयस्मिन्निंद्राश्चतुर्दश वसवोद्वादशादित्यारुद्राएकादशस्मृताः सप्तर्षयःसमुद्राश्चपर्वतासरितोद्रुमाः नक्षत्रा-
णिदिशोभूमिःपातालंभूर्भुवादिकं माकुरुष्वात्रसंदेहंसोहंपार्थनसंशयः युधिष्ठिरउवा॰ अनंतव्रतमाहात्म्यंविधिंवदविदांवर
किंपुण्यंकिंफलंचास्यअनुष्ठानवतांनृणां केनचादौपुराचीर्णंमर्त्यकेनप्रकाशितं एवंसविस्तरंसर्वंब्रूह्यनंतव्रतंमम कृष्णउवाच
आसीत्पुराकृतयुगेसुमंतुर्नामवैद्विजः वसिष्ठगोत्रसंभूतांसुरूपांचभृगोःसुतां दीक्षानाम्नींचोपयेमेवेदोक्तविधिनानृप तस्याः
कालेनसंजाताडुहितानंतलक्षणा शीलानाम्नीसुशीलासावर्धतेपितृवेश्मनि मातात्चतस्याःकालेनज्वरदाहेनपीडिता विनष्टासा
नदीतोयेयथोस्वर्गंपतिव्रता सुमंतुस्तुततोन्यांवैधर्मपुंसःसुतांपुनः उपयेमेविधानेनदुःशीलांनाममनामतः दुःशीलांकर्कशांचंडीं
नित्यंकलहकारिणीं सापिशीलापितुर्गेहेगृहार्चनपराबभौ कुड्यस्तंभबहिर्द्वारदेहलीतोरणादिषु वर्णकैश्चित्रमकरोन्नीलपीत
सितासितैः स्वस्तिकैःशंखपद्मैश्चअर्चयंतीपुनःपुनः ततःकालेबहुगतेकौमारवशवर्तिनी एवंसावर्धतेशीलापितृवेश्मनिमंगला

च.दे.
१४

२६९

तांदृष्ट्वाचिंतयामासवराननुगुणान्सुवि कस्मैदेयामयाकन्याविचार्येतिसदुःखितः एतस्मिन्नेवकालेतुमुनिर्वेदविदांवरः कन्यार्थीचाग
तः श्रीमान्कौंडिण्योमुनिसत्तमः उवाचरूपसंपन्नांत्वदीयांतनयांवृणे पितादादौद्विजेंद्रायकौंडिण्यायशुभेदिने गृह्योक्तविधिनापा-
र्थविवाहमकरोत्तदा मंगलाचारनिर्घोषंतत्रकुर्वंतियोषितः ब्राह्मणाःस्वस्तिवचनंजयघोषंचबंदिनः निर्वर्त्योद्वाहिकंसर्वंप्रोक्तवान्कर्क
शांद्विजः सुमंतुरुवाच किंचिद्द्रव्यादिकंदेयंजामातुःपरितोषकं तच्छ्रुत्वाकर्कशाक्रुद्धाप्रोत्सार्यगृहमंजनं पेटकेसुस्थिरंबध्वास्वगृ
हंगम्यतामिति उवाचवित्तंनैवास्तिगृहेपश्ययदिस्थितं तच्छ्रुत्वाविमनाःपार्थसंयतात्मामुनिस्तदा भोज्यावशिष्टचूर्णेनपाथेयंच
चकारसा कौंडिण्योपिविवाह्यैनांपथिगच्छन्शनैःशनैः शीलांसुमंतुराहायनवोढांगोरथेनहि ददर्शयमुनांपुण्यांतांसुत्तीर्यतत्तटेर
थं संस्थाप्यावश्यकंकर्तुंगतःशिष्यान्नियुज्यवै मध्यान्हेभोज्यवेलायांससुत्तीर्यसरित्तटे ददर्शशीलासास्त्रीणांसमूहंरक्तवाससां
चतुर्दश्यामर्चयंतंभक्त्यादेवंजनार्दनं उपगम्यशनैःशीलापप्रच्छस्त्रीकदंबकं आर्याःकिमेतन्मेब्रूतकिंनामव्रतमीदृशं ताऊचुर्यो
षितस्तांतुशीलांशीलविभूषणां अनंतव्रतमेतद्धिव्रतेनंतस्तुपूज्यते साब्रवीदहमप्येतत्करिष्येव्रतमुत्तमं विधानंकीदृशंतत्रकिंदानं-
कोत्रपूज्यते स्त्रियऊचुः शीलेसदन्नप्रस्थस्यपुन्नाम्नासंस्कृतस्यच अर्धंविप्रायदातव्यमर्धमात्मनियोजयेत् शक्त्याचदक्षिणादद्या
द्वित्तशाठ्यविवर्जितः कर्तव्यंयत्सरित्तीरेकथांश्रुत्वाहरेरिमां शेषंकुशमयंकृत्वावंशपात्रेनिधायच स्नात्वानंतंसमभ्यर्च्यमंडले-

गंधदीपकैः पुष्पैर्धूपैश्चनैवेद्यैर्नानापक्वान्नसंयुतैः तस्याग्रतो दृढंसूत्रंकुंकुमाक्तंसदोरकं चतुर्दशग्रंथियुतंवामेकरतलेन्यसेत् अनंत
संसारमहासमुद्रमग्नंसमभ्युद्धरवासुदेव अनंतरूपेविनियोजयस्वह्यनंतसूत्रायनमोनमस्ते अनंतंत्वकरेबध्वाभोक्तव्यंस्वस्थ-
मानसैः ध्यात्वानारायणंदेवमनंतंविश्वरूपिणं भुक्त्वांतेव्रजेद्वेश्मभद्रेप्रोक्तंव्रतंतव कृष्णउवाच एवमाकर्ण्यराजेंद्रसत्कृष्टेनांत
रात्मना सापिचक्रेव्रतंशीलाकरेबध्वासदोरकं चतुर्दशग्रंथियुतंवामेबाहौयथोदितं पाथेयमर्धविप्रायदत्वाभुक्त्वास्वयंततः पु
नर्जगामसंहृष्टागोरथेनस्वकंगृहं भर्त्रासहैववशनकैः प्रत्ययस्तत्क्षणादभूत् तेनानंतव्रतेनास्यबभौगोधनसंकुलं गृहाश्रमंश्रि
याजुष्टंधनधान्यसमन्वितं आकुलंव्याकुलंरम्यंसर्वदातिथिपूजनैः सापिमाणिक्यकांचीभिर्मुक्ताहारैर्विभूषिता देवांगनेवसंप
न्नासावित्रीप्रतिमाभवत् विचचारगृहेभर्तुःसमीपेस्वरूपिणी कदाचिदुपविष्टायादृष्टोबद्धःसदोरकः शीलायाहस्तमूलेतु
भर्त्रातस्याद्विजन्मना किमिदंदोरकंशीलेममवश्यायकल्पितं धृतंसदोरकंत्वंतत्किमर्थंब्रूहिनत्वतः शीलोवाचयस्यप्रसादात्सकलाधनधा
न्यादिसंपदः लभ्यंतेमानवैश्चापिसोनंतोयंमयाधृतः शीलायास्तद्वचःश्रुत्वाभर्त्रातेनद्विजन्मना श्रीमदांधेनकौंडिन्यसाक्षेपंत्रो
टितस्तदा कोनंतइतिमूढेनजल्पतापापकारिणा क्षिप्तोज्वालाकुलेवह्नौहाहाहाकृत्वाप्रधावती शीलागृहीत्वातत्सूत्रंक्षीरमध्येसमाक्षि
पत् तेनकर्मविपाकेनसाश्रीस्तस्यक्षयंगता गोधनंतस्करैर्नीतंगृहंदग्धंधनंगतं यद्यथैवागतंगेहेतत्तथैवपुनर्गतं स्वजनैःकलहो

नित्यंबंधुभिस्ताडनंतथा अनंताक्षेपदोषेण दारिद्र्यंपतितंगृहे नकश्चिद्ददतेलोकेलेनसार्द्धंयुधिष्ठिर शरीरेणातिसंतप्तोमनसाप्यतिदुः
खितः निर्वेदंपरमंप्राप्तः कौंडिण्यःप्राहतांप्रियां कौंडिण्यउवाच शीलेममेदमुत्पन्नंसहसाशोककारणं येनातिदुःखमस्माकंजा-
तःसर्वधनक्षयः स्वजनैःकलहोगेहेनकश्चिन्मांप्रभाषते शरीरेनित्यसंतापःखेदश्चेतसिदारुणः जानासिदुर्नयःकोन्नकिंकृतंत्वास्म
त्कृतंभवेत् शीलोवाच प्रत्युवाचाथतंशीलासम्यक्शीलाशीलमंडना प्रायोनंतकृताक्षेपपापसंभवजंफलं भविष्यतिमहाभागानदर्थ-
यत्नमाचर एवमुक्तःसविप्रर्षिर्जगाममनसाहरिं निर्वेदंनिर्जगामाथकौंडिण्यःप्रगतोवनं तपसेकृतसंकल्पोवायुभक्षोद्विजोत्तमः
मनसाध्यायमानस्तंद्रक्ष्यामिचनंतंविभुं यस्यप्रसादात्संजातमाक्षेपान्निधनंगतं धनादिकंममातीवसंखदुःखप्रदायकं एवंसं-
चिंतयन्सोथबभ्रामगहनेवने तत्रापश्यन्महाचूतंपुष्पितंफलितंद्रुमं वर्जितंपक्षिसंघातैःकीटकोटिसमावृतं तमपृच्छद्द्विजोनंतः
कच्चिद्दृष्टोमहाद्रुम ब्रूहिसौम्यममातीवदुःखंचेतसिवर्तते सोब्रवीद्द्रुमनानंतोक्वचिद्दृष्टोमयाद्विज एवंनिराकृतस्तेनसंजगामाथ
दुःखितः द्रक्ष्यामीतिगच्छन्सगांददर्शसवत्सकां वनमध्येप्रधावंतीमितश्चेतश्चपांडव सोब्रवीद्धेनुकेब्रूहियद्यनंतस्त्वयेक्षि
तः गौतमप्युवाच गौरुवाचाथकौंडिण्यंनानंतंवेद्म्यहंद्विज ततोव्रजंददर्शाग्रेवृषभंशाद्वलेस्थितं दृष्ट्वापप्रच्छगोस्वामिन्ननंतो
वीक्षितस्त्वया वृषभस्तमुवाचेदंनानंतोवीक्षितोमया ततोव्रजन्ददर्शाग्रेरम्यंपुष्करिणीद्वयम् अन्योन्यजलकल्लोलैर्वीचीपर्यंतसंगतं

छन्नंकमलकल्हारैःकुमुदोत्पलमंडितं सेवितंभ्रमरैर्हंसैश्चक्रकारंडवैर्बकैः तेऽपृच्छद्द्विजोनंतोयुवाभ्यांनोपलक्षितः ऊचतुस्तोपुष्क
रिण्योनानंतोवीक्षितोद्विज ततोव्रजन्ददर्शाग्रेगर्दभंकुंजरंतथा तावपृच्छद्द्विजोनंतोभवद्भ्यांनोपलक्षितः एवंसपृच्छन्नथाशास्त-
त्रैवनिषसादह कौंडिण्योविक्लवीभूतोनिराशोजीवितेनृप दीर्घमुष्णंचनिश्वस्यपपातभुविभारत प्राप्यसंज्ञामनंतेतिजल्पन्नुत्थाय-
सद्द्विजः नूनंत्यक्ष्याम्यहंप्राणानितिसंकल्प्यचेतसि यावदुद्बंधनंवृक्षेचक्रेतावद्युधिष्ठिर कृपयानंतदेवोपिप्रत्यक्षःसमजायत वृद्धब्रा
ह्मणरूपेणइतएहीत्युवाचतं प्रगृह्यदक्षिणेपाणौगुहायांप्रविवेशतं स्वांपुरींदर्शयामासदिव्यनारीनरैर्युतां यस्यांविनिष्टमात्मानंदि-
व्यसिंहासनेशुभे पार्श्वस्थशंखचक्राब्जगदागरुडशोभितं दर्शयामासविप्रायविश्वरूपमनंतकं विभूतिभेदैश्चानंतैरनंतममितौज
सं कौतुकेनविराजंतंवनमालाविभूषितं तंदृष्ट्वानादृशंरूपमनंतमपराजितं वंद्यमानोजगादोच्चैर्जयशब्दपुरःसरं पापोहंपापक
र्माहंपापात्मापापसंभवः त्राहिमांपुंडरीकाक्षसर्वपापहरोभव तच्छ्रुत्वानंतदेवेशः प्राहस्निग्धयागिरा माभैस्त्वंब्रूहिविप्रेंद्र
यत्तेमनसिवर्तते कौंडिण्यउवा० मयाभूत्यवलिप्तेनत्रोटितोनंतदोरकः तेनपापविपाकेनभूतिर्मेप्रलयंगता स्वजनैःकलहोगेहेन
कश्चिन्मांप्रभाषते निर्वेदाद्भ्रमतेरण्येत्वद्दर्शनकांक्षया कृपयादेवदेवेशत्वयात्मासंप्रदर्शितः तस्यपापस्यमेशांतिंकारुण्याद्वक्तु
मर्हसि श्रीकृष्णउ० तच्छ्रुत्वानंतदेवेशउवाचद्विजसत्तमं भक्त्यासंतोषितोदेवःकिंनदद्याद्युधिष्ठिर अनंतउवा० स्वगृहंगच्छ-

कौंडिण्यमाविलंबंकुरुद्विज चरानंतव्रतंभक्त्यानववर्षाणिपंचच सर्वपापविशुद्धात्माप्राप्स्यसेसिद्धिमुत्तमां पुत्रपौत्रान्समुत्पाद्यभुक्त्वाभो
गान्यथेप्सितान् अंतेमत्स्मरणंप्राप्यमामुपैष्यस्यसंशयं अन्यंचतेवरंदद्मिसर्वलोकोपकारकं इदमाख्यानकवरंशीलानंतव्रतादिकम्
करिष्यंतिनरोयस्तुकुर्वन्व्रतमिदंशुभं सोचिरात्पापनिर्मुक्तः प्राप्नोतिपरमांगतिं गच्छविप्रगृहंशीघ्रंयथायेनागतोह्यसि कौंडि-
ण्यउवाच स्वामिन्पृच्छामितेब्रूहिकिंचित्कौतूहलंमया अरण्येभ्रमताद्दृष्टंतद्वदस्वजगद्गुरो यश्चूतवृक्षः कस्तत्रकागौः कोवृषभस्त
था कमलोत्पलकल्हारैःशोभितेसरसीमनोहरे मयादृष्टमहारण्येकिंतत्पुष्करिणीद्वयं कःखरःकुंजरःकोसौकोसौदृष्टोद्विजोत्तमः अ
नंतउवाच सचूतवृक्षोविप्रोसौविद्यावेदविशारदः विद्यानदत्ताशिष्येभ्यस्तेनासौतरुतांगतः यागौर्वसुंधरादृष्टापूर्वंसाबीजहारिणी वृ
षोधर्मस्त्वयादृष्टः शाद्वलंसत्यमास्थितः धर्माधर्मव्यवस्थानंतत्रपुष्करिणीद्वयं ब्राह्मण्यौकेचिदप्यास्तांभगिन्यौतेपरस्परं धर्माधर्मा
दियत्किंचित्तन्निवेदयतोमिथः विप्रायवेदविदुषेनदत्तंदुर्बलायवै भिक्षादत्तानचार्थिभ्यस्तेनपापेनकर्मणा वीचीकल्लोलमालाभिर्गच्छ
तस्तेपरस्परं खरःक्रोधस्तथादृष्टःकुंजरोमदउच्यते ब्राह्मणोसावनंतोहंगुहासंसारगह्वरं इत्युक्त्वादेवदेवेशस्तत्रैवांतरधीयत स्व
प्नप्रायंततोदृष्ट्वाननतःस्वगृहमागतः कृत्वानंतव्रतंसम्यक्नववर्षाणिपंचच भुक्त्वासर्वमनंतेनयथोक्तंपांडुनंदन अंतेचस्मरणंप्राप्यग
तोनंतपुरेद्विजः तथात्वमपिराजर्षेकथांशृण्वन्व्रतंकुरु प्राप्स्यसेचिंतितंसर्वमनंतस्यवचोयथा यद्वच्चतुर्दशेवर्षेफलंप्राप्तंद्विजन्मना

व्र॰रा॰
२७२

वर्षैकेनतदाप्नोति कृत्वोपाख्यानकव्रतं एतत्तेकथितंभूपव्रतानामुत्तमंव्रतं यच्छ्रुत्वासर्वपापेभ्योमुच्यतेनात्रसंशयः येपिशृण्वंतिसततं-
पठ्यमानंपठंतिये तेपिपापविनिर्मुक्ताःप्राप्स्यंतिचहरेःपदं संसारगह्वरगुहासुसुखंविहर्तुंवांछंतियेकुरुकुलोद्भवशुद्धसत्वाः संपू-
ज्यचत्रिभुवनेशमनंतदेवंबध्नंतिदक्षिणकरेवरदोरकंते इतिअनंतव्रतकथासमाप्ता अथानंतव्रतोद्यापनं युधिष्ठिरउवाच
त्वत्प्रसादाच्छ्रुतंकृष्णमयानंतव्रतंशुभं इदानींब्रूहिमेनंतव्रतोद्यापनमुत्तमं कृष्णउ॰ शृणुपांडववक्ष्यामिव्रतोद्यापनमुत्तमं कृतेनस
फलंपार्थव्रतंभवतिनिश्चितं आदौमध्येतथाचांतेव्रतस्योद्यापनंचरेत् यदिवित्तस्यवित्तस्यसंपत्तिःशुभकालता तदाचोद्यापनंकु-
र्याच्छुभलग्नेशुभेदिने चतुर्दशेषुवर्षेषुमुख्यमुद्यापनंव्रतं कायशुद्धिस्त्रयोदश्यांब्रह्मचारीव्रतीततः एकभक्तेननियमंकृत्वाभक्ति-
समन्वितः ततःप्रातश्चतुर्दश्यांस्नात्वातीर्थेशुभेशुचिः संकल्पयेद्व्रमाक्रांतदेशकालावनुस्मरन् ततोनद्यांदेवखातेतीर्थेप्रस्रवणेतथा
सर्वौषधीःसर्वगंधैस्तिलकल्कैरथामलैः वेदोक्तविधिनास्नायात्संतर्प्यपितृदेवताः ततोगृहंसमागत्यवेदींकृत्वासुशोभनां तन्मध्ये
ह्युपविश्याथदेशकालौस्मरेत्ततः गणेशंपूजयित्वाथपुण्याहंवाचयेद्द्विजैः आचार्यंचसपत्नीकंवरयेद्वेदपारगं ब्राह्मणंचसदस्यंच
ऋत्विजश्चचतुर्दश सर्वान्वस्त्रैरलंकारैर्जलपात्रादिनार्चयेत् तत्रालिखेन्मंडलकंपंचवर्णैःसुशोभनैः विरच्यसर्वतोभद्रंमंडपांतस्तु
मध्यगं ब्रह्मादिदेवतास्तस्मिन्नावाह्यापिचपूजयेत् तन्मध्येपंकजेधान्यंयथाशक्तिक्षिपेत्ततः सौवर्णंराजतंवापिताम्रजंवापिमृ

च॰दं॰
१८

२७२

न्मयं तस्योपरिन्यसेत्कुंभमव्रणंसुनवंदृढं तस्मिन्जलंगंधपुष्पफलपल्लवमृत्तिकाः क्षिप्त्वारत्नंहिरण्यंचवस्त्रयुग्मेनवेष्टयेत् सौवर्णंराजतंता
म्रंमृन्मयंवंशजंतथा पात्रंतदुपरिन्यस्यपट्टकूलादिकंशुभं लिखेदष्टदलंतत्रचंदनेनसुगंधिना पद्मंविरच्यतन्मध्येनंतमूर्तिंविधायच पलेन
वातदर्धेनमाषकेणापिवाकृतां सौवर्णीरमयायुक्तांशंखचक्रगदाब्जकां आवाहनाद्युपचारैःपूजयेत्सुसमाहितः पंचामृतेनस्नपयेत्ततश्च
वसनद्वयं पट्टकूलादिकंपीतमर्चयित्वार्चयेद्व्रती पुष्पधूपैस्तथादीपैर्नैवेद्यैश्चसमपूजयेत् पुनःपुष्पाणिसंगृह्य पूजयेन्नामभिःक्रमात्
अनंतायनमःपादौगुल्फौसंकर्षणायच कालात्मनेजानुनीचजघनेविश्वरूपिणे कटींवैविश्वरूपायमेढ्रंवैविश्वसाक्षिणे नाभिंतुपद्मना
भायहृदयंपरमात्मने कंठंश्रीकंठनाथायबाहूसर्वास्त्रधारिणे मुखंतुवाचस्पतयेचक्षुषीकपिलायच ललाटेकेशवायेतिशिरःसर्वात्मनेत
था नमःपादौपूजयामीत्येवमादिसपूजयेत् एवंसंपूज्यविधिना रात्रौजागरणंचरेत् गीतवादित्रनृत्यादिपुराणश्रवणान्वितं प्रतिसां
च्यंप्रकुर्वीतपूजांगंधादिनाहरेः नानापक्वानिभक्ष्याणिखाद्यानिचनिवेदयेत् ततःप्रभातसमयेस्नात्वाचार्यादिभिःसह अनंतंपूजयेत्
प्राग्वत्जुहुयात्तस्मिन्ततः कुंडेवास्थंडिलेकुर्यादग्निस्थापनपूर्वकम् आज्यभागांतमाचार्यःस्वगृह्योक्तविधानतः ततोश्वत्थसमिद्भि
श्चतद्भावेन्याभिरेवच दुग्धमध्वाज्यदधिभिस्तिलैर्वापायसेनच आज्येनचप्रतिद्रव्यमष्टोत्तरसहस्रकं अष्टोत्तरशतंवाष्टावि
शतिंजुहुयात्क्रमात् अतोदेवेतिमंत्रेणस्त्रीणांवैनाममंत्रतः प्रणवादिचतुर्थ्यंतंनमोंतानंतनामतः नाममंत्रैश्चजुहुयाच्चतुर्दशभि

रादशाद्रात् पुरुषसूक्तेनजुहुयादतोदेवेतिवापुनः शतमष्टोत्तरंयावत्प्रत्येकंजुहुयाच्चरुः चरुहोमस्तथाकार्योमंत्रैरेतैर्विचक्षणः एतैर्वक्ष्य
माणमंत्रैर्जुहुयाच्चरुणातथा ॐ अनंतायस्वाहा ॐ कालाय॰ ॐ अहोरात्राय॰ ॐ अर्धमासाय॰ ॐ मासाय॰ ॐ ऋतुभ्य॰ ॐ परिव-
त्सराय॰ ॐ कपिलाय॰ ॐ शेषाय॰ ॐ कालात्मनेन॰ ॐ उषसेन॰ ॐ काष्ठाय॰ ॐ मुहूर्ताय॰ ॐ शेषाय॰ ॐ भूरग्नयेचपृथिव्येचमह
तेचस्वाहा भुवोवायवेचांतरिक्षायचमहतेचस्वा॰ ॐ स्वरादित्यायचादिवेचमहतेचस्वाहा ॐ भूर्भुवःस्वश्चंद्रमसेचनक्षत्रेभ्यश्चदि
ग्भ्यश्चमहतेचस्वाहा आज्यतिलैःस्विष्टकृतंप्रजापतिभ्योजुहुयात् समिदादिभिरेवचप्रत्येकंजुहुयात्तुक्रमात् एवंस्विष्टकृदादीनिपू
र्णपात्रांतमाचरेत् जपेत्पुरुषसूक्तंतुस्मृत्वानंतंस्वशोत्तमं पूर्णाहुतिंचजुहुयाद्धोमांतेधाममित्यृचा होमशेषंसमाप्याथकृत्वाभ्यायुषमे
वच ततोवैलोकपालांश्चग्रहान्पूज्ययथाक्रमं गीतवादित्रनिनदैर्दत्वापूर्णाहुतिंप्रति केचिन्मतेरात्रिहोमः पूजयित्वाहरिंदेवमाचार्यंपूजये
त्ततः परिपूज्यसपत्नीकंवस्त्रालंकारभूषणैः वस्त्रालंकारभूषाद्यैस्ततोधेनुंसमर्चयेत् पयस्विनींसुशीलांचवस्त्रालंकारभूषितां स्वर्णशृं
गींरौप्यखुरींताम्रपृष्ठींसुशोभनाम् कांस्यदोहांरत्नपुच्छांनिष्ककंठींसवत्सकां सुरभिर्वैष्णवीमातानित्यंविष्णुपदेस्थिता ग्रासंगृ
हाणमयादत्तंगोमातस्त्रातुमर्हसि गवामंगेषुतिष्ठंतिभुवनानिचतुर्दश यस्मात्तस्माच्छुभंमेस्यादिहलोकेपरत्रच गावोमेअग्रतःसंतुगा
वोमेसंतुपृष्ठतः गावोमेहृदयेसंतुगवांमध्येवसाम्यहं मंत्रेणानेनसंपूज्यआचार्यायनिवेदयेत् गोदानस्यविधानार्थंदद्यात्स्वर्णंय

थाविधि अनंतं परिवारं च ब्राह्मणाय निवेदयेत् ऋत्विजः पूजयित्वाथ तेभ्यो दद्याच्च दक्षिणां चतुर्दशैव कुंभांश्च पक्वान्नपरिपूरितान् वस्त्रो
पवीते दद्याच्च अनंतः प्रीयतामिति आचार्यादीन् भोजयित्वा पूर्णतां वाचयेत्ततः अथानंतं विसृज्याथ परिगृह्णीयादाशिषस्ततः भक्तियु-
क्तो नमस्कृत्य ब्राह्मणान् क्षमापयेत् ततोऽवशेषं बंधुयुतो भुंजीयात्सुसमाहितः एवं कृतेनंतफलं दातानंतो भवेन्नृणां इति श्रीभ-
विष्योत्तरपु॰ अनंतव्रतोद्या॰ सं अथ नष्टदोरकविधिः युधिष्ठिर उवा॰ अनंतव्रतमाहात्म्यं कृत्स्नं कृष्णात्वयोदितं भगवन् दोररू
पेण भाग्यदोसि महात्मनां दोरं प्रमादतो नष्टं यदि स्याद्विदितं जनैः तदा किं करणीयं स्यादुतं त्रैलोक्यपावनं कृष्णा उवा॰ दोरे नष्टे महान्
दोषः प्रभवेद्व्रतिनामिह तस्मात्तद्दोषनाशार्थं प्रायश्चित्तं विधीयते गुरुं प्रदक्षिणीकृत्य नमस्कृत्य समाहितः विज्ञाप्य दोरनाशं च
कृत्वा दोरं व्रती ततः हव्यवाहं प्रतिष्ठाप्य तस्मिन् ध्यात्वा हरिं परं आज्यमग्नावधिश्रित्य दद्याद्विप्राय चासनं अष्टोत्तरशतं हुत्वा मूल
मंत्रेण वैष्णवं नाममंत्रेण तत्कृत्वा द्वादशाक्षरसंयुतं केशवादि सकृद्धुत्वा प्रायश्चित्तं तु शक्तितः पूर्णाहुतिं ततो हुत्वा होमशेषं समाप
येत् व्रतच्छिद्रं जपच्छिद्रं यच्छिद्रं व्रतकर्मणि वचनाद्भूमिदेवानां सर्वं संपूर्णतां व्रजेत् मंत्रहीनं क्रियाहीनं भक्तिहीनं जनार्दन यत्पूजि
तं मया देव परिपूर्णं तदस्तु मे आचार्यपूजनं कार्यं दक्षिणाद्यैर्नृपोत्तम एवं शांतिविधिं कृत्वा पूर्ववद्व्रतमाचरेत् तस्मात्सर्वप्रयत्नेन प्रा
यश्चित्तं चरेत्सुधीः इति भवि॰ नष्टदोरकविधिः अथ भाद्रपदशुक्लचतुर्दश्यां कार्तिक्यां वा माघ्यां वा वैशाख्यां वा कदलीव्रतं हेमा

द्रोणभविष्योत्तरे सापूर्वाणह्व्यापिनी ग्राह्या अथरंभारोपणविधिः रंभावृक्षंरोपयित्वास्वहस्तेनचतं पुनः वर्षमेकंतुसंपूज्यउदकुंभे
नसिंचयेत् यावत्प्रसवपर्यंतंपूजयेच्चयथाविधि पूर्वस्यांतुयथासम्यगुत्तरस्यांतथैवच दक्षिणेपश्चिमेहानीरंभाप्रसवलक्षणम्
अथकदलीव्रतविधिः यदावित्तस्यचित्तस्यसंपत्तिःशुभकालतः तदाचोद्यापनंकुर्याच्छुभलग्नेशुभेदिने कायशुद्धिस्त्रियोदश्याब्र
ह्मचारिव्रतीकृती एकभक्तेननियमंकृत्वाभक्तिसमन्वितः ततःप्रातश्चतुर्दश्यांस्नात्वातीर्थेशुभेशुचिः उपवासंतुसंकल्प्यदेशका
लादितुस्मरन् ततोगृहंसमागत्यवेदींकृत्वासुशोभनां तन्मध्येउपविश्याथदेशकालौस्मरेत्ततः गणेशंपूजयित्वाथपुण्याहंवाचये
द्विजैः आचार्यंचसपत्नीकंवरयेद्वेदपारगं गोचर्ममात्रंसंलिप्यसर्वतोमंडलंशुभं लिखेत्सम्यक्तथावर्णैर्नीलपीतैःसितासितैः विर
च्यलिंगतोभद्रंमंडपस्यतुमध्यगं ब्रह्माद्यादेवतास्तत्रस्थापयित्वाप्रपूजयेत् अथवास्वस्तिकंकुर्यात्पद्ममष्टदलंतुवा ततःसायंसुप
र्णांतुसम्यग्दृष्ट्वातांसुशोभनां समूलांकदलींस्थाप्यपूजयेत्तांयथाविधि उत्तमोदकमानीयसेचयेत्तांसमाहितः यथारंभेविवृद्धिस्ते
शाखादीनांसदाभवेत् तथावर्धयमांदेविसेचये पार्वतीप्रिये इतिसेचनमंत्रः तन्मध्येपंचकंधान्यंयथाशक्तिक्षिपेत्ततः सौवर्णंरा
जतंवापिताम्रजंवापिमृन्मयं कुंभंन्यसेत्तदुपरिअव्रणंसुनवंदृढं तस्मिन्जलंगंधपुष्पंफलपल्लवमृत्तिकाः सिक्त्वारत्नंहिरण्यंचवस्त्र
युग्मेनवेष्टयेत् सौवर्णंराजतंताम्रंमृन्मयंवंशजंतथा पात्रंतदुपरिन्यस्यपट्टकूलादिकंशुभं लिखेदष्टदलंतत्रचंदनेनसुगंधिना पत्रे

नवानदर्धेनमाषकेणापिवानथा उमामहेश्वरौकृत्वामूलमंत्रेणपूजयेत् इतिकदलीव्रतविधिः अथउमामहेश्वरसहितकदलीपूजनम्
मासपक्षाद्युल्लिख्यममपापनिर्मुक्त्युत्तमसिद्धिपुत्रपौत्रादिविधव्योश्मितभोगधनधान्यप्राप्तयेउमामहेश्वरसहितकदलीपूजनंकरिष्ये त
था कलशार्चनंचकरिष्ये कदल्यागच्छहेदेविसौभाग्यफलदायिनि रूपंदेहिजयंदेहियशोदेहिसुनिश्चितं आगच्छवरदेदेविशं
करेणमहेश्वरि करिष्यमाणांपूजांमेगृहाणानुग्रहंकुरु आवाहनं कार्तस्वरमयंदिव्यंनानामणिगणान्वितं अधितिष्ठमहादेविशिवे
नसहपार्वति आसनं दूर्वाक्षतादिभिर्युक्तंस्वर्णपात्रेस्थितंशुभं पाद्यार्थंकल्पितंभक्त्यागृहाणपरमेश्वरि पाद्यं अर्घ्यपात्रेस्थितं-
तोयंफलपुष्पसमन्वितं अर्घ्यंगृहाणमेदेविभक्त्यादत्तंशिवप्रिये अर्घ्यं कर्पूरोशीरसुरभिशीतलंविमलंजलं गंगायास्तुसमानी
तंगृहाणाचमनीयकं आचमनीयं गंगादिसर्वतीर्थेभ्योमयाप्रार्थनयाहृतं स्नानार्थंतुमयादेविगृहाणेदंसुरेश्वरि स्नानं यथा
रंभेविघ्नहिस्तेशारवादीनांसदाभवेत् तथावर्धयमांदेविसेचनात्पार्वतीप्रिये सेचनं वस्त्रंशुभ्रमयंदिव्यंकुंकुमाक्तंसुशोभनं गृ
हाणाच्छादनंदेवितथाच्छादयमांसदा वस्त्रं उपवीतं कंचुकीमुपवस्त्रंचनानारत्नैःसमन्वितम् गृहाणत्वंमयादत्तंपार्वत्यैचनमोस्तुते कं
चुकीं उपव० गंगादिसर्वतीर्थेभ्योमयानीतंसुनिर्मलं तोयमेतत्सुरवस्पर्शंगृहाणाचमनीयकं आचम० श्रीखंडंचंदनंदिव्यंगं
धाढ्यंसुमनोहरं विलेपनंगृहाणेदंरुद्राणिप्रियवल्लभे चंदनं अक्षताश्चसुर० अक्षतां हरिद्राकुंकुमं सौभाग्यद्रव्या० मालतीचंप

कादीनि शतपत्रादिकानि च सुगंधीनि गृहाण त्वं पूजार्थं सुमनांसि च पुष्पाणि अगरुं गुग्गुलुं धूपं दशांगं सुमनोहरं गृहाणोमं त्वमिकरं घ्राणास्य
दर्पितं परं धूपं चक्षुर्दं सर्वलोकानां तिमिरस्य निवारणं आर्तिक्यं कल्पितं भक्त्या गृहाण परमेश्वरि दीपं नानापक्वान्नसंयुक्तं रसैः षड्भिः
समन्वितं नैवेद्यं विविधं भक्त्या कल्पितं त्वं गृहाण मे नैवेद्यं कर्पूरैलालवंगादिनागवल्लीदलान्वितं पूगीफलसमायुक्तं तांबूलं प्रतिगृह्यतां
तांबूलं इदं फलमिति फलं हिरण्यगर्भेति दक्षिणां नीराजयामि देवेशि भक्तानां भयनाशिनि देहि मे सर्वसौभाग्यं शिवेन सहिते न ये
नीराजनं यानि कानि चेति प्रदक्षि॰ आश्रये देवपत्नीनां पूजिते च श्रियास्त्वयं सौभाग्यारोग्यमायुश्च देहि रंभे नमोस्तु ते नमस्कारं त्व
मिंद्राण्या श्रिया नित्यं शंकरस्यापि वल्लभा सतीनां कामदा पूज्या कामान्मे परिपूरय प्रार्थनां इति पूजनं अथ कथा युधिष्ठिर उवा॰
कृष्ण कृष्ण महाबाहो सर्वविद्याविशारद अनाथनाथ विश्वात्मन् दीनदैन्यनिकृंतन त्वमस्माकं परो बंधुस्त्वमस्माकं परं सखा त्वयाभि
रक्षिता नित्यं विचरामोत्र निर्भयाः किंचित्पृच्छामि देवेश कृपां कुरु वदस्व मे यद्व्रतं सर्वधर्मेषु कृते यस्मिन्महत्फलं सौभाग्यारोग्यदं पु
ण्यं धनधान्यविवर्धनं अन्नाच्छादनपुत्रादिवर्धनं श्रीनिकेतनं तन्ममाचक्ष्व भगवन्लोकानामुपकारकं श्रीकृष्ण उ॰ शृणु राजन्प्रवक्ष्या
मि व्रतानामुत्तमं व्रतं यत्कृत्वा सर्वदुःखेभ्यो नारी मुच्येत संकटात् वस्त्रान्नपानविच्छित्तिर्न भवेत्तु कदाचन पुरा मामेत्य वैकांता रुक्मिणी
प्राणवल्लभा प्रणिपत्याब्रवीद्दीना सर्वकामार्थयेशुभा सौभाग्यं मे कथं देव भवेज्जन्मनि जन्मनि सपत्नीनां श्रियं वीक्ष्य स्पृहा मे जा

यत्नेप्रभो इतिप्रियायावचनंश्रुत्वाहंतांसमब्रुवम् रंभाव्रतंकुरुष्वाशु सौभाग्यावाप्तयेशुभे कृतेयस्मिन्व्रतेदेविपरंसौभाग्यमाप्स्यसि इ
तिश्रुत्वावचोदेविरुक्मिणीमामभाषत रंभाव्रतेभवेत्किंमोकोविधिः कस्यपूजनं केनचादौपुराचीर्णंमर्त्यैर्कैनप्रकाशितं रुक्मिण्या
भाषणंश्रुत्वापुनरेवाहमब्रुवं रंभाव्रतविधिंवक्ष्येशृणुदेवियथोदितं गोचर्ममात्रंसंलिप्यसर्वतोलिंगभद्रकं लिखेत्तस्यकुपंचवर्णै-
र्नीलपीतैःसितासितैः ब्रह्माद्यादेवताःसर्वाःस्थापयित्वाप्रपूजयेत् कलशोपरिसंस्थाप्यवेणावेपटलेशुभे उमामहेश्वरौतत्रमूल
मंत्रेणपूजयेत् अथवास्वस्तिकंकृत्वापद्ममष्टदलंतुवै ततःसाग्रांसपर्णांचसम्यग्रक्तांसुशोभनां समूलांकदलींस्थाप्यपूजयेत्तांय-
थाविधि उत्तमोदकमानीयसेचयेत्तांसमाहितः यथारंभेविवृद्धिस्तेशाखादीनांसदाभवेत् तथावर्धयमांदेविसेचनात्पार्वतीप्रिये
सदायथातेप्रसवोवर्धतेकदलीशुभे तथामनोरथानांमेप्रभवोभवतुस्वयं एवंसंपूज्यविधिवद्भक्तियुक्तेनचेतसा रात्रौजागरणंकुर्या
द्गीतवादित्रनिःस्वनैः एवंयाकुरुतेनारीव्रतानामुत्तमंव्रतं भुक्त्वातुविविधान्भोगान्सौभाग्यंविंदतेध्रुवं एवंयाकुरुतेदेविकदलीव्रत
मुत्तमं तस्मात्कुरुविधानेनयथोक्तफलमाप्स्यसि इतिश्रुत्वाविधानेनचकारव्रतमुत्तमं अवापसफलकाममनसायदभीप्सितं अन्यच्च
शृणुराजेंद्रव्रतस्यफलमुत्तमं अत्याश्चर्यकरंपुंसांशृणुष्वावहितोभवान् द्यूतेयदाजितापूर्वंकृष्णानीतासभांप्रति दुःशासनेनदुष्टे
नद्रौपदीमुक्तमूर्धजा आकृष्यमाणेवस्त्रेतुचित्तेमामस्मरत्तदा तूर्णंतत्रगतोराजन्द्रौपद्यास्त्राणनायवै अदृश्योहंतुकृष्णायेव्रतं

व्र०रा
२७६

च०दे०
१४

समुपदिष्टवान् तदाकर्तुमशक्येतुव्रतेस्मिन्राजसत्तम रुक्मिण्याचरितंपूर्वंयदेतद्व्रतमुत्तमम् तस्यपुण्यफलंदत्तंकृष्णायैराजसत्तम तत्का
लमेववस्त्राणांसमृद्धिरभवत्पुरा दुःशासनेनदुष्टेनआक्षिप्तेषुंशुकेषुच प्रादुर्भूतानिवस्त्राणिनानावर्णानिभारत खिन्नोदुःशासनो
पापोविररामाशुकग्रहात् तावद्बभूवुर्वस्त्राणिकदलीगर्भवन्नृप इत्थंव्रतप्रभावोयंयुधिष्ठिरकथितोमया कारयस्वविधानेनपूर्णका
मोभविष्यसि इतिकदलीव्रतकथासं० अथोद्यापनं युधिष्ठिरउवा० कस्मिन्मासेतिथौकस्यामाचरेद्व्रतमुत्तमं कदल्यभावेकिंका
र्यंतन्ममाचक्ष्वकेशव श्रीकृष्णउवा० शुक्लपक्षेचतुर्दश्यांमासिभाद्रपदेनृप कार्तिकेमाघमासेवावैशाखेचेतरेतथा पुण्येमासिप्र
कुर्वीतपौर्णमास्यांशुभेदिने तिथिक्षयंवर्जयीतशुभायांसुसमाहितः यस्मिन्देशेनलभ्येतकदलीराजसत्तम सुवर्णस्यशुभांतत्र
कृत्वापूजांसमाचरेत् यदिलभ्येतकदलीमारोप्यादौप्रपूजयेत् यावत्तस्याःफलंतावत्सिंचेन्नीरेणभूपते फलेषुपक्वजातेषुप्राज्ञाद्दि-
मान्समाह्वयेत् प्रभातेविमलेस्नात्वानद्यादौविमलेजले अहतेवाससीधृत्वाकृत्वासंध्यादिकर्मच अरत्निमात्रंकृत्वातुस्थंडिलंवा
ग्यतःशुचिः अग्निंसंस्थाप्यविधिवत्तत्रहोमंसमाचरेत् शतमष्टोत्तरंविद्वान्तिलाज्याहुतिभिस्तथा एकाग्रचित्तःसंहृष्टःकृत्वाव्या
हृतिभिःपृथक् ब्रह्मादिदेवताभ्यश्चनाममंत्रैःपृथक्पृथक् उमामहेश्वरायापिमूलमंत्रेणहावयेत् आचार्यंचसपत्नीकंवस्त्राद्यैः
पूजयेत्ततः धेनुंपयस्विनींवत्सवस्त्रालंकारभूषितां स्वर्णशृंगींरौप्यखुरींताम्रपृष्ठींसुवाससं कांस्यदोग्ध्रींरत्नपुच्छांनिष्ककंठींस

२७६

घंटकां अभ्यर्च्यवेदविदुषेआचार्यायनिवेदयेत् पादुकोपानहौछत्रमलंकारानेकशः यथाशक्तिप्रदेयानिव्रतस्यपरिपूर्तये चतुर्विंशत्
षोडशवायुग्मान्याहूयसंयतः वस्त्रालंकारगंधाद्यैःपूजयित्वातुभोजयेत् वायनानिचदेयानिवंशपात्रैस्तुशक्तितः दद्याच्चदक्षिणांस
म्यग्यथाविभवसारतः अन्येभ्योपियथाशक्तिदद्यादन्नंसुसंस्कृतं क्षमापयित्वातांदेवींव्रतस्यपरिपूर्णतां कदल्यैकामदायिन्यै
मेधायैतेनमोनमः रंभायैभूतिसारायैसर्वसौख्यप्रदेनमः यथायथातेप्रसवोवर्धतेकदलिध्रुवं तथामनोरथानांमेप्रभवोवर्धतुस्व
यं इतिकदलीदानमंत्रः एवंनारीनरोवापियः कुर्यात्कदलीव्रतं सर्वान्कामानवाप्नोतिस्वर्गलोकेमहीयते इतिश्रीभ० कदलीव्र
तोद्यापनंसं० अथपौर्णिमांतमासेनकार्तिककृष्णाचतुर्दशीनरकचतुर्दशी तस्यांतिलतैलेनस्नानमुक्तंभविष्ये कार्तिकस्यासिते
पक्षेचतुर्दश्यांनिशामुखे यमदीपंबहिर्दद्यादपमृत्युर्विनश्यति कार्तिकस्यासितेपक्षेचतुर्दश्यांविधूदये अवश्यमेवकर्तव्यं-
स्नानंनरकभीरुभिः दिनद्वयेविधूदयेचतुर्दशीसत्वे पूर्वविद्धचतुर्दश्यांकार्तिकस्यसितेतरे पक्षेप्रत्यूषसमयेस्नानंकुर्यात्प्र
यत्नतः इतिनिर्णयदीपिकोक्तेः परदिनएवेत्यन्ये दिनद्वयेचतुर्दश्याभावेतु चतुर्दश्यांचतुर्थयामेस्नानमितिदिवोदासनिबंधे
स्मृतिदर्पणेपि चतुर्दशीयाश्वयुजस्यकृष्णास्वात्यर्क्षयुक्ताहिभवेत्प्रभाते स्नानंसमभ्यर्च्यनरैस्तुकार्यंसुगंधतैलेनचविप्रयुक्तैः
तैलेलक्ष्मीर्जलेगंगादीपावल्यांचतुर्दशीं प्राप्यैतिशेषः आश्विनस्यासितेपक्षेभूतायान्नोदितेरविः यामिन्याःपश्चिमेयामेतै-

लाभ्यंगोविशिष्यते मृगांकोदयवेलायांत्रयोदश्यांयदाभवेत् दर्शेवामंगलंस्नानंदुःखशोकभयप्रदं कालादर्शेत्रयोदश्यांनिषेधश्च त्र
योदशीयदाप्राप्ताक्षयंचातिचतुर्दशी रात्रिशेषेत्वमावास्यातदाभ्यंगेत्रयोदशी चतुर्थयामेस्नानमुक्तं ज्योतिर्निबंधे नारदोपि
इषासितेचतुर्दश्यामिंदुक्षयतिथावपि ऊर्जादौस्वातिसंयुक्तेतदादीपावलीभवेत् तैलेलक्ष्मीर्जलेगंगादीपावल्यांचतुर्दशीं प्रा
तःस्नानंतुयःकुर्याद्यमलोकंनपश्यति अपामार्गमथोतुंबीप्रभ्रामयेच्छिरसोपरि अपामार्गस्यपत्राणिनरकस्यक्षयायवै ततश्चत
र्पणंकार्यंधर्मराजस्यनामभिः अमावास्याचतुर्दश्योःप्रदोषेदीपदानतः यममार्गांधकारेभ्योमुच्यतेकार्तिकेनरः अथकथा
वालखिल्याऊ॰ पूर्वविद्धचतुर्दश्यामाश्विनस्यसितेतरे पक्षेप्रत्यूषसमयेस्नानंकुर्यात्प्रयत्नतः अरुणोदयतोन्यत्ररिक्तायांस्नाति
योनरः तस्याब्दिकभवोधर्मोनश्यत्येवनसंशयः तथाकृष्णाचतुर्दश्यामाश्विनेर्कोदयेस्फुराः यामिन्याःपश्चिमेयामेतैलाभ्यंगोवि
शिष्यते यदाचतुर्दशीनस्याद्धूदिनेचेद्विधूदये दिनद्वयंभवेच्चापितदापूर्वैवगृह्यते बलात्काराद्धठाद्वापिशिष्टस्नानंकरोतिचेत् तै
लाभ्यंगंचतुर्दश्यांरोरवंनरकंव्रजेत् तैलेलक्ष्मीर्जलेगंगादीपावल्यांचतुर्दशीं अपामार्गमथोतुंबींप्रपुंनाटमथापरं भ्रामयेत्स्नानम
ध्येतुनरकस्यक्षयायवै दिनत्रयंत्रिवारंचपठितामंत्रमुत्तमं सितालोष्ठसमायुक्तंसकंटकदलान्वितं हरपापमपामार्गभ्राम्यमाणः
पुनःपुनः इष्टबंधुजनैःसार्धमेवंस्नानंसमाचरेत् ततोमंगलवासांसिपरिधायात्मभूषणं कृत्वाचतिलकंदत्वाकार्तिकस्नानमाचरे

त् स्नानांगतर्पणंकृत्वायमंसंतर्पयेत्ततः यमायधर्मराजायमृत्यवेचांतकायच वैवस्वतायकालायसर्वभूतक्षयायच औदुंबरायदध्ना
यनीलायपरमेष्ठिने वृकोदरायचित्रायचित्रगुप्तायतेनमः चतुर्दशैतेमंत्रास्युः प्रत्येकंचनमोन्विताः एकैकेनतिलैर्मिश्रान्दद्यात्त्रीनुदकां
जलीन् यज्ञोपवीतिनाकार्यंप्राचीनावीतिनातथा देवत्वंचपितृत्वंचयमस्यास्तिद्विरूपता जीवत्पितापिकुर्वीततर्पणंयमभीष्मयोः न
रकायप्रदातव्योदीपःसंपूज्यदेवताः अत्रैवलक्ष्मीकामस्यविधिःस्नानेमयोच्यते इषेभूतेचदर्शेचकार्तिकप्रथमेदिने यदास्वाती
तदाभ्यंगस्नानंकुर्याद्दिनोदये ऊर्जशुक्लद्वितीयायांयदिस्वातीभवेत्तदा मानवोमंगलस्नायीनैवलक्ष्म्याविमुच्यते दीपैर्नीराजना
दत्रसैषादीपावलिःस्मृता इंदुक्षयेपिसंक्रांतौरवौपातेदिनक्षये अत्राभ्यंगोनदोषायप्रातःपापापनुत्तये माषपत्रस्यशाकेनभुक्त्वा
तस्मिन्दिनेनरः प्रेताख्यायांचतुर्दश्यांसर्वपापैःप्रमुच्यते इषासितचतुर्दश्यामिंदुक्षयतिथावपि ऊर्जादौस्वातिसंयुक्तेतदादीपाव
लिर्भवेत् कुर्यात्संलग्नमेतच्चदीपोत्सवदिनत्रयं आश्विनस्यासितपक्षेत्रयोदश्यादिषुत्रिषु क्रमात्पादैस्त्रिभिर्विष्णुरग्रहीद्भुवनत्र
यं महाराजोबलिःप्रोक्तस्तुष्टेनहरिणाततः वरंयाचस्वभद्रंतेयद्यन्मनसिवर्तते इतिविष्णुवचःश्रुत्वाबलिर्वचनमब्रवीत् आत्मा
र्थेनचयाचेहंसर्वंदत्तंमयातव लोकार्थंयाचयिष्यामिशक्तश्चेद्देहिमेप्रभो मयायातेधरादत्तावामनच्छद्मरूपिणे त्रिभिःपादैस्त्रिभिर्दि
वसैःसाचाक्रांतायतस्त्वया तस्माद्देनद्वलेराज्यमस्तुअद्यत्रयंहरे मद्राज्येदीपदानंयेप्रकुर्वंतिमानवाः तेषांगृहेनवस्त्रीयंसदा-

तिष्ठतुस्फ्स्थिरा ममराज्येगृहेयेषामंधकारःपतिष्यति अलक्ष्मीसहितस्तेषामंधकारोस्तुसर्वदा चतुर्दश्यांतुयेदीपान्नरकायददातिच
तेषांपितृगणःसर्वोनरकात्स्वर्गमाप्नुयात् बलिराज्यंसमासाद्ययैर्नदीपावलिःकृता तेषांगृहेकथंदीपाःप्रज्वलिष्यंतिकेशव बलिरा
ज्येतुयेलोकाःशोकदुःखानुकारिणः तेषांगृहेसदाशोकःपतेदितिनचान्यथा चतुर्दशीदिनेराज्यंबलेरस्त्वितियाचयेत् पुरावामन-
रूपेणप्रार्थयित्वाधरामिमां ददावतिथिरिंद्रायबलिपातालवासिनं कृत्वादैत्यपतिंदद्यादहोरात्रत्रयंहरिः तस्मान्महोत्सवंचात्रसर्व
थैवहिकारयेत् महारात्रिःसमुत्पन्नाचतुर्दश्यांमुनीश्वराः अतस्तदुत्सवःकार्यःशक्तिपूजापरायणैः बलिराज्यंसमासाद्ययक्षगंध
र्वकिन्नराः औषध्यश्चपिशाचानिमंत्राश्चमणयस्तथा सर्वएवप्रहृष्यंतिनृत्यंतिचनिशास्वते तत्तन्मंत्राश्चसिद्ध्यंतिबलिराज्येनसंश
यः बलिराज्यंसमासाद्ययथालोकाःप्रहर्षिताः तथानदिनमध्येपिजनास्युर्हर्षिताभृशं तुलासंस्थेसहस्रांशौप्रदोषेभूतदर्शयोः उ
ल्काहस्तानराःकुर्युःपितॄणांमार्गदर्शनं नरकस्थाश्चयेप्रेतास्तेमार्गंतुव्रतात्सदा पश्यंत्येवनसंदेहोकार्यांत्रमुनिपुंगवैः आश्विन-
स्यासितेपक्षेभूतादितिथयस्त्रयः दीपदानादिकार्येषुग्राह्याःमध्याह्नकालिकाः ततःप्रदोषसमयेदीपान्दद्यान्मनोरमान् ब्रह्मविष्णु
शिवादीनांमठेषुभवनेषुच प्राकारोद्यानवापीषुप्रतोलीनिष्कुटेषुच मंदुरासुविविक्तासुहस्तिशालासुचैवहि इतिविशेषांतरलिंगे त
तःप्रेतचतुर्दश्यांभोजयित्वातपोधनान् शैवान्विप्रांस्तथापरान्शिवलोकेमहीयते दानंदत्वातुतेभ्यश्चयमलोकंनगच्छति नक्तंप्रेतच

तुर्दश्यां यः कुर्याच्छिवतुष्टये ततः कृतुशतेनापि नाप्यते पुण्यमीदृशं शिवरात्रौ तथा तस्यां लिंगस्यापि प्रपूजया अक्षय्यांल्लभते भोगा-
न्शिवसायुज्यमाप्नुयात् यदि स्युः संगवाद्वर्गे गताः स्युतिथयस्त्रयः दीपदानादिकार्येषु कर्तव्याः पूर्वसंयुताः इति नरकचतुर्दशीदी
पदानं समाप्तं अथ कार्तिकशुक्लचतुर्दश्यां वैकुंठचतुर्दशीव्रतं तदुक्तं सनत्कुमारसंहितायां वर्षे वै हेमलंबाख्ये मासि श्रीमति कार्ति
के शुक्लपक्षे चतुर्दश्यामरुणोदयसंभवे महादेवतिथौ ब्राह्मे मुहूर्ते मणिकर्णिके स्नात्वा विश्वेश्वरो देव्या विश्वेश्वरमपूजयत्
संक्षेपं ज्योतिषस्तस्य प्रतिष्ठाख्यं तदाकरोत् स्वयमेव तदात्मानं चरन्पाशुपतव्रतं ततः प्रभाते विमले कृत्वा पूजां महाद्भुतां दंडपाणेर्महा
नाम्नि वने स्मिन्कृतपारणः श्रीमद्भवानीसदनं प्रविश्य वेदमनुत्तमं इति सनत्कुमारसंहितोक्तेः अथ कथा वालखिल्या ऊचुः कार्ति
कस्य सिते पक्षे चतुर्दश्यां समागमत् वैकुंठः शास्तु वैकुंठद्वाराणस्यां कृते युगे रात्र्यां तुर्यांशशेषायां स्नात्वा सोमणिकर्णिके गृहीत्वा हे
मपद्मानां सहस्रं वै ततो व्रजन् अतिभक्त्या पूजयितुं शिवया सहितं विभुं विधाय पूजां वैश्वेशीं ततः पद्मैरपूजयत् सहस्रसंख्यां
कृत्वादौ वैकनाम्ना ततः परं आरब्धं पूजनं तेन शिवस्तद्भक्तिमैक्षत एकं पद्मं पद्ममध्यान्निनीयान्तद्धरेणातु ततः पूजितवान्विष्णुरे-
कोनकमलं त्वभूत् इतस्ततस्तेन दृष्टं पद्मं तिष्ठति न क्वचित् कमलेषु भ्रमो जातो ऽथवा नामं स्मरे भ्रमः क्षणं विचार्य सहरिर्न मेनामभ्र
मोभवत् पद्मेष्वेव भ्रमो जातो विचार्यैवं पुनः पुनः सहस्रपद्मसंकल्पः पूजार्थं तु कृतो मया अर्च्यः कथं महादेवो एकोनकमलैर्मया

यद्यानेतुंगमिष्यामिभंगस्यादासनस्यतु किंविधेयमनः शंभोः पूजनेचिंतयद्धरिः एकः प्रकारउत्पन्नोल्हृदयेस्यमुनीश्वराः पुंडरीकाक्षइत्येवंमां
वदंतिमुनीश्वराः नेत्रंमेपद्मसदृशंपद्मार्थेतत्पर्पयाम्यहं इतिनिश्चित्यमनसिदत्वातर्जनिकांसतु तेनमध्यात्तदुत्पाट्यमहादेवस्तुपूजितः त
तोमहेश्वरस्तुष्टोवाक्यमेतदुवाचह महादेवउवा॰ त्वत्समोनास्तिमद्भक्तस्त्रैलोक्येसचराचरे राज्यंदत्तंत्रिलोक्यास्तेभवत्वंलोकपालकः
अन्यद्वरयभद्रंतेवरंयन्मनसेप्सितम् अवश्यमेवदास्यामिनात्रकार्याविचारणा मद्भक्तिंतुसमालंब्ययेद्विषंतिजनार्दनं तेमद्वेष्यानराविष्णोव्र-
जेयुर्नरकंध्रुवं विष्णुरुवा॰ त्रैलोक्यरक्षाकरणंममादिष्टंमहेश्वर दुर्मदाश्चमहासत्वादैत्यामार्याःकथंमया शिवउवा॰ एतत्सुदर्शनं
चक्रंसर्वदैत्यनिकृंतनं गृहाणभगवन्विष्णोमयातुभ्यंनिवेदितं अनेनसर्वदैत्यानांभगवन्कदनंकुरु एवंचक्रंहरेर्दत्वाततोवचनमब्रवीत्
शिवउवा॰ वर्षेत्वहेमलंबाख्येमासिश्रीमतिकार्तिके शुक्लपक्षेचतुर्दश्यामरुणाभ्युदयंप्रति महादेवतिथौब्राह्मेमुहूर्तेमणिकर्णिके स्ना
त्वाविश्वेश्वरंलिंगंवैकुंठोदैत्यपूजितं सहस्रकमलैस्तस्मात्सद्विख्यातिममप्रिया विख्यातासर्वलोकेषुवैकुंठाख्यचतुर्दशी अन्यंवरंमदा
स्यामिश्रृणुविष्णोवचोमम पूर्वरात्रौतुतत्पूजाकर्तव्यासर्वजातिभिः उपवासंदिवाकुर्यात्सायंकालेनवार्चनं पश्चान्मुमार्चनंकार्यमन्यथा
निष्फलंभवेत् ख्यात्यातुहरिपूजायांरात्रिव्याप्ताचतुर्दशी अरुणोदयवेलायांशिवपूजांसमाचरेत् सहस्रकमलैर्विष्णुरादौयैःपूजितो
नरैः पश्चादीशःपूजितश्चेज्जीवन्मुक्तःसएवहि सायंस्नात्वापंचनदेबिंदुमाधवमर्चयेत् सहस्रनामभिर्विष्णोःकमलैःसुमनोहरैः

मणिकर्णिकायांततःस्नात्वाविश्वेश्वरमथार्चयेत् सहस्रनामभिःपुष्पैर्जीवन्मुक्तःसएवहि स्नात्वायोविष्णुकांच्यांवाअनंतेशंयःसमर्चयेत् रु

द्रकांच्यांततःस्नात्वाप्रणवेशंसमर्चयेत् पृथिव्यांचश्रुतायेयेधर्माःप्रोक्तामहर्षिभिः सर्वेषांफलमाप्नोतिनात्रकार्याविचारणा आ

दौस्नात्वावह्नितीर्थेयजेन्नारायणंततः रेणोदकेततःस्नात्वाकेदारेशंसमर्चयेत् इहैवार्थवनामर्थोभवेन्नास्त्यत्रसंशयः स्थलपद्मैस्तत्र

पूजाकर्तव्याजलजक्षयात् आदौस्नात्वासूर्यपुत्र्यांवेणीमाधवमर्चयेत् जाह्नव्यांचततःस्नात्वासंगमेशंप्रपूजयेत् रक्तपद्मैःश्वे

तपद्मैर्हरिरुद्रक्रमेणतु सर्वाःश्रियस्तस्यवश्याःसत्यंविष्णोमयोदितं मोक्षार्थंकाशिकामध्येतिष्ठतः शुभदायको बिंदुमाधववि

श्वेशौजगदानंददायकौ नलभेत्पूजयित्वाकिंमोक्षोविश्वेश्वरंहरिं विनायोहरिपूजांतुकुर्याद्रुद्रस्यचार्चनं वृथातस्यभवेत्पूजा

सत्यमेतद्वचोमम एवंतस्मैवरंदत्वातत्रैवांतरधीयत तस्मात्सर्वप्रयत्नेनपूज्यौहरिहरावुभौ प्राप्तेकलियुगेघोरेशौचाचारविव

र्जिते तत्संख्येवर्षशतेगतेदेवामहेश्वरः वाराणसीस्थलिंगानिपातालेसंनियुंक्षति ततोद्विगुणवर्षैस्तुगंगावाराणसीतथा

भविष्यतिचसाहश्यात्ततोवैसमुनीश्वराः अंतर्हितायदाकाशीभविष्यतितदासुने नाशस्तुलिंगचिह्नानांनिःप्रभाःसकलाज

नाः चतुर्दशाब्दंदुर्भिक्षंमहामारीसमुद्भवः गोवर्धश्चापिसर्वत्रमृत्तिकाभस्मसन्निभा गंगोत्तर्यांतुयाधारापतेद्भगीरथाश्रमे ह

रिद्वाराच्चवायव्येतस्यालोपोभविष्यति भागीरथ्यांगतायांतुमर्कटीतंतुसंनिभाः भविष्यंतिजलेकीटास्तोयंनीलाभिभंतथा

चतुर्वर्षसहस्रेषुत्तुशैलस्थाः सर्वदेवताः सत्वंत्यक्त्वागमिष्यंतिमानसंचसरोवरं गतेषुशैलदेवेषुराजानोधैर्यविच्युताः पापिष्ठाश्चदुरा-
चारानानादुःखेनदुःखिताः कलेरष्टवर्षाणिभविष्यंतियदाखग श्रौतमार्गस्यलोपोहिभविष्यतिनसंशयः तदालोकाभविष्यंति
मद्यपानपरायणाः स्वल्पायुषःस्वल्पभाग्यानानारोगैश्चपीडिताः द्विजास्तुदक्षिणेदेशेवेदज्ञाःसंभवंतिच आनीयतान्शाककर्तांथ
र्मसंस्थापयिष्यति इतिसनत्कुमारसंहितायांवैकुंठचतुर्दशीक० अथशिवरात्रिव्रतं अ मांतमासेनमाघकृष्णाचतुर्दश्यांशिव
रात्रिव्रतं तच्चार्धरात्रव्यापिन्यांकार्यं तदुक्तंनारदसंहितायां अर्धरात्रयुतायत्रमाघकृष्णाचतुर्दशी शिवरात्रिव्रतंतत्रसोश्वमेध
फलंलभेत् ईशानसंहितायामपि माघकृष्णचतुर्दश्यामादिदेवोमहानिशि शिवलिंगतयोद्भूतःकोटिसूर्यसमप्रभः तत्काल-
व्यापिनीग्राह्याशिवरात्रिव्रतेतिथिः माघकृष्णत्वंचात्रामांतमासपरत्वेन अतएव चतुर्दश्यांतुकृष्णायांफाल्गुनेशिवपूजनं तामु
पोष्यप्रयत्नेनविषयान्परिवर्जयेत् इतिस्कंदवचनेपौर्णमांतमासोप्युक्तः महानिशाचमहानिशाद्वेघटिकेरात्रेर्मध्यमयामयो
रितिदेवलोक्तेर्निशीथरूपेव एवंचार्धरात्रशब्दोपितत्परएव दिनद्वयेनिशीथव्याप्तावव्याप्तौवापरेवप्रदोषव्यापिनीलाभात् दि
नद्वयेचतुर्दश्यांपूर्वात्याज्यापराशुभा आदित्यास्तमयेकालेअस्तिचेद्याचतुर्दशी प्रदोषव्यापिनीग्राह्याशिवरात्रेचतुर्दशी रात्रौ
जागरणंयस्मात्तस्मात्तांसमुपोषयेत् अहोरात्रव्रतंयच्च एकस्मिन्कालेतिथौगतं तस्यास्तुभययोगिन्यामाचरेत्तद्व्रतंव्रतीतिकामिकाशि

वरात्रिः शिवरहस्ये स्मृत्यंतरादिवचनाच्च नचपूर्वदिनेधिकव्याप्तिवशात्पूर्वैवेतिशंक्यं एतस्यभूयसांस्यात् अर्धत्वमितिन्याय
मात्रत्वेनवचनबाधकत्वायोगात् यत्तु तन्निरुक्तवचनैरेवतद्बाधाच्च पूर्वदिनेनिशीथेपरदिनेप्रदोषेतदापूर्वैव अर्धरात्रात्पुरस्ताच्चे-
ज्जयायोगोयदाभवेत् पूर्वविद्वैवकर्तव्याशिवरात्रिःशिवप्रिया इतिपाद्मेजयायोगस्यविहितत्वात् महतामपिपापानांदृष्ट्वा
वैनिःकृतिःपुरा नदृष्टाकुर्वतापुंसाकुहूयुक्तातिथिःशिवा इतिस्कांदे दर्शयोगस्यनिंदितत्वाच्च यत्तुकालतत्वविवेचनेनव्ये
दिनद्वयेनिशीथव्याप्तावेवपूर्वविद्धाविधायकान्युत्तरविद्धानिषेधकानिवचनानिसावकाशानीत्युक्त्वापूर्वैवव्याप्त्येत्युक्तं तन्न
समंजसं निशाद्वयेचतुर्दश्यापूर्वात्याज्यापराशुभेतिमाधवाद्युदाहृतनारदीयवचनविरोधात् नचपूर्वविद्धाविधायकानांउत्त
रविद्धानिषेधकानांविषयालाभइतिशक्यं प्रदोषनिशीथयोर्विरोधेनिशीथव्याप्त्येनायाउपोद्घातबलत्वेनविषयलाभस्यानुपदमेवोक्तत्वा
त् प्रदोषव्याप्तिभावात् यदादिनद्वयेनिशीथव्याप्तिस्तदापरैव माघासितेभूतदिनंहिराजन्नुपैतियोगंयदिपंचदश्याः जयाप्रयुक्तांनतुजातुकु
र्याच्छिवस्यरात्रिंप्रियकृच्छिवस्य इतिहेमाद्रिमाधवेष्युदाहृतपुराणवचनादितिपरैव अस्मिन्व्रतेउपवासजागरणपूजानांफलसंबंधात् त्रयमपिप्र
धानं तथाचनागरखंडे उपवासप्रभावेनबलादपिचजागरात् शिवरात्रेस्तथातस्यांलिंगस्यापिप्रपूजया अक्षय्याल्लभतेकामान् शिवसा
युज्यमाप्नुयात् इदंचव्रतंसंयोगपृथक्त्वन्यायेननित्यंकाम्यंच परात्परतरंनास्तिशिवरात्रिःपरात्परा नपूजयतिभक्त्येशंरुद्रंत्रिभुवनेश्व

रं जंतुर्जन्मसहस्रेषु युज्यते नात्र संशयः इति स्कांदे पारणं चैतद्व्रते स्कांदे तिथिमध्ये तदंते चोक्तं उपोषणं चतुर्दश्यां चतुर्दश्यां तु पा
रणं कृते: सुकृतलक्षैस्तु लभ्यते यदि वा न वा ब्रह्मांडोदरमध्ये तु यानि तीर्थानि संति वै संस्थितानि भवंतीह भूतायां पारणे कृते ति
थ्यंते पारणं कुर्याद्विना शिवचतुर्दशीं तथा कृष्णाष्टमी स्कंदषष्ठी शिवरात्रिस्तथैव च एताः पूर्वयुताः कार्यास्तिथ्यंते पारणं भ
वेत् अनयोर्विरुद्धवचनयोर्व्यवस्थैवं माधवेनोक्ता यामत्रयोर्ध्वगामिन्यां प्रातरेव हि पारणमिति वचनाद्यामत्रयमध्ये चतुर्द
शी समाप्तौ तिथ्यंते तदुत्तरगामित्वे तु प्रातस्तिथिमध्य एवेति तिथिमध्यकालो मुख्यस्तदंतकालो गौणः उत्तरभावित्वादित्या
हुः केचित्तु शक्तस्तिथ्यंते अशक्तस्तिथिमध्य एवेत्याहुः शिवरात्रिग्रहणं तु पूर्वविद्धाविधानार्थमिति वस्तुतस्तु सा त्वस्तमयप-
र्यंतव्यापिनी चेत्परेहनि दिवैव पारणं कुर्यात्पारणे नैव दोषभाक् शिवरात्रिप्रकरणपठितकालादर्शादिलिखितवचनाद्दिवा तिथि
समाप्तौ तिथ्यंतेन्यथा तन्मध्य एवेति इति निर्णयः अथ व्रतविधिः मासपक्षाद्युल्लिख्य मम पापक्षयार्थमक्षय्यमोक्षभोगप्रा
प्त्यर्थं शिवरात्रिव्रतं करिष्ये इति संकल्प्य षोडशोपचारैः शिवपूजां कुर्यात् तत्र पूजा आगच्छ देव देवेश मर्त्यलोकहितेच्छया
पूजयामि विधानेन प्रसन्नः सुमुखो भव सहस्रशीर्षेत्यावाहनं पादासनं कुरु प्राज्ञ निर्मलं स्वर्णनिर्मितं भूषितं विविधै रत्नैः कुरु
त्वं पादुकासनं पुरुष एवेदमित्यासनं गंगादिसर्वतीर्थेभ्यो मया प्रार्थनयाहृतं तोयमेतत्सुखस्पर्शं पाद्यार्थं प्रतिगृह्यतां एताव

नस्येतिपाद्यं गंधोदकेनपुष्पेणचंदनेनसुगंधिना अर्घ्यंगृहाणदेवेशभक्तिंमेह्यचलांकुरु त्रिपादूर्ध्वेत्यर्घ्यं कर्पूरोशीरसुरभिशीतलंवि
मलंजलं गंगायास्तुसमानीतंगृहाणाचमनीयकं तस्माद्विराळेत्याचमनीयं मंदाकिन्याःसमानीतंहेमांभोरुहवासितं स्नानायतेमया
भक्त्यानीरंस्वीक्रियतांविभो यत्पुरुषेणेतिस्ना० वस्त्रंसूक्ष्मंदुकूलंचदेवानामपिदुर्लभं गृहाणत्वमुमाकांतप्रसन्नोभवसर्वदा तं
यज्ञमितिवस्त्रं यज्ञोपवीतंसहजंब्रह्मणानिर्मितंपुरा आयुष्यंभववर्चस्वमुपवीतंगृहाणमे तस्माद्यज्ञात्सर्वेत्युपवीतं श्रीखंडं
चंदनंदिव्यं तस्माद्यज्ञात्सर्वहुतऋ० गंधं माल्यादीनिसुगंधी तस्मादश्वेतिपुष्पं वनस्पतिरसोद्भूतो० यत्पुरुषं० धूपं साज्यंच
वर्तिसंयुक्तंवह्निनायोजितंमया दीपंगृहाणदेवेशत्रैलोक्यतिमिरापह ब्राह्मणोस्येतिदीपं नैवेद्यंगृह्यतांदेव० चंद्रमामनसइति
नैवेद्यं पूगीफलमितितांबूलं हिरण्यगर्भेतिदक्षिणां चक्षुर्दंसर्वलोकानांतिमिरस्यनिवारणं आर्तिक्यंकल्पितंभक्त्यागृहाणपर
मेश्वर नीराजनं फलेनफलितंसर्वं० फलं यानिकानिचपापानिब्रह्महत्यासमानिच तानितानिविनश्यंतिप्रदक्षिणपदेपदे नाभ्या
आसीदिति प्रद० मंत्रहीनंक्रियाहीनंभक्तिहीनंसुरेश्वर यत्पूजितंमयादेवपरिपूर्णंतदस्तुमे सप्तास्यासन्नितिनमस्कारं सद्योजात
मितिवामदेवायेतिवा यज्ञेनयज्ञमितिमंत्रपुष्पांजलिं श्रूयतांधर्मसर्वस्वंशिवरात्रौशिवार्चनं व्रतयज्ञविधानेनस्वर्गपुण्येनकर्मणा
कृत्वास्नानंशुचिर्भूत्वाधौतवस्त्रसमन्वितः स्थापयेद्देवदेवेशंमंत्रैर्वेदसमुद्भवैः ततः पूजाप्रकर्तव्या पूर्वोक्तविधिनाततः नमोयज्ञज

गन्नाथनमस्त्रिभुवनेश्वर पूजांगृहाणमद्दत्तांमहेशप्रथमांपदे प्रथमप्रहरपूजा पूर्वेनंदीमहाकालोश्रृंगीभृंगीचदक्षिणे वृषस्कंदोप
श्चिमेच देशकालोत्तथोत्तरे गंगाचयमुनाचैवपार्श्वयोश्चैवव्यवस्थिते नमोव्यक्तायसूक्ष्मायनमस्तेत्रिपुरांतक पूजांगृहाणदेवेशयथा
शक्त्योपपादितां द्वितीयप्रहरे बद्धोहंविविधैःपाशैःसंसारभयबंधने पतितंमोहजालेमांत्वंसमुद्धरशंकर तृतीये चतुर्थेप्रह
रेप्याद्यवत् नमःशिवायशांतायसर्वपापहरायच शिवरात्रौमयादत्तंगृहाणार्घ्यंप्रसीदमे द्वितीये दुःखदारिद्र्यभावैश्चदग्धोहं
पार्वतीपते मांत्वंत्राहिमहादेवगृहाणार्घ्यंनमोस्तुते तृतीये किंनजानासिदेवेशत्वाबद्धोस्मियच्छमे स्वपादाग्रतलेदेवदास्यंदेहिज
गत्पते चतुर्थे यस्यस्मृत्याप्रार्थना इतिशिवपूजासमाप्ता अथकथा सूतउवाच सकारणमशेषस्यजगतःसर्वदाशिवः गोब्राह्मण
नृपाणांचशिवंभवतुमेसदा कैलासशिखरासीनंदेवदेवंजगद्गुरुं पंचवक्त्रंदशभुजंत्रिनेत्रंशूलपाणिनं पिनाकशोभितकरंखड्गखे
टकधारिणं कपालखट्वांगधरंनीलकंठसुशोभितं भस्मांगव्यालशोभाढ्यमस्थिमालाविभूषितं नीलजीमूतसंकाशंसूर्यकोटि-
समप्रभं क्रीडंतंचशिवंतत्रगणैश्चपरिवारितं विसृज्यदेवताःसर्वास्तिष्ठंतंपरमेश्वरं तंदृष्ट्वादेवदेवेशंप्रहस्योत्फुल्ललोचनं पार्वती
परिपप्रच्छविनयावनतास्थिता गौरीप्रोवाचभर्तारंविस्मयोत्फुल्ललोचना पार्वत्युवाच कथयस्वप्रसादेनयद्गोप्यंव्रतमुत्तमं श्रु
तास्त्वयोक्तादेवेशव्रतानांनिर्णयाःशुभाः तथावेदानधर्माश्चतीर्थधर्मास्त्वयोदिताः नास्तिमेनिश्चयोदेवज्ञातोनाहंचपुनःपुनः तस्मा

इदस्त्वमेदेवत्वयैकंनिःसंशयंप्रभो व्रतानामुत्तमंदेवभुक्तिमुक्तिप्रदायकं तदहंश्रोतुमिच्छामिकथयस्वममप्रभो ईश्वरउवाच शृणुदे
विप्रवक्ष्यामिव्रतानामुत्तमंव्रतं यन्नकस्यचिदाख्यातंरहस्यंमुक्तिदायकं येनैवकथ्यमानेनयमोविलयताव्रजेत् तदहंकथयिष्या
मिशृणुष्वैकमनाःप्रिये माघमासेकृष्णपक्षेअमायुक्ताचतुर्दशी शिवरात्रिस्तुसाज्ञेयासर्वयज्ञोत्तमोत्तमा दानैर्यज्ञैस्तपोभिश्चव्रतै
श्चविविधैरपि नतीर्थैस्तत्फलंवेत्पुण्यंशिवरात्रिव्रताद्भवं शिवरात्रिसमंनास्तिव्रतानामुत्तमंव्रतं ज्ञानतोऽज्ञानतोवापिकृत्वामोक्षमवा
प्नुयात् मृता यन्निरयंत्यक्त्वागतास्तेशिवसंनिधौ सर्वमंगलशीलाचसर्वामंगलनाशिनी भुक्तिमुक्तिप्रदाचैषासत्यंसत्यंवरानने
देव्युवाच कथंयमपुरंत्यक्त्वाशिवलोकेव्रजेन्नरः एतन्मेमहदाश्चर्यंप्रत्यक्षंकुरुशंकर शंकरउवाच शृणुदेवियथावृत्तांकथांपौरा
णिकींशुभां यमशासनहंत्रींचशिवस्थानप्रदायिनीं कश्चिदासीत्पुरादेविनिषादोजीवघातकः प्रत्यंतदेशवासीचभूधरास-
न्निकेतनः सीमांतेससदातिष्ठन्कुटुंबपरिपालकः शूरोनित्यंधनुर्धारीश्यामांगःकृष्णकंचुकः बद्धगोधांगुलित्राणःसदैवमृ
गयारतः एवंविधोनिषादोसौचतुर्दश्यांदिनेशुभे व्यवहारिकेणद्रव्यार्थंदेवागारेप्ररोधितः तेनापिदेवतादृष्टाजनानांवचनंश्रुतं उप
वासव्रतीनांचशिवःशिवशिवेतिच दिनांतेतेनसतदामुक्तःप्रातर्द्रव्यंप्रदीयतां ततोसौधनुरादायदक्षिणेनगतःस्वयं आगच्छन्सवनो
द्देशेजनहासंचकारसः शिवःशिवःकिमेतद्धैकुर्वंतिनगरेजनाःवनेचरान्निरीक्षंस्तुचतुर्दिक्षुइतस्ततः पदंचमृगमार्गंचअन्वेष्य

ब्र॰रा॰
२८३

न्सूकरान्मृगान् इतश्चेतश्च धावन्वै आमिषेलुब्धमानसः वनंच पर्वतान्सर्वान्भ्रमिता गिरिकंदराः संप्राप्तं तेन नो किंचित्मृगसूकरचित्तलं नि
राशो लुब्धकस्तिष्ठन् तदा ध्वस्तंगते रविः चिंतयित्वा जलोपांते जागरं जीवयाननं संविधास्याम्यहं रात्रौ निश्चितं मम जीवनं गतोसौ जल-
सामीप्यं तीरस्थो जालिमध्यतः आश्रमं कर्तुमारेभे आत्मनो गुप्तिकारणात् जालिमध्ये महालिंगं स्थितं स्वायंभुवं शुभं बिल्ववृक्षो म
हान्दिव्यो जालिमध्ये च संस्थितः गृहीत्वा तस्य पर्णानि मार्गशुध्यर्थमक्षिपत् क्षिप्तानि दक्षिणे भागे निपेतुर्लिंगमूर्धनि नादेवा-
भोजनं तस्य आमिषे लुब्धमानसः ततश्चिंतयमानस्य न निद्रा समजायत तस्य गंधं समासाद्य लुब्धकस्य वरानने न तिष्ठंति मृगाः स
वैं शरघातभयात्तदा मृगान्निरीक्षतस्तस्य निद्रानाशोप्यजायत बिल्वमध्ये गतस्यास्य प्रथमः प्रहरो गतः ततो जलार्थमायाता हरि
पीगर्भसंयुता यौवनस्था सरूपा च स्तनपीनाकृशोभना निरीक्षंती दिशः सर्वा भृशं सुत्फुल्ललोचना लुब्धकेनापि सा दृष्टा बाणगोच
रमागता बाणश्च संधितस्तेन एकहृष्टेन चेतसा चोटयित्वाथ पत्राणि प्रक्षिप्तानि शिवोपरि शिवदेवं सदाध्यायन्दृशीनेन परिपी
डितः एतस्मिन्नंतरे दृष्टो हरिण्या लुब्धकस्तदा लुब्धकस्तु स्वरूपेण कृतांत इव दृश्यते दृष्ट्वा तु तस्य संधानं यमदंष्ट्रासमप्रभं मृगी सादि
व्ययावाचा लुब्धकं वाक्यमब्रवीत् मृग्युवा॰ स्थिरो भव महाव्याध सर्वजीवनिकृंतन कृथयस्व महाबाहो किमर्थं मां हनिष्यसि लुब्धक
उवा॰ कुटुंबं पीडितं मेद्य क्षुधया च मया सह पोष्याम्यहं सदेवा पित्र्यामिषाहारभोजनैः धनं वै मम गेहे नास्ति तेन त्वां हन्मि शोभने सूत

न॰दी॰
१४

२८३

उवाच यामपूजाप्रभावेनजागरोपोषणेनच चतुर्थांशेनपापानांविमुक्तोलुब्धकस्तदा लुब्धकस्तुततोदृष्ट्वामृगींमानुषभाषिणीं आश्चर्यं
परमंदृष्ट्वाकिंचिद्धर्मसमन्वितः लुब्धकउ॰ मयाहियानिताजीवाउत्तमाधममध्यमाः नश्रुताईदृशीवाणीश्वापदानांकथंचन कस्मिन्दे
शेत्वमुत्पन्नाकस्मात्स्थानादिहागता कथयस्वप्रयत्नेनपरंकौतूहलंहिमे मृग्युवा॰ शृणुत्वंलुब्धकश्रेष्ठकथयामितवाखिलं आ
सीत्पूर्वंमहारम्यास्वर्गेशक्रस्यचाप्सरा अनंतरूपलावण्यासौभाग्येनचगर्विता सौभाग्यमदपुष्टागोदानवोबलगर्वितः मयैवच
वृतोभर्ताहिरण्याक्षोमहासुरः तेनसार्धंमयाभुक्तंचिरकालंयथेप्सितं एवंकालोगतोव्याधक्रीडंत्यामेसुरेणच एकदाप्रेक्षितुंनृत्यंशं-
करस्यगतातदा यावद्गच्छाम्यहंतत्रतावन्मांशंकरोब्रवीत् क्वगतात्वंवरारोहेकेनवासंगताशुभे किंवासौभाग्यगर्वेणनायातामममं-
दिरं सत्यंकथयशीघ्रंत्वंनोवाशापंददामिते शापभीत्यामयातत्रइत्युक्तंशंकरायतः शृणुदेवप्रवक्ष्यामिशापानुग्रहकारक ममा
स्तिभर्ताविश्वेशदानवेंद्रोमहाबलः तेनसार्धंमयादेवक्रीडितंनिजमंदिरे तेनाहंनागताशीघ्रंसृष्टिसंहारकारक रुद्रस्तद्वचनंश्रुत्वासको
पोवाक्यमब्रवीत् मृगःकामातुरोनित्यंहिरण्याक्षोभविष्यति त्वंमृगीतस्यभार्यावैभविष्यसिनसंशयः त्यक्त्वास्वर्गंतथोदेवान्दानवं
भोक्तुमर्हसि द्वादशाब्दानिभोभद्रेभविताशापएववते परस्परस्यशोकेनशापांतोपिभविष्यति अनुग्रहःपुनस्त्वेषः शंकरेणकृतःस्वयं
कदाचिद्दिव्याधवरोममसान्निध्यमाश्रितः वधार्थंनव संप्राप्ते पूर्वजन्मस्मरिष्यसि ततऊर्ध्वंतदारुद्रंदृष्ट्वामोक्षमवाप्स्यसि शंकरेन

मयाद्दष्टेवसंत्यास्मिन्महावने ततोदुःखमनुप्राप्तामांसमेदोविवर्जिता गर्भाक्रांताविशेषेणनवध्यात्वेतिनिश्चितं त्वत्कुटुंबस्यतेनूनंभोजनंनभविष्य
ति आयास्यतिमृगीत्वन्यामार्गेणानेनलुब्धक पीनयौवनसंपन्नाबहुमांसामृदोद्भवा भोजनंसकुटुंबस्यतवसद्योभविष्यति अथवान्यो
मृगोव्याधपानार्थंतुजलाशये आगमिष्यतिमत्पूर्वेक्षुधार्तस्यनसंशयः गर्भंत्यक्त्वापुनःप्रातर्बालान्संदिश्यबंधुषु शपथैरागमिष्यामि
संदिश्यचसखीजनं तस्यास्तद्वचनंश्रुत्वाव्याधोविस्मयमागतः क्षणमेकंतथास्थित्वाव्याधोवचनमब्रवीत् नागमिष्यतिचेदन्योजीव-
स्त्वमपिगच्छसि क्षुधयापीडितोहंवैकुटुंबंचविशेषतः प्रातस्त्वयाममगृहमागंतव्यंयथायथं शपथैश्चव्रजत्वंहियथामेप्रत्ययोभवेत्
पृथिवीवायुरादित्यःसत्येतिष्ठंतिदेवताः तस्मात्सत्येनगंतव्यंभवत्यास्वगृहंप्रति तस्यतद्वचनंश्रुत्वागर्भार्तासामृगीतदा चक्रेसत्यम-
तिज्ञांवैव्याधस्याग्रेपुनःपुनः मृग्युवाच द्विजोभूत्वातुयोव्याधवेदभ्रष्टोभिजायते स्वाध्यायसंध्यारहितःसत्यशौचविवर्जितः अवि
क्रयाणांविक्रेताभंयाज्यानांचयाजकः तस्यपापेनलिप्यामियद्यहंनागमेपुनः दुष्टबुद्धोतुयत्पापंधूर्तेवाग्रामकंटके नास्तिकेचविशीलेच
परदाररतेतथा वेदविक्रयितेचैवशवसूतकभोजने तेनपापेनलिप्यामियद्यहंनागमेपुनः मृतशय्याप्रतिग्राहेमातापित्रोरपालके तेन
पापेनलिप्यामियदिनायामितेंतिकं दानंदातुंप्रवृत्तस्ययोंतरायकरोनरः तेनपापेनलिप्यामियदिनायामितेगृहं देवद्रव्यंगुरुद्रव्यंब्र
ह्मद्रव्यंहरेत्तुयः तेनपापेनलिप्यामियदिनायामितेगृहं दीपंदीपेनयःकुर्यात्पादंपादेनधावयेत् तेनपापेनलिप्यामियदिनायामितेगृहं

भर्तारंस्वामिनंमित्रंआत्मानंबालमेवच गांविप्रंचगुरुंनारींयोमारयतिदुर्मतिः तेनपापेनलिप्यामियदिनायामितेगृहं अवैष्णवेचयत्पापंय
त्पापंदांभिकेजने अजितेंद्रियेषुयत्पापंपरदोषानुकीर्तने कृतघ्नेचकदर्येचपरदाररतेतथा सदाचारविहीनेचपरपीडाप्रदायके परपैशू-
न्यसुक्तेचकन्याविक्रयकारके हेतुकेबकवृत्तौचकूटसाक्ष्यप्रदेतथा एतेषांपातकंमह्यंयदिनायामितेगृहं यत्पापंब्रह्महत्यायांपितृमातृव-
धेतथा तेनपापेनलिप्यामियदिनायामितेगृहं यत्पापंलुब्धकानांचयत्पापंगरदायिनां तेनपापेनलिप्यामियदिनायामितेगृहं द्विभार्यःपु-
रुषोयस्तुसमदृष्ट्यानपश्यति तस्यपापेनलिप्यामियदिनायामितेगृहं सकृद्दत्तातुयःकन्यांद्वितीयायप्रयच्छति तेनपापेनलिप्यामियदि-
नायामितेगृहं कथायांकथ्यमानायामंतरंकुरुतेनरः तस्यपापेनलिप्यामियदिनायामितेगृहं पतिनिंदापरोनित्यंवेदनिंदापरोहियः तस्य
पापेनलिप्यामियदिनायामितेगृहं यस्यसंग्रहणीभार्याब्राह्मणीचविशेषतः तस्यपापेनलिप्यामियदिनायामितेगृहं प्रेतश्राद्धेतुयोभुंक्ते
पतिते बहुयाचके असच्छास्त्रार्थनिपुणेपुराणार्थविवर्जिते मूर्खेपाखंडनिरतेक्रयविक्रयकेद्विजे एतेषांपातकंमह्यंयदिनायामितेगृहम्
एकाकीमिष्टमश्नाति भार्यापुत्रविवर्जितः आत्मजांगुणसंपन्नांसमानसदृशेवरे नप्रयच्छतियःकन्यांनरोवैज्ञानदुर्लभः तेनपापेनलिप्या
मियदिनायामितेगृहं मृगीवाक्यंततःश्रुत्वालुब्धकोहृष्टमानसः संहृत्यबाणसंधानान्मुमोचहरिणींतदा तस्याःसूक्तिप्रभावेनलिंगस्यापि
प्रपूजनात् मुक्तोसौपातकैःसर्वैस्तत्क्षणान्नात्रसंशयः द्वितीयेप्रहरेप्राप्तेमध्यरात्रेमहानिशि तस्मिन्नेवक्षणेप्राप्तेपराप्राप्तामृगीतदा

संत्रस्ताभयसंभ्रान्तापतिमन्वेष्यतीमुहुः जालिमध्येस्थितेनाथदृष्टासालुब्धकेनतु पुनर्वृक्षस्यपत्राणित्रोटयित्वाकरेणतु क्षिप्तानिदक्षिणेभागे
लिंगोपरिदिदृक्षया तस्यावधार्थंतेनाथोबाणोधनुषिसंधितः तिष्ठंस्तत्रैकचित्तेनकुटुंबार्थंजिघांसया निरीक्ष्यलुब्धकोयावद्बाणंतस्यांवि-
मुंचति तावन्मृग्यासमंदृष्टोहृष्टानंविह्वलाभवत् अद्यैवभगिनीमेहिलुब्धकेर्जीवनाशिना ममकिंजीवितव्येनतस्यादुःखेनपीडिता १०
वरोमृत्युर्नशोकोवैदृष्ट्वाव्याधंविशेषतः एवंसंचिंत्यहरिणीलुब्धकंवाक्यमब्रवीत् हरिण्युवाच धनुर्धरवरव्याधसर्वजीवनिकृंतन देहि
मेवचनंत्वेकं पश्चात्त्वंमांनिपातय आयाताहरिणीचैकामार्गेणानेनलुब्धक समायाताथवानैवंसत्यंकथयसत्वरं तच्छ्रुत्वालुब्धकस्तत्रवि
स्मितोक्षणमैक्षत तस्यास्तुयादृशीवाणीअस्याश्चैवतुतादृशी साचैषाचागतानूनंप्रतिज्ञापालनायच अथवान्यासमायातायातयाक
थितापुरा लुब्धकउवाच अहोरात्रंकृतंकष्टंकुटुंबार्थेमयामृगि अधुनात्वांहनिष्यामिदेवानांस्मरणंकुरु व्याधोक्तंवचनंश्रुत्वाहरिणीदुःखि-
ताभृशं व्याधंप्राहरुदित्वावैभोमांव्याधनिपातय तेजोबलंतथासर्वंनिर्दग्धंविरहाग्निना अहंप्राणान्विमोक्ष्यामिभोजनंतेनजायते बलवां
श्चमहातेजामेदमांससमन्वितः अन्यश्चपीनगौरांगोमृगोत्रागमिष्यति अहंचदुर्बलानूनंमेदमांसविवर्जिता केवलंपापभाक्त्वंहिमम
प्राणविमोचकः मार्गेणानेनभोव्याधमृगआयास्यतिस्फुटं तंहत्वातेकुटुंबस्यतृप्तिर्नूनंभविष्यति तयोक्तंलुब्धकःश्रुत्वाकिंकरोमीत्यचिं
तयत् मृग्योक्तोहिसत्युक्तार्थएषमेनिश्चयोहृदि संचिंत्यलुब्धकःप्राहमृगींशोकातुरांकृशां सत्यंवदमहाभागेप्रत्ययोमेयथाभवेत् तस्य

तद्वचनंश्रुत्वाहरिणीदुःखकर्शिता चक्रेसत्यप्रतिज्ञांतुव्याधस्याग्रेपुनःपुनः मृग्युवा॰ क्षत्रियस्तुरणंश्रुत्वासंग्रामंयोनगच्छति तस्यपापे
नलिप्येहंयदिनायामितेगृहं भेदयंतितडागानिवापीश्चाथगवामपि मार्गस्थानूचयेघ्नंतिसर्वसत्वभयंकराः तेषांवैपातकंमह्यंयदिना
यामितेगृहं एतच्छ्रुत्वातुव्याधेनसापिमुक्तामृगीतदा जलंपीत्वातुबहुशोगत्वासद्योयथागत जालिमध्येस्थितस्यास्यद्वितीयःप्रहरोग
तः त्रोटित्वाबिल्वपत्राणिपुनर्देवेनियोजयत् पीडितोतीवशीतेनक्षुधयागृहचिंतया शिवःशिवेतिजल्पन्वैननिद्रामुपलब्धवान् कृतं
कृतार्चनंतेनप्रहरेप्रहरेगते वीक्ष्यंश्चैवदिशःसर्वाःसत्वमार्गान्निरीक्षयत् लुब्धकेनाथदृष्टोसौहरिणश्चंचलेक्षणः विलोकयन्दिशःस-
र्वामार्गमाणोमृगीपदः सौभाग्यबलदर्पाढ्योमदनोन्मत्तपीवरः तंदृष्ट्वाबाणमाकृष्यत्वाकर्णंतुष्टमानसः बाणंमुंचतियावद्वैतावद्दृष्टो
मृगेणातु कालरूपंतुतंदृष्ट्वामृगश्चिंतितवान्भृशं निश्चितंभवितामृत्युर्गोचरस्यरवलोयतः भार्याप्राणसमामेद्यव्याधेनहनिपा
तिता तयाविरहितस्याद्यनूनंमृत्युर्भविष्यति हाहाकालकृतंपापंयद्भार्यादुःखमागतं भार्ययानसमंसौख्यंगृहेपिचवनेपिच तया
विनानधर्मोस्तिनार्थकामौविशेषतः वृक्षमूलेपिदयितायत्रतिष्ठतितद्गृहं प्रासादोपितयाहीनःकांतारादतिरिच्यते धर्मकामार्थका
र्येषुभार्यापुंसःसहायिनी विदेशेचगतस्यापिसेवविश्वासकारिणी नास्तिभार्यासमोबंधुर्नास्तिभार्यासमंस्करव नास्तिभार्यास-
मंलोकेनरस्यार्त्तस्यभेषजं यस्यभार्यागृहेनास्तिसापिचेत्प्रियवादिनी अरण्यंतेनगंतव्यंयथारण्यंतथागृहं एकाप्राणसमामेद्यहूता

यामाणदामम इत्येवंचिंतयित्वातुलुब्धकंवाक्यमब्रवीत् मृगउ॰ शृणुव्याधनरश्रेष्ठत्वामिषाहारभोजन यत्तेपृच्छाम्यहंवीर तद्वक्तव्यंवदमेम
भो आगतंहरिणीयुग्मंकेनमार्गेणतद्गतं त्वयाविनाशितंवाथसत्यंकथयमेधुना तस्यतद्वचनंश्रुत्वालुब्धकोविस्मयंगतः असावपिनसा-
मान्योदेवताकाप्यनुत्तमा उवाचलुब्धकःसद्यस्तस्याग्रेवाक्यमुत्तमं लुब्धकउ॰ तेगतेनेनमार्गेणासत्यंकृत्वाममाग्रतः ताभ्यांदत्तोसिमृ
त्यर्थेममत्वमधुनानय संप्रतित्वांहनिष्यामिनैवमोक्ष्यामिकर्हिचित् मृगउवा॰ तत्सत्यंकीदृशंताभ्यांवाक्यमुक्तंतवाग्रतः येनतेप्रत्य
योजातोमुक्तंतद्धरिणीद्वयं तेगतेकेनमार्गेणायेमुक्तेव्याधतेधुना व्याधउ॰ तेगतेनेनमार्गेणस्वमाश्रमपदंप्रति व्याधेनकथिताभ्यांश
पथायेकृतास्तदा तच्छ्रुत्वावचनंतस्यहरिणोहृष्टमानसः मृगउवा॰ ताभ्यांव्याधयदुक्तंचतत्करोमिनचान्यथा प्रभातेत्वद्गृहंनूनमाग
मिष्यामिनिश्चितं भार्यांऋतुमतींमेद्यकामार्तामप्यधुनाभृशं गत्वागृहेथसुक्तानामापृच्छ्यचसुहृज्जनान् शपथैरागमिष्यामिगृहंते
नात्रसंशयः मृद्देहंस्वगृहेनाद्यनेतुंशक्तःकथंचन तद्वृथामरणंमेस्याद्यद्यहंयातिनस्त्वया लुब्धकउ॰ असत्यंभाषसेधूर्तंप्रतारयसिमां
वृथा कृत्वामृत्युस्थितंतत्रतदागच्छतिकोल्पधीः व्याधस्यवचनंश्रुत्वाहरिणोवाक्यमब्रवीत् शपथैरागमिष्यामियथातेप्रत्ययोभवेत्
व्याधउवा॰ मृगत्वंशपथान्ब्रूहिविश्वासोमेभवेद्यथा यथाहिप्रेषयामित्वांस्वगृहंप्रतिकामुक मृगउवा॰ भर्तारंवंचयेद्यास्त्रीस्वामिनं
वंचनेनरः मित्रंचवंचयेद्यस्तुगुरुद्रोहंकरोतियः विरसंतुरसंदद्यात्प्रेमभेदंकरोतुयः भेदयेद्यस्तडागानिप्रासादंपातयेत्तथा प्रवासशी

लोयोविप्रः क्रयविक्रयकारकः संध्यास्नानविहीनश्च वेदशास्त्रविवर्जितः मद्यपास्त्रीषुरक्तायेपरनिंदारतास्तथा ये परस्त्रीसेवकाविप्राः प
रपैशून्यसूचकाः शूद्रान्नभोजिनोयेचभार्यापुत्रांस्त्यजंति ये वेदनिंदापरायेच वेदशास्त्रार्थनिंदकाः तेषांवैपानकंमत्तांयदिनायामि
नेगृहं भार्यासंग्रहणीयस्यव्रनशौचविवर्जिता सर्वाशीसर्वविक्रेताद्विजानामपिनिंदकः त्रिषुवर्णेषुशुश्रूषायःशूद्रोनकरोतिवै विप्र
वाक्यंपरित्यज्यपाखंडाभिरताःसदा ब्रह्मचर्यरताःशूद्रायेचपाखंडसंस्थिताः तेषांवैपानकंमत्तांयदिनायामिनेगृहं तिलांस्तैलंघृतंक्षौ
द्रंकंबलंलवणंगुडं लोहंलाक्षादिकंसर्वरंगान्नानाविधानपि विक्रियात्तेनशूद्रस्यतत्रदोषोनविद्यते मद्यंमांसंविषंदुग्धंनीलंचवृषभंतथा
मीनंक्षीरंसर्पंकूटंचित्रान्नंकफलानिच मद्यादिविक्रयेद्यस्तुशूद्रोपिमदमोहितः आदित्यंविष्णुमीशानंगणाध्यक्षंतुपार्वतीं एतान्त्यक्त्वा
गृहेमूढोयोन्यंपूजयतेनरः तस्यपापेनलिप्यामियदिनायामितेगृहं योगांस्पृशतिपापेनत्युदितर्केचसःप्यति एकाकीमिष्टमश्नातितस्यपा
पस्यभाग्यहं मातापित्रोरपोष्टाचक्रियासुद्विष्टयपाचकः कन्याशुल्कोपजीवीचदेवब्राह्मणनिंदकः गोग्रासंहंतकारंचअतिथीनांचपूजनं
येनकुर्वंतिगृहिणस्तेषांपापंभवेन्मम वृंताकंचपटोलंचकालिंगंतुंबिकाफलं मूलकंलशुनंकंदंकुसुंभंकनशाककं एतानिभक्षयेद्यस्तुनरो
वैज्ञानदुर्बलः तस्यवैजायतेशुद्धिश्चांद्रायणशतैरपि एतेषांपानकंमत्तांयदिनायामितेगृहं यःपठेत्स्वरहीनंचलक्षणेनविवर्जितं इया
सःसंचरन्विप्रोवेदान्नुच्चारयेत्तुयः विप्रस्यपठतःक्कापिस्पृशणोतिइहचांत्यजः वेदोपजीविकोविप्रोनिलोभाच्छूद्रभोजनः तस्यपापेनलिप्या

मियदिनायामिनेगृहं शूद्रान्नेषुचयेसक्ताः शूद्रसंपर्कदूषिताः तेनपापेनलिप्यामियदिनायामिनेगृहं लेखकश्चित्रकर्ताचवैद्योनक्षत्रसू
चकः कूटकर्ताद्विजोयश्चतस्यपापस्यभाग्यहं कूटसाक्षीमृषावादीपरद्रव्यस्यतस्करः परदाराभिगामीचयेचविश्वासघातकाः द्रव्येष्व
न्यंविनिक्षिप्यपानकूटसमाश्रिताः वैश्यारताःसदायेचदानदातुर्निवारकाः भर्तारंद्रव्यहीनंचकुरूपंव्याधिपीडितं यानपूजयतेनारीरू
पयौवनगर्विता एकादशींतथामाघेयासौशिवचतुर्दशी पूर्वविद्धांमकुर्वंतितेषांपापस्यभाग्यहं अथकिंबहुनोक्तेनभोलुब्धकतवाग्रतः
यदिनायामितेगेहंममसत्यंभवेत्तव तेनवाक्येनसंतुष्टोव्याधोवैवीतकल्मषः संहृत्यधनुषोबाणंमृगोमुक्तोगृहंप्रति जलंपीत्वातुहरिणःप्र
विष्टोगहनंप्रति गतोसौतेनमार्गेणागतंयेनमृगीद्वयं लुब्धकेनतदातत्रजालिमध्येस्थितेनहि मत्पूर्षेबिल्वपत्राणित्रोटयित्वाप्रतर्प्यच शिवः
शिवेतिजल्पन्वैव्याधशयातोनिजाश्रमं अथोदितेसूर्यबिंबेअकामाज्जागरेकृते पापान्मुक्तोप्यसौसद्यःशिवपूजाप्रभावतः यावद्दिशोनि
रीक्षेतनिराशोभोजनंप्रति तावच्छिशुवृताचान्यामृगीतत्रसमागता दृष्ट्वामृगींतदाव्याधोबाणंधनुषियोजयत् यावन्मुंचत्यसौबाणंता
वदुक्तंतयातदा माबाणान्मुंचधर्मात्मन्धर्ममामुंचसुव्रत अहंनवध्यासर्वेषामितिशास्त्रविनिश्चयः शयानोमैथुनासक्तोस्तनपोव्याधि
पीडितः नहंतव्योमृगोराज्ञामृगीचशिशुनावृता अथवाधर्ममुत्सृज्यमांहनिष्यसिमानद बालकंस्वगृहेमुक्त्वासखीनांचनिवेद्यवै शपथैरा
गमिष्यामिशृणुव्याधवचोमम यास्वभर्तारमुत्सृज्यपरेपुंसिरतासदा तस्याःपापेनलिप्यामियदिनायामितेगृहं मद्यंमांसंविषंदुग्धंनी-

२८७

लीकुंभफलानिच एतानिविक्रयेद्यस्तुनरोमोहसमन्वितः तेषांपापेनलिप्यामियदिनायामितेगृहं तस्यास्तद्वचनंश्रुत्वाव्याधोविस्मयमागमत्
ततोव्याधेनसामुक्तागतावैनिजमंदिरं व्याधोपितत्स्थलंत्यक्त्वाजगामस्वगृहंप्रति सर्वेषांवचनंध्यायन्मृगाणांसत्यवादिनां एतेषांयानकोनि
त्यमहंयास्यामिकांगतिं वनाद्गृहंसमायाताबालकाःक्षुधयावृताः नान्नंमांसंगृहेतस्यभोजनंयेनजायते निरामिषंतुतद्दृष्ट्वानिराशास्ते
भवंस्तदा व्याधोपिचनदानत्रतेषांवाक्यानिसंस्मरन् नभोजनंननिद्रांचलभतेविस्मितस्स्यैवं आगमिष्यंतितेनूनंशपथैरपियंत्रिताः न
तानहंवधिष्यामिसतांव्रतमनुस्मरन् लुब्धकेनतदामुक्तोहरिणःशपथैर्वृतः स्वमाश्रमंतुसंप्राप्तोयत्रतद्धरिणीद्वयं सद्यःप्रसूतासा-
चैकाद्वितीयारतिलालसा तृतीयापिसमायाताबालकैर्बहुभिर्वृता सर्वाःसमेताएकत्रमरणेकृतनिश्चयाः परस्परंप्रजल्पंत्योलुब्धकस्यवि
चेष्टितं आयातांहरिणींमुक्त्वारूपाढ्यांरतिलालसां कृतकृत्योभवत्ताभिस्तेभ्योवाक्यमथाब्रवीत् युष्माभिरिहसंस्थेयंकर्तव्यंप्राणर
क्षणं व्याघ्राद्द्वीपालुब्धकेभ्योबालकानांप्रयत्नतः योहिसत्यानुगोभार्यांनभुंक्तेमोहसंवृतः भ्रूणहासतुविज्ञेयस्तस्यजन्मनिरर्थकं सं
तानात्स्वर्गमाप्नोतिइहकीर्तिंचशाश्वतीं संततिर्यत्नतःपाल्यास्वर्गसौख्यप्रदायिका अपुत्रस्यगतिर्नास्तिइहलोकेपरत्रच येनकेनाप्युपा
येनपुत्रमुत्पादयेत्सुमान् मयाचतत्रगंतव्यंयत्रव्याधस्यमंदिरं सत्यंतुपालनीयंस्यात्सत्येधर्मःप्रतिष्ठितः एतच्छ्रुत्वातुतानार्योवाक्यमूचुः
सुदुःखिताः वयमप्यागमिष्यामस्त्वयासार्धंमृगोत्तम तथानेविप्रियंकांतनस्मरामःकदाचन पुष्पितेषुवनांतेषुनदीनांसंगमेषुच कंद

रेषुचशैलानांसुभ्राभीरंक्षितावयं नकार्यमद्यमस्माकंक्रीडितेनत्वयाविना नारीणांपतिहीनानांजीवितैःकिंप्रयोजनं मितंददातिहिपितामितं
भ्रातामितंसुतः अमितस्यहिदातारंभर्तारंकानपूजयेत् अपिद्रव्ययुतानारीबहुपुत्रसुतान्विता साशोच्याबंधुवर्गस्यपतिहीनाकुलांगना गंध
माल्यैस्त्रियोनित्यंशीयतेभर्तुरग्रतः नातंत्रीवाद्यतेवीणानाचक्रोभ्रमतेरथः नापतिःसुखमाप्नोतिनारीपुत्रशतैर्वृता नास्तिभर्तासमोधर्मो
नास्तिधर्मःसमःसुतैः नास्तिभर्तासमोनाथःस्त्रीणांभर्तापरागतिः एवंविलप्यताःसर्वामरणेकृतनिश्चयाः बालकैस्तैःसमायुक्ताभ-
र्तृशोकेनदुःखिताः मृगस्तासांवचःश्रुत्वात्हृदितापपरोभवत् गंतव्यंकिंनगंतव्यंमयाव्याधस्यमंदिरं एकतस्तुकृतंरक्षांकुटुंबस्यक्षयोभ
वेत् तदंतिकंनचेद्यामिममसत्यंक्षयंव्रजेत् वरंपुत्रस्यमरणंभार्यायाआत्मनस्तथा सत्येत्यक्तेनरोनित्यमाकल्पंरौरवंव्रजेत् तस्मात्सत्यं
पालनीयंनरैःश्रेयोर्थिभिःसदा एवंसंचिंत्यहरिणोधर्मात्हृदिमनोरसान् ताभिःसहैवशनकैःक्षणात्तस्याश्रमंययौ तस्मिन्सरसिसंस्ना
त्वाकर्मन्यासंचकारह तल्लिंगंप्रणिपत्याशुत्हृदिध्यायन्सदाशिवं भक्ष्यंपानंपरित्यज्यमैथुनंभोगमेवच कामंक्रोधंतथालोभंमायांमो
क्षविनाशिनीं वंदयित्वातुतंदेवंलुब्धकाभिमुखंययौ तस्यभार्याश्चपुत्राश्चमरणेकृतनिश्चयाः अनशनव्रतंगृत्ह्यपृष्ठलग्नाःसमाययुः
भार्यापुत्रैःपरिवृतोमृगस्तंदेशमागमत् क्षुधितैर्बालकैर्युक्तोलुब्धकोयत्रतिष्ठति मृगस्तंदेशमागत्यकुटुंबेनसमन्वितः पालयन्सर्वथा
क्यानिलुब्धकंवाक्यमब्रवीत् मृगउवाच हनमांप्रथमंव्याधपश्चादेतान्क्रमेणतु बालकानिततःपश्चादन्यनांमाविलंबय लुब्धकैस्तुमृगा

भक्ष्यानास्तिदोषः कदाचन वयंयास्यामः स्वर्लोकंसत्यपूतानसंशयः तथातेसकुटुंबस्यप्राणपुष्टिर्भविष्यति एतच्छ्रुत्वातुवचनंमृगेणपरि
भाषितं आत्मानंनिंदयित्वातुलुब्धकोवाक्यमब्रवीत् व्याधउवा० अहोमृगमहासत्वगच्छगच्छस्वमाश्रमम् आमिषेणनमेकार्यंयद्भाव्यं
तद्भविष्यति जीवानांघातनेनैवविसुखस्तर्जनेतथा नैवपापंकरिष्यामिकुटुंबार्थेकदाचन त्वंगुरुर्ममधर्माणामुपदेष्टामृगोत्तम गच्छगच्छ
मृगश्रेष्ठकुटुंबेनसमन्वितः मयात्यक्तानिशस्त्राणिसत्यधर्मःसमाश्रितः मृगउवा० कर्मन्यासमहंकृत्वात्वत्सकाशमिहागतः हन्यतांह
न्यतांशीघ्रंनतेपापंभविष्यति मयादत्तापुरावाक्तयाबद्धोनयाम्यहं एतच्छ्रुत्वातुवचनंलुब्धकोवाक्यमब्रवीत् लुब्धकउ० त्वंबंधुस्त्वं
गुरुस्त्वानात्वंमेमातापितासुहृत् मयात्यक्तानिशस्त्राणित्यक्तंमायादिकंबल कस्यभार्यासुताःकस्यकुटुंबंकस्यतन्मृग नैःस्वकर्मचभो
क्तव्यंमृगगच्छयथासुखं इत्युक्त्वासनदातूर्णंबभंजसशरंधनुः मृगंप्रदक्षिणीकृत्यनमस्कृत्यक्षमापयत् एतस्मिन्नंतरेनेदुर्देवदुं
दुभयोदिवि आकाशात्पुष्पवृष्टिस्तुपपातसुमनोहरा तदादूतःसमायातोविमानंगृह्यशोभनं देवदूतउवा० अहोव्याधमहासत्वसर्व
सत्वक्षयंकर विमानमिदमारुह्यसदेहःस्वर्गमाविश शिवरात्रिप्रभावेनपातकंतेक्षयंगतं उपवासस्तुसंजातोनिशिजागरणंकृतम्
यामेयामेकृतापूजा अज्ञानेनशिवस्यच सर्वपापविनिर्मुक्तोगच्छत्वंरुद्रमंदिरं विमानंचसमारुह्यसत्याच्चित्रपदंव्रज मृगराजम-
हासत्वभार्यापुत्रसमन्वितः भार्यात्रितयसंयुक्तोनक्षत्रपदमाप्नुहि तवनाम्नातुतदृक्षंलोकेख्यातंभविष्यति एतच्छ्रुत्वातुवचनंलुब्धके

नसमन्वितः विमानंतुनदारुह्यनक्षत्रपदमागतः हरिणीद्वयमन्वेष्टुंपृष्ठतोमृगमेवच ताराभितयसंयुक्तंमृगशीर्षंतदुच्यते बालकद्वितयं-
चाग्रेतृतीयापृष्ठतोमृगी पृष्ठतस्तत्रसंप्राप्तामृगशीर्षस्यसन्निधौ मृगराड्दृश्यतेद्यापिकृत्वासंव्योमगमुत्तमं उपवासंकरिष्यंतिजागरे
णासमन्वितं यथोक्तशास्त्रमार्गेणतेषांमोक्षोनसंशयः शिवरात्रिसमंनास्तिव्रतंपापक्षयापहं यत्कृत्वासर्वपापेभ्योमुच्यतेनात्रसं-
शयः अश्वमेधसहस्राणिवाजपेयशतानिच प्राप्नोतितत्फलंसर्वंनात्रकार्याविचारणा इतिश्रीलिंगपुराणेउमामहेश्वरसंवादेशि
वरात्रिव्रतकथासमाप्ता अथोद्यापन स्कंदउवा॰ व्रतस्योद्यापनंकर्मकृथंकार्यंचमानवैः कोविधिःकानिकर्माणिकथयस्वमम
प्रभो ईश्वरउ॰ शृणुषण्मुखयत्नेनलोकानांहितकाम्यया उद्यापनविधिंचैवकथयामितवाग्रतः यदासंजायतेवित्तंभक्तिश्रद्धा
समन्वितं सएवव्रतकालःस्याद्यतोनित्यंहिजीवितं चतुर्दशाब्दंकर्तव्यंशिवरात्रिव्रतंशुभं एकभक्तंत्रयोदश्यांचतुर्दश्यामुपोष-
णं संपाद्यसर्वसंभारान्मंडपंतत्रकारयेत् वस्त्रैःपुष्पैःसमाच्छन्नंपट्टवस्त्रैश्चशोभितं तन्मध्येलेखयेद्दिव्यंलिंगतोभद्रमंडलं अ
थवासर्वतोभद्रंमंडपांतःप्रकल्पयेत् शोभोपशोभासंयुक्तंदीपैःसर्वत्रसोज्ज्वलं आचार्यंपूजयेत्तत्रऋत्विग्भिःसहितंशुभैः शि
वरूपाश्चतेविप्राःपूज्याश्चंदनपुष्पकैः अनुज्ञातश्चतैर्विप्रैःशिवपूजांसमारभेत् रुद्रनाम्नानमोंतेनब्राह्मणानपिपूजयेत् अव्रणंस
जलंकुंभंतस्योपरितुविन्यसेत् सौवर्णंराजतंताम्रंमृन्मयंवानवंदृढं कुंभोपरिन्यसेद्देवंउमयासहितंशिवं सौवर्णंप्यथवारौप्यंवृष

भेसंस्थितंशुभे रत्नालंकरणैर्हैमैरलंकृत्यप्रपूजयेत् पलेनवानदर्धेनतदर्धार्धेनवापुनः वस्त्रयुग्मेनसंवेष्ट्यबिल्वपत्रैःप्रपूजयेत् उमाम
हेश्वरींमूर्तिंपूजयेद्वृषभेस्थितां सोमंचसगणंचैवपूजयित्वामहेश्वरं पुराणस्तोत्रपाठैश्चरात्रिशेषंनयेद्बुधः ततःप्रभातसमयेकृत्वा
संध्यादिकाःक्रियाः ततःपूजांप्रकुर्वीतततोहोमंसमाचरेत् तिलव्रीहियवैश्चैवपायसान्नेनभक्तितः त्र्यंबकमितिमंत्रेणनमःशंभवे-
चेतिच गौरीर्मिमायेतिमंत्रेणशतमष्टोत्तरद्वयं होमंकुर्याच्चमतिमान्बिल्वपत्रैस्तुनामभिः अजैकपादहिर्बुध्न्योभवःशर्वउमापतिः रुद्रः
पशुपतिःशंभुर्वरदःशिवईश्वरः महादेवोहरोभीमोनामान्येवंचतुर्दश पूर्णाहुतिंततोहुत्वाकर्मशेषंसमापयेत् एतैर्होमःप्रकर्तव्यःकुं
भदानेपितान्स्मरेत् भोज्यंक्षमापयेद्देवमेभिर्नामपदैःपृथक् प्रतिमांकुंभसहितामाचार्यायनिवेदयेत् शंभोप्रसीददेवेशसर्वलोकेश्वर
प्रभो नवरूपप्रदानेनममसंतुमनोरथाः आचार्यंपूजयेद्वस्त्रालंकारभूषणैः सुवस्त्रांगांततोदद्याद्धनसंपूर्णहेतवे अन्येभ्योपि
यथाशक्त्याब्राह्मणेभ्योहिदक्षिणां चतुर्दशप्रदातव्याविप्रेभ्योजलपूरिताः कुंभायज्ञोपवीतानिवस्त्राणिचपृथक्पृथक् सुसूक्ष्माणि
चवस्त्राणिशय्यांसोपस्करांतथा द्वादशैवतुगादद्यात्परिधानादिकंतथा अथवादक्षिणामेवप्रदद्यात्तुष्टयेद्द्विजान् व्रतमेतत्कृतंयन्मे पू
र्णंवापूर्णमेवच सर्वंसंपूर्णतांयातुप्रसादाद्भवतोमम इतिसंप्रार्थ्यतान्विप्रान्प्रणम्यचपुनःपुनः ततश्चस्वजनैःसार्धंस्वयंभुंजीतसुव्र
ती इतिश्रीस्कंदपु०शिवरात्रिव्रतोद्यापनंसंपूर्णं इतिचतुर्दशीव्रतानिसमाप्तानि अथपौर्णिमाव्रतानिलिख्यंते चैत्रीपौर्णमासी

सामान्यनिर्णयात्परैव अत्रविशेषोनिर्णयामृते विष्णुस्मृतौ चित्राऋक्षयुताचैत्रीपरास्नानादिकर्मणि चित्रवस्त्रप्रदानेनसिद्धिमाप्नोतिवैनरः
मंदार्केचगुरौवारेयदाभवतिपूर्णिमा तत्राश्वमेधजंपुण्यंस्नानश्राद्धादिभिर्भवेत् वायवीये संवत्सरकृताचार्याःसाफल्यायाखिलान्कृतान्
दमनेनार्चयेच्चैत्र्यांविशेषेणसदाशिवं इयंमन्वादिरपि इतिचैत्रीपौर्णिमा वैशाखपौर्णमास्यांविशेषःस्मर्यते भविष्ये वैशाखीका
र्तिकीमाघीतिथयोतीवपूजिताः स्नानदानविहीनास्तानानेयाःपांडुनंदन अथज्येष्ठशुक्लपौर्णमास्याममायांवावटसावित्रीव्रतमुक्त
म् इयंचपूर्वविद्धाग्राह्या भूतविद्धानकर्तव्याअमावास्याचपूर्णिमा वर्जयित्वामुनिश्रेष्ठसावित्रीव्रतमुत्तमं इतिब्रह्मवैवर्तात् ज्येष्ठमासि
सितेपक्षेद्वादश्यांरजनीमुखे इत्युपक्रम्य व्रतंत्रिरात्रमुद्दिश्यदिवारात्रिस्थिराभवेत् ज्येष्ठमासिसितेपक्षेपूर्णिमायांतथाव्रतं चीर्णं
व्रतंमहाभक्त्याकथितंतेमयानघ धर्मराजउ॰ इतिदाक्षिणात्यास्त्वेवमाचरंति पाश्चात्यादयस्तुअमावास्यायामाचरंति तच्चोक्तंनि-
र्णयामृतेभविष्ये अमायांचतथाज्येष्ठेवटमूलेमहासती त्रिरात्रोपोषितानारीविधिनानेनपूजयेत् अशक्तौतुत्रयोदश्यांनक्तंकुर्याज्जि
तेंद्रिया अयाचितंचतुर्दश्यांअमायांसमुपोषणमिति हेमाद्र्यादिभिस्तुभाद्रपदपौर्णमास्यामिदमुक्तं तेतुनदानींआचरंति यदात्वष्टा
दशघटिकाचतुर्दशीतदापरैव पूर्वविद्धैवसावित्रीव्रतेपंचदशीतिथिः नाड्योष्टादशभूतस्यतन्नकुर्यात्परेहनीतिमाधवोक्तेः वस्तुतस्तु
भूतविद्धानिषेधएव भूतोष्टादशनाडीभिरितिवाक्यं अन्यथासावित्रीव्रतेष्टादशनाडीवेधदोषकल्पनायांनिषेधांतरकल्पनागौरवस्या

त् ज्येष्ठेमासित्रयोदश्यांदंतधावनपूर्वकं दंतकाष्ठंसमं शृ॰ मंजानीयंचतुरंगुलं तस्यापराण्हसमयेनद्यादौविमलेजले तिलामलककल्केनके
शान्संशोध्ययत्नतः स्नात्वाचैवशुचिर्भूत्वावटंसिंचेद्दृढूदकैः द्विदिक्षयेतथारोगेऋतुमत्यांतथैवच कारयेद्द्विजहस्तेनसर्वंसंपद्यतेशु॰
भं इदंचत्रयोदशीमारभ्यपौर्णिमांतंकर्तव्यं सधवाविधवावापिसपुत्रापुत्रवर्जिता भर्तुरायुर्विवृध्यर्थंकुर्याद्व्रतमिदंशुभं ज्येष्ठेमासे
तुसंप्रासेपौर्णमास्यांपतिव्रता स्नात्वाचैवशुचिर्भूत्वानियमंकारयेत्ततः अथव्रतविधिः वटसमीपेगत्वातत्रसंस्कारयुक्तवटपूजा
उक्ता आचम्यमासपक्षाद्युल्लिख्यममभर्तुःपुत्राणांचायुरारोग्यप्राप्तयेजन्मजन्मनिअवैधव्यप्राप्तयेचसावित्रीव्रतमहंकरिष्ये इ
तिसंकल्प्य वटमूलेस्थितोब्रह्मावटमध्येजनार्दनः वटाग्रेतुशिवोदेवोसावित्रीवटसंश्रिता वटसिंचामितेमूलंसलिलैरमृतोपमैः
सूत्रेणवेष्टयेभक्त्यागंधपुष्पाक्षतैःशुभैः नमोवटायसावित्र्यैभ्रामयेचप्रदक्षिणा सावित्रींचवटंसम्यग्गोभिर्मंत्रैःप्रपूजयेत् एवं-
विधिंबहिःकृत्वासम्यग्वैगृहमागता हरिद्राचंदनेनैवगृहमध्येलिखेद्वटम् तत्रोपविश्यसंकल्प्यपूजाकार्याप्रयत्नतः तिथ्यादि
संकीर्त्यममजन्मजन्मनिअवैधव्यप्राप्तयेभर्तुःचिरायुरारोग्यसंपदादिकामनयासावित्रीव्रतमहंकरिष्ये नियममंत्रः त्रिरात्रंलंघयि
त्वातुचतुर्थेदिवसेत्वहं चंद्रायार्घ्यंप्रदत्वाचपूजयित्वाकृतांसतीं मिष्टान्नानियथाशक्त्याभोजयित्वाद्विजोत्तमान् भोक्ष्येहंतुजगद्धा
त्रिनिर्विघ्नंकुरुमेशुभे इतिनियममंत्रः अथपूजा ततःभूमिंस्पृष्ट्वा महीद्यौःपृथिवीतिऋक् ओं ओषधयःसं॰ आकलशेषु॰

कलशंनिधाय पंचपल्लवसमृत्तिकाहिरण्ययवान्कुंभेनिक्षिप्य तदुपरिवंशपात्रंनिधाय तस्योपरिसप्तधान्यानिपृथक्स्थाप्यानि तदुपरि
वस्त्रंवस्त्रोपरिद्वात्रिंशद्‌ब्रुकपरिमितांवालुकाप्रतिमांब्रह्मणासहसंस्थाप्यपूजयेत् पद्मपत्रासनस्थश्चब्रह्माकार्यश्चतुर्मुखः सावित्री
तस्यकर्तव्यावामोत्संगगतातथा आदित्यवर्णाधर्मज्ञासाक्षमालाकरातथा ध्यानं ब्रह्मणासहितांदेवींसावित्रींलोकमातरं सत्यव्रतंचसा
वित्रींवरंत्वावाहयाम्यहं आवाहनं ब्रह्मणासहसावित्रिसत्यवत्सहितेप्रिये हेमासनंगृह्यतांतुधर्मराजसुरेश्वर आसनं गंगाजलंसमा
नीतंपाद्यार्थंब्रह्मणःप्रिये भक्त्यादत्तंधर्मराजसावित्रीप्रतिगृह्यतां पाद्यं भक्त्यासमाहृतंतोयंफलपुष्पसमन्वितं अर्घ्यंगृहाणसावि
त्रीममसत्यव्रतप्रिये अर्घ्यं सुगंधिसहकर्पूरंसुरभिस्वादुशीतलं ब्रह्मणासहसावित्रिकुरुष्वाचमनीयकं आचमनीयं पयोदधिघृतं
चैवशर्करामधुसंयुतं पंचामृतेनस्नपनंक्रीयतांपरमेश्वरि पंचामृतस्ना॰ मंदाकिन्याःसमानीतंहेमांभोरुहवासितं सावित्रिब्रह्मराजे
नस्नानार्थंप्रतिगृह्यतां स्नानं सूक्ष्मतंतुमयंवस्त्रयुग्मंकार्पाससंभवं सावित्रिसत्यकाभ्यांभक्त्यादत्तंप्रगृह्यतांवस्त्रं सावित्रिसत्यव
क्तातेधर्मराजसुरेश्वरि सावित्रीब्रह्मणासार्धमुपवीतंप्रगृह्यतां उपवीतं भूषणानिचदिव्यानिमुक्ताहारयुतानिच त्वदर्थमुपक्लृप्तानि
गृहाणशुभलोचने भूषणानि कुंकुमागरुकर्पूरकस्तूरीरोचनायुतं चंदनंतेमयादत्तंसावित्रिप्रतिगृह्यतां चंदनं अक्षतान्धवलान्शुभान्कुं
कुमाक्ताःसुशोभनाः मयानिवेदिताभक्त्यागृहाणपरमेश्वरि अक्षतान् हरिद्राकुंकुमंचैवसिंदूरंकज्जलान्वितं सौभाग्यद्रव्यसंयुक्तंसा

वित्रीप्रतिगृह्यतां सौभाग्यद॰ माल्यादीनिसुगंधीनिमालत्यादीनिवैप्रभो मयाह्हतानिपुष्पाणिपूजार्थंप्रतिगृह्यतां पुष्पाणि अथांगपूजा
सावित्र्यै॰ पादौपू॰ वरप्रियायै॰ जंघेपू॰ कमलपत्राक्ष्यै॰ कटीपू॰ सूत्रधारिण्यै॰ उदरंपू॰ गायत्र्यै॰ कंठंपू॰ ब्रह्मणःप्रियायै॰ मुखंपू॰ सौभाग्य
दात्र्यै॰ शिरःपू॰ अथब्रह्मसत्यपूजा धात्रेनमः पादौपू॰ विधात्रेन॰ जंघेपू॰ स्रष्ट्रे॰ उरूपू॰ प्रजापतये॰ मेढ्रंपू॰ परमेष्ठिने॰ कटीपू॰ अग्निरू
पाय॰ नाभिंपू॰ पद्मनाभाय॰ हृदयंपू॰ वेधसेन॰ बाहूपू॰ विधये॰ कंठं॰ हिरण्यगर्भाय॰ मुखंपू॰ ब्रह्मणेन॰ शिरःपू॰ विष्णावेन॰ सर्वांगंपू॰
देवद्रुमरसोद्भूतः कालागरुसमन्वितः आघ्रेयतामयंधूपोसावित्रीप्रतिगृह्यतां धूपं चक्षुर्दंसर्वलोकानांतिमिरस्यनिवारणं आर्तिक्यं
कल्पितंभक्त्यागृहाणपरमेश्वर दीपं अन्नंचतुर्विधंस्वादुरसैःषड्भिःसमन्वितं मयानिवेदितंभक्त्यानैवेद्यंप्रतिगृह्यतां नैवेद्यं मध्ये
पानीयं उत्तरापोशनं मुखप्रक्षालनं इदंफलमितिफलं पूगीफलमितितांबूलं हिरण्यगर्भेतिदक्षिणां नमोब्रह्मण्यदेवित्वंसनातंब्रह्मणः
प्रिये पूजितासिद्विजैःसर्वैस्त्रीभिर्मुनिगणैस्तथा त्रिसंध्येदेविभूतानांवंदनीयासुशोभने मयादत्तांचपूजेयंत्वंगृहाणनमोस्तुते पुष्पां
जलिं ततोर्घ्यत्रयंदद्यात् ॐकारपूर्वकेदेविसर्वदुःखनिवारिणि वेदमातर्नमस्तुभ्यंसौभाग्यंचप्रयच्छमे इदमर्घ्यं पतिव्रतेमहाभा
गेब्रह्माणिचशुचिस्मिते दृढव्रतेदृढमतेभर्तुश्चप्रियवादिनि अर्घ्यं अवैधव्यंचसौभाग्यंदेहित्वंममसुव्रते पुत्रान्पौत्रांश्चसौख्यंचगृहा
णार्घ्यंनमोस्तुते अर्घ्यं सावित्रीब्रह्मगायत्रीसर्वदाप्रियभाषिणी तेनसत्येनमांपाहिदुःखसंसारसागरात् त्वंगौरीत्वंशचीलक्ष्मीस्त्वंप्रभा-

चंद्रमंडले त्वमेवचजगन्माताल्वसुन्दरवरानने यन्मयादुष्कृतंसर्वंकृतंजन्मशतैरपि भस्मीभवतुतत्सर्वंअवैधव्यंचदेहिमे अवियोगोयथादे
वसाविच्यासहितस्यते अवियोगस्तथास्माकंभूयाज्जन्मनिजन्मनि इतिप्रार्थना सुवासिन्यस्ततःपूज्यादिवसेदिवसेगते सिंदूरंकुंकुमं
चैवतांबूलंचपवित्रकं तथादद्याच्चवस्त्राणिभक्ष्यंभोज्यादिकंसदा माहात्म्यंचैवसावित्र्याःश्रोतव्यंमुनिसत्तम पुराणश्रवणंकार्यंसतीनां
चरितशुभं इतिपूजाविधिः ततःव्रतपूजासांगतासिद्ध्यर्थंब्राह्मणायवायनप्रदानमहंकरिष्ये फलवस्त्रसमायुक्तंसौभाग्यद्रव्यसंयु
तं वंशपात्रेनिधायादौब्राह्मणायनिवेदयेत् उपायनमिदंद्रव्यंव्रतसंपूर्णहेतवे वाणकंद्विजवर्यायसहिरण्यंददाम्यहं इतिवायनं इति
वटसावित्रीपूजनंसमाप्तं अथकथा सनत्कुमारउवाच कुलस्त्रीणाव्रतंदेवमहाभाग्यंतथैवच अवैधव्यकरंस्त्रीणांपुत्रपौत्रप्रदाय
कं ईश्वरउ॰ आसीन्मद्रेषुधर्मात्माज्ञानीपरमधार्मिकः नाम्नाचाश्वपतिर्वीरोवेदवेदांगपारगः अनपत्योमहाबाहुःसर्वैश्वर्यसमन्वि
तः सपत्नीकस्तपस्तेपेसमाराधयतेनृपः सावित्रींचप्रसावित्रींजपन्नास्तेमहामनाः जुहोतिचैवसावित्रींभक्त्यापरमयायुतः ततस्तु
ष्टातुसावित्रीसादेवीद्विजसत्तमसाविग्रहवती देवीतस्यदर्शनमागता भूर्भुवःस्वरवत्येषासाक्षसूत्रकमंडलुः तांतुदृष्ट्वाजगद्वंद्यांसावि
त्रींचनृपोत्तमः प्रणिपत्यनृपोभक्त्याप्रहृष्टेनांतरात्मना तंदृष्ट्वापतितंभूमौतुष्टादेवीजगादह सावित्र्युवाच तुष्टाहंतवराजेंद्रवरंवरयसुव्र
त एवमुक्तस्तयाराजाप्रसन्नांतामुवाचह अनपत्योस्म्यहंदेविपुत्रमिच्छामिशोभने नान्यंवृणोमिसावित्रिपुत्रमेवजगन्मये अन्यदस्तिसम

ग्रमेक्षितोयच्चापिदुर्लभं प्रसादात्तवदेवेशितत्सर्वंविद्यतेगृहे एवमुक्तातुसादेवीप्रत्युवाचनराधिपं सावित्र्युवाच पुत्रस्तेनास्तिराजेंद्रकन्य
कातेभविष्यति कुलद्वयंतुसाराजन्नुद्धरिष्यतिभामिनी मन्नाम्नाराजशार्दूलतस्यनाम भविष्यति इत्युक्त्वातंमुनिश्रेष्ठराजानंब्रह्मणःप्रि
या अन्तर्धानंगतादेवीसंतुष्टसोमहीपतिः ततःकतिपयाहोभिस्तस्यराज्ञीमहीभुजः प्रसत्वाप्रमजायतपूर्णकालेसुभावहे सावित्र्या
तुष्टयादत्तासावित्र्याजप्रयानथा सावित्रीतेनवरदानस्यानामबभूवह राजतेदेवगर्भाभाकन्याकमललोचना तांदृष्ट्वाहेमगर्भाभांरा
जाचिंतामुपेयिवान् अयाच्यमानांचवरैरूपेणाप्रतिमांभुवि तस्यारूपेणतेसर्वेसन्निरुद्धामहीभुजः ततःसराजाचाहूयउवाचकमलेक्ष
णाम् पुत्रि प्रदानकालस्तेनचयाचतिकेचन स्वयंवरयत्वद्यंतेपतिंगुणसमन्वितं मनःप्रल्हादकरणंशीलेनाभिजनेनच इत्युक्त्वातांचराजें
द्रोवृद्धामात्यैःसहैवतां वस्त्रालंकारसहितांधनरत्नैःसमन्वितां विसृज्यचक्षणंतत्रयावत्तिष्ठतिभूमिपः तावत्तत्रसमागच्छन्नारदो-
भगवानृषिः संपूज्यचततोराजाअर्घ्यपाद्येनतंमुनिं आसनेचकरवासीनः पूजितस्तेनभूभुजा पूजयित्वामुनिंराजाप्रोवाचेदंद्विजो
त्तमं पावितोहंत्वयाविप्रदर्शनेनाद्यनारद यावदेवंवदेद्राजाजातावत्साकमलेक्षणा आश्रमादागतादेवीवृद्धामात्यैःसमन्विता अभि
वाद्यपितुःपादौववंदेसामुनिंततः नारदेनतुदृष्टातांदृष्ट्वाप्रोवाचभूमिपं कन्यांचदेवगर्भाभांकिमर्थंनप्रयच्छसि वरायत्वंमहाबाहोव
रयोग्यांहिसुंदरीं एवमुक्तस्तदातेनमुनिनानृपसत्तमः उवाचतंमुनिंवाक्यमनेनार्थेनप्रेषिता आगतेयंविशालाक्षीमयासंप्रेषितास

ती अनयाचवृतोभर्ताप्टच्छ्तंमुनिसत्तम साप्टष्टातेनमुनिनातस्यैवाचष्टभामिनी सावित्र्युवा॰ द्युमत्सेनस्यराज्यंवैवैरिणारुक्मिणाहृतं
देवाद्ंधःस्त्रीसहितःसत्यवान्नत्सुतोवने आश्रमेसत्यवान्नामद्युमत्सेनसुतोमुने भर्तेतिमनसाविप्रवृतोसौराजनंदनः नारदउ॰
कष्टंकष्टंमहाराजदुहितानवसुव्रत अजानंत्यावृतोभर्तागुणवानितिविश्रुतः सत्यंवदत्यस्यपितासत्यंमातात्मभाषते स्वयंसत्यंप्र
भाषेतसत्यवानितितेनसः तथाचाश्वाःप्रियास्तस्यअश्वैःक्रीडतिमृन्मयैः चित्रेपिविलिखत्यश्वान्चित्राश्वस्तेनचोच्यते रूपवान्
गुणवांश्चैवसर्वशास्त्रविशारदः नतस्यसदृशोलोकेविद्यतेचेहमानवः सर्वैर्गुणैश्चसंपन्नोरत्नैरिवमहार्णवः एकोदोषोमहानस्यगु
णानाछत्यतिष्ठति संवत्सरेणक्षीणायुर्देहत्यागंकरिष्यति अश्वपतिरुवा॰ अन्यंवरयभद्रंतेवरंसावित्रिगम्यतां विवाहस्यतुका-
लोयंवर्ततेशुभलोचने सावित्र्युवा॰ नान्यमिच्छाम्यहंतातमनसापिवरंप्रभो योमयाचवृतोभर्तासमेनान्योभविष्यति विचिंत्यमनसा
पूर्वंवाचापश्चात्समुच्चरेत् क्रियतेचततःपश्चाच्छुभंवायदिवाशुभं तस्मात्सुमांसंमनसाकथंचान्यंवृणोम्यहं सकृज्जल्पंतिराजानः
सकृज्जल्पंतिपंडिताः सकृत्कन्याप्रदीयंतेत्रीण्येतानिसकृत्सकृत् पतिंमत्वानमेबुद्धिर्विचलेच्चकथंचन सगुणोनिर्गुणोवापिमूर्खः
पंडितएवच दीर्घायुरथचाल्पायुःसवैभर्तामम प्रभो नान्यंवृणोमिभर्तारंयदिवास्याच्छचीपतिः इतिमत्वानयातातयत्कर्तव्यंसुखंनच
नारदउवा॰ स्थिराबुद्धिश्चराजेंद्रसावित्र्याःसत्यवान्प्रति त्वरयस्वविवाहायभर्त्रासहकुरूत्सिमाम् ईश्वरउवा॰ निश्चितांतुमुनिर्ज्ञात्वा

स्थिराबुद्धिश्चानिश्चला सावित्र्याश्चमहाराज्ञः प्रतस्थेसौवनंप्रति गृहीत्वातुधनंराजाद्युमत्सेनस्यसन्निधौ स्वल्पानुगोमहाराजोवृद्धाश्रमा
त्यैःसमन्वितः नारदस्तुततोरवैवैतत्रैवांतरधीयत सगत्वाराजशार्दूलोद्युमत्सेनेनसंगतः वृद्धश्चांधश्चराजासौवृक्षमूलमुपाश्रितः सा
वित्र्यश्वपतीराजापादोजग्राहवीर्यवान् स्वनामचसमुच्चार्यतस्थौतस्यसमीपतः उवाचराजातंभूपंकिमागमनकारणं पूजयित्वार्घ्यदा-
नेनवन्यमूलफलैश्चसः ततःपप्रच्छकुशलंसराजामुनिसत्तम अश्वपतिरुवा॰ कुशलंदर्शनेनाद्यतवराजन्ममाद्यवै दुहितामममसावि
त्रीतवपुत्रमभीप्सति भर्तारंराजशार्दूलमाप्नोत्वियमनिंदिता ममेदंकांक्षितंपूर्वंभर्तारमनयाविभो आवयोश्चैवसंबंधोभवत्वद्यममे
प्सितः द्युमत्सेनउवा॰ वृद्धश्चांधश्चराजेंद्रफलमूलाशनोनृप राज्याच्च्युतश्चमेपुत्रोवन्येनाद्यचजीवति साकथंसहतेदुःखंदुहितातव-
कानने अनभिज्ञाचदुःखानामित्यहंनाभिकांक्षये अश्वपतिरुवा॰ अनयाचवृतोभर्ताजानंत्याराजसत्तम अनेनसहवासस्तेतवपुत्रे
णमानद स्वर्गतुल्योमहाराजभविष्यतिनसंशयः एवमुक्तस्तदातेनराजाराजर्षिसत्तमः तथेतिसप्रतिज्ञायचकारोद्वाहमुत्तमं कृत्वावि
वाहंराजेंद्रंसंपूज्यविविधैर्धनैः अभिवाद्यद्युमत्सेनंजगामनगरंप्रति सावित्रीतुपतिंलब्ध्वाइंद्रंप्राप्यशचीतथा सत्यवानपिब्रह्मर्षेतया
पत्न्याभिनंदितः क्रीडतेतद्वनोद्देशेपौलोम्यामघवाइव नारदस्यचतद्वाक्यंहृदयेतुमनस्विनी वहंतीनियमंचक्रेव्रतस्यास्यचभामिनी
गणयंतीदिनान्येवनलेभेहर्षमुत्तमं ज्ञात्वाताद्दिवसंप्राप्यभर्तुर्मरणकारणं व्रतंत्रिरात्रमुद्दिश्यदिवारात्रौस्थिराभवत् ततस्त्रिरात्रंनिर्व

र्य्यसंतर्प्यपितृदेवताः अस्यांतेनियमंकृत्वात्रिदिनस्यमनस्विनी अस्मिन्दिनेचमर्तव्यमितिसत्यवतासुते कुठारंसंपरिगृह्याथपटकंचैवदा
रुकं प्रस्थितंचवनायैवसावित्रीवाक्यमब्रवीत् नगंतव्यंवनंत्वद्यममवाक्येनमानद मयापिगम्यतेसाधोत्वयासहवनंव्रज संवत्सरंभवेत्
पूर्णमाश्रमेस्मिन्ममप्रभो तद्वनंद्रष्टुमिच्छामिप्रसादंकुरुमेप्रभो सत्यवानुवाच नाहंस्वतंत्रःसुश्रोणिपृच्छस्वपितरौमम ताभ्यांप्रस्था-
पिता गच्छमयासहशुचिस्मिते एवमुक्तोनदानेनभर्त्रासाकमलेक्षणा श्वश्रूःश्वशुरयोःपादौअभिवाद्येदमब्रवीत् वनंद्रष्टुंगमिष्यामि
आज्ञामद्यप्रदीयतां उवाचवचनंसाध्वीवरमेकंप्रयच्छमे भर्त्रासहवनंगंतुमेतत्त्वरयतेमनः तस्यास्तद्वचनंश्रुत्वाद्युमत्सेनोब्रवीदिदं व्र
तंकृतंत्वयाभद्रेपारणंकुरुसुव्रते पारणांतेनतोभीरुवनंगंतुंत्वमर्हसि सावित्र्युवाच नियमश्चकृतोस्माभीरात्रौचंद्रोदयेसति जातेमया
प्रकर्तव्यंभोजनंतातमेशृणु वनदर्शनकामोस्तिभर्त्रासहममाद्यवै नमेतत्रभवेत्ग्लानिर्भर्त्रासहनराधिप इत्युक्तस्तुतयाराजाद्युमत्
सेनोमहीपतिः यत्तेभिलषितंपुत्रितत्कुरुष्वशुभमध्यमे नमस्कृत्वातुसावित्रीश्वश्रूश्वशुरयोरपि सहिताराजशार्दूलतेनसत्यवताविभो
विलोकयंतीभर्तारंप्राप्तकालंमनस्विनी वनंचफलितंहृष्टापुष्पितद्रुमसंकुलं द्रुमाणांचैववनानानिमृगाणांचैवभामिनी पश्यंतीमृगयूथा
निहृदयेनप्रवेपती तत्रगत्वासत्यवान्वैफलान्यादायसत्वरं काष्ठानिचसमादायबबंधभारकंतदा काष्ठभारंक्षणात्कृत्वावटशाखावा
लंबनं वटवृक्षस्यसासाध्वीउपविष्टामहासती काष्ठंपातयतस्तस्यजाताशिरसिवेदना ग्लानिश्चमहतीजातागात्राणांवेपथुस्तदा आ

गत्वावृक्षसामीप्यंसावित्रीमिदमब्रवीत् ममगात्रेनिकंपश्चजाताशिरसिवेदना कंटकैर्भिद्यतेभद्रेशिरोमेशूलसंमितैः उत्संगेतवसुश्रो-
णिस्वप्तुमिच्छामिसुव्रते अभिज्ञायमहद्विशालाक्षीतस्यमृत्योर्मनस्विनी प्राप्तकालंमन्यमानातस्यतत्रैवभामिनी सत्यवानपिसुप्तस्तुकृ
त्वोत्संगेशिरस्तदा तावत्तत्रसमागच्छत्पुरुषःकृष्णपिंगलः जाज्वल्यमानोवपुषाददर्शाथमनस्विनी उवाचवाक्यंवाक्यज्ञाकस्त्वंलोकभ
यंकरः नाहंधर्षयितुंशक्यापुरुषेणापिकेनचित् इत्युक्तःप्रत्युवाचेदंयमोलोकभयंकरः यमउवा॰ क्षीणायुस्तववरारोहेभर्तातवमनस्वि
नि नेष्याम्येनमहंबध्वात्वेतन्मेचचिकीर्षितं इत्युक्त्वापितृराजस्तांभगवान्स्वंचिकीर्षितं यथावत्सर्वमाख्यातंसत्प्रियार्थंप्रचक्रमे अयं
हिधर्मसंयुक्तोरूपवान्गुणसागरः नार्होमत्पुरुषैर्नेतुमतोस्मिस्वयमागतः ततःसत्यवतःकायात्पाशबद्धंचसत्वरं अंगुष्ठमात्रंपुरुषंनिश्च
कर्षयमोबलात् ततःसमुद्धृतप्राणंगतश्वासंहतप्रभं निर्विचेष्टंशरीरंतद्बभूवाप्रियदर्शनं यमस्तुतंतथाबध्वाप्रययौदक्षिणामुखः सा
वित्रीचापिदुःखार्तायममेवान्वगच्छत नियमव्रतसंपन्नामहाभागायतव्रता यमउवा॰ निवर्तगच्छसावित्रिकुरुष्वास्यौर्ध्वदेहिकम्
कृतंभर्तुस्त्वयानृण्यंयावद्गम्यंगतंत्वया सावित्र्युवा॰ यत्रमेनीयतेभर्तास्वयंवायत्रगच्छति मयापितत्रगंतव्यंएषधर्मःसनातनः तपसा
गुरुवृत्त्याचभर्तृस्नेहाद्व्रतेनच तवचैवप्रसादेननमेप्रतिहतागतिः प्राहुःसप्तपदंमैत्रंबुधास्तत्वार्थदर्शिनः मित्रतांचपुरस्कृत्यकिंचिद्व-
क्ष्यामितच्छृणु नानात्मवंतोहिवनेचरंतिधर्मंचसत्यंचपरिश्रमंच विज्ञानतोधर्ममुदाहरंतितस्मात्संतोधर्ममाहुःप्रधानं यमउवाच

निवर्त्तस्व तुष्टोस्मि अनयानया गिरा स्वराक्षरव्यंजनहेतुयुक्तया वरं वृणीष्वेह विनास्य जीवितं ददामि ते सर्वमनिंदिते वरं सावित्र्युवा॰ च्युतः स्वरा
ज्याद्वनवासमाश्रितो अलब्धचक्षुः श्वशुरो मम आश्रमे स लब्धचक्षुर्बलवान्भवेन्नृपस्तव प्रसादाज्ज्वलनार्कसन्निभः यमउवा॰ ददामि ते स
र्वमनिंदिते वरं यथा त्वयोक्तं भविता च तत्तथा तवाध्वनो ग्लानिमिवोपलक्षये निवर्त गच्छस्व न ते श्रमो भवेत् सावित्र्युवा॰ कुतः श्रमो भ
र्तृसमीपतो ह्यमे यतो हि भर्ता मम सा गतिर्ध्रुवा यतः पतिं नेष्यसि तत्र मे गतिः सुरेश भूयश्च वचो निबोध मे सतां सकृत्संगतमीप्सितं परं स्त
तः परं मित्रमिति प्रचक्षते न चाफलं सत्पुरुषेण संगतं ततः सतां सन्निवसेत्समागमे यमउ॰ मनोनुकूलं बुधबुद्धिवर्धनं त्वया यदुक्तं वच
नं हितावहं विना पुनः सत्यवतो हि जीवितं वरं द्वितीयं वरयस्व भामिनि सावित्र्युवा॰ हृतं पुरा मे श्वशुरस्य धीमतः स्वमेव राज्यं स
लभेत पार्थिवः न च स्वधर्मं प्रजहीत मे गुरुर्द्वितीयमेवं वरयामि ते वरं यमउवा॰ स्वमेव राज्यं प्रतिपत्स्यतेचिरान्न च स्वधर्मान्परिहा
स्यते नृपः कृतेन कामेन मया नृपात्मजे निवर्त गच्छस्व न ते श्रमो भवेत् सावित्र्युवा॰ प्रजास्त्वयैता नियमेन संयता नियम्य चैता नयसे न का
म्यया अतो यमत्वं तव देव विश्रुतं निबोध चेमां गिरमीरितां मया अद्रोहः सर्वभूतेषु कर्मणा मनसा गिरा अनुग्रहश्च दानं च सतां धर्मः सनात
नः एवं प्रायश्च लोकोयं मनुष्याः शक्तिपेशलाः संतः स्वेवाप्यमित्रेषु दयां प्राप्तेषु कुर्वते यमउवा॰ पिपासितस्येव यथा भवेत्पयस्तथा
त्वया वाक्यमिदं समीरितं विना पुनः सत्यवतोस्य जीवितं वरं वृणीष्वेह शुभे यदीच्छसि सावित्र्युवा॰ ममानपत्यः पृथिवीपतिः पिता

भवेत्पितुःपुत्रशतंचऔरसं कुलस्यसंतानकरंचनद्भवेत्तृतीयमेवंवरयामितेवरं यमउवा॰ कुलस्यसंतानकरंसुवर्चसंशतंसुतानांपितुरस्तु
तेशुभे हृतेनकामेननराधिपात्मजे अतीवदूरंहिपथस्त्वमागता सावित्र्युवा॰ नदूरमेतन्ममभर्तृसन्निधौमनोहिमेदूरतरंप्रधावति अथ
व्रजन्नेवगिरासमुन्नतंमयोच्यमानंशृणुधर्ममेवचः विवस्वतस्त्वंतनयःप्रतापवान्ततोहिवैवस्वतउच्यतेबुधैः समेनधर्मेणचरंजि
ताःप्रजास्ततस्तवेहेश्वरधर्मराजता आत्मन्यपिनविश्वासस्तथाभवतिसत्सुयः तस्मात्सत्सुविशेषेणसर्वःप्रणयमृच्छति सौहृदात्प्र
णयाच्चापिविश्वासोनामजायते तस्मात्सत्सुविशेषेणविश्वासंकुरुतेजनः यमउवा॰ उदाहृतंतेवचनंयदंगनेशुभेनताद्दक्त्वदृतेमया
श्रुतं अनेनतुष्टोस्मिविनास्यजीवितंवरंचतुर्थंवरयस्वगच्छच सावित्र्युवा॰ ममात्मजंसत्यवतस्तथौरसंभवेदुभाभ्यामिहयत्कुलोद्भ-
वम् शतंसुतानांबलिनांमहात्मनामिमंचतुर्थंवरयामितेवरं यमउवा॰ शतंसुतानांबलवीर्यशालिनांभविष्यतिप्रीतिकरंतवाबले
परिश्रमस्तेनभवेन्नृपात्मजेनिवर्तदूरंहिपथस्त्वमागता सावित्र्युवा॰ सतांहियाशाश्वतधर्मवृत्तिःसंतोनसीदंतिनचव्यथंतिते
सतांसद्भिर्नामफलंसमप्रयातिसद्भ्योभयंनानुभवंतिसंतः संतोहिसत्येननयंतिसूर्यंसंतोभूमिंतपसाधारयंति संतोगतिर्भूतभव्यस्य
राजन्सतांमध्येनावसीदंतिसंतः आर्यजुष्टमिदंवृत्तमितिविज्ञायशाश्वतं संतःपरार्थंकुर्वाणानावेक्षंतेप्रतिक्रियां नचप्रसादःसत्पु
रुषेषुमोघोनचाप्यर्थोनपश्यतिचाभिमानः यस्मादेतन्नियतंसत्सुनित्यंतस्मात्संतोरक्षितारोभवंति यमउवा॰ यथायथाभाषसि

धर्मसंहितंमनोनुकूलंसरूपदंमहार्थवत् तथानथामेत्वयिभक्तिरुत्तमावरंवृणीष्वाप्रतिमंपतिव्रते सावित्र्युवाच नतेपवर्गःसुकृताद्विनाकृ
तस्तथान्यथान्येष्ववरेषुमानदः वरंवृणेजीवतुसत्यवानयंयथामृतात्येवमहंविनापतिं नकामयेभर्तृविनाकृतंसुखंनकामयेभर्तृवि
नाकृतांदिवं नकामयेभर्तृविनागतांश्रियंनभर्तृहीनाव्यवसामिजीवितुं वरोपिदेवस्त्वनत्योरसात्मजशतंचदत्तोभवताकृपालुना
वरंवृणेजीवतुसत्यवानयंतवैवसत्यंवचनंभविष्यति तथेत्युक्त्वातुतान्पाशान्मुक्त्वावैवस्वतोयमः धर्मराजःप्रहृष्टात्मासावित्रीमिद
मब्रवीत् एषभद्रेमयामुक्तोभर्तातेकुलनंदिनि आरोग्यवयसीप्राप्यसिद्धार्थश्चभविष्यति चतुर्वर्षशतंचायुस्त्वयासार्धमुपेष्यति
सागतावटसामीप्यंकृत्वोत्संगेशिरस्ततः प्रबुद्धस्तुततोब्रह्मन्सत्यवानिदमब्रवीत् मयास्वप्नोवरारोहेदृष्टोद्यैवक्वभामिनि तत्सर्वंक
थितंतस्यायद्वृत्तंसर्वमेवतत् तथाचकथितःसर्वःसंवादश्चयमेनहि अस्तंगतेततःसूर्येद्युमत्सेनोमहीपतिः पुत्रस्यागमनंकांक्षीइत
श्चेतश्चधावति आश्रमादाश्रमंगच्छन्पुत्रदर्शनकांक्षया आवयोरंधयोर्यष्टिःक्वगतोसिविनावयोः एवंसाविविधंक्रोशन्सपत्नीकोम
हीपतिः चकारदुःखसंतप्तःपुत्रपुत्रेतिचासकृत् अकस्मादेवराजेंद्रोलब्धचक्षुर्महीश्वरः तद्दृष्ट्वापरमाश्चर्यंचक्षुःप्राप्तिंद्विजोत्तमाः
सांत्वपूर्वंतदावाक्यमूचुस्तेतापसाभृशं चक्षुःप्राप्त्यामहाराजसूचितंतेमहीपते पुत्रेणचसमायोगंप्राप्स्यसेनृपसत्तम ईश्वरउवाच
यावदेववदंत्येतेतापसाद्विजसत्तम सावित्रीसहितःप्राप्तःसत्यवान्द्विजसत्तम नमस्कृत्यद्विजान्सर्वान्मातरंपितरंतथा सावित्रीच

ततोब्रह्मन्ववंदेचरणाविति श्वश्रूश्वशुरयोर्ब्रह्मन्सावित्रीकमलेक्षणा मुनयऊचुः वरंसावित्रिजानासिकारणंवरवर्णिनि वृद्धयोश्चक्षुषः
प्राप्तेःश्वश्रूश्वशुरयोःशुभे सावित्र्युवा॰ नजानामिमुनिश्रेष्ठाश्चक्षुषःप्राप्तिकारणं चिरंसुप्तस्तुमेभर्तातेनकालव्यतिक्रमः सत्यवानुवा॰
अस्याःप्रभावात्संजातंदृश्यतेकारणंनच तत्सर्वंविद्यतेविप्राःसावित्र्यास्तपसःफलं व्रतस्यैवतुमाहात्म्यंदृष्टमेतन्मयाधुना ईश्वरउवा॰
एवंस्तुवदतस्तस्यतदासत्यवतःप्रभो पौराःसमागतास्तस्यआचरन्नृपतेर्हितं येनराज्यंबलाद्राजन्हृतंमंत्रेणामंत्रिणा अमात्येनहतः
सोपिइतिपौराःसमागताः पौराऊचुः उत्तिष्ठराजशार्दूलस्वंराज्यंपालयप्रभो अभिषिंचस्वराजेंद्र पुरेमंत्रिपुरोहितैः ईश्वरउवाच
संगत्वाराजशार्दूलःस्वपुरंजनसंवृतः पितृपैतामहंराज्यंसंप्राप्यंचमहात्मना सावित्रीसत्यवांश्चैवपरांमुदमवापतुः जनयामासपुत्रा
णांशतंवैबाहुशालिनां व्रतस्यैवतुमाहात्म्यात्तस्याःपितुरजायत पुत्राणांचशतंब्रह्मन्प्रसन्नाच्चयमात्तथा एतत्तेकथितंसर्वंव्रतमा
हात्म्यमुत्तमं क्षीणायुर्जीवितोभर्ताव्रतस्यास्यप्रभावतः कर्तव्यंसर्वनारीणामवैधव्यफलप्रदं सनत्कुमारउवा॰ विधानंब्रूहिदेवेशाव्र
तस्यास्यचत्र्यंबक क्रियतेविधिनाकेनस्त्रीभिस्त्रिपुरसूदन ईश्वरउवा॰ वर्षैकंनियमंकृत्वाएकभक्तेनमानद नक्ताहारेणवाविप्र भुं
क्तेप्राप्यद्विजर्षभ त्रिदिनंलंघयित्वाचचतुर्थेदिवसेशुभे चंद्रायार्घ्यंप्रदद्याच्च पूजयित्वासुवासिनीं सावित्रींचप्रसावित्रींगंधपुष्पैश्चपू
जयेत् मिथुनानियथाशक्त्याभोजयित्वायथासुखं भोक्ष्येहंतुजगद्धात्रिनिर्विघ्नंकुरुमेशुभे दिनंप्रतिदिनंश्रेष्ठंकुर्यान्न्यग्रोधसेचनम्

कृत्वावंशमयेपात्रेवालुकाप्रस्थमेवच सप्तधान्यभृतंपात्रंप्रस्थैकेनद्विजोत्तम प्रस्थंद्वात्रिंशद्बुकपरिमितसंख्यं कास्येन्मुनिशार्दूलवस्त्रयु-
ग्मेनवेष्टयेत् तस्योपरिन्यसेद्देवींसावित्रींब्रह्मणासह सावित्रीसत्यवांश्चैवकार्यौरौप्यमयौशुभौ पिठकंचकुठारंचकृत्वारौप्यमयौशुभौ
फलैःकालोद्भवैर्देवींपूजयेद्ब्रह्मणःप्रियाम् हरिद्रारंजितैश्चैवकंठसूत्रैःसमर्चयेत् सतीनांकंठसूत्राणित्रिदिनंप्रतिदापयेत् पक्कान्नानि
चदेयानिनित्यमेवद्विजोत्तमान् माहात्म्यंचैवसावित्र्याश्रोतव्यंमुनिसत्तम पुराणश्रवणंकार्यंसतीनांचरितंशुभं पूजयेच्चतथानित्यंमंत्रे
णानेनसुव्रत सावित्रीचप्रसावित्रीसततंब्रह्मणःप्रिया पूज्यसेहूयसेदेविद्विजैर्मुनिगणैःसदा त्रिसंध्यंदेविभूतानांवंदितात्वंजगन्म
ये सावित्रीत्वंप्रसावित्रीद्विधाभूतासिशोभने जगत्त्रयस्थितादेवित्रिसंध्यंचतथानघे श्रेष्ठेदेवित्रिलोकेचत्रेताग्नीत्वंमुनेश्वरी व्यापितःस
कलोलोकस्ततोमांपाहिसर्वदा रूपंदेहियशोदेहिसौभाग्यंदेहिमेशुभे पुत्रान्देहिधनंदेहिसर्वदाजन्मजन्मसु यथातेनवियोगोस्तिभर्त्रा
सहसुरेश्वरि तथाममहाभागेकुरुत्वंजन्मजन्मनि एवंसंपूजयेद्देवींकमलासनसंस्थितां एवंदिनत्रयंनीत्वाचतुर्थेहनिसत्तम मि
थुनानिचसंभोज्यषोडशानिद्विजोत्तम अर्चयित्वातथाचार्यंसपत्नीकंसुसंमतं तस्मैसंकल्पितंसर्वंहेमसावित्रिसंयुतं मंत्रेणानेनदातव्यं
द्विजमुख्यायसुव्रत सावित्रींकल्पविदुषींमणिपत्यतथामुने सावित्रीजगतांमातासावित्रीजगतःपिता मयादत्तांचसावित्रींब्रह्मणः
प्रतिगृह्यतां अवैधव्यंचमेनित्यंभूयाज्जन्मनिजन्मनि मृताचवसतेलोकेब्रह्मणापतिनासह तत्रैवचचिरंकालंभुक्त्वाभोगाननुत्तमान्

धर्मराजवरदानानंतरं सावित्र्युवाच यामदीयंव्रतंदेव भक्त्यानारीकरिष्यति भर्तुःसासहितासाध्वीसमस्तसुखभाग्भवेत् धर्म
राजउवाच गौरीम्सुग्धायस्याद्वा अपुत्रापतिवर्जिता सभर्तृकासपुत्रावाकुर्याद्व्रतमिदंशुभं ज्येष्ठेमासेतुसंप्राप्तेपौर्णमास्यांपतिव्रता
स्नात्वाचैवशुचिर्भूत्वावटंसिंच्यबहूदकैः सूत्रेणवेष्टयेद्भक्त्यागंधपुष्पाक्षतैःशुभैः नमोवैवस्वतायेतिभ्रामयंतीप्रदक्षिणा रात्रौतु
वीतनक्तंचत्र्यब्दमेकंसमाहिता तथैववटवृक्षंचपक्षेपक्षेप्रपूजयेत् अनेनैवविधानेनकर्तव्यंव्रतमुत्तमं सर्वान्मनोरथान्प्राप्यत्वंते
रुद्रोपिजायते इतिश्रीस्कंदपुराणेवटसावित्रीव्रतकथासमाप्ता अथोद्यापनं संप्राप्तेतुपुनर्ज्येष्ठेनक्तभुक् द्वादशींनयेत् दंत
धावनपूर्वंच स्नात्वानियममाचरेत् त्रिरात्रंलंघयित्वातुचतुर्थेदिवसेलहं चंद्रायार्घ्यंप्रदत्वाचपूजयित्वातुतांसतीं मिष्टान्नानियथाशक्त्या
भोजयित्वाद्विजोत्तमान् भोक्ष्येहंतुजगद्धात्रिनिर्विघ्नंकुरुमेशुभे नियममंत्रः कृत्वावंशमयेपात्रेवालुकाप्रस्थमेवच सप्तधान्ययुतं
पात्रंप्रस्थेकेनद्विजोत्तम वस्त्रद्वयोपरिस्थाप्यसावित्रींब्रह्मणासह हैमींकृत्वातयोर्मूर्त्तिंत्रिरात्रंव्रतमाचरेत् न्यग्रोधस्यतलेतिष्ठेद्याव
च्चैवदिनत्रयं सौवर्णींचैवसावित्रींसत्येनसहकारयेत् शैय्यपर्यंकमारोप्यरथस्योपरिविन्यसेत् पलादूर्ध्वंयथाशक्त्यारथंरौप्यमयंशु
भं काष्ठभारंकुठारंचवटंचैवसुविस्तृतं धर्मराजंनारदंचतत्रैवपरिकल्पयेत् वटमूलेप्रकुर्वीतमंडलंगोमयेनहि संस्थाप्यतत्रसावि
त्रींचतुष्कोपरिशोभनां एवंचमिथुनंकृत्वापूजयेद्गतमत्सरा पंचामृतेनस्नपनंगंधपुष्पोदकेनच चंदनागरुकर्पूरमाल्यवस्त्रविभूषणैः

पीतपिष्टेनपद्मंचचंदनेनाथवालिखेत् देवींसंपूजयेत्तत्रमंत्रैरेभिर्विधानतः नमःसावित्र्यैपादौतुप्रसावित्र्यैतुजानुनी कटिंकमलपत्राक्ष्यैउद
रंमूलधारिण्यैगायत्र्यैचनमःकंठेशिरसिब्रह्मणःप्रिये अथब्रह्मसत्यवतोःपादौधात्रेनमःपूज्यावूरूज्येष्ठायवैनमः परमेष्ठिनेचवैमेंद्र
मग्निरूपायवैकटी वेधसेचोदरंपूज्यंपद्मनाभायवैहृदि कंठंविधात्रेपूज्यंहिहेमगर्भायवैमुखं ब्रह्मणेवैशिरःपूज्यंसर्वांगंविष्णवेन-
मः अभ्यर्च्यैवंक्रमेणैवशास्त्रोक्तविधिनाशुभे ततोरजतपात्रेणअर्घ्यंदद्याद्द्वयोरपि अर्घ्यमंत्रः ॐकारपूर्विकेदेविवीणापुस्तकधा
रिणि देवमातर्नमस्तुभ्यंअवैधव्यंप्रयच्छमे पतिव्रतेमहाभागेवह्निजातेशुचिस्मिते दृढव्रतेदृढमतेभर्तुश्चप्रियवादिनि अवैधव्यंच
सौभाग्यंदेहित्वंममसुव्रते पुत्रान्पौत्रांश्चसौख्यंचगृहाणार्घ्यंनमोनमः अथब्रह्मसत्यवतोरर्घ्यमंत्रः त्वयासृष्टंजगत्सर्वंसदेवा-
सुरमानुषं सत्यव्रतधरोदेवब्रह्मरूपनमोस्तुते अथयमस्यार्घ्यमंत्रः त्वंकर्मसाक्षीलोकानांशुभाशुभविवेककृत् वैवस्वतगृहाणा
र्घ्यंधर्मराजनमोस्तुते धर्मराजःपितृपतिःसाक्षीभूतोसिजंतुषु कालरूपगृहाणार्घ्यमवैधव्यंचदेहिमे गंधपुष्पैश्चनैवेद्यैःफलैःकर्पू
रदीपकैः रक्तवस्त्रैरलंकारैःपूजयेद्गतमत्सरा सावित्रीप्रार्थना सावित्रीब्रह्मगायत्रीसर्वदाप्रियभाषिणी तेनसत्येनमांपाहिदुः-
खसंसारसागरात् त्वंगौरीत्वंशचीलक्ष्मीस्त्वंप्रभाचंद्रमंडले त्वमेवचजगन्मातामामुद्धरवरानने सौभाग्यंकुलवृद्धिंचदेहित्वंमम-
सुव्रते यन्मयादुष्कृतंसर्वंकृतंजन्मशतैरपि भस्मीभवतुतत्सर्वमवैधव्यंचदेहिमे अथसावित्रीसत्यवतोःप्रार्थना अवियोगो-

यथादेवसावित्र्यासहितस्यते अवियोगस्तथास्माकं भूयाज्जन्मनिजन्मनि यमप्रार्थना कर्मसाक्षिजगत्पूज्यसर्ववंद्यप्रसीदमे
संवत्सरव्रतंसर्वंपरिपूर्णंतदस्तुमे सावित्रीप्रार्थना सावित्रीत्वंयथादेविचतुर्वर्षशतायुषं पतिंप्राप्तासिगुणिनंममदेविनथाकुरु
सावित्रीचप्रसावित्रीसनातनब्रह्मणःप्रिये पूजितासिद्विजैःसर्वैःस्त्रीभिर्मुनिगणैस्तथा त्रिसंध्यंदेविभूतानांवंदनीयासिसुव्रते म
यादत्ताचपूजेयंत्वंगृहाणनमोस्तुते जागरंतत्रकुर्वीतगीतवादित्रमंगलैः सुवासिन्यस्ततःपूज्यादिवसेदिवसेशुभाः सिंदूरंकुंकुमंचै
वताम्बूलंचसपूगकं तथाद्याच्चशूर्पाणिभक्ष्यंसौभाग्यमष्टकं संतिष्ठेच्चदिवारात्रौकामक्रोधविवर्जिता दिनत्रयेपिकर्तव्यमेवमर्घ्या
दिपूजनं ततश्चतुर्थदिवसेयत्कार्यंतच्छृणुष्वमे मिथुनानिचतुर्विंशत्षोडशद्वादशाष्टवा पूजयेद्वस्त्रगोदानैर्भूषणाच्छादनासनैः अथ
वागुरुमेकंवाव्रतस्यविधिकारकं सर्वलक्षणसंपन्नंसर्वशास्त्रार्थपारगं वेदविद्याव्रतस्नातंशांतंतुविजितेंद्रियं सपत्नीकंसमभ्य
र्च्यवस्त्रालंकारमंडलैः शय्यांसोपस्करांदद्यात्गृहंचैवातिशोभनं अशक्तस्तुयथाशक्त्यास्तोकंस्तोकंचकल्पयेत् सावित्रीत्वंयथादे
वीचतुर्वर्षशतायुषा सत्यवत्पतिनासार्द्धंमयादत्तातथाकुरु मयादत्तांचसावित्रींब्रह्मणामतिगृह्यतां मयागृहीतासावित्रीत्वयाद
त्तासुशोभने यावच्चंद्रश्चसूर्यश्चसहभर्त्रासुखीभव न्यग्रोधस्यसमीपेतुगृहेवास्थंडिलेपिवा सावित्र्याश्चैवमंत्रेणघृतहोमंतु
कारयेत पायसंजुहुयाद्भक्त्याघृतेनसहभामिनी व्याहृत्याचैवमंत्रेणतिलव्रीहियवांस्तथा गुरुंचगुरुपत्नींचततोभक्त्याक्षमापयेत्

धर्मराजोयमोयानानीलः कालोंतकोव्ययः वैवस्वतश्चित्रगुप्तोदध्नोमृत्युः सयोवटः मासिमासितथान्येतैर्नामभिः सेचयेद्वटम् न्यग्रोधे
हूंवसाम्येवतस्माद्यत्नेनसेचयेत् होमांतेदक्षिणांदद्यादृत्विजस्त्वक्षमापयेत् भुंजीतवासरांतेतुनक्तेशांनातपस्विनी अर्घ्यंदद्याद
रुंधत्यैदृष्ट्वाचैवप्रणम्यच अरुंधतिनमस्तेस्तुवसिष्ठस्यप्रियेशुभे अर्घ्यमेतन्मयादत्तंफलपुष्पसमन्वितं पुत्रान्देहिसुरवंदेहिगृ
हाणार्घ्यंनमोस्तुते सखिभिर्ब्राह्मणैः सार्धंभुंजीतविजितेंद्रिया एवंकरोतियानारीव्रतमेनदनुत्तमं भ्रातरः पितरौपुत्राः श्वशुरौ
स्वजनास्तथा चिरायुषस्तथारोगाभवंतिचनसंशयः भर्त्रान्वसहितासाध्वीब्रह्मलोकेमहीयते इतिश्रीस्कंदपु॰ सावित्रीव्रतोद्या
पनंसंपूर्णं अथआषाढपौर्णमास्यांगोपद्मव्रतंतत्रपूजा चतुर्भुजंमहाकायंजांबूनदसमप्रभं शंखचक्रगदापद्मरमागरुडशो
भितं सेवितंमुनिभिर्देवैर्यक्षगंधर्वकिंनरैः एवंविधंहरिंध्यात्वाततोयजनमारभेत् ध्यानं आवाहयामिदेवेशंभक्तानामभय
प्रदं स्निग्धकोमलकेशंत्वमनसावाहयेद्धरिं सहस्रशीर्षेत्यावा॰ सुवर्णमणिभिर्दिव्यैरचितेदेवनिर्मिते दिव्यसिंहासनेकृष्णाउप
विश्यप्रसीदमे पुरुषएवेदमित्यासनं पादोदकंसुरश्रेष्ठसुवर्णकलशेस्थितं गंधपुष्पाक्षतैर्युक्तंपाद्यंमेप्रतिगृह्यतां एतावानस्येति
पाद्यं अष्टद्रव्यसमायुक्तंस्वर्णपात्रोदकंशुभं भोभयंकरभक्तानांगृहाणार्घ्यंजगत्पते त्रिपादूर्ध्वइत्यर्घ्यं कर्पूरेणसमायुक्तंसुशीरे
णसुवासितं दत्तमाचमनीयार्थंनीरंस्वीकुरुतांविभो तस्माद्विराळित्याचम॰ गंगागोदावरीचैवयमुनाचसरस्वती नर्मदासिंधुकावे

शैनाघ्यः स्नानार्थमाहृतं यत्पुरुषेणेति स्ना॰ वस्त्रयुग्मं समानीतं पट्टसूत्रेण निर्मितं सुवर्णखचितं दिव्यं गृहाण त्वं सुरेश्वर तं यज्ञमिति वस्त्रं कार्पासतंतुभिर्युक्तं ब्रह्मणा निर्मितं पुरा अनेकरत्नखचितमुपवीतं गृहाण भो तस्माद्यज्ञात्संभृत॰ यज्ञोप॰ चंदनं मलयोद्भूतं कस्तूरीचारुचंदनं कर्पूरेण च संयुक्तं स्वीकुरुष्वानुलेपनं तस्माद्यज्ञात्सर्वहुतमिति गंधं शतपत्रैः कर्णिकारैश्चंपकैर्मल्लिकादिभिः तुलसीयुक्तपुष्पाणि गृहाण पुरुषोत्तम तस्मादश्वेति पुष्पं दशांगं गुग्गुलोद्भूतं सुगंधिं च मनोहरं कृष्णागरुसमायुक्तं धूपं देव गृहाण मे यत्पुरुषं व्यं॰ धूपं साज्यं च वर्ति॰ ब्राह्मणोस्येति दीपं अन्नं चतुर्विधं॰ चंद्रमा मनसेति नैवेद्यं आचमनीयं करोद्वर्तनं इदं फलमिति फलं पूगीफलमिति तांबूलं हिरण्यगर्भेति दक्षिणां यानि कानि च॰ नाभ्या आसीदिति प्रदक्षिणां नमोस्त्वनंताय सह॰ ससास्यासन्निति नम॰ देवदेव जगन्नाथ गोपाल प्रतिपालक गोपदैः कृतसंत्राण गृहाण कुसुमांजलिं यज्ञेन यज्ञमिति पुष्पांजलिं तद्वर्षोक्तं वायनं परमान्नमिदं विप्र कांस्यपात्रेण संयुतं त्वत्प्रसादादहं विप्र व्रतस्य फलमाप्नुयां मंत्रहीनं क्रियाहीनमिति प्रार्थना इति गोपद्मपूजा अथ कथा सूत उवा॰ नाथैकं त्वां हि पृच्छामि चतुर्वर्गफलप्रदं सर्वरोगप्रशमनं विष्णुसारूप्यमुक्तिदं नारीणामथवा पुंसां भुक्तिमुक्तिफलप्रदं ब्रूहि चेदस्ति देवर्षे कृपां कृत्वा ममोपरि नारद उवा॰ भगवन्सर्वमाख्यास्ये यत्पृष्टं विदुषा त्वया गोपद्मकं व्रतं त्वेतद्व्रतानां व्रतमुत्तमं कर्तुः सिद्धिकरं दिव्यं विख्यातं भुवनत्रये सनत्कुमार उवा॰ भगवन्भूतभव्येश सर्वशास्त्रविशारद तद्व्रतं ब्रूहि मे ब्रह्मन्कथमुद्यापनं

भवेद् पुरेदं केनवाचीर्णं देवर्षे कथयव्रतं नारदउवा॰ आषाढपौर्णमास्यांवाकतथाष्टम्यांहरेर्दिने प्रारभेद्व्रतमेतच्च कार्तिकावधितत्तिथौ
तिलामलककल्केनस्नानंनित्यंविधायच नदीतीरेथवागोष्ठेशिवागारेहरेर्गृहे वृंदावनेवापिलिखेत्पद्मकपदंशुभं त्रयस्त्रिंशत्तुपद्मा
निकुर्यात्कन्यादिनेदिने तत्संख्ययाप्रकर्तव्याअर्घ्यप्रदक्षिणानतीः बालकृष्णंससुहृदंश्चलक्ष्म्यासहजगद्गुरुं गंधाद्यैरुपचारैस्तुय-
थाशक्त्याप्रपूजयेत ब्राह्मणांस्तुततःपूज्यपद्मसंख्यान्नमुत्सृजेत् प्रथमाब्देथवटकैर्द्वितीयेपूपकैर्व्रती तृतीयेशालिपिष्टान्नैश्चतुर्थेपू
रिकादिभिः पंचमेपरमान्नैस्तुसम्यग्देवंपूजयेद्व्रती अत्रैवोदाहरंतीममितिहासंपुरातनं ऋषीणांपृच्छमानानांसूतेनोक्तंपुरातनं सूतउवा॰
पुराशक्रोमरावत्यांदेवदानवकिंनरैः रुद्रैरादित्ययक्षाद्यैर्गंधर्वैर्वसुभिःसह रंभानृत्यंसमारेभेक्रीडालोभेनविह्वला एवंनृत्येक्रियमा-
णेत्रुटितंवाद्यमंडलं क्षणमात्रंविचार्याथधर्मराजस्तुउक्तवान् यमउवा॰ जन्मप्रभृत्येव्रतंयैश्चनकृतंप्राणिभिःक्वचित् तच्चर्मस्नायुभिःशक्रक
र्तव्यंछादनंढक्के नारदेनश्रुतंतच्चजगादयदुनंदनं स्वर्चयित्वातुतंकृष्णोवचनंचेदमब्रवीत् कृष्णउवा॰ सर्वलोकज्ञदेवर्षेभुवनेषुचरन्सदा
आश्चर्यंवददेवर्षेयद्यस्तिशुभदायकं नारदउवा॰ गतंमयामरावत्यामाश्चर्यंधर्मसंसदि तत्रसर्वेसमायाताःसुराइंद्राश्चतुर्दश रुद्राएकादश-
तथाआदित्याद्वादशापिच वसवोष्टौतथानागायक्षराक्षसपन्नगाः रंभयाचसमारब्धंनृत्यंशक्रस्यपश्यतः त्रुटितंचर्मवाद्यानामब्रुवंस्तस्यसा
धनं यमःप्राहतथादूतान्सुभद्राद्यव्रतानास्तिभो तामानयध्वंतच्चर्मवाद्ययोग्यंसदस्त्विति तच्छ्रुत्वातुमयाभीत्यासर्वंत्वयिनिवेदितं सूतउवा॰

इतिनारदवाक्यंतुश्रुत्वाकृष्णस्त्वरान्वितः सुभद्रायागृहंगत्वापूजितस्तामुवाचह श्रीकृष्णउ॰ किंचिद्व्रतंत्वयाभद्रेकृतंवानेतिसंशयः सुभद्रोवा॰
सर्वव्रतानिभोकृष्णाकृतान्येवनसंशयः नोचेत्त्वद्भगिनीचाहंनस्यामर्जुनवल्लभा पुत्रोभिमन्युश्चकथंकथयस्वजगत्पते कृष्णउ॰ तथापित्वंमहाभा
गेव्रतमेकंसमाचर गोपद्मेतिचविख्यातंत्रिषुलोकेषुविश्रुतं इतिकृष्णवचःश्रुत्वासुभद्रातत्तदाकरोत् कृष्णोपदिष्टविधिनासत्वरंचसमापितं सोद्यापने
व्रतेचीर्णेकालेयमभटायमुः दूताऊ॰ सुभद्रेतवदेहस्थचर्मार्थेत्यागतावयं त्वच्चर्मसुरवाद्यार्थंयमेनचप्रकल्पितं इतिदूतवचःश्रुत्वासव्रतास्मीति
साब्रवीत् ततोभटाः सर्वएवददृशुःसादरास्तदा पद्मानानिचयंतस्यागृहेगांचसवत्सकां स्थंडिलेहस्तमात्रेतुसुसंमिद्धंहुताशनं कृ
ष्णोपदिष्टवीक्ष्येवंदूताजग्मुर्यसांनिकं प्रतिपेदेप्रभावेनसुभद्रापदमच्युतं नारदउवा॰ इतिसूतवचःश्रुत्वाऋषयश्चक्रिरेव्रतम् सूत
उवा॰ भोभोनारददेवर्षेसर्वशास्त्रविशारद शीघ्रंब्रूहिसरवेपद्मव्रतस्योद्यापनेविधिः नारदउवा॰ पूर्णेतुपंचमेवर्षेव्रतस्योद्यापनंभवेत्
श्रीकृष्णप्रतिमाकार्यासुवर्णस्यपलेनवै पुष्पमंडपिकाकार्याचतुर्द्वारसुशोभना तन्मध्येपूजयेद्भक्त्याग्रमयासहितंहरिं त्रयस्त्रिंशत्त
तोविप्रान्वृत्वाहोमंसमाचरेत् अतोदेवेतिमंत्रेणजुहुयात्तिलपायसं ब्राह्मणान्भोजयेत्पश्चाद्गोभिःसंपूजयेद्व्रती यंयंचिंतयतेकामंतंतं
प्राप्नोत्यसंशयं इतिभ॰ गोपद्मव्रतोद्या॰ संपूर्णं अथआषाढशुक्लपौर्णमास्यांकोकिलाव्रतं यदाआषाढाधिकमासस्तदाको
किलाव्रतानुष्ठानंकार्यं तद्विधिः आचम्यप्राणानायम्यमासपक्षाद्युल्लिख्यममेहजन्म जन्मांतरस्थसर्वपापक्षयार्थंपुत्रपौत्रलक्ष्मीवृद्ध

येसौभाग्यवृद्धिद्वारा अवैधव्यसपत्ननाशायकोकिलारूपगौरीप्रीत्यर्थंकोकिलाव्रतंकरिष्ये इतिसंकल्प्य आषाढपौर्णमास्यांतुसंध्या-
कालेत्युपस्थिते संकल्पयेन्मासमेकंश्रावणेप्रत्यहंत्वहं स्नानंकरिष्येनियमाद्ब्रह्मचर्यस्थितासती भोक्ष्यामिनक्तंभूशय्यांकरिष्येप्राणि
नांदयामित्युक्त्वा स्नानंकरोमिदेवेशिकोकिलेप्रीतयेनव जलेस्मिन्पावनेपुण्येसर्वदेवजलाशये इतिमंत्रेण तिलामलककल्केनसर्वौ
षधिजलेनच वचापिष्टेनवाष्टौदिनानिप्रत्येकंवचौषधियुक्तेनचषड्दिनान्येवंमासावधिस्नानेक्रमः एवंस्नात्वारविंध्यात्वात्तस्मा अर्घ्यंच
दापयेत् आदित्यभास्कररवेअर्कसूर्यदिवाकर प्रभाकरनमस्तुभ्यंगृहाणार्घ्यंनमोस्तुते इतिसूर्यार्घ्यमंत्रः ततः स्वर्णपक्षांरौप्यपादां
मौक्तिकनेत्रांप्रवालसुरवींरत्नपृष्ठांचूतचंपकवृक्षस्थांपक्षिरूपिणींकोकिलांलिखित्वापूजयेदित्युक्तं स्वर्णपक्षांरक्तनेत्रांप्रवालसुरवपंक
जां कस्तूरीवर्णसंयुक्तामुत्पन्नांनंदनेवने चूतचंपकवृक्षस्थांसुष्टस्वरसमन्वितां चिंतयेत्पार्वतींदेवींकोकिलारूपधारिणीं ध्यानं आग
च्छकोकिलेदेविदेहिमेवांछितंफलं चंपककुसुमारूढाक्रीडंतीनंदनेवने आवाहनं आसनंक्षौमवस्त्रेणनिर्मितंत्वधनयेनव गृहाणेदंम
यादेविकोकिलेप्रियवर्धिनि आसनं तिलस्नेहेतिलसुखेतिलसौख्येतिलप्रिये सौभाग्यंधनपुत्रांश्चदेहिमेकोकिलेनमः तिलपुष्पफलै
र्युक्तंपाद्यंमेप्रतिगृह्यतां पाद्यं रत्नचंपकपुष्पैश्चपीतचंदनसंयुतं हेमपात्रेस्थितंतोयंगृहाणार्घ्यंनमोस्तुते अर्घ्यं निर्मलंसलिलंगांगं
कोकिलेपक्षिरूपिणि वासंतेनसुगंधेनगृहाणाचमनीयकं आचमनीयं पंचामृतेनस्नपनंकोकिलेकलकंठके मयादत्तेनप्रीतालंभवमे

परमेश्वरि पयोदधिघृतं चैव शर्करामधुसंयुतं पंचामृतेनस्नपनं दत्तं स्वीकुरु कोकिले पंचामृतस्ना० मंदाकिनीजलं पुण्यं सर्वतीर्थसमन्वितम्
स्नानार्थं मया दत्तं कोकिले गृह्यतां नमः स्नानं यस्मात्कार्पाससूत्रेण वासांसि विविधानि च पीनवस्त्रप्रदानेन प्रीता भव ममांबिके वस्त्रं
कंचुकं च मया दत्तं नानावर्णविचित्रितं कोकिले गृह्यतां देवि प्रसीद परमेश्वरि कंचुकं हरिद्रारंजितं देवि कंठसूत्रं समर्पितं कोकिले सुभगे दे
वि वरदा भव चांबिके कंठसूत्रं यानि रत्नानि सर्वाणि गंधर्वे भूरगेषु च तैर्युक्तं भूषणं हैमं कोकिले प्रतिगृह्यतां भूषणानि श्रीखंडं चंदनं दि
व्यं गंधाढ्यं सुमनोहरं विलेपनं सुरश्रेष्ठ चंदनं प्रतिगृह्यतां चंदनं अक्षताश्च० अक्षतान् कुंकुमालक्तकं दिव्यं कामिनीभूषणास्पदं सौ
भाग्यदं गृहाणेदं प्रसीद हरवल्लभे हरिद्रां कुंकुमं चैव सिंदूरं कज्जलान्वितं सौभाग्यद्रव्यसंयुक्तं गृहाण परमेश्वरि सौभाग्यद्रव्यं करवीरैर्जातिकुसुमैश्चंपकैर्बकुलैः शुभैः शतपत्रैश्च कल्हारैरर्चयेत परमेश्वरी पुष्पाणि वनस्पतिरसो० धूपं साज्यं चेति दीपं शर्करा खंडखा
द्यानि दधिक्षीरघृतानि च आहारार्थं मया दत्तं नैवेद्यं प्रतिगृह्यतां नैवेद्यं पाटलोशीरकर्पूरसुरभिस्वादुशीतलं तोयमेतत्सुखस्पर्शं कोकि
ले प्रतिगृह्यतां आचम० चंदनागरुकर्पूरकस्तूरीकेसरान्वितं करोद्वर्तनकं देवि गृह्यतां हरवल्लभे करोद्वर्तनं कूष्मांडनारिकेरं च पनसं कद
लीफलं जंबीरं मातुलिंगं च फलं गृह्ण नमोस्तु ते फलं पूगीफलमिति तांबूलं हिरण्यगर्भेति दक्षिणां कोकिले कृष्णवर्णेत्वं सदा वससि का
नने भवानीहरकांतासि कोकिलायै नमो नमः नीराजनं पूजिता परया भक्त्या कोकिला गिरिशप्रिया पुष्पैर्नानाविधैः श्वेतैर्वरदास्तु सदा मम

पुष्पांजलिं यानिकानिचप्रदक्षिणां नमोदेव्यैनमस्कारं कोकिलारूपधारिण्यैजगन्मात्रेनमोस्तुते शरणागतदीनानांत्राहिदेविसदांबिके
गंधपुष्पाक्षतैर्युक्तंतोयंहेमफलान्वितं अर्घ्यंगृहाणदेवेशिवांछितार्थंप्रयच्छमे आषाढस्यसितेपक्षेमेघकर्णेहरिप्रिये कोकिलेत्वंजगन्मा
तर्गृहाणार्घ्यंनमोस्तुते पुनरर्घ्यं तिलस्नेहे॰ रूपंदेहिजयं॰ प्रार्थना व्रतांतेहंमीनिलपिष्टजांकोकिलांहत्वाविप्रायदद्यात् देविचैत्रर
थोत्पन्नेविंध्यपर्वतवासिनि अर्चितापूजितासित्वंकोकिलेहरवल्लभे कोकिलेकलकंठासिमाधवेमधुरस्वरे वसंतेदेविगच्छत्वंदेवानांनंदनेव
ने इतिविसर्जनं इतिकोकिलापूजा अथकथा युधिष्ठिरउवा॰ स्वभर्त्रासहसंयोगःस्नेहःसौभाग्यमेवच भवेद्यथाकुलस्त्रीणांतद्व
तंब्रूहिकेशव श्रीकृष्णउवा॰ यमुनायास्तटेरम्येमथुरानगरीशुभा तस्यांशत्रुघ्ननामाभूद्राजाराघववंशजः तस्यभार्याकीर्तिमालाना
म्नासीत्प्रथिताभुवि प्रणम्यभगवान्पृष्टोवसिष्ठोमुनिसत्तमः कीर्तिमालोवाच वदमेत्वंमुनिश्रेष्ठसौभाग्यप्रापिदंव्रतं पूज्यःकथंच
भगवान्शिवःकेनव्रतेनच वसिष्ठउवा॰ यदिपृच्छसिमेत्वंहिव्रतानामुत्तमंव्रतं तारणंसर्वपापानांकथयामिनिबोधतत् दक्षप्रजाप
तेर्यज्ञेपुरादेवाःसमागताः ऋषयश्चतथासर्वेविद्याधरगणास्तथा ब्रह्माविष्णुश्चवायुश्चदेवराजस्तथैवच वरुणोग्निर्यमश्चैव
येचान्येचदिवौकसः वसिष्ठोवाल्मिकिर्गार्ग्योविश्वामित्रोमहानृषिः एतेचान्येचऋषयःसर्वेयज्ञार्थमागताः अपश्यन्नारदस्त
त्रसंनिकेआगताइति ईश्वरेणविनासम्यग्दृष्ट्वासर्वान्समागतान् शिखांसंस्पृश्यपाणिभ्यांननर्तकलहप्रियः ज्ञात्वासकलमूलंच

ततः कैलासमाययौ सर्वाघनाशनं पुण्यं कैलासशिखरं शुभं तत्र दृष्ट्वा समासीनं गौरीसहितशंकरं कृतांजलिपुटो भूत्वा प्रणिपत्य मुनिस्थितः
ईश्वरस्तमुवाचाथ निःश्वसंतमनेकधा किमागमनकृत्यं ते मदीयं सदनं प्रति श्वासोश्वासेन संयुक्तस्तन्मे ब्रूहि द्विजोत्तम ईश्वरस्य वचः
श्रुत्वा शिरवां संस्पृश्य पाणिना दुःखयुक्त इवोवाच नारदः कलहप्रियः नारद उवा॰ यन्निमित्तं महादेव मर्त्यलोकात्समागतः वदामि
दुःखसंयुक्तं तच्छृणुष्व जगत्पते दक्षयज्ञमहं द्रष्टुमद्य देवात्समागतः तत्र यज्ञे स्थिताः सर्वे दक्षजामातरः प्रभो दृष्ट्वा तांस्त्वनतन्मध्ये
दृष्टस्त्रिभुवनेश्वरः नवावज्ञा कृता तेन दक्षेणापुण्यकर्मणा तेन वैश्वाससंयुक्त आगतोस्मि नवांतिकं ईश्वरेण विना किंचिद्धर्मकार्यं न
सिध्यति अतोस्य विफलः सर्वः प्रयासः स्वमखं प्रति तस्य तद्भाषितं श्रुत्वा नतन्मिथ्येत्यचिंतयत् सक्रोधस्तत्तदा जातो हीश्वरो जगदी
श्वरः गौर्या च प्रार्थितो देवः श्रुत्वा तन्नारदेरितं तस्य यज्ञस्य घातार्थं देव नत्र व्रजाम्यहं इत्युक्त्वा चलिता रोषादीश्वरेणानिवारिता जगदी
शन मस्तु भ्यं व्रजामि पितृवेश्मनि नारदेनाथ सहिता गणेशेन च संयुता यज्ञार्थमागता चैव दक्षद्वारे शिवप्रिया वक्त्रीं दृष्ट्वा वसोर्धारां लज्जि
ता च शिवप्रिया तिष्ठंती द्वारि तां दक्षो न ददर्श महासतीं क्षणमेकं च तिष्ठंती यदा दक्षो न पश्यति तदेवं चिंतितं गौर्या जीवितव्यं मया कथम्
धाविता कुंडनिकटे हाहा कृत्वा च सा ततः क्षिप्तं वन्हौ न दा गौर्या शापं दत्वा च दारुणं दृष्ट्वा तच्च गणेशेन पाशः परशुरुद्यतः क्षुब्धोत्थ सीत
दात्यर्थं गौर्यर्थं च गणाधिपः पाशेन बध्वा कृतिचित्कोपान्निहतवान्सुरान् दक्षेण नोदिता देवाः सर्वे युद्धाय निर्ययुः महद्युद्धमभून्द्भूयः स

हदेवैर्गणैशिवुः तंदृष्ट्वानारदः शीघ्रंपुनःकैलासमाययौ निवेदयामासतद्युद्धंगौर्याविसर्जनं तच्छ्रुत्वास्फालयामासजटांकोपादुमापतिः
ततोजातोतिविकटः पुरुषोरक्तलोचनः सबभाषेमहादेवंस्वामिन्नाज्ञांचदेहिमे वीरभद्रेतिनामास्यंकृत्वाचाज्ञांसमर्पयत् दक्षयज्ञवि-
घातार्थंगच्छवीराशुसत्वरं श्रुत्वानंदीश्वरवचः सर्वप्रमथसंवृतः आययौयज्ञसदनमसृग्वन्हिषुनिक्षिपत् ततइंद्रादयोदेवास्तद्वद्या
यविनिर्ययुः क्षणात्पराजितास्तेनविद्रुतास्त्वदिशोदश अनुद्रुतश्चतान्सोपिपूष्णोदंतानपातयत् भगस्यनेत्रेनासांचसरस्वत्यान्यहृंत
न एवंविद्राव्यतान्सर्वान्शिरोदक्षस्यचिच्छिदे कृत्वेवंयज्ञघातंसआजगामशिवांतिकं नमस्कृत्यपुरस्तस्थौकृतंकार्यमितिब्रुवन् तथा
प्यशांतःकोपोस्यज्ञात्वेतिज्ञानचक्षुषा प्रसादयितुमासीनंब्रह्माविष्णुसमीयतुः नमस्कृतस्ततस्ताभ्यांप्रसन्नोभूत्सदाशिवः नारदस्तुं
बरुश्चैवगीतैःशिवमतोषयत् प्रसन्नंवीक्ष्यतंविप्रशिरवांसंस्पृश्यपाणिना ननर्दनारदस्तत्रतोषयन्नधिकंशिवं एतस्मिन्नंतरेब्रह्मा-
विष्णुश्चप्रमथाधिपं व्यजिज्ञपत्तंदक्षादीन्कृपादृष्ट्याविलोकय कृत्सांगान्कुरुपूर्णांगान्मृतान्संजीवयप्रभो विलोकितास्तेदेवेनकृपादृष्ट्या
विलोकिताः पूषादयश्चसांगावैअभूवंस्तत्प्रसादतः उत्थितःपादयोर्मूलयर्योदक्षःपिनाकिनः अपराधंक्षमस्वेतिपुनःपुनरुवाचह उ
त्थापितःकरेणासौततोदक्षःपिनाकिना उक्तश्चमापुनःकार्षीरेवमीशावमानकं विचरस्वस्वरूपेणेतिभूयस्तंकोपआविशत् शशापचतं
दागौरीयज्ञविघ्नकरींशिवः मरखेविघ्नंकृतवतीदक्षस्यैषाततोचिरात् तिर्यग्योनिसमापन्नाविचरिष्यसिभूतले ततोगौरीबभाषेतंप्र

पिपत्यसदाशिवं कथंयास्यामितिर्यक्त्वं भूतलेचस्थितिः कथं अन्यथानैवभाविताशापएषत्वयोदितः कोकिलामधुरालापाभवेयन्नं
दनेवने कोकिलानांस्वरोरूपंरूपंस्त्रीणांपतिव्रतं विद्यारूपंकुरूपाणांक्षमारूपंतपस्विनां अचिरादेवचपुनःकुलेमहतिजन्मसे भूया
स्त्वमेवभर्ताचनवियोगश्चमेमतः वरयेत्कुलजांप्राज्ञःकुरूपामपिकन्यकां दुष्टेकुलेसमुत्पन्नाभर्तुःपातयतेकुलं नदीपातयतेकूलंनारीपातयते
कुलं नदीनांचैवनारीणांस्वच्छंदंललितागतिः ततस्तुष्टोमहादेवश्चक्रेशापविमोचनं दशवर्षसहस्राणिकोकिलारूपधारिणि नंदनेदेव
विपिनेचरिष्यसिततःपरं हिमाचलसुताभूत्वामत्प्रियत्वमुपेष्यसि देवानांतुयथाविष्णुःसहकारोमहीरुहां गंगाचसर्वतीर्थानांत
थातिर्यक्षुकोकिला आषाढेद्वेयदास्यातांकोकिलायास्तदार्चनं तथायाकुरुतेनारीनसावैधव्यमाप्नुयात् वसिष्ठउ॰ एतद्वाक्यावसा
नेतुगौरीसाकोकिलाभवत् तदारभ्यशशश्चिन्त्येतत्प्रथितंकोकिलाव्रतं यानारीनैवकुरुतेमोहात्साविधवाभवेत् कुरुत्वमेतत्कल्याणि
कीर्तिमालेव्रतोत्तमं कीर्तिमालोवा॰ कथमाराध्यतेदेवीकोकिलारूपधारिणी विधानंब्रूहितद्विप्रत्वत्प्रसादात्करोम्यहं वसिष्ठउ॰
कोकिलाव्रतमाहात्म्यंविधानंचवदामिते शृणुदेविप्रयत्नेनमंत्रैःपौराणिकैर्युतं मलमासेत्वतिक्रांतेशुद्धाषाढेसमागते आषाढ्यां
पौर्णमास्यांतुसंध्याकालेह्युपस्थिते संकल्पयेन्मासमेकंश्रावणप्रभृतिह्यहं स्नानंकरिष्येनित्यंचब्रह्मचर्यस्थितासती भोक्ष्येनक्तंच
भूशय्यांकरिष्येप्राणिनांदयां सौभाग्यधनधान्यादिप्राप्तयेशिवतुष्टये इतिसंकल्प्यविप्राग्रेनारीविप्रैश्चएवच प्राप्यानुज्ञांतुसंपाद्यसा

मयींसकलामपि मत्पूषेचप्रतिदिनंदंतधावनपूर्वकं नद्यांगत्वाथवावाप्यांतडागेगिरिनिर्झरे स्नानंकरोमिदेवेशिकोकिलेप्रीतयेतव जलेस्मिन्पाव
नेपुण्येसर्वदेवजलाश्रये स्नानंकृत्वाव्रतीदेविसुगंधामलकैस्तिलैः दिनाष्टकंततःपश्चात्सर्वौषध्यापुनःपृथक् वचापिष्टेनचस्नानंदिनान्य
ष्टौसमाचरेत् तिलामलकपिष्टेनवचौषधिसुतेनच षड्दिनानिततःस्नानंसंपूर्णफललिप्सया स्नात्वाध्यात्वारविंतस्मै दद्यादर्घ्यंप्रयत्नतः
आदित्यभास्कररवे अर्कसूर्यदिवाकर प्रभाकरनमस्तुभ्यंगृहाणार्घ्यंनमोस्तुते सूर्यार्घ्यमंत्रः कारयेत्कोकिलांदेवींसौवर्णीसर्वकामदां
रौप्यंचरणयोश्चैवनेत्रयोश्चापिमौक्तिके रत्नानिपंचपृष्ठेतुचूतवृक्षसमाश्रितां अथवातिलपिष्टेनकोकिलांपक्षिरूपिणीं निधायताम्रपात्रे
तांपूजयेत्सुसमाहितः उपचारैःषोडशभिर्यथावित्तंनिबोधमे आवाहयामितांदेवींकोकिलारूपधारिणीं अवतारंकुरुष्वात्रप्रसादंकुरु
सुव्रते आगच्छकोकिलेदेविदेहिमेवांछितंफलं चूतवृक्षंसमारुह्यरम्यसेनंदनेवने तिर्यग्योनिसमुद्भूतेकोकिलेकलकंठके तिलपुष्पाक्षतैर्यु-
क्तंगृहाणत्वंनमोस्तुते आषाढस्यासितेपक्षेमेघवर्णस्वरूपिणि कोकिलानामदेवित्वंस्नानार्थंप्रतिगृह्यतां कुर्यादेवंविधांपूजांश्रावणां
तंचपूजयेत् विसर्जयेच्चपश्चात्तां सौवर्णींकोकिलांयदि यदाचतिलपिष्टस्यकोकिलाक्रियतेतदा कुर्यात्प्रत्यहमाह्वानंभिन्नायास्तुविसर्ज
नं रम्यंवनंसमागत्यश्रुत्वाकोकिलकूजितं यदानश्रूयतेशब्दस्तुपवासंतुतद्दिने कोकिलेकृष्णावर्णेत्वंसदावासोवनेषुते सौभाग्यमतुलंदे
हिगृहाणार्घ्यंनमोस्तुते वसंतेचसमुत्पन्नेविंध्यपर्वतवासिनि गच्छगच्छमहादुर्गेस्वस्थानेनंदनेवने विसर्जनं रूपंदेहिधनंदेहिसर्वं

सौभाग्यंदेहिमे पुत्रान्देहियशोदेहिसौभाग्यंदेहिसंपदः इत्युक्त्वाचततः पश्चाद्विष्यान्नेनसुव्रती नक्तभोजीभवेद्राज्ञियावन्मासः स
माप्यते मासांतेताम्रपात्रेतुकोकिलांस्वर्णनिर्मितां वस्त्रधान्यगुडैर्युक्तांस्थापयित्वाकुंडलंतथा दद्यात्सदक्षिणांचापिदैवज्ञेवापुरोहिते एव
माषाढमासस्यद्वैविध्येससुपस्थिते सधवाविधवावापियानारीकोकिलाव्रतं करोतिसप्तजन्मानिसौभाग्यंलभतेतुसा मृतागौरीपुरंयाति
तिविमानेनार्कतेजसा श्रीभगवानुवाच एतद्व्रतंवसिष्ठेनमुनिनाकथितंपुरा तथाकृतंतुतत्पार्थसमस्तंकीर्तिमालया तस्याश्चसर्वंनिष्प-
न्नंवसिष्ठवचनंयथा एवमन्यापिकौंतेयकोकिलाव्रतमुत्तमं नकरोतियदानारीव्यालीभवतिकानने एकतः सर्वदानानिकोकिलाव्रतमे
कतः कृतंपुराप्सरोभिश्चऋषिपत्नीभिरादरात् अहिल्ययाचसापूर्वमर्चिताशापमुक्तये अरुंधत्यासहस्नात्वापूजिताकोकिलानृप
सीतयापूजितासापिसर्वकामार्थसिद्धये गौतम्यांदंडकारण्येस्नानंकृत्वायथाविधि नलान्वेषणकामेनदमयंत्याचपूजिता रुक्मिण्याच
ततः स्नात्वापूजिताकोकिलाशिवा विष्णोः पत्युरवाप्त्यर्थंतच्चजातंनसंशयः कुन्तेलामलिनादीनापरकर्मरतातथा एवंवंध्याकाकवंध्या
विवत्सामृतवत्सका सर्वास्ताः फलभाजस्युर्व्रतस्यास्यप्रभावतः आयुरारोग्यमैश्वर्यंसुखंवृद्धिंयशः प्रजां सौभाग्यंसुंदरंरूपंनारी
प्राप्नोतिनान्यथा एतद्व्रतंमयाख्यातंकार्यंवारंत्रयंनृप तृतीयांतेचविधिवत्कार्यमुद्यापनंशुभं एकस्माज्जायतेद्रव्यंद्वितीयाल्लभतेसु-
तान् तृतीयाच्चापिसौभाग्यंप्राप्नुयान्नात्रसंशयः इतिवराहपुराणेकोकिलाव्रतं अथोद्यापनं उद्यापनविधिंब्रूहिव्रतस्यास्यममप्र

भो येनविज्ञानमात्रेणासौभाग्यंचभविष्यति श्रावणेपौर्णमास्यांतुशुक्लपक्षेतथैवच द्वितीयायामेकभक्तंदंतधावनपूर्वकं उपवासस्यनिय
मंकर्तुंव्रतपरायणं तृतीयापुण्यफलदामध्यान्हेसमुपोषिता उपलिप्यशुचौदेशेमंडलंतत्रकारयेत् अष्टदलंलिखेत्पद्मंचतुष्कोणंचभद्र
कं कलशंवारिपूर्णंचपंचरत्नसमन्वितं तस्योपरिन्यसेत्पात्रंप्रस्थेनैकेनपूरयेत् तदभावेनदर्धेवाकुडवेनाथनारद ऊर्णापट्टंकृष्णवर्णंयुग्मं
दद्यात्स्वशक्तितः तस्योपरिन्यसेद्देवींकोकिलाप्रतिमांतथा अत्रगंधप्रदानेनधूपदीपप्रदानकं नैवेद्यंमोदकान्दद्यात्पक्वान्नंघृतसंयुतं अ
र्घ्यंचैवप्रदातव्यं तांबूलंफलमुत्तमं रात्रौजागरणंकार्यंवाद्यनृत्यप्रभूषितं पूजिताएकचित्तेन फलंप्राप्नोतिचाक्षयं प्रभातेविमलेस्नात्वासं-
ध्यांकृत्वाविधानतः पूजयेद्विधिवद्देवींहोमंचविधिवद्द्विज तिलचंपकपुष्पैश्चतंडुलैर्घृतपायसैः अष्टोत्तरशतंहुत्वादुर्गामंत्रैश्चवैदिकैः
कोकिलाप्रीतयेब्रह्मन्व्याहृतीनांशतत्रयं ब्राह्मणान्भोजयेत्पश्चात्सपत्नीकांश्चपंचच अशक्तौत्वेकयुग्मंचभोजयेच्चतथागुरुं त्रि
स्त्रिभ्यश्चप्रदातव्यंधारिकापंचकंतथा मोदकांश्चससूत्रांश्चवंशपात्रसमन्वितान् कृष्णवर्णसमायुक्तान्पक्वान्नेनप्रपूरितान् स
र्वोपस्करसंयुक्तांस्त्रिस्त्रिभ्यश्चप्रदापयेत् आचार्यंपूजयेद्भक्त्यागांकृष्णांचसवत्सकां उपानहौतथाशय्यांचामरंछत्रमेवच मुद्रिका
कर्णवेष्टेचचंदनंकुसुमानिच सर्वंदद्याद्द्विजेंद्रायसपत्नीकायनारद दापयेद्विधिवत्सर्वंब्राह्मणायकुटुंबिने व्रतोपदिष्टदानंचभोजनंच
सदक्षिणं एवंयाकुरुतेराजन्कोकिलाव्रतमुत्तमं सर्वंप्राप्नोतिसौभाग्यंपुत्रधान्यधनानिच ततोभुंजीतनैवेद्यंपुत्रपौत्रैःसमन्विता को

किलेपूजितेगच्छविधिवत्सर्वकामदे कारयेत्कोकिलांदेवींसौवर्णींसर्वकामदां रौप्यचरणसंयुक्तांरचितांनेत्रमौक्तिकां पंचरत्नानिपृष्ठेचचू
तवृक्षसमाश्रितां एवंत्वंचयथापूज्यायथोक्ताचशनैःशनैः विप्रकर्षचिंतालक्ष्मीःस्वस्वभावमिदंशृणु महाफलमवाप्नोतिमहामायाप्र-
सादतः इतिवराहपु॰ कोकिलाव्रतोद्यापनं॰ अथश्रावणपौर्णमास्यांरक्षाबंधनंतच्चोक्तंहेमाद्रौभविष्ये युधिष्ठिरउवा॰ सर्वरो
गोपशमनंसर्वाशुभविनाशनं सकृत्कृतेनाब्दमेकंयेनरक्षाकृतोभवेत् श्रीकृष्णउवा॰ शृणुपांडवशार्दूलइतिहासंपुरातनं इंद्राण्याय
त्कृतंपूर्वंशक्रस्यजयवृद्धये देवासुरमभूद्युद्धंपुराद्वादशवार्षिकं तत्रासुरैर्जितःशक्रःसहसर्वैःसुरोत्तमैः बृहस्पतिमुपामंत्र्यइदंवचन
मब्रवीत् नस्थातुंचैवशक्तोमिनगंतुंतैरभिद्रुतः सर्वथायोद्धुमिच्छामिगुरुस्त्वंचन्यवारय तयोःसंवदतोरेवंशचीमाहसुरेश्वरं अद्यभूत
दिनंदेवप्रातःसर्वंभविष्यति अहंरक्षांविधास्यामियेनाजेयोभविष्यसि इत्युक्त्वापौर्णमास्यांसापौलोमीकृतमंगला बबंधदक्षिणेपाणौ
रक्षापोटलिकांततः बद्धरक्षस्ततःशक्रः कृतस्वस्त्ययनोद्विजैः दुद्राववदानवानीकंक्षणात्कालइवप्रजाः शक्रस्तुविजयीभूत्वापुनरेवज
गत्त्रये एषप्रभावोरक्षायाःकथितस्तेयुधिष्ठिर जयदःसुखदश्चैवपुत्रारोग्यधनप्रदः युधिष्ठिरउवा॰ क्रियतेकेनविधिनारक्षाबंधःसु-
रोत्तमैः कस्मिन्तिथौकदादेवत्वयेतन्मेवक्तुमर्हसि यथाहिभगवन्देवविचित्राणिप्रभाषसे तथातथानमेतृप्तिर्बह्वर्थाःशृण्वतःकथाः
कृष्णउवा॰ संप्राप्तेश्रावणेमासिपौर्णमास्यांदिनोदये स्नानंकुर्वीतमतिमान्श्रुतिस्मृतिविधानतः ततोदेवान्पितॄंश्चैवतर्पयेत्परमांभसा

उपाकर्माणि चैवोक्तमृषीणां चैव तर्पणं कुर्वीत ब्राह्मणैः सार्धं वेदानुद्दिश्य यत्नतः शूद्राणां मंत्ररहितं स्नानं दानं च शस्यते ततोपराण्हसमये रक्षा
पोटलिकां शुभां कारयेच्चाक्षतैस्तद्वत्सिद्धार्थैर्हेमचर्चितैः कार्पासैः क्षौमवस्त्रैर्वा विचित्रैर्मलवर्जितैः विचित्रतंतुग्रथितां स्थापयेद्राजनोपरि का
र्यो गृहस्य रक्षार्थं वै गोमयैः शुक्लतंदुलैः दूर्वावर्णैः सितैश्चित्रैः सर्वपापविनाशिनि उपलिप्ते गृहे मध्ये सान्नं कुंभं च तान्न्यसेत् पीठोपरि विशेद्रा
जा सचिवैः सुमुहूर्तके वेश्याजनेन सहितो मंगलैः सहितस्थितैः रक्षाबंधः कार्यसिद्धिः सर्वविघ्नोपशांतिदः पुरोधान्नृपते रक्षां सम्यक् बध्नी
त मानवः येन बद्धो बली राजा दानवेंद्रो महाबलः तेन त्वामभिबध्नामि रक्षे मा चल मा चल ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैरन्यैश्च मानवैः कर्तव्यो र
क्षिकाबंधो द्विजान्संपूज्य भक्तितः अनेन विधिना यस्तु रक्षाबंधं समाचरेत् स सर्वदोषरहितः सुखी संवत्सरं भवेत् रक्षाबंधो भद्रायां न का
र्यः भद्रायां द्वे न कर्तव्ये श्रावणी फाल्गुनी तथा श्रावणी नृपतिं हंति ग्रामं दहति फाल्गुनी इति वचनात् इति भविष्योक्तं रक्षाबंधनं संपूर्णं
अथ भाद्रपदपौर्णमास्यां उमामहेश्वरव्रतं शिवरहस्ये राजोवाच भगवन्मुनिशार्दूल व्रतमेकं वदस्व मे सांगं यस्मिन्व्रते चीर्णे सर्वान्का
मानवाप्नुयात् गौतम उवाच उमामहेश्वरं नाम व्रतमस्ति व्रतोत्तमम् मासि भाद्रपदे शुक्ले पौर्णमास्यां-
प्रयत्नतः तद्व्रतं कार्यमनघैर्ब्राह्मणाद्यैर्विधानतः भाद्रशुक्लचतुर्दश्यां प्रातः स्नात्वा विधानतः शिवं संपूज्य विधिवच्छैवान्ध्यातियत्नतः शि
वं ध्यात्वा जगद्वंद्यं सोमं सोमार्धशेखरं कृतांजलिपुटो भूत्वा मंत्रमेतत्पठेन्नरः श्वः करिष्ये व्रतं यत्नादुमामहेश्वराभिधम् आज्ञां देहि महादे

वसोमसोमार्धशेखर इतिविज्ञाप्यवैदेवंपुनःसंपूज्ययत्नतः मध्यान्हेपिमहादेवमर्चयेन्नियतोव्रती ततोदेवानृषीन्सर्वानभ्यर्च्यविधिवन्नृप
हविष्याशीशिवंसायंपूजयेद्विधिपूर्वकं निद्राकार्यातथायोगंमहादेवस्यसन्निधौ उत्थायपश्चिमेयामेमहादेवंततःस्मरेत् ततःशौचादि
कंसर्वंनिर्वर्त्यप्रीतिमानसः स्नानंकुर्याद्यथायोगंयथाशास्त्रंयथाक्रमं परिधायततोवस्त्रंक्षालितंशुभमक्षतं उद्धूलनंततःकार्यंत्रिपुं
ड्रंचयथाक्रमं रुद्राक्षधरणंकार्यंसंध्याकार्याततःपरं ततःशिवार्चनंकार्यंबिल्वपत्रादिभिर्नरैः ततोहोमोपिकर्तव्यःशिवप्रीत्यर्थमादरा
त् ततःपरंनियमनंप्रणमेत्सोममव्ययं सग्रंथिकुशापिंजूलंततःसंपाद्यमादरात् गव्यंपंचदशाग्रंथिंतत्पूजितंशिवात्मकं एवंपंचदशाग्रं
थिंदोरकंकुंकुमान्वितं संपादनीयंयत्नेनव्रतनिष्ठैरनाकुलैः उमामहेश्वरंचैवसौवर्णंप्रतिमाद्वयं संपादनीयंयत्नेनराजतंवामनोहरं प
लादूनंनकर्तव्यंप्रतिमाद्वयमुत्तमं अधिकंचेद्यथाशक्तिकर्तव्यमतियत्नतः सौवर्णोराजतोवापिताम्रोवामृन्मयोनवः संपादनीयोयत्ने
नप्रयतैर्व्रततत्परैः ततःसदर्भंमूर्तिंचवस्त्रयुग्मेनवेष्टयेत् पृथक्पृथक्स्थापनीयंकलशेप्रतिमाद्वयं आपोहिष्ठादिभिर्मंत्रैस्तथान्यैर्व
कमंत्रकैः अभिषिच्यप्रयत्नेनपूजयेत्प्रतिमाद्वयं ततःप्रयत्नतोगच्छेदलंकृतशिवालयं शिवस्थानंततोगच्छेत्तोरणाद्यैरलंकृतं ततः
षोडशाकेपत्रेबहिरंतश्चतुर्गुणे अलंकृतेःस्वस्तिकाद्यैःस्थापयेत्कलशंनवं ध्यायेत्ततोमहादेवमुमादेहार्धधारिणं मुक्तामालापरीतांगं
दुकूलपरिवेष्टितं पंचाननमुमाकांतमनलेंदुरविप्रभं चंद्रार्धशेखरंनित्यंजटामुकुटमंडितं त्रिपुंड्रलेखाविलसद्भालनेत्रोपरिस्थितम्

भस्मोद्धूलितसर्वांगंरुद्राक्षाभरणान्वितं मंदस्मितमनाधारमाधारंजगतांप्रभुं देवैरनंतैरनिशंसंस्तूयमानमनेकधा देवात्मकंदेववंद्यंविष्णुब्रह्मादि
वंदितं विष्णुनेत्रान्वितारक्तपादपंकजमुत्तमं भयातिद्वंद्वमद्वंद्वंसर्ववृंदारकार्चितं सर्वोत्तममनाद्यंतंसर्वदेवनिवेदितं सत्यंशरुद्रंपरंब्रह्मपुरु
षंकृष्णपिंगलं ऊर्ध्वकेशंविरूपाक्षंविश्वरूपंचिदात्मकं निष्कलंनिर्गुणंशांतंनिरवद्यंनिरंजनं अप्रमेयंजगन्मध्येस्थितिसंहारकारणं
विश्वबाहुंविश्वपादंविश्वाक्षंविश्वसंभवं विश्वंनारायणंसाध्यमक्षरंपरमंपदं विश्वतःपरमंनित्यंविश्वस्येशमनामयं एवंध्यात्वामहा
देवंसर्वदेवोत्तमोत्तमं ध्यायेत्ततःपरंगौरीमादिविद्यामनामयीं लक्ष्मीसेवितपादाब्जांशचीसेवितपादुकां सरस्वत्यादिभिर्नित्यंसंस्तू
यमानपदांबुजां अधरोष्ठधरीभूतपक्वबिंबफलाप्रभां सुखकांतिकलोपेतांपूर्णचंद्रामनामयां तिरस्कृतालिमालांतामलकावलिभिःस
दा पीनवक्षोजनिर्धूतचक्रवाकवरांगना नित्यंतिरस्कृतांभोजांनयनाभ्यामनिंदितां सीमंतधिक्कृताशेषकामभल्लामहर्निशं भृकुटीद्वि
कृताशेषशमभल्लामनाकुलां बाहुतालकलोद्भूतहेममालांविलासिनीं रोमावलीतिरोभूतभ्रमद्भ्रमरनालिकां नाभिरंध्रतिरोभूत
घनावर्तामवर्तुलां उन्नतोरुतिरोभूतरंभास्तंभांशुभावहां पादयुग्मप्रभाकांतिनिर्जितारुणपंकजां उपेंद्रोपेंद्रजननींमहेशार्धांगभागिनीं
महेशाश्लिष्टवामांगांवरदाभयदांसदा प्रसन्नवदनांशांतांस्मितपूर्वाभिभाषिणीं पूर्णचंद्रदुकूलाढ्यांनानाभरणभूषितां स्तूयमानांसदा
देवैर्यज्ञैर्दानैश्चकोटिशः एवंध्यात्वाततःसम्यगुपचारान्प्रकल्पयेत् ततःपुष्पाणिसंगृह्यशिवमावाहयेच्छिवां महादेवदयासिंधोविष्णु

ष्णुब्रह्मादिवंदित आवाहयामिदेवंत्वांप्रसीदपरमेश्वर इत्यावाहनं आसनं॰ पाद्यं अर्घ्यं आचमनीयं मधुपर्कं पंचामृतस्नानं स्नानं व
स्त्रं उपवीतं गंधं आभरणानि बिल्वपत्रं पुष्पाणि धूपं दीपं नैवेद्यं आचमनीयं फलं तांबूलं दक्षिणां छत्रं चामरव्यजनानि नीराजनं
पुष्पांजलिं प्रदक्षिणां नमस्कारान् अथांगपूजा कपर्दिनेनमः शिरः पू॰ भाललोचनाय॰ भालं॰ सोमसूर्याग्निलोचनाय॰ नेत्रत्रयं॰ सद्योजा
य॰ श्रोत्रेपू॰ घ्राणगंधाय॰ घ्राणंपू॰ स्मृतिदंताय॰ दंतान्पू॰ श्रुतिजिह्वाय॰ जिह्वांपू॰ सत्कपोलायकपोलौपू॰ ज्ञानोष्ठाय॰ ओष्ठौपू॰ विश्व
जंघाय॰ जंघेपू॰ विश्वपादाय॰ पादौपू॰ विश्वनखाय॰ नखान्पू॰ सर्वात्मकाय॰ सर्वांगंपू॰ अथशक्त्यंगपूजा शिवायै॰ शिरःपू॰ पृथ
ग्वेण्यै॰ वेणींपू॰ सीमंतराजितायै॰ सीमंतंपू॰ कुंकुमभालायै॰ भालंपू॰ चक्षुःमत्स्यैनेत्रे॰ स्तुतिश्रोत्रायै॰ श्रोत्रेपू॰ गंधप्रियायै॰ घ्राणंपू॰ सु
भगकपोलायै॰ कपोलौपू॰ कुड्मलदंतायै॰ दंतान्पू॰ विद्याजिह्वायै॰ जिह्वांपू॰ बिंबोष्ठायै॰ ओष्ठौपू॰ वृत्तकंठायै॰ कंठंपू॰ पृथुलकुचायै॰ कु
चौपू॰ विश्वगर्भायै॰ उदरंपू॰ शुभकट्यै॰ कटींपू॰ दिव्यरुद्रेशायै॰ उरूपू॰ कुलजंघायै॰ जंघेपू॰ लक्ष्मीसेवितपादुकायै॰ पादौपू॰ महेश्वर
प्रियायै॰ नखान्पूजयामि शोभनविग्रहायै॰ सर्वांगंपू॰ अंगपूजांसमाप्यैवंदोरकंचविसर्जयेत् प्रत्येकंग्रंथिषुस्वच्छैःस्वच्छैर्बिल्वदलादि
भिः प्रथमग्रंथिमारभ्यनमःसोमेतिमंत्रतः यथाक्रमेणसंपूज्यनतोधार्यींहिदोरकं तत्रोपचाराःसर्वेपितेनमंत्रेणासादरं व्रतिभिर्यत्न
तःकार्यंकुंकुमांकितदोरकं ततः पंचदशप्रस्थागोधूमास्तंडुलाश्चवा उपायनार्थमानेयाः शुद्धागोघृतपाचिताः यद्वापंचदशाज्या

स्नागोभूषापूपमंडकाः ततः शिवैकशरणाः शैवाः शिवव्रतप्रियाः पूजनीयाः प्रयत्नेन गंधपुष्पादिभिः क्रमात् ततः सवस्त्रकलशं शिवयोः प्र
तिमाद्वयं शैवाय देयं यत्नेन सुवर्णफलसंयुतं आदावुपायनं दत्वा देयं त्वेतदतः परं उपायनस्य मंत्रोपि वक्ष्यतेत्र विशेषतः उमेशः प्रतिगृह्णा
तित्युमेशो वै ददातिच उमेशस्तारको भाभ्यामुमेशाय नमो नमः अमुं मंत्रं समुच्चार्य दत्वा दानं निवेदयेत् अतः शैवाः प्रयत्नेन भोजनी-
याविशेषतः सुवासिन्योपि यत्नेन भोजनीयाः प्रयत्नतः शैवानेवं भोजयित्वा स्वयं भुंजीत वाग्यतः अतिथीनपि संतर्प्य द्वारदेशस्थिता-
न्नृप एवं प्रयत्नतः कार्यं प्रतिवत्सरमादरात् नियमेनैव विधिवदुक्तरीत्या यथाक्रमं ब्राह्मणाद्यैरिदं कार्यं व्रतमाहितमानसैः सर्वाभीष्ट
प्रदं पुण्यं व्रतमेतच्छिवात्मकं मासे तु षोडशे वर्षे कार्यमुद्यापनं नृप उद्यापनविधानं च वक्ष्ये शृणु यथाक्रमं पौर्णमास्यां भाद्रपद्यां व्रतोद्या-
पनमादरात् कर्तव्यमिति यत्नेन द्रव्यं संपाद्य सादरं हैमी कार्या सार्धषड्भिः प्रतिमा च पलैः शुभा तदर्धेनाथवा कार्या तदर्धेनाथवा नृप
रजतेनाथवा कार्या यथोक्तं पलमानतः संपादनीयाः कुंभाश्च हेमाः पंचदशोत्तमाः अथवा राजताः कार्या यद्वा ताम्रमया नृप भाद्रशुक्ल
चतुर्दश्यां शैवा ब्राह्मणपुंगवाः निमंत्रणीया यत्नेन प्रातः समदशोत्तमाः ततो गृहं वितानाद्यैरलंकृत्य प्रयत्नतः स्वस्तिकाद्यैरलंकुर्याच्छि
वस्थानं शुभावहं ततः सायं प्रयत्नेन तस्मिन् शंकरमंदिरे पूजनीयाः प्रयत्नेन शिवयोः प्रतिमे शुभे पूर्वोक्तेन विधानेन मंत्रैः स्तोत्रैरसाध
नैः रात्रौ जागरणं कार्यं सोपवासं प्रयत्नतः ऋत्विग्भिः सहसोत्साहं पयोमात्राशनेन वा रात्रौ शिवकथा श्राव्या श्रोतव्या यत्नतो नृप कर्त

व्यायत्नतोरात्रौपूजायामन्चतुष्टये ततःस्थेयंप्रयत्नेनस्नात्वाशंकरसन्निधौ पूजनीयःप्रयत्नेनशिवोदेवशिखामणिः चतुरस्त्रंततः
कार्यंकुंडमष्टदलान्वितं तत्रवन्हिंप्रतिष्ठाप्यविधिवद्गृह्यमार्गतः साज्येनपरमान्नेनहोमःकार्यस्ततःपरं पंचविंशतिसाहस्त्रंहोमःसो
मेतिमंत्रतः कार्यःप्रयत्नतोराजन्नमःपूर्वात्सदारक ततःपूर्णाहुतिंहुत्वाशैवान्संपूजयेत्ततः बिल्वपत्रैःपुष्पमाल्यैर्भस्मनाचयथा
क्रमं एकैकस्मैप्रदातव्यंशिवयोःप्रतिमाद्वयं कलशोपिप्रदातव्यस्ततोवस्त्रद्वयान्वितः आचार्यायप्रदातव्यंसुवर्णशतमादरात् ततो
यत्नेनशैवेंद्राः पूजनीयाःकृतव्रतैः सुवासिन्योपिशैवानांभोजनीयाःप्रयत्नतः ततोदेयाःस्वशक्त्याचभोजितेभ्यश्चदक्षिणाः तत
श्चस्वकृतंकर्मशिवायचनिवेदयेत् उद्यापनंकृतंशंभोमयैतदधुनाप्रभो इदंसंपूर्णतांयातुत्वत्प्रसादान्महेश्वर मंत्रहीनंभक्तिहीनंश
क्तिहीनसुमापते कृतंकर्मभवत्वद्यत्वत्प्रसादात्फलप्रदं प्रायश्चित्तंवैदिकानांव्यंगानामपिकर्मणां शिवस्मरणमेवेतिश्रुतिरप्यस्ति
शांकरी अतःकृतमिदंश्रोतंकर्मव्यंगमपिप्रभो सांगंभवतुविश्वेशतवैवस्मरणात्प्रभो इतिसंप्रार्थ्यदेवेशंसांबंसर्वसुरोत्तमं भुं
जीयाद्बंधुभिःसार्धंस्मोनंतैलवर्जितं एवंयःकुरुतेसम्यग्गुमामाहेश्वरव्रतं ससर्वभोगान्भुक्त्वांतेमोक्षमाप्नोतिसर्वथा राजोवा
गौतमेदंव्रतंचीर्णंपुराकेनवदस्वमे कस्यकामस्यसिद्धिर्हिव्रतस्यास्यप्रभावतः गौतमउवाच पुराशैववरोराजन्दुर्वासाख्योमुनी
श्वरः कदाचित्संचरंल्लोकान्ददर्शकमलापतिं ततःसमागतंदृष्ट्वादुर्वासामुनिसत्तमः बिल्वमालांददौतस्मैशंकरेणसमर्पितां गृहीत्वा-

कोजागरी पौर्णिमा व्रत कथा पू ॥



बिल्वमालांतांहरिर्गमनसंभ्रमात् शिरसापूजनीयांतांगरुडेसविनिक्षिपत् ततस्तांतादृशींदृष्ट्वादुर्वासाः क्रोधमूर्छितः हरिंशशापबहुधाधि
ग्जन्मेतिचसंवदन् मयाशिवार्पितादत्तामालात्वप्ययमयापहा साकथंगरुडस्कंधेविनिक्षिप्तात्वयाहरे गर्वस्यमूलभूतेयंलक्ष्मीस्तववि
नश्यतु वैकुंठस्याधिकारोपितवमास्तुममाज्ञया निस्तेजस्कोवनोद्दिष्टेसंचरायावधिध्रुवं इत्युक्त्वासतुदुर्वासाययौलोकांतरंनृप ततःप
पातदुग्धाब्धौलक्ष्मीर्विष्णुमनोहरा उवासविपिनेघोरे स्वकृतंकर्मसंस्मरन् ततःकदाचिद्भूपालमयातत्रगतंपुरा नंदामामागतंदृष्ट्वापू
जयामासमांहरिः ततोश्रुपूर्णनयनः कृतांजलिपुटोहरिः जगादपूर्ववृत्तांतंस्वलक्ष्मीनाशकारणं ततोतिक्लांतचित्तायविष्णवेव्रतमु-
त्तमं तत्प्रष्टेनमयाभूपकथितंसादरंशिवं ततोविलंबविधिवच्चकारश्रद्धयान्वितः ततःप्रसन्नोभगवान्हरयेपार्वतीपतिः ददौल-
क्ष्मींसगरुडांकरुणानिधिरव्ययः इदमेवव्रतंचीर्णमिंद्रेणापिहतौजसा तेनप्राप्तस्ततःस्वर्गःस्वर्गभोगश्चशाश्वतः ब्रह्मणापिपुराची
र्णंइदमेवव्रतंनृप नष्टावागीश्वरीतेनसंप्राप्तादुर्लभापिसा मुनिभिश्चपुराचीर्णंव्रतमेतन्मुमुक्षुभिः अस्यव्रतस्याचरणान्मुक्तिःप्रा
प्तामुनीश्वरैः इदंव्रतंप्रयत्नेनयःकरिष्यतिभावतः तस्यसौभाग्यसंपत्तिर्भविष्यत्येवसर्वथा यस्यास्त्यैश्वर्यभोगेच्छामोक्षेच्छा
प्यनपायिनी यस्यसर्वाधिपत्येच्छातेनकार्यमिदंव्रतं वैश्येनापिविप्रेणमोक्षार्थमतियत्नतः कृतमेतद्व्रतंपूर्वंसर्वाभीष्टफलप्रदं मु
क्तिःप्राप्ताचतेनापिव्रतस्यास्यप्रभावतः यंयंकाममसमुद्दिश्यव्रतमेतदनुत्तमं यःकरिष्यतितंकामंससमाप्नोतिनिर्मलं इदंव्रतंमहे

शेनसमाख्यातसुमंमानि कुमारायसमाख्यानसुमयेनद्वंतशक्रमं नंदिकेशायकथितंमयाचेनद्वंतंशक्रमं नंदिकेशेनकथितंदुर्वासासुनयेननः
दुर्वाससापिकथितंमगस्त्यायव्रतोत्तमं व्रतंचसागरेमत्ध्यमगस्त्येनमहात्मना मयातिक्लिन्नचित्तायाविष्णवेकथितंपुरा तेनचीर्णव्रतमिदं
सर्वसौभाग्यदायकं ब्रह्मणेकथितंपूर्वमिदमेवव्रतंमया तेनचीर्णव्रतंसांगंवाणीप्राप्त्यर्थमादरात् सूर्यायेंद्रायचंद्रायमयेतत्कथितं
व्रतं तेनचीर्णव्रतमिदंसर्वसौभाग्यदायकं कश्यपादिमुनिभ्यश्चकथितंव्रतमुत्तमं तैश्चचीर्णव्रतंसम्यग्भुक्तिमुक्तिफलप्रदं भूपव्रतानि
संत्येवबहूनिविविधानिच तथाप्येतादृशंदेवव्रतंनास्त्येवसर्वथा भवानपिकुरुप्रीत्याभूपालव्रतमुत्तमं इदंव्रतंशिवक्षेत्रेयःकरिष्यति-
भक्तितः तस्यसर्वार्थसंपत्तिर्भवत्येवनसंशयः शिवउवा॰ इत्येतद्वचनंश्रुत्वासराजाप्रीतमानसः सपुत्रःपूजयामासगौतमंशैवपुंग
वं ततोधर्मव्रतंचैवसुपदिश्यसगौतमः पुनःसंपूजितोराज्ञास्वाश्रमंप्रीतिसंययौ जगामपुत्रस्तद्वाक्यमिदमाहेश्वराभिधं व्रतंचकार
विधिवद्यथाक्रममतंद्रितः इतिशिवरहस्येउमामहेश्वरव्रतोद्यापनंसंपूर्णं इदंकर्नाटकेप्रसिद्धं अथाश्विनपौर्णमास्यांको-
जागरव्रतं आश्विनपौर्णमासीपराग्राह्या अश्वयुजिकर्मणिपूर्वाह्णव्यापिनीदेवकर्मत्वाद्ग्राह्या अत्रकोजागरव्रतेबहुव्यापिनी
रात्रौलक्ष्मीपूजनाक्षक्रीडाप्रधानत्वाद्रात्रिव्यापिन्येवकार्या स्कांदे अस्तिकोजागरंनामव्रतानामुत्तमव्रतं यत्कृत्वासमवाप्नोतिजं-
तुर्लोकाननुत्तमान् ऋषयऊचुः कार्तिकस्यउपांगानिव्रतानिकथयंतुनः कृतेषुयेषुभवतिसंपूर्णंकार्तिकव्रतं वालखिल्याऊचुः आश्वि

कोजागरी पूजा क॰ ५१

नैऋतरूपक्षेतु भवेद्याचैव पूर्णिमा नद्यांमौ पूजनंकुर्याच्छियोजाग्रति पूर्वकं नारिकेलोदकंपीत्वा अक्षक्रीडांसमारभेत् निशीथे वरदालक्ष्मीः
कोजागर्तीति भाषिणी जगतसंभ्रमतीनस्यांलोकचेष्टावलोकिनी तस्मैवित्तंप्रयच्छामियोजागर्तिमहीतले सर्वथैवप्रकर्तव्यंव्रतंदारिद्र्यभीरु
भिः एतद्व्रतप्रभावेनवलितोपिधनीभवत् ऋषयऊचुः वलितः प्रोच्यतेकोसौलब्धवान्सकुतोव्रतं एतद्विस्तरतोब्रूतवालखिल्यास्तपोधनाः
वालखिल्याऊचुः ब्राह्मणोवलितोनाममागधःकुशसंभवः नानाविद्याप्रवीणोसौसंध्यास्नानपरायणः याचनंमरणतुल्यंमन्यतेसद्विजो-
त्तमः गृहागतंसगृण्हातिनान्ययाचयतेक्वचित् तस्यभार्यामहाचंडीनित्यंकलहकारिणी मङ्गिन्यःस्वर्णरौप्यालंकारादिविभूषिताः
नानामाल्यांबरधराहृष्टादेवांगनाइव अहंदरिद्रस्यगृहेपतिनास्मिदुरात्मनः लज्जामांबाधतेत्यंतंज्ञातीनांसुखदर्शने धिगस्तुचैववविद्या
यानिर्धनस्यकुलस्यच एवंवदतिलोकेषुनकरोतिपतीरितं संकल्पंकृतवानेकंयद्यहंतांवदिष्यति विपरीतंकरिष्यामियावल्लक्ष्मीःप्रसीद
ति भर्तुःपाषाणबुद्धेर्लेचौर्यंकुरुनृपालये आनीयतांधनंभूरिनोचेत्संनाडयाम्यहं क्षणंरोदितिनाश्नातिकदाचिद्दुःखवादति साकपालेना
डयतीत्येवंक्लेशयतेपतिं क्षांतानस्यास्तुचरितंयाचनाद्दुःखभीतितः नोवाचवचनंकिंचिद्यथालाभेनतोषितः एकस्मिन्श्राद्धपक्षेतुवृद्ध्व
द्धिप्रोप्यद्विजोत्तमः एतस्मिन्वत्सरेसर्वंश्राद्धसामग्रिकंगृहे वर्ततेगृहिणीचेयंनकरिष्यतिकिंचन इत्युद्विग्नमनाविप्रोनभाषयतिकिंचन
चिंतयाविष्टमेवंतमायर्यौमित्रसुत्तमं नाम्नागणपतिरख्यातंतस्मिन्नभ्यागतेसति नोवाचपूर्ववद्वार्तांमित्रंवचनमब्रवीत् भोभोवलितचित्तं

तेकिमर्थंचिंतयान्वितं अवश्यंस्त्वधियाकृत्वाचिंतांतेनिर्हराम्यहं वलितउवाच अधुनापितृपक्षेतुपितुःश्राद्धंसमागतं सामग्रिकंचास्तिगृहे-
विपरीतकरीप्रिया कथंसंपाद्यतेश्राद्धमितिचिंतातुरोस्म्यहं गणपतिरुवाच धन्योसिकृतकृत्योसिभार्यायस्येदृशीगृहे ब्रूहित्वंवैपरीत्ये
नभार्याकार्यंकरिष्यति वलितस्तुतथेत्युक्त्वासायंभार्यामभाषत अनर्थकारकेचंडीपरश्वःश्राद्धकंपितुः नस्थापितंधनंयस्मान्मदर्थंतें
स्तुपापकैः तस्मान्नशीघ्रंपाकंत्वंकुरुदुष्टेकरोतिचेत् ब्राह्मणायेद्यूतकराः शौचाचारविवर्जिताः निमंत्र्यास्तेत्वयाभद्रेनोत्तमास्तुकदाच
न इतिभर्तृवचःश्रुत्वासंभारस्तुमहान्कृतः निमंत्रितास्तुसर्वाह्मणाः कालेपाकःकृतस्तथा विपरीतेनेरेवन्वाक्यैस्तुश्राद्धंसंपादितंतयापिंडदानं
ततःकृत्वाभार्यांवचनमब्रवीत् विसर्ज्यपिंडान्नीत्वात्वंक्षिपगंगाजलेशुभे पिंडान्नीतांस्तथेत्युक्त्वाशौचकूपेव्यचिक्षिपत् तच्छ्रुत्वावलि
तोदुःखीवभूवाकुलिताननः क्रोधाद्विनिर्ययौगेहात्संकल्पंकृतवानिति लक्ष्मीर्यदिप्रसन्नास्यात्तदान्नंभक्षयाम्यहं इतिसंकल्प्यसोवि-
प्रोगहनेनिर्जनेवने एकोधर्मनदीतीरेवृक्षवल्कलधारकः त्रिंशद्दिनानिचतदाआगतात्विषपूर्णिमा कालीवंशसमुद्भूतानागकन्याःसु
लोचनाः निवसंतिवनेतस्मिन्व्रतंचक्रुःसमासये श्वेतोकृतंतुसुधयागृहंचंद्रगृहोपमं मंडलानिविचित्राणिनानापिष्टैःकृतानिच पंचामृता
निरत्नानिदर्पणाच्छादनानिच स्थापयित्वेंदिशपूजाकृतानाभिःप्रयत्नतः एवंतुप्रथमोयामोबालाभिर्नीतएवहि प्रारब्धंचततोद्यूतंतुर्यं
तास्तुनलेभिरे चतुर्भिस्तुविनाक्षाणांक्रीडनंनैवजायते तस्मान्मृगयस्तुविचरन्विचार्यैवंपुनर्गता कन्यकातुनदीतीरेददर्शवलितंद्विजं

ज्ञात्वातंसाधुचरितंसचिंतंचसुखाकृतेः उवाचवचनंचारुद्विजकोसिसमागतः यात्वयाक्रीडितंद्यूतंलक्ष्म्याःप्रीतिकरंपरं इत्थंतद्वचनंश्रुत्वा-
बलिनोवाक्यमब्रवीत् बलिनउवा॰ द्यूतेनक्षीयतेलक्ष्मीर्द्यूताद्धर्मोविनश्यति सुधेनइदसेकिंत्वंकथंलक्ष्मीःप्रसीदति कन्योवाच भाष
सेत्वंपंडितवत्कर्मनेस्तितुमूर्खवत् इषस्यशुक्लपूर्णायांद्यूताल्लक्ष्मीःप्रसीदति द्यूतक्रीडांतुकृत्वेवंकौतुकंपश्यचैदिरं इत्युत्कासोतयानी
तोक्रीडार्थंस्वस्यमंदिरे दत्वातस्मैनारिकेरजलंभक्ष्यादिकंतथा आरब्धंचतथाद्यूतंश्रीलक्ष्मीःप्रीयतामिति लापितानिचरत्नानिकन्या
भिर्ब्राह्मणेनतु कौपीनंलापितंस्वीयंताभिर्निर्जितमेवतत् ब्राह्मणःक्रोधसंयुक्तोकिंकर्तव्यंमयाधुना उपवीतंलापयित्वाततःस्वीयंकले
वरं लापयिष्येविनिश्चित्यतद्युपवीतंलापसः ताभिर्जितंचतदपिशरीरंलापितंस्वकं ततोर्धरात्रेसंजातेलक्ष्मीनारायणावुभौ आगता-
लोकचरितंद्रष्टुंविप्रंददर्शतुः हीनोपवीतकौपीनंचिंतयानिकृशीकृतं उवाचवचनंविष्णुःशृणुत्वंपद्मलोचने तवव्रतकरोविप्रःकथंजा
तःसचिंतकः तस्मादेनंकुरुक्षिप्रंलक्ष्मीवंतंसुखान्वितं इतिविष्णुवचःश्रुत्वापद्मयासौकटाक्षितः बाह्मचित्तहरोजातस्तत्कालंमदनोप
मः ततःकामेनसंविद्धास्त्तास्तुथानागकन्यकाः विप्रायवचनंप्रोचुःशृणुविप्रतपोधन यद्यस्माभिर्जितस्त्वंचभर्तास्माकंवचोनुगः
वयंत्वयानिर्जितास्त्वेधयथेच्छसितथाकुरु इतितद्वचनंश्रुत्वातथामेनेसचद्विजः क्रीडनात्ताजिताःकन्यागांधर्वेणविवाहिताः तासांर
त्नानिताश्चापिगृहीत्वास्वगृहंययौ मासंचंडीतिरस्कारान्मयेदंभाग्यमुत्तमं तस्मात्संमानिताचंडीसापिप्रीताबभूवह चकारस्वामि

नश्चाज्ञामित्थंलक्ष्मीव्रतंत्विदं बहुरात्रिव्यापिनीयासात्रपूर्णाविशिष्यते तत्राराध्यमहालक्ष्मीमिंद्रमैरावतस्थितं उपवासंप्रकुर्वीतनदी
पानदद्याच्चभक्तितः लक्षंतदर्धमयुतंसहस्रंशतमेववा घृतेनदीयतेदीपान्तिलतैलेनवाव्रती रात्रौजागरणंकुर्यान्नृत्यगीतपुरःसरं
यथाविभवतोदेयाःपुरोवीथिषुदीपकाः देवतायतनेचैवआरामेषुगृहेषुच ततःप्रभातेसंस्नातःसंपूज्यचशतक्रतुं ब्राह्मणान्भोजये
क्षीरघृतशर्करपायसैः वासोभिर्दक्षिणाभिश्चसवस्त्रान्पूजयेद्द्विजान् यथाशक्तिचदातव्यादीपाःस्वर्णविनिर्मिताः एवंविधिंविनिर्व
र्त्यततःपारणमाचरेत् व्रतस्यास्यप्रभावेनकल्पसंख्यावसेद्ध्रुवं अप्सरोभिःपरिवृतोस्वर्गलोकेमहीयते इहचायुष्यमारोग्यंपुत्रपौत्रा
दिसंपदः एवंलक्ष्मीव्रतंकृत्वानदरिद्रोनदुःखभाक् कथांश्रुत्वाविधानेनव्रतस्यापिफलंलभेत् इतिसनत्कुमारसंहितायांकोजागर
व्रतंसंपूर्णं अथकार्तिकपौर्णमास्यांत्रिपुरोत्सवः सचप्रदोषव्यापिन्यांकार्यः वालखिल्याऊचुः कार्तिकेपूर्णिमायांतुकु
र्यात्त्रैपुरमुत्सवं दीपोदेयोवश्यमेवसायंकालेशिवालये त्रिपुरोनामदैत्येंद्रःप्रयागेतपआस्थितः लक्षवर्षंतपस्तप्तंत्रैलोक्यंसचराचरं
तत्तपस्तेजसाजग्धुमारब्धंभुवनत्रयं नानादेवांगनादेवैःप्रेषितास्तंविमोहितुं नतासांवशगःसोभूद्धर्षणेप्यपिधर्षितः नक्रोधमोह
लोभानांवशादैत्योनजायते वरंदातुंययौब्रह्मानारदादिभिरन्वितः ब्रह्मोवाच वरंवरयभद्रंतेसंतुष्टोहंपितामहः तपसस्तुफलेसि
द्धेकःक्लेशंकुरुतेजनः त्रिपुरउवाच अमरंकुरुमांब्रह्मन्करोमित्यन्यथातपः दातुंशक्तोसिचेद्ब्रूहिनान्यथागच्छसत्वरं ब्रह्मोवाच

ग॰रा
३१२

मयापिबाल्यमर्तव्यंइतरेषांतुकाकथा अवश्यंदेहिनांमृत्युःसंभाव्यंयाचयस्वमे त्रिपुरउवा॰ नमेमृत्युर्दैवताभ्योमनुष्येभ्योनिशाचरात्
नस्त्रीभ्योनचरोगेणदैत्येनंवरसुत्तमं ब्रह्मणापितथेत्युक्त्वासत्यलोकंजगामसः एवंलब्धवरंज्ञात्वानानादैत्याःसमाययुः तान्दैत्याना
गतान्दृष्ट्वाआज्ञापयतदानवान् अस्मद्विरोधिनोदेवाहंतव्याःसर्वएवहि नोचेद्यानिचरत्नानिदेवतानांसमीपतः गृहीत्वातानिसर्वाणिकुर्वं
तूपायनंमम इत्याज्ञांतस्यशिरसिकृत्वानेसर्वराक्षसाः देवान्नागांश्चयक्षांश्चधृत्वास्याग्रेनिवेदिताः प्रणम्यसर्वदेवास्तेत्रिपुरंचव्यजि
ज्ञपुः गृह्यतांदैत्यराजेंद्रयदस्माकंभविष्यति वयंकृत्वातुतेसेवांजीविष्यामोयथातथा इतिश्रुत्वावचस्तेषामधिकारान्प्रचक्रिरे तेषांस्त्रि
यःसमानीतादेववेश्याःसहस्रशः एवंभास्करमुत्सृज्यसर्वेदेवास्तदाज्ञया चक्रुर्यथोक्तंदैत्यस्यद्वारस्थाःसर्वएवहि सूर्यस्यनिकटेप्यु
क्तंमद्द्वारेस्थीयतांसदा तेनापिचतथेत्युक्त्वातद्द्वारेसंस्थितःक्षणं तदाहभुवनंसर्वंस्वकरैःक्षणमात्रतः आदिष्टश्चततस्तेनस्वेच्छयागम्य-
तामिति ततोगतोसौभगवान्भुवनानिविभावयन् तदाज्ञांचक्रुर्देवाद्वारेतिष्ठंतिवारिताः कदाचित्तस्यगेहेतुनारदःसमुपाययौ तेनापि
पूजितोभक्त्यापप्रच्छस्वंपराक्रमं नारदउवा॰ ईदृशोजययोषस्तुकेनापिनकृतोभव अस्मिन्देशेतुदैत्येंद्रःकिमिदानींनिगद्यतां त्रि
पुरउवा॰ सर्वस्थानेषुमेकीर्तिर्निर्गताकिंतुनारद मयाप्रस्थापितादैत्यासर्वएवइतस्ततः नारदउवा॰ योयत्रचगतोदैत्योजातस्तत्रविभुः
सहि तवनामनगृण्हातिवक्तिचस्वपराक्रमं इतिश्रुत्वामुनेर्वाक्यंसद्यएवहिदारुणं क्रोधस्तस्यमहान्जातःकिंकर्तव्यंमयाधुना विश्व

पौ॰
१५

३१२

कर्माणमाहूयवाक्यमेतदुवाचह शीघ्रंकुरुत्रियातूनांविश्वकर्मन्सुरत्नयं विमानतुल्यंयत्रेच्छातत्रतत्रगमिष्यति इतितस्यवचःश्रुत्वात्वष्टापि
चतथाकरोत् रूपत्रयंसमास्थायत्रिपुरेषुसमाश्रितः नारदस्यतुवाक्येनदैत्यावृंदीकृतास्तदा पुरेणैकेनपाताले भ्रमतेत्रिपुरासुरः स्व
र्गेत्वापिपुरेकेणधरण्यांरसतेपुरा कांश्चित्संताडयत्येवंसंमारयतिकानपि ददातिकेषांस्वामित्वंस्वेच्छाचारीमहाबलः तेनेत्थंपंचलक्षाणि
सर्वलोकाउपद्रुताः तदादेवान्समागम्यनारदोवाक्यमब्रवीत् नारदउवा० पराक्रमायास्तुधिक्तेदेवेंद्रधिक्तवास्तुधीः विचारंतुचमोदे
वावधायत्रिपुरस्यच इत्थंमुनिवचःश्रुत्वासलज्जोभूदधोमुखः पुनस्तंनारदःप्राहब्रह्माणंशरणंव्रज ततउत्थायदेवेंद्रोगूढोदेवगणैः
सह नारदेनसमायुक्तःसत्यलोकंजगामसः तत्रापश्यत्सधातारमुवाचकरुणंवचः इंद्रउवा० धातरस्मान्गतिर्नास्तिहननीयास्त्वया
वयं नासाग्रसंस्थिताःप्राणास्त्रिपुरस्यतुशासनात् इतींद्रस्यवचःश्रुत्वाब्रह्मासेंद्रमुनीश्वरैः युक्तोवैकुंठमगमद्यत्रास्तेमधुसूद
नः तत्रगत्वामहाविष्णुंप्रणिपत्यस्थिताःसुराः अनुग्रहीताहक्कृपातात्तंब्रह्मावाक्यमब्रवीत् ब्रह्मोवा० भगवन्देवदेवेशदेवायाता
विनाशकं त्रिपुरासुरनिर्दग्धान्किंदेवांस्त्वमुपेक्षसे विष्णुरुवा० त्वयैवनाशितंब्रह्मन्दत्तानानाविधावराः देवादिभ्यःकथंतस्यमृ
त्युःसंभाव्यतेधुना नभासतेविचारोमेतस्यमृत्योःसुरेश्वराः अस्तिकश्चिद्वधोपायोविचार्यकरवाण्यहं इतिश्रुत्वावचोविष्णोःस
र्वेबुध्वातुकुंठिताः यदानोचुर्वचःकिंचिन्नारदोवाक्यमब्रवीत् नारदउवा० देवाःकुरुतमाखेदमुपायःकथ्यतेमया एकोदृष्टःसृष्टि

मध्येनदेवोनचमानुषः नराक्षसोनैवदैत्योनभूतोनपिशाचकः नासौपुमान्नचस्त्रीसनजडोनचपंडितः नास्यतातोनवामातानभ्राता-
भगिनीनच नचैवयस्यसंतानंसएनंमारयिष्यति ब्रह्मोवा॰ एतादृशःक्कदृष्टोसोसत्यंवालीकमेववा इतिब्रह्मवचः श्रुत्वाप्रोवाचज
गदीश्वरः विष्णुरुवा॰ अहोत्रैलोक्यकर्तायोमहादेवोवृषध्वजः ब्रह्मन्कथंविस्मृतोसौसनःकार्यंकरिष्यति इत्युक्त्वासर्वएवैतेशंक
रंशरणंययुः देवदेवमहादेवदुष्टदैत्यनिबर्हण त्वामेवशरणंप्राप्तास्त्रिपुरेणप्रतापिताः शिवउवा॰ ब्रह्मंस्त्वयावरोदत्तोत्युन्मत्तोसौ
भवन्ततः सदाशिवरक्षस्मात्पुनर्मारयसेकुतः मदीयंनाशितंनैवकस्माद्ध्योमयासुरः इतिरुद्रवचः श्रुत्वाहताशास्तेसुरास्तदा
विषण्णास्तान्सुरान्दृष्ट्वाविष्णुर्वचनमब्रवीत् विष्णुरुवा॰ त्वयाप्रतिज्ञालोकानांपालनायसदाशिव कृतानतःसमायाताःशरणंस
र्वदेवताः मयानानाविधंदुःखंन्हीयतेतुसदाशिव एतद्दुःखंमयाशक्यमपनेतुंयतोनहि अतस्त्वांयाचयाम्यद्यदेवान्बंधाद्विमोच-
य शिवउवा॰ नववाक्यंकरिष्यामिसामग्रीनास्तिमेहरे ममापराधसहितंहनिष्यामिहिदानवं विष्णुरुवा॰ सामग्रींहिकरिष्या
मिसंग्रामार्थंसदाशिव करिष्यतिकथंदैत्यःशंभोरन्यायमेवसः इतिविष्णुवचःश्रुत्वाहाकष्टमितिचाब्रुवन अत्रागतांश्चसोस्मान्
हिश्चरणुयात्त्रिपुरासुरः नविलंबंमृतोकुर्यात्किमिदानींविधीयतां सुरान्म्लानमुखान्दृष्ट्वानारदोवाक्यमब्रवीत् नारदउवाच
सामग्रीक्रियतांशीघ्रमायातित्रिपुरासुरः विष्णुंपलायितंज्ञात्वाक्करुद्धोस्तीतिलोकयन् शिवउवा॰ मयाननाशितंनस्ययदिस्थास्य

निमत्तस्थले योद्धुंतदावश्यमेवमयामार्यः स्मरदुर्मदः इतिरुद्रवचः श्रुत्वासमाश्वस्तास्तुदेवताः सामग्रीं विष्णुरकरोद्युद्धार्थंसत्वधूर्जटेः बा
णः स्वयंबभूवास्यवह्निः शल्यंबभूवह वायुस्तुपुंखरूपोऽभून्मेनाकश्चधनुर्धरः स्यंदनंधरणीजानावेदाजाताहयोत्तमाः विधाताऽसार-
थिर्जातः पताकाचदिवाकरः आतपत्रंचचंद्रोऽभूद्धरणेशाद्याः पदातयः ततोवेगात्समुत्पत्यनारदस्त्रिपुरंययौ दृष्ट्वानारदमायांतंसत्का
रैरर्चयच्चतं मुनेपुराणिमेपश्यसंत्यक्तानिस्मरास्मरैः त्रैलोक्येचाधुनाजातंत्वत्कृपातोयशोमम इतितस्यवचः श्रुत्वाललाटंकुट्टयन्मु
निः तूष्णीमासीद्विस्मितस्तदवलोक्यास्मरोऽब्रवीत त्रिपुरउवाच किमर्थमीदृशीचेष्टामुनेचाद्यकृतात्वया मद्भाग्यसमभाग्यश्चेदस्ति
कश्चिन्निगद्यतां नारदउवाच कैलासेतुगतश्चाहंदैत्येंद्रशृणुवैभवं महेश्वरस्यकिंवाच्यंतल्लक्षांशोपिनत्वयि इतितद्वचनंश्रुत्वानारद
स्तुविदायितः गृहीत्वादैत्यसंयास्तान्कैलासंत्रिपुरोययौ तत्रदेवैर्महद्युद्धंजातंतत्रदिनत्रयं पश्चाद्रुद्रेणनिहतस्त्रिपुरश्चैकबाणतः का
र्तिक्यांपौर्णमास्यांतुसर्वेदेवाः प्रतुष्टुवुः तस्मिन्नुदिनेसर्वदेवैर्दीपोदत्तोहरायच सर्वथैवप्रदेयोस्यांदीपस्तुहरतुष्टये विंशतिसप्तशतक
सहितादीपवर्तयः ददद्दीपंपौर्णमास्यांसर्वपापैः प्रमुच्यते पौर्णमास्यांतुसंध्यायांकर्तव्यस्त्रैपुरोत्सवः दद्यादनेनमंत्रेणप्रदीपांश्चस्मरा
लये कीटाः पतंगामशकाश्चवृक्षाजलेस्थलेयेविचरंतिजीवाः दृष्ट्वाप्रदीपंनचजन्मभागिनोभवंतिनित्यंश्वपचाहिविप्राः कार्यस्तस्मात्
पूर्णिमायांत्रिपुरस्यमहोत्सवः कार्तिक्यांकृत्तिकायोगेयः कुर्यात्स्वामिदर्शनं सप्तजन्मभवेद्विप्रोधनाढ्योवेदपारगः कार्तिक्यांतुवृषोत्सर्गं

कृत्वानक्तंसमाचरेत् शैवंपदमवाप्नोतिशिवव्रतमिदंस्मृतं इतिसनत्कुमारसंहितायांकार्तिकपौर्णमास्यांत्रिपुरोत्सवदीपदानंसंपूर्णम्
अथकार्तिकमासोद्यापनं वालखिल्याऊचुः अथोर्जव्रतिनःसम्यगुद्यापनमथोच्यते कृतेउद्यापनेसांगंव्रतंभवतिनिश्चितं ऊर्जशुक्लत्र
योदश्यांकुर्यादुद्यापनंव्रती तुलस्याउपरिष्टात्तुकुर्यान्मंडपिकांशुभां तुलसीमूलदेशेतुसर्वतोभद्रमेवच तस्योपरिष्टात्कलशंपंचरत्नस
मन्वितं पूजयेत्तत्रदेवेशंसौवर्णंगुर्वनुज्ञया रात्रौजागरणंकुर्याद्गीतवाद्यादिमंगलैः ततस्तुपौर्णमास्यांवैसपत्नीकान्द्विजोत्तमान् त्रिंश
न्मितानथैकंवास्वशक्त्याविनिमंत्रयेत् अतोदेवाइतिद्वाभ्यांहोमयेत्तिलपायसं ततोगांकपिलांदद्यात्पूजयेद्विधिवद्गुरुं एवमुद्यापनं
कृत्वासम्यग्व्रतफलंलभेत् परातुपौर्णमास्यन्नयात्रायांपुष्करस्यच वरान्दत्वायतोविष्णुर्मत्स्यरूपोभवत्ततः तस्यांदत्तंहुतंजसंतदक्ष-
य्यफलंस्मृतं कार्तिक्यांपौर्णिमायांतुविष्णुनीराजयेत्सदा प्रदोषसमयेराजन्नसदारिद्र्यमाप्नुयात् कार्तिक्यांकृत्तिकायोगेयःकुर्यात्
स्वामिदर्शनं सप्तजन्मभवेद्विप्रोधनाढ्योवेदपारगः एतानिकार्तिकेमासिनरःकुर्याद्व्रतानिच इहलोकेशरीरंस्वंक्लेशयित्वाफलंलभेत्
नकार्तिकसमोमासोविष्णुसंतुष्टिकारकः स्वल्पक्लेशैर्विष्णुलोकप्राप्तिकृन्नापरोभवेत् सनत्कुमारउ० इत्यनेनैमिषारण्येवालखि
ल्यैरुदाहृतं भास्करस्यसुखाच्छ्रुत्वाततस्तानभिवाद्यच ययुःसूर्यस्यनिकटेगायंतोभास्करस्तुतिं इत्येतत्सर्वमाख्यानंकार्ति
कस्यव्रतोत्तमं इतिकार्तिकमासोद्यापनंसं० अथबत्तिशीपौर्णिमालिख्यते तत्र मार्गशीर्षसितपक्षेपौर्णमास्यांशु

त्रिव्रता प्रातः शुक्लतिलैः स्नात्वा परिधायांबरं सती पूजासंभारमासाद्य पिष्टदीपं विधाय च पुत्रसौभाग्यप्राप्त्यर्थं मध्याह्ने पूजयेच्छि-
वम् सा च मार्गशीर्षपौर्णिमा मध्याह्नव्यापिनी ग्राह्या तिथ्यादि संकीर्त्य ममेह जन्मनि जन्मांतरे च अखंडसौभाग्यपुत्रपौत्रप्राप्त्यर्थं व्र-
त्रिशीपूर्णिमाव्रतं करिष्ये तत्रादौ निर्विघ्नतासिद्ध्यर्थं गणपतिपूजनं कलशाराधनं करिष्ये पंचवक्त्रं त्रिनेत्रं च जटाखंडेंदुमंडितं व्यालय-
ज्ञोपवीतं च भक्तानां वरदं शिवं ध्यायामि आगच्छ भगवन् शंभो सर्वालंकारभूषित यावद्व्रतं समाप्येत तावत्त्वं सन्निधो भव आवा०
सिंहासनं स्वर्णपीठं नानारत्नोपशोभितं अनेकशक्तिसंयुक्तमासनं प्रतिगृह्यतां आसनं त्रिपुरांतक देवेश सृष्टिसंहारकारक पाद्यं गृ-
हाण देवेश मया दत्तं हि भक्तितः पाद्यं चंदनाक्षतसंयुक्तं नानापुष्पसमन्वितं गृहाणार्घ्यं मया दत्तं ईश्वर प्रतिगृह्यतां अर्घ्यं तोयमे-
तत्सुखस्पर्शं कर्पूरेण समन्वितं शंभो शंकर सर्वेश गृहाणाचमनीयकं आचम० पयोदधिघृतं चैव मधुशर्करया युतं पंचामृतेन स्नपनं
करिष्ये भक्तवत्सल पंचामृतस्नानं मयानीतानि तोयानि गंगादीनां च हेमजैः स्नानं तैः कुरु देवेश मम शांतिर्विधीयतां स्नानं श्वेतां-
बरयुगं देव सर्वकामार्थसिद्धये अंबिकाकांत देवेश मया दत्तं प्रगृह्यतां वस्त्रं कुंकुमाक्तं सुरश्रेष्ठ क्षौमसूत्रविनिर्मितं उपवीतं मया
देव भक्त्या दत्तं प्रगृह्यतां उपवीतं काश्मीरजेन संयुक्तं कर्पूरागरुमिश्रितं कस्तूरिकासमायुक्तं चंदनं प्रतिगृह्यतां चंदनं अक्षा-
लितांश्च धौतांश्च तंडुलांश्च शिवप्रियाः मयानिवेदिता भक्त्या गृहाण जगदीश्वर अक्षतान् कमलैर्मालतीपुष्पैश्चंपकैर्जातिसंभवैः

बिल्वपत्रैर्महादेवकरिष्येतवपूजनं पुष्पाणि दशांगोगुग्गुलोद्भूतः सुगंधिश्चमनोहरः आघ्रेयत्नामयंधूपोदेवदेवदयानिधे धूपं
कार्पासवर्तिनिर्मीतं घृताक्तंतिमिरापहं भक्त्यासमाहृतंदीपंमयोदत्तंप्रगृह्यतां दीपं नैवेद्यंगृह्यतांदेवभक्तिंमेह्यचलांकुरु ईप्सितं
चवरंदेहिपरत्रचपरांगतिं नैवेद्यं नैवेद्यमध्येपानीयं उत्तरापोशनं हस्तप्रक्षा० मुखप्रक्षालनं पूगीफलमितितांबूलं इदंफल
मितिफलं वक्ष्यमाणषोडशनामभिः पूजयेत् शंकरायत्रिनेत्रायकालरूपायशंभवे महादेवायरुद्रायशर्वायचमृडायच ईश्व
रायशिवायेतिभूतेशायकपर्दिने मृत्युंजयायचोग्रायशितिकंठायशूलिने दूर्वा तेजोमयंसलक्ष्मीकंदेवानामपिदुर्लभं हिरण्यं
पार्वतीनाथमयादत्तंप्रगृह्यतां दक्षिणां प्रसीददेवदेवेशचराचरजगद्गुरो वृषध्वजमहादेवत्रिनेत्रायनमोनमः नीराजनं यानि
कानिचपापानीतिप्रदक्षिणाः इमानिबिल्वपत्राणिपुष्पाणिविविधानिच मयादत्तानिविश्वेशगृहाणवरदोभव पुष्पांजलिं न
मोस्त्वनंतायसहस्रमू० नमस्कारं भवायभवनाशायमहादेवायधीमते रुद्रायनीलकंठायशर्वायचनमोनमः ईशानायनमस्तुभ्यं
पशूनांपतयेनमः गुणत्रयात्मनेतुभ्यंगुणातीतायतेनमः नमःप्रसीददेवेशसर्वकामांश्चदेहिमे त्वमेवशरणंनाथक्षमस्वमयि
शंकर प्रार्थनां वायनं उपायनमिदंतुभ्यंव्रतसंपूर्णहेतवे वाणकंद्विजवर्यायसहिरण्यंददाम्यहं वायनं अस्यव्रतस्यसिद्ध्यर्थं
हिरण्यंपापनाशनं ददामितुभ्यंविप्रेंद्रप्रणतोस्मिप्रगृह्यतां दक्षिणां महात्मनाच्छकैलासंवृषारूढोगणैर्युतः आहूतस्तत्क्षमस्व-

त्वंप्रसीदसुमुखोभव विसर्जनं इतिपूजाविधिः अथकथा यशोदोवाच कृष्णात्वंसर्वदेवानांस्थितिसंहारकारकः अवैधव्यकरंस्त्री
णांयथार्थंवदनकृतं श्रीकृष्णउवाच यशोदेसाधुपृष्टोहंसौभाग्यप्रासयेस्त्रियः बत्तिशीनामविख्यातंपौर्णमास्यांव्रतंभवेत् तद्व
तस्यप्रभावेनस्त्रीणांसौभाग्यदंभवेत् अवैधव्यकरंनामशिवप्रीतिकरंमहत् यशोदोवाच केनचीर्णव्रतमिदंमृत्युलोकेकदावद वि-
धानंकीदृशंदेवयेनशंभुःप्रसीदति श्रीकृष्णउवाच कांतिकानामनगरीप्रसिद्धाभुविमंडले अनेकरत्नसंपूर्णाचंद्रहासेनपालिता त
त्रैवासीद्द्विजःकश्चिद्धनेश्वरेतिनामतः तस्यभार्याशुभाचारानाम्नारूपवतीसती अनपत्योमहाभागावुभौतौदुःखितौसदा तन्न
गर्यांद्विजःकश्चिद्योगारूढोद्विजोजटी भिक्षांचकारसर्वत्रस्तद्गृहंचाप्यवर्जयत् तद्गृहेनैवभिक्षांसरूपवत्यासमर्पिता ययोतदा
कृतीरंसभिक्षांप्रक्षालयत्पुनः धनेश्वरेणतद्दृष्टंयोगिनायत्कृतंशुभं भिक्षांगृह्णासिसर्वेषांगृहस्थानांद्विजोत्तम कदापिमद्गृहे
विमनायासिवदकारणं योग्युवाच अपुत्रस्यगृहस्थस्ययदन्नमुपभुज्यते पतितान्नसमंतत्तुनभोक्तव्यंकदाचन धनेश्वरेणश्रु
त्वैतदात्मानंगर्हयन्बहु धनधान्यसमृद्धिश्चपुत्रहीनस्त्वहंप्रभो इत्युक्तोसौजटीप्राहगच्छाराधयचंडिकां तस्यतद्वचनंगेहेभार्यायां
विनिवेद्यच तपसेनिर्जगामासौचंड्याराधनमाचरत् उपवासैःषोडशभिःस्वप्नेचैवाहचंडिकां भोधनेश्वरगच्छत्वंतवपुत्रोभविष्यति
स्वसामर्थ्यवशाद्देयादीपावेपिस्वसंभवाः एकैकवृद्ध्यादातव्याःषोडशाद्यपूर्णिमाः इदंव्रतंस्वपत्न्यैत्वंकथयस्वयथास्थितं आरुरो

हाशक्त्वाम्रं तं फलमादायसत्वरं स्वगृहंगच्छभार्यायैदेहिगर्भोभविष्यति ततःप्रभातसमयेसहकारमपश्यत आरोढुंनैवशक्तःसचिंता
व्याकुलमानसः स्तुतिंचक्रेगणेशस्यदयांकुरुदयानिधे मनोरथोममैवास्तुत्वत्प्रसादाद्दयानिधे इत्युक्त्वाचततःशीघ्रंफलमादायवेग
तः त्रिवारमावृत्तिंकृत्वाफलमेकंददर्शसः वराल्लुब्धंतदेवासीनान्यत्स्यादर्थनिश्चयः आगत्यकथितंतच्चभार्यायैदत्तवान्फलं यदानदारूप
वत्याभक्षितंगर्भमादधे तदादेव्याःप्रसादेनरूपौदार्यगुणान्वितः तस्यास्तदाभवत्पुत्रोदेवदासेतिनामतः व्रतबंधंततश्चक्रेविवाहं
नकरोतिसः मात्राचाग्रहतःपृष्टासोवदत्सर्वचेष्टितं ततस्तुदैवयोगेनकाश्यांनेयोमयाशिशुः इतिबुद्धिस्तदाजातातदाचक्रेधने
श्वरः तंप्रेषयन्सहाश्वेनमातुलेनसहैवच कियन्तिसमतीतानिदिनानिपथिगच्छता गच्छन्काशीपुरींप्राप्तोभागिनेयेनसंवृतः कस्य
चित्वथविप्रस्यमंडलेप्राप्तवान्निशि तस्मिन्दिनेगृहस्वामीकन्यासुद्वाहयन्कृती तैलादिरोपणंचक्रेकृत्वावरनिवेशनं लग्नस्यसमयेप्राप्ते
धनुर्वातस्तुतोनरः वरपित्रादिभिर्यैनविचार्यचपुनःपुनः असौकार्पटिकोबालःसंदर्शेमेसुतोयथा सार्धंत्वनेनलग्नंवैकरिष्यामःक्षमे
पातु. इतिनिर्धार्यमनसाप्रार्थयामासमातुलं यदिकाद्दयपर्यंतंदेहित्वंभगिनीसुतं मातुलउवाच मधुपर्केतथाकन्यादानेयद्यत्प्रदीयते त
दस्माकंयदिभवेत्तर्हीसोभवतांवरः तथाभवतुतेनोक्ताविधिर्वैवाहिकोभवत् पाणिंजग्राहयामासवरेणाचयथाविधि वध्वासार्द्धंतथाप्रो
क्तुंसचनोत्सहितःशिशुः उत्तिष्ठामीतिसंचिंत्यकस्यभार्याभवेदियं ततस्त्वेकांतसमयेनिश्वासान्मुमुचेबहून् साब्रवीत्कथमेतस्माद्

न्यथाब्रह्मसूत्रेण त्वंमेपतिरहंपत्नीदेवाग्निद्विजसंनिधौ सोब्रवीन्माकुरुषेदंममायुःस्वल्पमेवच तथातेपिगनिर्भूयात्सेयंमद्वांभवेदिति
उत्तिष्ठभोनमोनाथस्त्वथितोसिनसंशयः प्रीत्याप्रीतितयासार्द्धंभुक्तवान्सद्विजस्तथा अंगुलीयंददौतस्याःस्पष्टरत्नगतंनवं अंशुकंच
ददौतस्याःस्थानत्रयविभूषितं नवरत्नमयींमुद्रांगृहीत्वाप्यंशुकंचसा इतिसंकेतकंकृत्वामद्वचःकुरुमेप्रिये ममसंजीवनार्थायकुरु-
जात्यादिवाटिकां मनोरमाःपुष्पजातिस्सुगंधिनवमल्लिकाः सिंचसिंचप्रतिदिनंक्रीडांकुरुयथासुखं यस्मिन्दिनेतुमत्प्राणवियोगः
समजायते तदापुष्पाणांजातीनांप्राणत्यागोभविष्यतिपुनःसंजीवितास्ताश्चेत्तर्ह्यहंजीवितोदृढं ततोब्राह्मेमुहूर्तेतुनिर्जगामवरःपथि
अथप्रभातसमयेवाधनादोबभूवह आकारिताचसाकन्याब्रूतेनायंपतिर्मम यदिचायंपतिस्तातब्रूयादेवमयार्पितं मधुपर्केतथाक
न्यादानेयद्भूषणादिकं कथयिष्यतिचेत्तर्हिवृत्तांतंरात्रिभाषितं इतिकन्यावचःश्रुत्वाउवाचसवरस्तदा नैवजानामितद्वृत्तंव्रीडितोनिर्जगा
मह कृष्णउवा॰ ततस्तुबालकःकाशीमध्ययनार्थंगतःसुधीः दिनानिकतिचिज्जग्मुःकालस्यवशमागतः ततःकृष्णोमहानागोरात्रौभ-
क्षितुमागतः परितःशयनात्तस्यदीपज्वालाभिरावृतः नैवशक्तस्तुभक्तुंवैव्रतराजप्रभावतः तन्मात्राबत्तिशीनाम पूर्णिमायांव्रतंकृ-
तं ततोमध्यान्हसमयेकालएवागमत्स्वयं ततस्तुकालसंविद्धस्त्वधोदकंनियुंजितः शंकरोप्यगमत्तत्रभवान्यासहएवच भवानीप्रा
र्थयामासदृष्ट्वावस्थांतुतस्यतां अस्यमात्राकृतंपूर्वंबत्तिशीव्रतमुत्तमं तस्यप्रभावतःसोयंबालोयंजीव्यतांप्रभो तथैवकृतवां-

स्तत्र भवानीप्रेमवत्सलः तद्व्रतस्य प्रभावेन मृत्युनापि निराकृतः जात्यादिपुष्पवाटिकां पत्रपुष्पविवर्जितां पुनः संजीवितान्दृष्ट्वा पितरं कन्य
काब्रवीत् अन्नसत्रं कुरुष्व त्वं जीवितस्य गवेषणे प्रत्यर्थिं कुरु भो तात काशीतो निरगात्तु सः पुनस्तत्रैव संयातो यत्रोद्वाहोभवत्पुरा ज्ञात्वा
च परमप्रीत्या देवदत्तोनय द्गृहं ततो जनपदाः सर्वे इति ब्रूयुः परस्परं जामाता देवदत्तस्य अयमेव न संशयः बालया च तथा ज्ञातः सो
पि संकेतमागतः प्रीत्या प्रोचुस्ततः सर्वे साधु साधु समन्वितं उत्साहो ह्यभवत्तत्र निर्जगामाथ तत्पुरात् श्वशुरेण तथा बध्वा मातुले
न समन्वितः स पितुः प्रेषयामास भवत्पुत्रः समागतः तावूचतुः कुतोस्माकं दुर्भगानां तु पुत्रकः कथितोन्यैरपि जनैस्ततः संहृष्टमानसः
स्वल्हिर्बांधवैः सर्वैरानयामास बालकं ततो महोत्सवं कृत्वा ददौ चाच बहुदक्षिणां एवं स पुत्रवान् जातो बत्तिशीव्रतसेवया याः कुर्वंति व्रतमि
दं विधवा न भवंति ताः जन्मजन्मनि सौभाग्यं प्राप्स्यंतीति वचो मम एतत्ते कथितं सर्वं पुत्रपौत्रप्रवर्धनं यं यं चिंतयते कामं तं तं प्राप्नोति निश्चि
तं यशोदोवा॰ उद्यापनविधिं ब्रूहि पूर्णिमायाः सुरेश्वर भक्तितः श्रोतुमिच्छामि व्रतसंपूर्णहेतवे कृष्णाउवा॰ पौर्णिमा मार्गशीर्षस्य
माघवैशाखयोस्तथा व्रतं प्रारंभयेत्तस्यां पौषभाद्रं तु वर्जयेत् उमयासहितो देवः पूजनीयो वृषध्वजः उपचारैः षोडशभिरागमोक्त वि
धानतः एकैकं दीपकं कृत्वा मासि मासि च दापयेत् एवं सार्धद्वयं वर्षं द्विमासावधि आचरेत् ज्येष्ठस्य पूर्णिमायां च कुर्यादुद्यापनं ततः
अथवा श्रावणमासस्य पूर्णिमायां समाचरेत् चतुर्दश्यामुपवसेद्रात्रौ पूजनमाचरेत् अष्टहस्तप्रमाणेन मंडपं कारयेत्ततः तन्मध्येस्था

पयेत्कुंभमव्रणंमृन्मयंनवं तस्योपरिन्यसेत्ताम्रंवेणवंवस्त्रवेष्टितं माषमात्रस्वर्णेनप्रतिमांकारयेत्सुधीः तदर्धार्धेनवाकुर्याद्वित्तशा
ठ्यविवर्जितः कृत्वारूपंप्रयत्नेनपार्वत्याश्चहरस्यच तत्पात्रेप्रतिमेस्थाप्यवृषभेणसमन्विते पूर्वोक्तेनविधानेनसुपुष्पैश्चैवपूजयेत्
धूपैर्दीपैश्चनैवेद्यैःफलैश्चविविधैःशुभैः एवंपूजांप्रकर्तव्यारात्रौजागरणंचरेत् गीतनृत्यादिसंयुक्तंकथापुस्तकसंयुत ततःप्रभा
तसमयेकृत्वादानादिकाःक्रियाः पूर्ववदर्चयेद्देवंपश्चाद्धोमंप्रकल्पयेत् स्वगृह्योक्तविधानेनकृत्वाग्निस्थापनंबुधः प्रारभेच्चततो-
होमंपंचाक्षरमनुःस्मृतः तिलैर्यवैस्तथाज्येनपृथगष्टोत्तरंशतं नमःशिवायमंत्रेणउमायाइतिनामतः एवंसमाप्यहोमंतुआचा
र्यादीन्प्रपूजयेत् द्वात्रिंशद्वंधनैर्युक्तंवंशपात्रंमनोरमं द्वात्रिंशच्चमहादीपैर्द्वात्रिंशच्चमहाफलैः मातुलुंगंनारिकेलंजंबीरंखर्जुरीफ
लं अक्षोडदाडिमंनिंबनारंगादिशुभानिच कर्कटयादिशुभैःसर्वैर्ऋतुकालोद्भवैःशुभैः द्वात्रिंशद्भिःफलैर्युक्तंसदीपंवस्त्रवेष्टितं
व्रीहीणांसुपरिस्थाप्यआचार्यायनिवेदयेत् वायनंकंतवतुभ्यंसर्थददामिगिरिजापते तत्रमंत्रः महेशःप्रतिगृह्णातिमहेशोवैददाति
च महेशस्तारकोभाभ्यांमहेशायनमोनमः द्वात्रिंशद्ब्राह्मणांश्चैवद्वात्रिंशद्योषितस्तथा अन्येभ्योब्राह्मणेभ्यश्चभोजनंषड्रसैः
सह पुमान्वत्ससुतांधेनुमाचार्यायनिवेदयेत् पश्चात्पूर्णाहुतिंकृत्वाहोमशेषंसमापयेत् पश्चाद्भुंजीतयच्छेषंयद्देवब्राह्मणा-
र्पितं इत्येवंपूर्णिमायास्तुउद्यापनविधिःस्मृतः इत्येतत्कथितंसर्वंव्रतस्योद्यापनंमया याःकुर्वंतिव्रतमिदंविधवानभवंतिताः

इहमुक्त्वातुविपुलान्कामान्सर्वान्मनोगतान् स्वर्गमंतेगमिष्यंतिकुलकोटिशतैरपि इतिभविष्यपु॰ कृष्णयशोदासंवादेवत्रिंशीपूर्णिमाव्रतकथासंपूर्णा अथोद्यापनसंकल्पः तिथ्यादिसंकीर्त्यममआत्मनः इहजन्मनिजन्मांतरेचसकलसौभाग्यपुत्रपौत्रादिप्राप्त्यर्थंद्वात्रिंशत्पौर्णमास्याचरितव्रतस्यघृताक्तव्रीहियमदीपप्रज्वलनस्यसंपूर्णफलावाप्त्यर्थंतदुद्यापनंकरिष्ये तदंगंगणपतिपूजनंस्वस्तिपुण्याहवाचनंआचार्यवरणंचकरिष्ये इतिसंकल्पः अथफाल्गुनपौर्णमास्यांहोलिकोत्सवः नृपंप्रतिनारदवचोभविष्ये नारदउवा॰ अथपंचदशीशुक्लाफाल्गुनस्यनराधिप अभयंचैवलोकानांदीयतांपरमेश्वर यथात्वशंकिनोलोकारमंतिचहसंतिच दारुजानिचखंडानिगृहीत्वातुससुत्सुकाः योधाइवविनिर्यांतुशिशवःसंप्रहर्षिताः संचयंशुष्ककाष्ठानांउपलानांचसंचयं तत्राग्निंविधिवद्धुत्वामहामंत्रैश्चवित्तमैः ततःकिलकिलाशब्दैस्तालशब्दैर्मनोहरैः तत्तेशब्देनसापापाहोमेनचसमाहृताः सार्द्धंदाराक्षसी तत्रैव सर्वदुष्टप्रहोहोमःसर्वरोगोपशांतिकृत्क्रियतेस्यांद्विजैःपार्थतेनसाहोलिकास्मृता तमग्निंत्रिःपरिक्रम्यगायंतिचहसंतिच जल्पंतिस्वेच्छयालोकानिःशंकायस्ययन्मतं तत्रपौर्णिमाप्रदोषव्यापिनीग्राह्या तपस्यपौर्णमास्यांतुरजन्यांहोलिकोत्सवः प्रतिपद्भूतभद्रासुयार्चिताहोलिकादिवा संवत्सरंचतद्राष्ट्रंपुरंदहतिसाद्भुतं प्रदोषव्यापिनीग्राह्या पौर्णिमाफाल्गुनीसदा तस्यांभद्रामुखंत्यक्त्वापूज्याहोलीनिशामुखे निशागमेनपूज्यैवहोलिकासर्वथाजनैः दिनद्वयेप्रदोषे

तुर्व्यासासातुपरेर्बहि भद्रायांदीपिताहोलीराष्ट्रभंगंकरोतिवै नगरस्यचनैवेष्टातस्मात्तांपरिवर्जयेत् दिनार्धात्परतोयास्यात्फाल्गु
नीपौर्णिमायदि रात्रौभद्रावसानेतुहोलिकांतत्रदीपयेत् एकायामर्धयामादूर्ध्वंचतुर्दश्यांयदाभवेत् होलाभद्रावसानेतुनिशीथांतेपि
दीपयेत् इतिपुराणसमुच्चयाच्च यत्तु भद्रायांविहितंकार्यंहोलिकायाःप्रपूजनं गंधपुष्पैर्धूपदीपैर्नैवेद्यैर्दक्षिणाफलैः होलांतु
नाममंत्रेणपूजयेच्चयथाविधि योनिनाम्नाचमंत्रेणमहाशब्दंतुकारयेत् तत्रकिलकिलाशब्दैरन्योन्यमुच्चरेत्ततः योषितानांभ्रमंकु
र्याद्योनिमंत्रेणपूर्वकं योनिनामैवमंत्रंतुयोनरःपठ्यतेसदा नभवेत्तत्तदापीडाआवर्षंतुसुखंभवेत् मध्यरात्रिमतिक्रम्यविष्टेःपुच्छं
यदाभवेत् प्रदोषेज्वालयेद्वह्निंसुखसौभाग्यदायिनं प्रदोषमध्यरात्र्यंतंहोलिकापूजनंशुभं यदातुपूर्वरात्रौप्रदोषव्याप्त्यभावस्त
त्सत्वेवाभद्रारहितकालोनप्राप्यते उत्तरदिनेचप्रदोषेपौर्णिमाभावस्तदापुच्छेकार्यं तथालल्लः पृथिव्यांयानिकार्याणिशुभानि-
ह्यशुभानिच तानिसर्वाणिसिध्यंतिविष्टिपुच्छेनसंशयः अस्मिन्नेवविषयेउत्तरदिनेपौर्णिमासार्धयामत्रयमितानतुनोधिकाचाप्रतिपद्
वृद्धिस्तदापौर्णिमोत्तरंप्रतिपदिहोलिकाकार्या ननुपूर्वेद्युर्विष्टिपुच्छेसार्धयामत्रयंपूर्णाद्वितीयदिवसेयदा प्रतिपद्वर्धमानातुतदासाहोलि
कास्मृता इतिभविष्योक्तेः साउत्तरदिनेप्रदोषएकदेशव्यापिन्यस्तिपूर्वरात्रौचभद्रारहितानैवलभ्यते तदोत्तरैव यदापूर्वरात्रिर्भद्राव्या
प्ताउत्तरेप्रदोषेचचंद्रग्रहणंतदानत्रस्नात्वाकार्या सर्वेषामेववर्णानांसूतकंराहुदर्शने स्नात्वाकर्माणिकुर्वीतशृतमन्नंविवर्जयेत् फाल्गुनो-

व्र॰रा
३१९

मलमासश्चेच्छुद्धेमासिन्यहोलिका पूजामंत्रस्तु अस्मृक्पाभयसंत्रस्तैःकृतात्वंहोलिबालिशैः अतस्त्वांपूजयिष्यामिभूतेभूतिप्रदाभव इ
तिहोलिकानिर्णयः इतिपौर्णिमाव्रतानिसमाप्तानि अथामावास्याव्रतानिलिख्यंते अथभाद्रपदअमावास्यायांकुशग्रहणं हे
माद्रौउक्तंहारीतेन मासेनभस्यमावास्यातस्यांदर्भोच्चयोमतः अयातयामास्तेदर्भानियोज्याश्चपुनःपुनः नभःश्रावणदर्शान्तपक्षे-
णेदं मदनरत्नेतु मासेनभस्यंमतः इतिकुशग्रहणीअमा अत्रैवअमावास्यायांपिठोराव्रतं मध्यदेशेतुपोलाइतिप्रसिद्धं
साप्रदोषव्यापिनीग्राह्या यदापूर्वरात्रौप्रदोषव्याप्त्यभावस्तदापराकार्या अथव्रतविधिः मासपक्षाद्युल्लिख्यममइहजन्मनिजन्मां
तरेवापुत्रपौत्रफलावाप्त्यर्थंपिठोराव्रतंकरिष्ये इतिसंकल्प्य देवीपूजांकृत्वा संध्याकालेस्नात्वाप्रदोषसमयेदेवींसंपूज्यषोडशो
पचारैः ब्राह्मणान्सुवासिनींसंभोज्यपश्चात्स्वयंभुंजीत इतिविधिः नमोदेव्यैइतिमंत्रेणषोडशोपचारैःपूजनंकुर्यात् अथकथा इंद्रा
ण्युवाच श्रुतास्तेभगवन्पुत्र्यंपरत्रचमहत्फलं व्रतानांपरमंश्रेष्ठंकथयत्वंहिपार्वति पार्वत्युवा॰ प्राचीनःश्रीधरोविप्रअस्पुत्रोधनेश्वरः
तस्यभार्यासुमित्राचगृहधर्मेणवर्तते श्रीधरस्यसुतोज्येष्ठःशंकरोनामनामतः तस्यभार्याविदेहाचमृतापत्याभवत्तदा श्रीधरस्यापितुः
श्राद्धेविदेहाचप्रसूयते दुःखयुक्तासुमित्राचविदेहांपरिवर्जयत् दुःखयुक्तावनंप्राप्तामठमेकंददर्शसा सखिच्चप्रबलायत्रविदेहातत्रसा
गता मठमध्येस्थितानारीपश्यंतीचपुनःपुनः कुत्रेयमधुनाप्राप्तासालक्षणान्वितसुंदरी मयाधिपाविचार्यैवंविदेहामाहसत्वरं ज्ञोर्दिगैर्यक्ष

अ॰
३०

३१९

वेनालैरनेकैः स्थीयते शक्रो त्वां ग्रसिष्यंति सकलागच्छ शीघ्रं यथागतं विदेहोवा॰ दुःखयुक्तां च मां चात्र भ्रमंतीं च वनांतरम् माग्रसेत्त्वेतु पिंगा
क्षि क्षेमं मम भवेत्कथं मठनार्युवा॰ अत्रागत्य चतुःषष्टिदेव्यया ग्याद यस्त्विमाः पूजनार्थं समायाता निशामध्ये शक्रभा स्थिताः नवका मंत्र-
कुर्वंनि जीविष्यंति च बालकाः बिल्वपत्रेषु गुप्ता त्वमधुना भव भामिनि लुप्तानत्री विदेहा च बिल्वपत्रेषु संस्थिता क्षणेनैकेन झोटिंगा मठमध्ये
समागताः ज्ञाला मनुष्यगंधं च मठनारीमपृच्छत कुतो मनुष्यगंधश्च मठगेहं समाश्रितः निशामध्ये चतुःषष्टिदेव्यस्तत्र समागताः अनेकै
श्च महारत्नैः फलैर्नानाविधैरपि निविष्टं मठदेवीं ता माह्वानं कुर्वंते स्मह श्रावणस्य तु मासस्य कृष्णपक्षे कुहूतिथौ पूजां कृत्वा चतुःषष्टिरति-
थीन्ब्रुवते स्म हि वदते स्म मनुष्या सा लुप्ताथ प्रकटा भवत् ममाशक्रचिलमापन्न मातर्मे बालकं मृतं तवाग्रे मृतमादाय स्थितास्मीति च बा
लकं मम गर्भाश्च तुःषष्टिसजीवास्त्व भवंत्विति तः तत्र स्थितं च नैवेद्यं नारि त्वं प्रतिगृह्यतां चतुःषष्टिस्तनस्तु शदद्दौ तस्यै शक्रभ्रं वरं श्रीधरस्य
स्नुषा त्वं हि शंकरस्य च वल्लभा पुत्रपौत्रयुता राज्यं भुक्त्वा पूज्या सुरालये अष्टपुत्राभवंला शक्रविदेहे गम्यतां पुरं आगता येन मार्गेण तेनैव पु
नरेव हि पुरांतरं स्थिता गत्वा प्रविवेश स्वमंदिरं श्रीधरश्च सुमित्राच शंकरो बांधवैः सह विदेहा चाष्टपुत्रैश्च युक्ता सा मंगलोत्सवैः माप्तु
र्मुदं महाभागा देवीनां च प्रसादतः द्विजमंत्रादिनिर्घोषैर्दुंदुभिः पटहध्वनैः मृगाक्षि मंगलाचारं मृदंगैर्नृत्यघोषकैः तयासंपूजिता देव्यश्च
तुःषष्टिः प्रकीर्तिताः नहृत्तं स्पृणु चेंद्राणि पिठोरा रख्यं कुहूतिथौ तासां स्मरणमात्रेण पुत्रपौत्रधनान्विता नारी भवति चेंद्राणि श्रृणु त्वं नाम प्र

जनं दिव्ययोगीमहायोगीसिद्धायोगीगणेश्वरी प्रेताक्षीडाकिनीकालिकालरात्रिर्निशाचरी झंकारीरौद्रवेनाडी भूतलीभूतडांबरी ऊर्ध्वकेशीवि
रूपाक्षीशुष्कांगीनरभोजनी भद्रारीवीरभद्राचधूम्राक्षीकलहप्रिया राक्षसीघोररक्ताक्षीविश्वरूपाभयंकरी चंडिकावीरकौमारीवाराहीमुंडधा
रिणी भास्करीरौद्रझंकारीभाषिणीत्रिपुरांतका भैरवीध्वंसिनीक्रोधीदुर्मुखीप्रेतवाहिनी खट्वांगीदीर्घलंबोष्ठीमालिनीमंत्रयोगिनी कालाग्निग्रह
णीचक्रीकंकालीभुवनेश्वरी कटकाकोटिनीरौद्रीयमदूतीकरालिनी घोराक्षीकामुकीचैवकाकदृष्टीअघोमुखी मुंडाग्रधारिणीव्याघ्रीकिंकिणीते
प्रभाषिणी कालरूपाचकामाख्याउग्राणीयोगिपीठिका महालक्ष्मीएकवीराकालरात्रीचपीठिका नमोस्तुवश्चतुःषष्ठीदेवीभ्यः शरणंव्रजे पु
त्रश्रीवृद्धिकामोहंभक्त्यासंपूजिताःशुभाः एवमिंद्राणिकथितंपिठोरारव्यंमहाव्रतं भक्त्याकुर्वंतियानार्योकृतकृत्याभवंतिताः स्फरवसौभा
ग्यसंयुक्ताश्चतुःषष्ठ्याःप्रसादतः इतिभ॰पु॰पिठोराव्र॰सं॰ अथ जाशिवनकृष्णामायांगजच्छायापर्व अपरार्केयमः हंसेकरस्थितेया-
तुअमावास्याकरान्विता साज्ञेयाकुंजरच्छायाइतिबोधायनोब्रवीत् हंसेसूर्येकरेहस्तेस्थितेसूर्ये तत्रस्नानंकृतंजसंदानंदद्यात्प्रयत्नतः
पितृभिःसंप्रदास्यामिअक्षय्यमुपतिष्ठतु इतिगजच्छाया अथकार्तिकाऽमावास्यायांलक्ष्मीव्रतं वालखिल्याऊ॰ स्नात्वाप्रभात
समयेअमायांचमुनीश्वराः नत्वादेवान्पितॄन्भक्त्यासंपूज्याथप्रणम्यच कृत्वातुपार्वणश्राद्धंदधिक्षीरघृतादिभिः भोज्यैर्नानाविधैर्वि-
प्रान्भोजयित्वाक्षमापयेत् दिवातत्रनभोक्तव्यमृतेबालातुराज्जनात् ततःप्रदोषसमयेपूजयेदिंदिरांशुभां कुर्यान्नानाविधैर्वस्त्रैःस्वच्छं

क्ष्म्याश्चमंडपं नानापुष्पैः पल्लवैश्चविचित्रैश्चापिविचित्रितं तत्रसंपूजयेल्लक्ष्मींदेवांश्चापिप्रपूजयेत् संपूज्यादेवनार्योपिबहुभिश्चोपकारकैः
पादसंवाहनंकुर्यात्तलक्ष्म्यादीनांतुभक्तितः अस्मिन्नहनिसर्वेपिविष्णुनामोचिताःपुरा बलिकारागृहाद्देवालक्ष्मीश्चापिविमोचिता लक्ष्म्या
सार्धंततोदेवाजग्मुःक्षीरोदधौपुनः प्रसुप्ताबहुकालंतेसुखवत्तस्मान्मुनीश्वराः रचनीयाःसूत्रगर्भाःपर्यंकाश्चसतूलिकाः दुग्धफेनोपमैर्व
स्त्रैरास्तृताश्चयथादिशं स्वापयेत्तान्सुरान्लक्ष्मींवेदघोषसमन्वितः लक्ष्मीर्दैत्यभयान्मुक्तासुखंसुप्तांबुजोदरे अतश्चविधिवत्कार्यातु-
ष्ठ्यैतु सुखसुप्तिका तदंघ्रिपद्मशय्यायांपद्मासौख्यविवृद्धये कुर्यात्तस्यगृहंमुक्त्वानतस्याक्कापिनव्रजेत् नकुर्वंतिनराइत्थंलक्ष्म्या
येसुखसुप्तिकां धनचिंताविहीनास्तेकथंरात्रौस्वपंतिहि तस्मात्सर्वप्रयत्नेनलक्ष्मींसुस्वापयेन्नरः दुःखदारिद्र्यनिर्मुक्तः स्वजातौ
स्यात्प्रतिष्ठितः जातीपत्रंलवंगैलाफलकर्पूरसंयुतं पाययित्वागव्यदुग्धंसितांदत्वायथोचितां लड्डुकान्नस्यकुर्वीततांश्चलक्ष्म्यैसमर्प
येत् अन्यच्चतुर्विधंभक्ष्यंदेशकालादिसंभवं सर्वंनिवेदयेल्लक्ष्म्यैमम श्रीःप्रीयतामिति दीपदानंततःकुर्यात्प्रदोषेचततोल्मुकं भ्राम-
यन्त्वस्यशिरसिसर्वारिष्टनिवारणे दीपवृक्षास्तथाकार्याःशक्त्यादेवगृहादिषु चतुष्पथेश्मशानेचनदीपर्वतवेश्मसु वृक्षमूलेषु-
गोष्ठेषुचत्वरेषुगृहेषुच वस्त्रैःपुष्पैःशोभितव्याराजमार्गस्यभूमयः गृहेषुस्थापयेन्नानापक्कान्नानिफलानिच नागवल्लीदलादीनि
रचयित्वाचनिक्षिपेत् शोभांकुर्याद्राजमार्गेकमलैश्चविशेषतः तदभावेवरादीनांकृत्वानानिचशोभयेत् एवंपुरमलंकृत्यप्रदोषेतद

व्र·रा·
३२१

नंतरं ब्राह्मणान्भोजयित्वा दीसंभोज्य च बुभुक्षितान् लड्डुकापूपमंडाद्यैः शष्कुलीपूरिकादिकैः अलंकृतेन भोक्तव्यं नववस्त्रोपशोभिना ततोपरा
ह्नसमये घोषयेन्नगरं नृप अद्य राज्यं बलेर्लोका यथेष्टं क्रीड्यतामिति यथेष्टं क्रीड्यतां बाला इत्यादेशं यं नृपेण तु विलोक्य बालकक्रीडा
नानासामग्रिसंयुताः तेभ्यो दद्यात्क्रीडनकं ततः पश्येच्छुभाशुभं तैश्चेत्प्रदीपितो वह्निर्न ज्वालां मुच्यते यदा महामारीभयं घोरं दुर्भिक्षं वा-
थ जायते बालशोके राजशोकस्तेषां हृष्टे नृपे सुखं बालयुद्धे राजयुद्धं रोदने बालकैः कृते अवश्यमेव भवति वर्षाद्राष्ट्रविनाशनं यष्टिका
दिकृतान्स्त्रान्यदारोहंति बालकाः तदा राज्ञो जयो वाच्यः परराष्ट्रं विमर्दयेत् यदा क्रीडंति बालाश्चेल्लिंगं धृत्वा करादिषु तदा प्रसिद्धं नारीणां
व्यभिचारः प्रजायते अन्नं यदा गोपयंति क्रीडने बालका जलं दुर्भिक्षं वृष्ट्यभावश्च शीघ्रमेव प्रजायते एवं बालकृतां चेष्टां बुध्वा तास्य फलं व
देत् लोकैश्चापि पुरे रम्ये सुधाधवलिताजिरे गीतवादित्रसंजुष्टे प्रज्वालितसुदीपके अन्योन्यप्रीतिसंयुक्ते दत्तचालनके जने तांबूलहृष्टहृ
दये कुंकुमोक्षदत्तचर्चिते दुकूलपट्टवसनैर्नैपथ्यैः स्वर्णहीरजैः मित्रस्वजनसंबंधिस्वज्ञातींश्च प्रपूजयेत् बलिराज्ये प्रकर्तव्यं नरैर्वारांगना
दिकं अक्षक्रीडनकं चैतद्बलिराज्ये न दोषभाक् आत्मनो यस्य सौख्यार्थे परदुःखाकरं कृत वारांगनादिगमनं स्पृश्यास्पृश्यादिभक्षणं अ
न्यांबरस्पृतिश्चापि द्यूताद्यं च न दुष्यति एवं तु सर्वथा कार्यो बलिराज्ये महोत्सवः जीवहिंसा सुरापानमगम्यागमनं तथा चौर्यं विश्वासघा
तश्च पंचैतानि मुनीश्वराः बलिराज्ये तु नरकद्वाराण्युक्तान्यतस्त्यजेत् ततोऽर्धरात्रसमये स्वयं राजा व्रजेत्पुरं अवलोकयितुं रम्यां पद्भ्या-

अ·
३०

३२१

मेवशनैःशनैः महतातूर्य्यघोषेणज्वलद्भिर्हस्तदीपकैः हर्म्यशोभासुखंयावत्कृतकैरश्वकैर्नरैः बलिराज्यप्रमोदंचद्दृष्ट्वासपुरमाव्रजेत् एवंगतेनि-
शीथेचजनेनिद्रार्धलोचने तावन्नगरनारीभिःशूर्पडिंडिमवादनैः निष्काश्यतेप्रहृष्टाभिरलक्ष्मीःस्वगृहांगणात् दंडैःकुरजनीयोगेदर्शःस्यात्तु
परेहनि तदाविहायपूर्वेद्युःपरेन्हिसुखरात्रिका येवैष्णावावैष्णवावाबलिराज्योत्सवंनराः नकुर्वंतिवृथातेषांधर्माःस्युर्नात्रसंशयः इतिलक्ष्मी
व्रतंसंपूर्णं अथमार्गशीर्षअमावास्यायांगौरीतपोव्रतं सूतउवा॰ इंद्राणीप्रांजलिर्भूत्वास्वपतिंवाक्यमब्रवीत् एकंव्रतंसमाचक्ष्वपुत्रपौ-
त्रसुखप्रदं इतिवाक्यंतदाश्रुत्वाप्युवाचवचनंशचीं शृणुचार्वंगिसकलंयन्मयासुकृतंकृतं बृहस्पतेस्तुजनकःपृष्टश्चाहांगिराःसुधीः तद्व्रतं
कथयाम्यद्यसद्यःसुखकरंपरं पतिपुत्रसुखावाप्तिर्जायतेजगतिस्थिरा गौरीप्रीत्यर्थमेवादौस्त्रीभिर्यत्क्रियतेतपः गौरीतपइतिख्यातं
तस्मात्तद्व्रतमुत्तमं तस्मात्स्त्रियातपोभिश्चतोषणीयाशिवप्रिया आदौमार्गशिरेमासित्यमावास्यादिनेशुभे गृण्हीयान्नियमंमंत्रंदंत-
धावनपूर्वकं उपवासस्यनक्तस्यगौरीशप्रीतयेमुदा ईशार्धांगस्थितेदेविकरिष्येहंव्रतंतव पतिपुत्रसुखावाप्तिंदेहिदेविनमोस्तुते नियम
मंत्रः ततोमध्यान्हसमयेस्नात्वानद्यादिषुव्रती सूर्यायार्घ्यंततोदत्वाध्यात्वागौरीश्वरंहर अहंदेवव्रतमिदंकर्तुमिच्छामिशाश्वतं तवाज्ञ-
यामहादेवतत्रनिर्वहणंकुरु उक्त्वैवनियमंगृण्हन्वर्षाण्येवंतुषोडश गृहमागत्यपूजार्थमुपचारान्प्रकल्पयेत् शिवालयंततोगत्वाशिवंसंपू-
जयेत्सुधीः गौरीमभ्यर्चयेत्पश्चाद्विधिनायेनतंशृणु पार्वतीतुनतःपादौजान्वोर्हैमवतीतिच जंघयोरंबिकेत्येवंगुह्यंगिरिशवल्लभा नाभिंगंभीर

नाभीति अर्पणेत्युदरं पुनः महादेवीति हृदये कंठे श्रीकंठकामिनी सुखवेषप्रसुखमानेति ललाटे त्रैलोक्यमोहिनी मेनकाकुक्षिरत्नेति शिरस्यभ्यर्चयेत्ततः
दक्षिणे गणपः पूज्यो वामे स्कंदः सवाहनः धूपदीपादिनैवेद्यं कृत्वा नत्वा प्रदक्षिणां फलेनार्घ्यं ततो दत्वा ध्यात्वा देवीं महेश्वरीं कृत्वा ताम्रमयं पा-
त्रं मृन्मयं वैणवं तथा अष्टतंतुमयीं वर्तिं तस्मिन्पात्रे निवेशयेत् घृतेनापूर्य गव्येन तत्पात्रं विमलेन च दीपमुज्ज्वालयेत्तस्माद्यावत्सूर्योदयो भवेत् ए-
वं संक्षिप्य तां रात्रीं जागरेण समन्वितां ब्राह्मे मुहूर्ते चोत्थाय पूजयीं हूजदंपती कुर्यात्सौभाग्यदलिनीं पापाग्निशमनीं तदा पक्कान्नेन गुडान्नाद्यैः पू-
र्णां पूर्णफलप्रदां कृत्वा तूर्द्धवैः फलैश्चैव पूरिका तिलतंडुलैः सौभाग्याष्टकसंयुक्तं पात्रं कुर्याच्च धातुकं तस्योपरि स्थितं दीपं पूजयेत्तिथिनामतः
सुवासिनी वचो ग्राह्यं दीपं सूर्याय दर्शयेत् यावत्कलकलाशब्दं कुर्वंते बककाककाः तावत्पुरस्तात्कर्तव्यं कीर्तनं च तदग्रतः उत्तिष्ठते यदि नगा
द्विहंगास्त्वासुलोचने तदाकर्णनमात्रेण सौभाग्यं प्रजनिस्त्रियाः अत एव व्रते नारी पश्चादुत्थापयेच्च तान् तिथिमेकां समाप्यैवं दंपती भोज्य-
भक्तितः परिधाय स्वलंकृत्य वासोभिर्भूषणांजनैः माल्यैः स्रुगंधैर्विविधैः फलसिंदूरकुंकुमैः संतोष्य समनुज्ञाप्य स्वयं भुंजीत बंधुभिः एवं द्वि-
तीये वर्षे च नंदायास्त्वाचरेत्तिथीः वर्षे वर्षे क्रमादेवं द्वितीयादिषु चाचरेत् एवं षोडशवर्षाणि कृत्वैतद्व्रतमुत्तमं पश्चादुद्यापनं कुर्याद्व्रतसंपूर्णहेत-
वे मार्गशीर्षे यसमासे मासे गौरीश्वरप्रिये पौर्णमास्यां दिने रम्ये निमंत्र्य ह्यष्ट दंपतीन् मध्याह्नेऽष्टदले पद्मे गौरीं नारि समर्चयेत् यथोक्तेन विधानेन
पुष्पधूपादिभिस्तथा सोहलीभिश्च कासारैः पूपापूपैश्च भामिनि पायसेन घृतेनापि शर्करामोदकैस्तथा पूरयित्वा ह्यष्टसरव्यान्धातुमृ-

न्मयसंकृटान् दंपतीन्भोजयित्वातुतेभ्योदद्याद्यथाविधि अलंकृत्ययथाशक्त्यागौरीमेप्रीयतामिति गुरवेदक्षिणोपेतांगौरींकनकनिर्मि
तां दद्याद्धेनुंसवत्सांचदक्षिणावस्त्रसंयुतां अन्यान्यपियथाशक्त्यादद्याद्दानानिभामिनि यद्यदिष्टतमंलोकेतत्तद्देयंद्विजन्मने चापल्य
मायुषोज्ञात्वासपत्न्यापिचसुंदर षोडशाब्दंव्रतमिदंकुर्याद्धर्षेहिभक्तितः गौरीतपोव्रतमिदंयाकरोतीहभामिनि बाल्येयौवनकालेवा
वार्धकेवाहरिप्रिये तस्यांसौभाग्यमतुलंधनधान्यसुतान्वितं भवेदव्याहतैश्वर्यंभर्तृसौख्यंनसंशयः दुर्लभंमानुषंजन्मतत्रापिहि
जजन्मता सदाचारपरत्वंचतत्रापितुविशिष्यते एवंवारत्रयंयास्त्रीकुरुतेव्रतमुत्तमं मातापित्रोःप्रियंचापिप्राप्नुयाच्छुद्धवंशतां निर्मलं
जन्मनोवापिमनसश्चापिसंपदः लभतेश्शुभतेजश्चपतिपुत्रसमन्विता इहभोगान्यथाकामंभुक्त्वास्वर्गमवाप्नुयात् इत्यंगिरोवचन
माप्यपुरापुराणंगौरीतपोव्रतमिदंविदधेयथेच्छं तस्यप्रभाववशतःसकलंभुवःस्वराज्यंसौख्यंहिसर्वमतुलंपतिपुत्रयुक्तं निलादउवा॰
उद्यापनविधिंवक्ष्येव्रतंसांगंभवेद्यथा सुरासुरमुनीनांचदुर्लभंतद्विधिंशृणु पर्वण्याश्वयुजस्यांतेपायसंचघृतप्लुतं नक्तंभुंजीतशु
द्धात्माओदनंचेक्षवान्वितं आश्वयुजस्यांतेकार्तिकेपर्वणि अमावास्यायांकार्तिकांतेदर्शेइत्यर्थः ऐक्षवंइक्षुरसः शर्वर्यंतेशुचिर्भू
त्वाबिल्वजंदंतधावनं भक्त्वाचैतन्महादेवंनत्वाभक्तियुतोव्रती अहंदेवव्रतमिदंकर्तुमिच्छामिशाश्वतं तवाज्ञयामहादेवतत्रनिर्वहणं
कुरु उक्त्वैवंनियमंगृण्हन्वर्षाण्येवतुषोडश तिथीःप्रतिपदाद्यास्तुपारयिष्याम्यनुत्तमाः ततोमार्गशिरेमासिप्रतिपद्यपरेहनि उपव-

सेहुरुंरक्षामहादेवंस्मरन्मुहुः महादेवंस्मरन्विप्रान्नमस्येच्छन्नविग्रहान् षोडशाष्टौनदर्धंवादंपतीश्चनिमंत्रयेत् देवंचनक्तमासाद्यदीपान्प्र
ज्वाल्यषोडश पक्वान्नार्थंमहादेवंभक्त्यानत्वानिवेदयेत् आचम्यचगृहंगत्वामहादेवंस्मरन्क्षितौ शुचिवस्त्रास्तृतायांतुनिराहारोनिशिस्व
पेत् अथोदयेसहस्रांशोःस्नात्वाचाद्यप्रदीपकान् नैवेद्यंस्नपनाद्यंचगृहीत्वागच्छेच्छिवालयं स्नापयेत्पंचगव्येनघृतेनतदनंतरं मधुनाचत
थादध्नाभूयश्चपयसातथा रसेनचाथखंडेनफलैश्चस्नापयेत्पुनः तिलांबुनाततःस्नाप्यपश्चादुष्णेनवारिणा लेपयेत्स्कंधनंपश्चात्कर्पूरा
गरुचंदनैः एवंसंपूज्यतंभक्त्याहेमन्यख्यैःप्रजेद्गृहं हेमस्कवर्णपुष्पं नानाफलैश्चसंपूज्यदद्यान्नैवेद्यमेवहि गृहंगत्वायथान्यायंहिर-
ण्यरेतसंवह्निं जातवेदसमाधायतर्पयेत्तिलसर्पिषा द्वितनश्चतथाचार्यंमिथुनानिचभोजयेत् हेमवस्त्रादिदानानियथाशक्त्यातुदाप-
येत् एवंविसृज्यतान्सर्वान्सार्धंबंधुजनैःसह पीत्वादौपंचगव्यंचहृष्टोभुंजीतवाग्यतः यत्किंचिदेतदुद्दिश्यमहादेवमुदीरयेत् प्रारंभेच
विधिंकुर्याद्दरिद्रोवाधनेश्वरः वित्तसामर्थ्यतश्चैवप्रतिमासंततश्चरेत् स्वल्पवित्तोथवाकश्चित्पुष्यादौकार्तिकावधि नक्तंकृत्वात्वमावा
स्यांप्रागुक्तविधिनाततः प्रतिपद्यामुपोष्यैवंपंचगव्यंपिबेच्छुचिः महादेवंस्मरन्सार्धंभक्त्याभुंजीतलिंगिभिः मासस्यकार्तिकस्यांतेकृत्वा
प्राग्विधिनाचरेत् नंदायांचद्वितीयायांप्रभातिथ्यामुपोषयेत् एवंपौषेतुसंप्राप्तेप्रतिपन्नक्तमाचरेत् द्वितीयाब्देद्वितीयायामुपवासंसमाच-
रेत् आददानातिथिंचैकांमासेमासेतथापरां पूर्ववत्संत्यजेत्पौषंप्रत्यब्दंचैवमाचरेत् एवंषोडशवर्षेतुक्रमेणैवमुपोषयेत् पूर्ववद्देवमभ्य

र्थ्येंदत्त्वाशनुं धाम्निनर्पयेत् उमामहेश्वरयोस्तेदद्याद्वांच द्विजायच संपूज्य हेमवस्त्राद्यैर्यथाशक्त्यातु दक्षिणां छत्रोपानहकुंभांश्च दद्यात्तेभ्यः
पृथक्पृथक् भोजयेत्तान्विसृज्यैवं मिथुनानिच षोडश ब्राह्मणांश्च यथाशक्त्या भोजयेद्वेदपारगान् एवंमहाव्रतंचैव ब्रह्मसूत्रस्वाधम
र्षणं वाचकाश्चावकाश्चैव श्रोतारो व्रतिनश्च ये भवंति पुण्यसंयुक्तास्तद्व्रताभिमुखाश्च ये इति श्रीहेमाद्रौ कालिकापुराणे गौरीतपो
व्रतं सोद्यापनं संपूर्णं अथ सोमवत्यमावास्याव्रतं शंखः अमासोमसमायोगे श्राद्धं यद्यत्र लभ्यते तीर्थे कपिलधारेस्मिन् गंगायां
पुष्करे तथा दिव्यांतरिक्षभौमानि यानि तीर्थानि सर्वशः तान्यत्र निवसिष्यंति दर्शे सोमदिनान्विते अमावास्यातु सोमेन सप्तमी भानुना सह
चतुर्थी भूमिपुत्रेण सोमपुत्रेण चाष्टमी चतस्त्रस्तिथयः लुप्ताः सूर्यग्रहणसन्निभाः स्नानं दानं तथा श्राद्धं सर्वं तत्राक्षयं भवेत् तिथिवासरयोर्यो
गो यया काले भवेद्यदि भान्वंते वाथ मध्याह्ने पुण्यकालः स नान्यथा अथ संकल्पः तिथ्यादौ संकीर्त्य ममेह अस्यां सोमवत्यमायां
सकलपापक्षयार्थं पुत्रपौत्राद्यभिवृद्ध्यर्थं जन्मजन्मन्यवैधव्यसंततिचिरजीवितपरमसौभाग्यप्राप्तिकामः अश्वत्थमूले लक्ष्म्या सहित ब्र
ह्मशिवसहित अश्वत्थनारायणप्रीत्यर्थं विष्णुपूजां तदंगतया कलशपूजनंच करिष्ये अथ पूजा शांताकारमिति ध्यात्वा विश्व-
व्यापक विश्वेश शक्तिरूप यादीनवत्सल मयोपपादितां पूजां गृहाण मां हि माधव सहस्रशीर्षेत्यावाहनं मूलानि ब्रह्मणो यस्य ऋग्वेदांगानि
पल्लवाः फलानि यज्ञशाखा च नारायण दयां कुरु सूर्यकोटिप्रभानाथ सर्वव्यापिन्रमापते आसनं कल्पितं भक्त्या गृहाण पुरुषोत्तम पुरु

ऋ॰ रा॰ | षएवेदमित्यासनं नारायणजगद्व्यापिन्जगदानंदकारक विष्णुक्रांतादिसंयुक्तं गृह्णपाद्यंमयार्पितं एतावानस्येतिपाद्यं फलगंधाक्षतै- | अ॰
३२४ | र्युक्तंपुष्पपूगसमन्वितं अर्घ्यंगृहाणभगवन्विष्णोसर्वफलप्रद त्रिपादूर्ध्वमित्यर्घ्यं कर्पूरैलालवंगादिशीतलंसलिलंप्रभो रमारमणपा- | ३०

ण्यात्समाचम्यंप्रतिगृह्यतां तस्माद्विराळित्याचमनीयं पंचामृतंमयानीतंपयोदधिघृतंमधु शर्करागुडसंयुक्तंस्नानार्थंप्रतिगृह्यतां पंचामृत
स्नानं गंगाकृष्णागौतमीचकावेरीचशतद्रुदा ताभ्यआनीतंसुखदंस्नानार्थंप्रतिगृह्यतां यत्पुरुषेणेतिस्नानं पीतवासस्त्वयिविभोमया
यत्नस्तुदत्तं वासःप्रीत्यागृहाणेदंपुरुषोत्तमकेशव तंयज्ञमितिवस्त्रं उपवीतंसोत्तरीयंमयादत्तंसुशोभनं विश्वमूर्तेगृहाणेदंनारा-
यणजगत्पते तस्माद्यज्ञात्सुपवीतं अश्वत्थहुतभुग्वासोगोविंदस्यपदाश्रय अशेषंहरमेपापंवृक्षराजनमोस्तुते अलंकाराःस्नत्व-
ष्टनं मलयाचलसंभूतंघनसारंमनोहरं विलेपनंसुरश्रेष्ठचंदनंप्रतिगृह्यतां तस्मात्सर्वहुतइतिगंधं अक्षताश्चसुरश्रेष्ठकुंकुमोक्ताःसुशो-
भिताः मयानिवेदिताभक्त्यागृहाणपरमेश्वर अक्षतान् तुलसीजातिकमलमल्लिकाचंपकानिच पुष्पाणिहरगोविंदगृहाणपरमेश्वर
तस्मादश्वेतिपुष्पं वनस्पतिरसोद्भूतोगंधाढ्योगंधउत्तमः आघ्रेयःसर्वदेवानांधूपोयंप्रतिगृह्यतां यत्पुरुषेणेतिधूपं चक्षुर्दंसर्वलोका-
नांतिमिरस्यनिवारणं आर्तिक्यंकल्पितंभक्त्यागृहाणजगदीश्वर ब्राह्मणोस्येतिदीपं भक्ष्यभोज्यलेह्यपेयचोष्यरसाद्यंमयाहृतम् | ३१४
प्रीतयेपरमेशस्यदत्तंमेस्त्वीकुरुप्रभो चंद्रमामनसइतिनैवेद्यं मध्येपानीयं उत्तरापोशनं इदंफलंमयादेवेतिफलं पूगीफलमितितांबू-

हिरण्यगर्भैर्निदक्षिणां लक्ष्मीसाभ्भासनेन्द्रोक्तः कोटिसूर्यसमप्रभ नीराजयिष्येलांविष्णोह्रूपांकुरुममप्रभो नीराजनं मयाकार्येनमन
सावाचाजन्मशतार्जितं पापंप्रशमयश्वीशप्रदक्षिणपदेपदे नाम्याआसीतिप्रदक्षिणां व्यक्ताव्यक्तस्वरूपायसृष्टिस्थित्यंतकारिणो
आदिमध्यांतरहितविष्टरश्रवसेनमः सप्तास्येतिनमस्कारं मूलतोब्रह्मरूपायमध्यतोविष्णुरूपिणे अग्रतःशिवरूपायअश्वत्था-
यनमोनमः यज्ञेनयज्ञमितिपुष्पांजलिं अमासोमपूजा अमायैचनमस्तुभ्यंसोमायचनमोस्तुते उभयोःसंगमेविष्णुपूजाफलम-
वाप्नुयात् अनेनषोडशोपचारैःपूजयेत् ततः मूलतोब्रह्मरूपेतिमंत्रेणअष्टोत्तरशतप्रदक्षिणाःकार्याः वायनं अमासोमाव्रतस्या
स्यसपूर्णफलहेतवे वायनंद्विजवर्यायसहिरण्यंददाम्यहं इतिवायनमंत्रः यन्मयामनसावाचानियमात्पूजनंकृतं सर्वंसंपूर्णतांया-
तुनहिष्णोश्चप्रसादतः इतिप्रार्थना इदंविष्णुरितिमंत्रेणपुरुषसूक्तेनवातथा षोडशैरुपचारैश्च अश्वत्थेविष्णुपूजयेत् पौराण-
मंत्रः व्यक्ताव्यक्तस्वरूपायसृष्टिस्थित्यंतकारिणो आदिमध्यांतहीनायविष्टरश्रवसेनमः मूलतोब्र० नमोनमः इतिमंत्राभ्यांपूजा-
कार्या ततःप्रदक्षिणाःकार्याः १०८ अथकथा सूतउवा० भारतल्पगतंभीष्मसुपगम्ययुधिष्ठिरः कृतप्रणामोधर्मात्माहितंवचनमब्र-
वीत् युधिष्ठिरउवा० हतेषुकुरुमुख्येषुभीमसेनेनकोपिना तथापरेषुभूपेषुहतेषुयुधिजिष्णुना दुर्योधनकुमंत्रेणज्ञातोस्माकंकुलक्ष
यः नसंतिक्ष्माविभूपालाबालवृद्धातुराहते अवशिष्टावयंपंचवंशेभारतसंज्ञके एकातपत्रमपिचराज्यंमत्थंनरोचते जीवितेम मज्जु-

ब्र॰रा॰
३३५

गुप्तास्यान्मृतेनसुगतिः क्वचित् इत्थासंततिविच्छेदंसंतापोत्हृदयेनिशं अश्वत्थामास्त्रनिर्दग्धोत्युत्तरागर्भसंभवः अतोमेद्विगुणंदुः-
खंपांडवविच्छेददर्शनात् किंकरोमिक्वगच्छामिपितामहवदाधुना येनसंपद्यतेसद्यः संततिश्चिरजीविनी भीष्मउवा॰ शृणुराजन्प्र-
वक्ष्यामिव्रतानामुत्तमंव्रतं यस्यस्मरणमात्रेणासंततिश्चिरजीविनी अमावास्यायदापार्थसोमवारयुताभवेत् तस्यामश्वत्थमागत्यपू-
जयेच्चजनार्दनं अष्टोत्तरशतंकुर्यात्तस्मिन्वृक्षेप्रदक्षिणाः तावत्संख्यान्युपादायरत्नधातुफलानिच व्रतराजमिदंराजन्विष्णोःप्रीति-
करंशुभं उत्तराकारयत्वाद्यगर्भोजीवमवाप्स्यति भविष्यतिगुणीपुत्रस्त्रिषुलोकेषुविश्रुतः श्रुत्वापितामहवचः प्रत्युवाचयुधिष्ठिरः
युधिष्ठिरउवा॰ तदुक्तंव्रतराजाख्यंविस्तरेणप्रकाशय केनप्रकाशितंमर्त्येकेनेदंविहितंविभो भीष्मउ॰ आस्तेयासर्वविख्याताकांतिसं-
ज्ञामहापुरी रजताचलसंकाशसौधसंघैर्विराजिता सुवेषैर्नागरजनैर्नारीभिरुपशोभिता ब्रह्मक्षत्रियविट्शूद्रैः स्वस्वकर्मरतैर्वृता रू-
पचातुर्यवर्याभिर्वेश्याभिः समलंकृता अलकेवकुबेरस्यशक्रस्येवामरावती तेजोवतीवरत्नाढ्यापावकस्यमहापुरी तत्रराजारत्नसे-
नोबभूवामितविक्रमः तस्मिन्वसतिभूपालेजनानंदकरेशुभे तस्यराज्येवसद्विप्रोदेवस्वामीतिविश्रुतः तस्यस्त्रीरूपसंपन्नाना-
म्नाधनवतीशुभा यथार्थनामधेयासालक्ष्मीरिवसविग्रहा तस्यांसजनयामाससप्तपुत्रान्गुणान्वितान् एकांदुहितरंरम्यांनाम्नागु-
णवतींनृप कृतदाराश्चतेपुत्राविहरंतियथासुखं कन्याकुमारिकाचासीदनुरूपप्रियार्थिनी अत्रांतरेद्विजः कश्चिद्भिक्षार्थंसमुपागतः

अ॰
३०

३३५

दीप्यमानस्त्वतेजोभिर्मूर्तिमानिवपावकः द्वारदेशमुपागत्यप्रयुयोजाशिषंतदा देवस्वामिस्नुषाःसप्तसमुत्थायससंभ्रमं भिक्षांप्रत्येकमा-
निन्युर्ददुस्तस्मैद्विजन्मने अवैधव्याशिषंप्रादात्ताभ्यःसौभाग्यसंपदं ततोगुणवतीमात्राप्रहितासह्यभक्तया विप्रायभिक्षांप्रददौनत्वा
पादाभिवंदनं आशिषंचददौविप्रःशुभेधर्मवतीभव सावैलक्ष्यंगुणवतीश्रुत्वाप्रत्याययौगृहं मात्रेनिवेदयामासआशिषंतेनयोजितां श्रु
त्वाधनवतीपुत्रींकरेधृत्वासमाययौ प्रणतिंकारयामासपुनस्तस्मैद्विजन्मने तथैवाशिषमुच्चार्यविप्रस्तामभ्यनंदयत् श्रुत्वाशिषंधनव
तीसचिंताप्रत्युवाचह धनवत्युवा॰ प्रसीदभगवन्विप्रवचनंमेवधारय स्नुषाभ्यःप्रणताभ्योवात्सल्यादत्तावराशिषः अवैधव्यकराःपुत्रस
रवसौभाग्यसाधकाः सुतायांप्रणतायांमेविपरीतंत्वयोदितं भद्रेधर्मवतीभूय इत्युदीर्यपुनःपुनः आशीःप्रयुक्ताविप्रर्षेकारणंवद तत
तः द्विजउवा॰ धन्यासित्वंधनवतीप्रख्यातचरिताभुवि यथायोग्यप्रयुक्तेयंमयाशीर्दुहितुस्तव इयंसप्तपदीमध्येवैधव्यंत्वमवाप्स्यति
धर्माचरणमत्यर्थंकर्तव्यमनयाशुभे अतोमयाशीर्दत्तेयंशुभेधर्मवतीभव श्रुत्वाधनवतीवाक्यंचिंताकुलितचेतसा उवाचवचनं
दीनंप्रणिपत्यपुनःपुनः धनवत्युवा॰ उपायंवेत्सिविप्रेंद्रवदशीघ्रंदयांकुरु अपायंवेत्सिचेद्विप्रकिंकरोमिदयानिधे द्विजउवा॰ यदाग
ताभवेत्सोमागृहेवैतवसुंदरि तस्याःपूजनमात्रेणभवेद्वैधव्यनाशनं धनवत्युवा॰ कासासोमालयाप्रोक्ताकाजातिःकुत्रसंस्थितिः य
स्यागमनमात्रेणभवेद्वैधव्यभंजनं एतद्वदमहाभागनकालोविस्तरस्यमे द्विजउवा॰ सोमासारजकीजातिःस्थितिःस्तस्याश्चसिंह

ले सान्वेदायाभितेवेश्मतदावैधव्यभंजनं इत्युक्त्वाब्राह्मणोन्यत्रगतोभिक्षाप्रतोक्षया धनवत्यपिपुत्रेभ्यःप्रोवाचवचनंतदा धननत्युवाच
इयंदुर्ललिताःपुत्राःस्वसागुणवतीशुभा सोमागमनमात्रेणभवेद्वैधव्यभंजनं अस्तियस्यपितुर्भक्तिर्मातुर्वचनगौरवं सप्रयातुसह-
स्वस्रासोमामानयितुंद्रुतं पुत्राऊ॰ ज्ञातंमानस्तवस्वांतंपुत्रीस्नेहवशंगतं यातदेशांतरंपुत्राःप्रख्यापयसिदुर्गमं अंतरेदुस्तरःसिं
धुःशतयोजनविस्तरः अशक्यंगमनंतत्रनक्षमागमनेवयं देवस्वाम्युवा॰ अपुत्रःसप्तभिःपुत्रैरहंयास्यामिसिंहलं आनयिष्यामि-
तांसोमांपुत्रीवैधव्यनाशिनीं एवंवादिनिसक्रोधेदेवस्वामिनितत्क्षणे शिवस्वामीकनिष्ठस्तुपुत्रःप्रोवाचसंमतः तातमावदचैवंत्वंरोषा
वेशवशंगतः मयिनिश्चितिकःशक्तोगंतुंद्वीपमिहसिंहलं इत्युक्त्वासहसोत्थायप्रणम्यशिरसामुदा मतस्थेसहितःस्वस्राद्वीपंसिंहलं
संज्ञितं सकियद्भिर्दिनैर्गत्वातीरंप्रापसरित्पतेः तत्तुंतमंबुधिंतत्रप्रयत्नमकरोद्विजः सददर्शास्यविस्तीर्णंन्यग्रोधद्रुममंतिके तत्कोटरे-
स्थरवासीनांगृध्रराजस्यबालकाः तत्पादपतलेस्थित्वातावभ्यांनीतंतुनहि्नं शावकानांहृतेगृध्रोगृहीत्वाशिशुभोजनं शावकास्तुनवै-
गृध्राद्भोजनंजग्धिरेभृशं पप्रच्छबालकान्गृध्रोचिंताकुलितमानसान् गृध्रराजउ॰ कथंनभुंजतपुत्राभवंतःक्षुधिताअपि आनी
तंकोमलंमांसंभवद्योग्यमिदंमया शावकाऊ॰ एतद्वृक्षतलेतातमानवावत्रतिष्ठतः अस्वीकृत्यौस्तयोस्तातकथंभुंजामहेवयं एत-
च्छ्रुत्वासगृध्रस्तुकरुणार्द्रितचेतसः तयोरंतिकमागत्यवचनंसमभाषत गृध्रराजउ॰ जातस्तुयुवयोःकामोवक्तव्योत्रममद्विज क्रियते

सर्वथाविप्रभोजनंकर्तुमर्हसि द्विजउवा० सिंहलेगंतुकामोहंजलधेःपारमद्यवै सोमागमनमिच्छामिस्वस्यवैधव्यनाशनं गृध्रराजउवाच
पारमुत्तारयिष्यामिजलधेःप्रातरेवहि सोमागृहमपितवदर्शयिष्यामिसिंहले ततोरात्र्यांव्यतीतायामुदितेतुदिवाकरे पारमुत्तारितौतौ
तुगृध्रराजेनवेगिना सिंहलद्वीपमागत्यस्थितौसोमागृहांतिके ततःप्रत्यूषसमयेसमृज्यांगणमंडलं लेपनंचक्रतुस्तस्यादिवसेदिवसेद्व
यं एवंविदधतोस्तत्रपूर्णःसंवत्सरोगतः स्नुषाःपुत्रान्समाहूयसोमापप्रच्छविस्मिता मार्जनंलेपनंकोत्रकरोतिममकथ्यतां एकदैवाथ-
जगदुःसर्वाःहूतमिदंहिन ततःकदाचिद्रजकीनिभृतासंस्थितानिशि ददर्शब्राह्मणींकन्यांमार्जयंतींगृहांगणं लिंपंतमंगणंचापि भ्रात
रंचशुभव्रतं सोमापप्रच्छतौगत्वाकौयुवांकथ्यतांमम ऊचतुस्तौतदासोमामावांब्राह्मणपुत्रकौ सोमोवाच दग्धास्मिवत्सनष्टास्मिब्राह्म
णौगृहमार्जकौ कांगतिंवतयास्यामिपापादस्मादसंशयं पापजातिरहंख्यातारजकीसर्वथाद्विज कथंत्वंब्राह्मणोभूत्वाविरुद्धंमेचिकीर्ष
सि शिवस्वाम्युवाच एषागुणवतीनामस्वसाममसप्तमध्यमा अस्याःसप्तपदीमध्येवैधव्यंसंप्रपत्स्यते तवसान्निध्यमात्रेणभवेद्वैध-
व्यभंजनं अतोहेतोःसहस्वस्रादासकर्मकरोमिते सोमोवा० अतःपरंनकर्तव्यंयास्यामितवशासनात् इत्युक्त्वागृहमागत्यस्नुषाःप्र
त्युवाचह यःकश्चिन्ममराज्येस्मिन्म्रियतेमानवःक्वचित् तथैवरक्षणीयोसौयावदागम्यतेमया कस्यचिद्वचनात्कोपिनदग्धव्यःक-
थंचन तथेत्युक्तास्नुषाभिःसासोमायातामहांबुधिं पारमुत्तारयामासक्षणेनद्विजपुत्रकौ स्वयमाकाशमार्गेणसोत्ततारमहार्णवं मा-

घाः कांचीपुरींसर्वैर्निमेषात्तत्प्रभावतः सोमांदृष्ट्वाधनवतीत्वहृष्टापूजामथाकरोत् अत्रांतरेशिवस्वामीतदादेशांतरात्स्वसुः सदृशंवरमानेतुं
जगामोज्जयिनींप्रति आनिनायवरंतत्रदेवशर्मसुतंसुधीः ब्राह्मणंरुद्रशर्माणंगुणिनंसदृशंस्वसुः ततःसारजकीसोमावैवाहिकमथा-
करोत् सुलग्नेचसुनक्षत्रेदेवस्वामीतुकन्यकां ददौतस्मैगुणवतींगुणिनेरुद्रशर्मणे ततोवैवाहिकैर्मंत्रैर्हूयमानेहुताशने ततःसप्तप
दीमध्येरुद्रशर्माम्मृतस्तदा रुरुदुर्बांधवाःसर्वेस्थितासोमानिराकुला आक्रंदश्चमहानासील्लोकानांतत्रपश्यतां गुणवत्यैचसात्पूर्णव्र-
तराजप्रभावजं पुण्यंसंकल्प्यविधिवद्ददौमृत्युविनाशनं रुद्रशर्मापितस्माच्चव्रतराजप्रभावतः आससादतदाजीवंसुप्तवत्सहसोत्थि
तः एवंविवाहंनिर्वर्त्यव्रतराजंनिवेद्यच आमंत्र्यतांधनवतींसोमाप्रायाद्गृहंप्रति एवंसारजकीसोमाजीवयित्वामृतंद्विजं चचालहर्षसं-
पूर्णापूर्णकामास्वमंदिरं अत्रांतरेगृहेतस्याःप्रथमंतनयामृताः पुनःस्वामीमृतस्तस्याजामाताचततोमृतः आगच्छंत्यास्तदातस्याः
सोमवारान्वितातिथिः अमावास्याबभूवाथमृतसंजीवनीतिथिः साददर्शजलोपांतेवृद्धांकांचित्स्त्रियंतदा तूलभारभराक्रांतांक्रंदमा
नांसुदुःखितां वृद्धोवाच अवतारयमेपुत्रितूलभारंशिरःस्थितं एतद्भारभराक्रांतांक्रंदमानांसुदुःखितां सोमोवा॰ अमावास्या-
द्यहेदृष्ट्वासोमवारयुतातिथिः तूलकंनस्पृशाम्यद्यनियमोयंमयाकृतः पुनर्ददर्शयांतीसामूलभारवतींस्त्रियं साउवाचततःपुत्रिमूल-
भारोमहानिति अवतार्यक्षणंतिष्ठसंगेयास्याम्यहंतव सोमोवा॰ अद्यमूलंतथातूलंनस्पृशामिकदाचन ततोश्वत्थतरुंप्राप्यनदीती

रणावंशतमं स्नात्वाविष्णुंसमभ्यर्च्यशर्कराभिः प्रदक्षिणां साचकारमहाभागानंदेवाष्टोत्तरंशतं भीष्मउवाच यदाप्रदक्षिणांकर्तुंकृतंशर्कर
हस्तया तदाजीवितवंतस्तेज्जामातुःपतिपुत्रकाः नगरंस्त्रीसमाकीर्णतद्गृहंचविशेषतः अथयातामहाभागासोमास्वभवनंप्रतिजी
वितंवीक्ष्यभर्तारंपुत्रान्जामातरंतथा अभिज्ञानान्समासाद्यजगामहृतहृत्यतां प्रणिपत्यस्नुषाःसर्वाः पप्रच्छुस्तांतपस्विनीं स्नुषाऊ
मृतास्तेतनयादेविपतिजामातृबांधवाः जीवितास्तेकथंदेविमृतास्तेचकथंवद सोमोवाच गुणवत्यैमयादत्तंव्रतराजस्यपुण्यकं मृता
स्तेतद्विपाकेनपतिजामातृपुत्रकाः तूलकंतमयास्पृष्टंमूलकंचतथास्नुषाः अश्वत्थेविष्णुमभ्यर्च्यकृतास्तुप्रदक्षिणाः शर्कराहस्तया
तत्रकृतमष्टोत्तरंशतं जीवितास्तत्प्रभावेनअद्यजामातृपुत्रकाः सर्वाभिःक्रियतामद्यव्रतराजोविधानतः भविष्यतिनवैधव्यंसोमा
ग्यंसंभविष्यति स्नुषास्ताःकारयामासुस्तथासोमव्रतेश्वरं भुक्त्वाभोगान्बहूंस्तत्रपुत्रपौत्रादिभिःसह तैश्वसर्वैःपरिवृताविष्णु
लोकमवापसा इत्येतत्कथितंपार्थविस्तरेणमयानव युधिष्ठिरउवाच माहात्म्यंव्रतराजस्यकोविधिर्वदविस्तरात् कर्तव्यंकेनभीष्म
दंनारीभिःपुरुषेणवा भीष्मउवाच अमावास्यायदापार्थसोमवारान्विताभवेत् तदापुण्यतमःकालोदेवानामपिदुर्लभः प्रातरुत्था
यव्रतिनास्नानंकार्यंजलाशये स्नात्वामौनेनकौशेयंपरिधायव्रतीततः गत्वाअश्वत्थवृक्षस्यसमीपंकुरुनंदन अश्वत्थमूलेकर्तव्या
विष्णुपूजासमंत्रका व्यक्ताव्यक्तस्वरूपायसृष्टिस्थित्यंतकारिणे आदिमध्यांतहीनायविष्टरश्रवसेनमः इतिपूजामंत्रः मूलतो-

ब्रह्मरूपायमध्यतोविष्णुरूपिणे अग्रतःशिवरूपायअश्वत्थायनमोनमः एवंसंपूज्यगोविंदंपीतवस्त्राक्षतैःफलैः कुसुमैर्विविधैश्चैवभ
क्ष्यभोज्यैस्तथाविधैः अश्वत्थपूजनंकार्यंप्रोक्तमंत्रेणपांडव अश्वत्थहुतभुग्वासोगोविंदस्यसदाश्रय अशेषंहरमेपापंवृक्षराजंनमोस्तु
ते एवंपूजाविधिंकृत्वाततःकुर्यात्प्रदक्षिणाः मौक्तिकैःकांचनैरौप्यैर्हीरकैर्मणिभिस्तथा कांस्यपात्रैस्ताम्रपात्रैर्भक्ष्यपूर्णैःपृथक्पृथ-
क् गृहीत्वाभ्रमणंकार्यंयावल्लक्षभ्रमणंभवेत् तावत्प्रदक्षिणंकार्यंयावदष्टोत्तरंशतं समर्पितंचयद्द्रव्यमर्पयेद्गुरवेशुभं सुवासिन्यश्चसंपूज्याः
सोमासंतुष्टिहेतवे दत्वाचान्नंतुविप्रेभ्योस्वयंभुंजीतवाग्यता एषतेकथितोभूपव्रतराजोविधिर्मया द्रौपदींचसुभद्रांचकारयस्त्वंतथोत्तरां
उत्तरागर्भस्थस्यस्तुजीवितंलभतेचिरात् युधिष्ठिरउवा॰ यास्वल्पविभवानारीकांचनाद्यैर्विनाकृता साकथंलभतेपूर्णंव्रतराजफलं
वद भीष्मउवा॰ फलैःपुष्पैस्तथाभक्ष्यैर्वस्त्राद्यैरपिपांडव कुर्यात्प्रदक्षिणावर्तंसापिपूर्णंलभेत्फलं व्रतमिदमखिलंनरेंद्रविष्णोः
श्रुतमनयाहिपराक्रमत्वयापि पतिसुतधनमिच्छतीपुरंध्रीसपदिकरोतुनचात्रचित्रमस्ति शृणुपार्थप्रवक्ष्यामिउद्यापनविधिंशुभं
यंविनापूर्णतानस्याद्व्रतराजस्यवैनृप कारयेत्सर्वतोभद्रंतन्मध्येकुंभमुत्तमं वृक्षराजंसुवर्णस्यपंचरत्नस्यवेदिकां तन्मूलेप्रतिमांवि
ष्णोःसौवर्णींचचतुर्भुजां लक्ष्मीवाहनसंयुक्तां माषद्वयपलावधि उपचारैरनेकैश्चयथाविभवविस्तरैः नैवेद्यैःपुष्पधूपैश्चदीपैश्चपरि
तस्थितैः रात्रौजागरणंकुर्यात्प्रभातेहोममाचरेत् समिद्भिःपैप्पलाभिश्चपायसेनतिलैस्तथा इदंविष्णवेतिमंत्रेणहुत्वापूर्णाहुतिंचरेत्

आचार्यंपूजयेत्तस्मैगांचदद्यात्पयस्विनीं ब्रह्माणंवस्त्रभूषाद्यैःसदस्यंचप्रपूजयेत् ऋत्विजोद्वादशाःपूज्याघृतपायसभोजनं उपवीता
निवस्त्राणितेभ्योदद्याच्चदक्षिणां प्रणम्यदंडवद्भूमौप्रार्थयित्वाविसर्जयेत् एवंद्वादशवर्षेवामध्येचाद्येसमाचरेत् कृतात्स्युद्यापनसम्य
क्व्रतराजफलंलभेत् सर्वंनिवेदयेत्पीठमाचार्यायसदक्षिणं अच्छिद्रंवाचयेत्तस्मात्स्वयंभुंजीतवाग्यतः इतिभवि० सोमवत्यमावा
स्याव्रतोद्यापनंसंपूर्णं अथमाघअमावास्याअर्धोदयव्रतं अमार्कपातश्रवणैर्युक्ताचेत्पौषमाघयोः अर्धोदयःसविज्ञेयःकोटिसू
र्यग्रहैःसमः दिवैवयोगःशस्तोयंनतुरात्रौकदाचन इतिहेमाद्रौ अगस्त्यउवा० भगवन्त्वत्प्रसादेनश्रुतोयंव्रतविस्तरः अर्धोदयं
तुमेब्रूहिदुर्लभःसचराचरैः जीवितंप्राणिनांपुण्यंयदिचेद्धर्दसिप्रभो कथंकार्यःकृतेकिंस्यात्फलंकथयषण्मुख स्कंदउवा० श्रूयतांपु
ण्ययोगोयंदुर्लभोर्धोदयाह्वयः तिर्यङ्मनुष्यदेवानांदुःप्राप्यःसर्वकामदः मायामायाव्यतीपातेआदित्येविष्णुदैवते अर्धोदयंतदित्या
हुःसहस्रार्कग्रहैःसमं पुराकृतंवसिष्ठेनजामदग्न्येनसज्जन सनकाद्यैर्मनुष्यैश्चबहुभिर्बहुविश्रुतैः अन्यैःसहस्रैश्चकृतंपुविश्चैधंतुकुं
भज दानानांयज्ञतीर्थानांफलंयेनकृतंभवेत् ससागराधरातेनसमहद्वीपसमन्विता दत्तास्यात्सर्वभावेनयेनत्वर्धोदयःकृतः गंगागया
प्रयागेचपुष्कराणांजलेतथा मानसादिषुयत्पुण्यंतीर्थेषुस्नानदानतः तत्समंप्राप्यतेविप्रव्रतेनानेनकुंभज अश्वमेधयुतंपुण्यंद्दशाप्नु
तैनयद्भवेत् अर्धोदयःकृतोयैस्तुविधिदृष्टेनकर्मणा यातिसत्यंगृहेलक्ष्मीःसंततिश्चानपायिनी आयुर्यशोतिविपुलंव्रतकर्ताफलंल

भेत् इंद्राग्नीयमलोकेषुनैर्ऋतीनामपांपतेः वायोःकुबेरस्येशस्यलोकेषुचरतेव्रती च सेन्द्रार्कलोकेचलोकपालैश्चसेवितः गोकोटिदा
नजंपुण्यंसर्वतीर्थनिवासजं अर्धोदयस्यसाम्यंतुकलांनार्हतिषोडशीं भूर्लोकाधिपतिश्चैवभुवर्लोकाधिपस्तुयः स्वर्लोकेशोजना-
नांचतपोलोकजनेश्वरः महर्लोकेवसेन्नित्यंयावदिंद्राश्चतुर्दश ततोहिरण्यगर्भस्यपुरुषोव्रतकारकः सत्यलोकाधिपःसाक्षीलो
कानांपुरुषोव्ययः अर्धोदयप्रसादेनब्रह्मलोकेवसेत्तुसः तथामानेनविष्णुत्वंब्रह्मरुद्रस्ततोभवेत् शिवलोकेगणैःपूज्योदेवराजस
मन्वितः वसेच्छक्रस्यलोकेतुव्रतस्यास्यप्रभावतः ततोविष्णुस्वरूपेणत्रैलोक्याधिपतिर्भवेत् शंखचक्रगदाधारीवनमालीहरिःस्व
यं व्रतप्रभावाल्लक्ष्मीशोदेवोनारायणोभवेत् अगस्त्यउवा॰ स्कंदकेनविधानेनकर्तव्यंव्रतमुत्तमं अर्धोदयंमनुष्याणांजीवितंदुर्लभं
भुवि स्कंदउवा॰ कृतेकृतंवसिष्ठेनत्रेतायांरघुनाकृतं द्वापरेधर्मराजेनकलौपूर्णोदरेणाच अन्यैर्देवमनुष्यैश्चदैत्यैश्चमुनिसत्तम
कृतमर्धोदयंसम्यक्सर्वकामफलप्रदं माघमासेकृष्णपक्षेपंचदश्यांरवेर्दिने वैष्णवेनतुऋक्षेणव्यतीपातेसुदुर्लभे पूर्वाह्णेसंगमेस्ना
त्वाशुचिर्भूत्वासमाहितः सर्वपापविशुद्ध्यर्थंनियमस्थोभवेन्नरः त्रिदैवत्यंव्रतंदेवाःकरिष्येमुक्तिदंपरं भवंतिसन्निधौमेद्यत्रयोदे
वास्त्रयोग्नयः इतिनियममंत्रः ब्रह्माविष्णुमहेशानांसौवर्णफलसंख्यया प्राप्यार्घ्यंत्रंततःकुर्यादुपस्करसमन्वितं देवतात्रयमुद्दिश्य
कर्तव्यंभक्तिशक्तितः ब्रह्माविष्णुशिवप्रीत्यैदातव्यंतुगवांत्रयं हिरण्यभूमिधान्यादिदानंविभवसारतः दातव्यमाश्रयोपेतंब्राह्मणेभ्य

स्तुयत्नतः मध्याह्नेतुनरःस्नात्वाशुचिर्भूत्वासमाहितः तिलपर्वतमध्यस्थंपूजयेद्देवतात्रयं तत्रादौब्रह्मपूजा नमोविश्वसृजेतुभ्यं
सत्यायपरमात्मने देवायदेवपतयेयज्ञानांपतयेनमः ॐब्रह्मणेनमः पादौपूजयामि ॐहिरण्यगर्भायऊरूपू॰ ॐपरमेष्ठिने॰ जंघे
ॐवेधसेनमः गुह्यंपू॰ ॐपद्मोद्भवाय॰ नाभिंपू॰ ॐहंसाय॰ कटीपू॰ ॐ शतानंदाय॰ वक्षस्थलं॰ सावित्रीपतये॰ बाहूपू॰ ॐऋग्वेदा
य॰ नासिकांपू॰ ॐयजुर्वेदाय॰ नेत्रेपू॰ ॐ सामवेदाय॰ श्रोत्रेपू॰ ॐअथर्ववेदाय॰ ललाटंपू॰ ॐकपिलाय॰ शिरःपू॰ ततोलोकपालान्पू
जयेत् नाममंत्रैः हिरण्यगर्भपुरुषप्रधानव्यक्तरूपक प्रसीदसुमुखोभूत्वापूजांगृण्हनमोस्तुते इतिप्रार्थना नारायणजगन्नाथनम
स्तेगरुडध्वज पीतांबरनमस्तुभ्यंजनार्दननमोस्तुते ॐअनंताय॰ पादौपू॰ विश्वरूपाय॰ ऊरूपू॰ मुकुंदाय॰ जानुनीपू॰ गोविंदाय॰ जं
घेपू॰ मधुघ्नाय॰ बाहूपू॰ विश्वतोमुखाय॰ मुखंपू॰ शतसहस्रशिरसे॰ शिरःपू॰ आदित्यचंद्रनयनदिग्बाहोदैत्यसूदन पूजादत्तामया
भक्त्यागृहाणकरुणाकर इतिविष्णुप्रार्थ्य महेश्वरमहेशाननमस्तेत्रिपुरांतक जीमूतकेशायनमोनमस्तेवृषभध्वज ईशानायनः॰
पादौपू॰ चंद्रशेखराय॰ जंघेपू॰ पशुपतये॰ जानुनीपू॰ शंकराय॰ ऊरूपू॰ उमाकांताय॰ गुह्यंपू॰ नीललोहिताय॰ नाभिंपू॰ कृत्तिवास
सेनमः उदरंपू॰ नागयज्ञोपवीतिने॰ हृदयंपू॰ भुजंगभूषणाय॰ बाहूपू॰ नीलकंठाय॰ कंठंपू॰ पंचवक्त्राय॰ मुखंपू॰ कपर्दिनेनः॰ शि
रःपूज॰ महादेवमहाबाहोनमोलोकांतकायच पूजामयाकृताभक्त्यागृहाणवृषभध्वज इतिमहेश्वरंप्रार्थ्य इतिपूजाक्रमःप्रोक्तोसं-

व्र॰रा॰
३३०

वैरेतैःप्रयत्नतः आचार्यंपूजयेद्भक्त्यावस्त्रालंकारभूषणैः हस्तमात्राकर्णिमात्रापीठंछत्रंकमंडलुं श्वेतवस्त्रयुगंदेवंब्रह्मणेसर्वमूर्तये
उपवीतंवस्त्रयुगंविष्णुलोकहितंकरं पंचामृतेनस्नपनंपूजनंकुसुमैस्ततः कमलैस्तुलसीपत्रैर्बिल्वपत्रैरखंडितैः तत्कालसंभवैर्दिव्यैः
पूज्यादेवायथाक्रमं यथाशक्त्याप्रकर्तव्यंव्रतमेतत्सुदुर्लभं जीवितंप्राणिनांराजन्नानित्यंनिश्चितंयतः व्रतस्योद्यापनंराजन्विधानंशृ
णुयत्नतः देवताभ्यःसमुद्दिश्यशास्त्रदृष्टेनकर्मणा ब्रह्मणेविष्णुरूपायशिवरूपायतेनमः अनेनैवचमंत्रेणवह्निंसंस्थाप्यभक्तितः ततो
होमंप्रकुर्वीतसहस्रत्रयसंमितं तिलाज्यशर्करांश्चैवहोमद्रव्याणिभिन्नतः ब्रह्मजज्ञानमंत्रेणब्रह्मणेचतिलान्हुनेत् आज्यंचैवइदंवि
ष्णुर्व्यंबकंशर्करांहुनेत् अग्निंसंपूज्यविधिवद्वह्निंचदद्यात्पयस्विनीं आचार्यायततःपीठंदक्षिणासहितंशुभं तेनदत्तंहुतंजप्तंइष्टंयज्ञैः
सहस्रधा कृतकृत्योभवेन्मर्त्योव्रतस्यास्यप्रभावतः एवंतवमयाख्यातंदुर्लभंव्रतमुत्तमं अर्धोदयंमयाख्यातंकिमन्यत्परिपृच्छसि इ
तिश्रीस्कंदपु॰अर्धोदयव्रतंसंपू॰ इतिअमावास्याव्रतानिसमाप्तानि अथमलमासव्रतानिलिख्यंते युधिष्ठिरउवाच॰ देवदेवज
गन्नाथभुक्तिमुक्तिप्रदायक कथयस्वप्रसादेनलोकानांहितकाम्यया कथयंतिमुनिश्रेष्ठाःकृष्णद्वैपायनादयः अदत्तंनैवलभ्येतदत्तमेवो
पतिष्ठते यथावंध्यागृहस्थस्यपतिवंशविनाशिनी तथादानविहीनस्यजन्मसर्वंनिरर्थकं तथापिकथयंतीहदैवज्ञाशास्त्रकोविदाः म-
लिम्लुचेयदाप्राप्तेक्रियाकार्याकथंविभो क्षौरंमौंजीविवाहंश्चव्रतंकाम्योपवासकं मलिम्लुचेसदात्याज्यंगृहस्थेनविशेषतः लक्ष्मीरुवा॰

अ॰
३०
३३०

अधिमासेचसंप्राप्तेकिंकार्यंव्रतमुत्तमं कस्योद्देशेनदानन्धर्किंफलंपरत्रप्रदायकं श्रीकृष्णउवाच श्रृणुदेविमहाभागेसर्वलोकस्यहेतवे स्वयंदा
तास्वयंभोक्तायोददातिद्विजातये नान्योदातानभोक्ताचइहलोकेपरत्रच असंक्रांतेचमासेवैमासमुद्दिश्यव्रतंचरेत् अधिमासस्यदेवोहं
पुरुषोत्तमसंज्ञकः स्नानंदानंजपंहोमंस्वाध्यायंपितृतर्पणं देवार्चनमथान्यच्चयेकुर्वंतिमनुष्यजाः अक्षयंतद्भवेत्सर्वंममोद्देशेनयत्कृतं म
लमासोगतःशून्योयेषांदेविप्रमादतः दारिद्र्यंपुत्रशोकंचपापपंकविगर्हितं मर्त्यलोकेभवेज्जन्मतेषांदेविनसंशयः सुखप्रदासिदेवि
त्वंयेर्चयंतिद्विजोत्तमान् यदामलिम्लुचोमासोमाप्यतेमानवैःप्रिये महोत्सवस्तदाकार्यआत्मनोहितकांक्षिभिः कृष्णपक्षेचतुर्दश्यांनव
म्यांवासुरेश्वरि अष्टम्यांवाथकर्तव्यंव्रतंशोकविनाशनं यथालाभोपहारेणमासेचास्मिन्मलिम्लुचे पुण्येह्निप्रातरुत्थायकृत्वापूर्वाह्णिह
कींक्रियां गृण्हीयान्नियमंपश्चाद्वासुदेवंहृदिस्मरन् उपवासस्यनक्तस्यएकभक्तस्यभामिनि एकस्यनिश्चयंकृत्वाततोविप्रान्निमंत्रयेत्
सपत्नीकान्सदाचारान्सुरूपान्सुरवेषकान् श्रुताध्ययनसंपन्नान्कुलीनान्ज्ञातिसंभवान् युधिष्ठिरउ० अधिमासस्यमाहात्म्यंमार्कंडे
यमुनेवद जपयज्ञादिकंपुण्यंवक्तव्यंऋषिसत्तम किंकर्तव्यंचविप्रेंद्रगंगास्नानंचदुर्लभं कथयस्वमहाप्राज्ञकृपयाद्विजपुंगव मार्कंडे
यउवाच मलमासस्तुमासानांमलिनःपापसंभवः तस्यपापविशुद्ध्यर्थंमलमासव्रतंकुरु प्रतिपत्तिथिमारभ्यअमावास्यावधिर्भवेत्
उपवासेननक्तेनत्वेकभक्तेनवानृप एकस्यनियमंकृत्वादानंदद्याद्दिनेदिने दानंकुर्याद्दपूपानांदक्षिणायतसंयुतं अंतेचोद्यापनंकुर्यात्संप्र

ज्यमधुसूदनं उपोष्यन्वचतुर्दश्यांसर्वपापैःप्रमुच्यते दरिद्रेणव्यतीपातेप्यथवाद्वादशीदिने पौर्णमास्यांचतुर्दश्यांनवम्यांवानृपोत्तम
अष्टम्यांवाथकर्तव्यंव्रतंशोकविनाशनं यथालाभोपचारेणमासेचास्मिन्मलिम्लुचे त्रयस्त्रिंशदपूपांश्चमदद्याद्घृतसंयुतान् श्रीसूर्यप्री-
तयेराजन्सर्वपापविमुक्तये पात्रेजनार्दनप्रीत्यादानंतत्सफलंभवेत् मलमासेतुसंप्राप्तेकार्तिकेश्रावणेपिवा युधिष्ठिरउवा॰ मलमा-
सःकथंज्ञेयःसर्वज्ञमुनिसत्तम तंब्रूहिसकलंविप्रविस्तरेणयथातथं मार्कंडेयउ॰ यस्मिन्मासेनसंक्रांतिःसंक्रांतिद्वयमेववा मलमास
क्षयौमासौसर्वधर्मविवर्जितौ एवंसंज्ञौयदामासौयस्मिन्संवत्सरेक्वचित् उत्तरेदेवकार्याणिपितृकार्याणिदक्षिणे मलमासेतुसंप्राप्तेसंध्यो-
पासनतर्पणं नित्यंहिसफलंश्राद्धदानादिनियमव्रतं मार्कंडेयउवा॰ शृणुधर्मभृतांश्रेष्ठकौशिकोनामवैद्विजः महानपाध्यानरतःसत्य
संधोजितेंद्रियः विष्णुभक्तःसदाविप्रोवेदधर्मपरायणः तस्यसूनुर्महाक्रूरोद्विजोमैत्रेयनामकः कामांधःस्वजनत्रासीसाधुद्वे-
षकरोधमः अधर्मिष्ठःपापरतिःशिवश्रीविष्णुनिंदकः गात्रपीडाकरःपापोराहुरिवदिवाकरे दारुणोदारुणाचारःसर्वभूतविहिंसकः
मद्यपानरतोमूढोदस्युभिःसहसंगतः गतेबहुतरेकालेशृणुराजन्यसत्तम एकदाहयमारुह्यप्रयातोनगरंप्रति व्यवसायस्वरूपेणासौ-
राष्ट्रंनगरोत्तमं भृत्यैश्चसहितोविप्रवधंकृत्वास्वहस्ततः शस्त्रास्त्रकर्मभिर्घोरैर्धनंहृत्वानृपोत्तम हाहाकारोमहान्जातःसौराष्ट्रनगरेत
तः सर्वैर्नागरिकैःपापोलोकैर्विनिहतोनृप इत्थंकृत्वासतन्मूढोविप्रवंशकुलाधमः प्रतिषिद्धंचयत्कर्मकृतंपानकसंचयात् भस्मीभूतंचन-

द्राष्ट्रं ब्राह्मणस्यापि वधात्ततः मैत्रेयस्स्वजनैः सार्द्धं ब्रह्महत्यादिदोषकृत् तत्पापं च महत्कृत्वा निर्गत्य यमकिंकराः छिंधि भिंधि वचो घोरा उच्चरंत
उद्धत्य मुद्गरान् घातयित्वा च तं मूढं तालवृक्षशिलातले इत्थं चानेकदंडांश्च कृत्वा पश्चाद्यमालयं आनीतोसौ पापरूपी यदा कौशिकनंदनः घोरे वै
कृमिकुंडे च मैत्रेयः सन्निपातितः यमाज्ञया ततः पापं पंचद्वयसहस्रकं कृतजन्वै विप्रहत्यां तां तथा प्रेताग्निवह्निना इत्थं चानेकशः सर्वया
तनासु पश्च भुंजते एतन्नारदवाक्याच्च कौशिकेन ततः श्रुतं लांछनं ब्रह्महत्यानां त्वत्कुले मुनिसत्तम तत्पापपरिहारार्थं व्रतं चेदं महोत्तमं श्रु
तिशास्त्रेषु संशोध्य ऋषिभिः कथितं पुरा तच्छ्रुत्वा कौशिकेंद्रेण पुत्रोद्धरणहेतुना कौशिक उवाच तद्व्रतं ब्रूहि मे प्राज्ञ ब्रह्महत्याप्रणाशनं
मद्वंशलांछनं तात नाशीघ्रं ब्रूहि महामते नारद उ० शृणु कौशिक सर्वज्ञ व्रतानामुत्तमं व्रतं प्रवक्ष्यामि हितं सर्वलोकानुग्रहकाम्यया ब्रह्म
हत्या सुरापानं स्तेयं गुर्वंगनागमं कोटिजन्मार्जितं पापं तत्क्षणाद्व्रतयोगतः प्रणश्यति न संदेहो यथा कृष्णपदार्चनात् तस्मात्कौशिक
विप्रेंद्र ब्रह्महत्यां तरिष्यसि मार्कंडेय उ० तच्छ्रुत्वा कौशिको वाक्यं नारदस्य महात्मनः सनदामलमासस्य व्रतं चक्रे स कौशिकः शतधा
तत्कृतं पुण्यं मलमासव्रतादिकं दत्तं त्रिवार्षिकं तेन कौशिकेन सुतायतत् दिव्यदेहस्तदा जातो ब्रह्मादीनामगोचरः मैत्रेयश्च महाराजन्न
तस्यास्य प्रसादतः निःपापश्च सुतो हृष्टः कौशिकेन द्विजन्मना प्रसादाच्च हरेः साक्षात्कृष्णधर्म भृतांवर युधिष्ठिर उवाच कथं चानुष्ठितं
ब्रह्मन्मलमासव्रतादिकं तत्सर्वं ब्रूहि मे विप्र सर्वलोकहिताय च मार्कंडेय उ० विस्तरेणार्चनफलं कविभिर्नैव शक्यते वक्तुं जनार्दनेन

दंकिंपुनः प्राकृतैर्जनैः प्रतिपत्तिथिमारभ्यमासमेकंजनार्दनं अर्चयेद्गंधपुष्पाद्यैः पायसेनससर्पिषा विप्रांस्तुभोजयेत्पश्चाद्दक्षिणाभिश्चतो
षयेत् एवंव्रतंमासमेकंकुर्याद्दानैर्विविचित्रकैः अंतेभूतदिनेप्राप्तेउपोष्यसुसमाहितः पुण्येऽह्निप्रातरुत्थायकुर्यात्पूर्वाह्णिकींक्रियां गृहीत्वा
नियमंपश्चाद्वासुदेवंहृदिस्मरन् त्रिंशद्धर्मभिरतान्ततोविप्रान्निमंत्रयेत् सपत्नीकान्सदाचारान्सुरूपांश्चसुविधकान् वेदाध्ययनसं
पन्नान्कुलीनान्ज्ञानिसंभवान् ततोमध्याह्नवेलायांकृत्वामाध्याह्निकीःक्रियाः पुष्पमंडपिकांकृत्वाविचित्रैस्तोरणादिभिः तस्मिन्सुशोभि
तेसर्वेमंडलेतूर्यनादिने सुलक्षणंलिखेत्तत्रसर्वतोभद्रमंडलं स्थापयेद्व्रणंकुंभंपंचरत्नसमन्वितं तस्योपरिन्यसेत्पात्रंदेवंतत्रप्रपूजये
त् आदौस्वस्त्ययनंकृत्वापूजांतत्रसमारभेत् प्राणानायम्यविधिवन्मनःसंकल्पपूर्वकं उपचारैःषोडशभिःपूजयेच्चजनार्दनं गंधतोयेनसं
स्नाप्यशुभैःपंचामृतैस्तथा स्थापयेद्व्रणंकुंभंवस्त्रयुग्मेनवेष्टितं ततोत्रिंशच्चनामानिपूजयेच्चयथाविधि जिष्णुंविष्णुंमहाविष्णुंहरिंहृ
षीकमधोक्षजं केशवंमाधवंराममच्युतंपुरुषोत्तमं गोविंदंवामनंश्रीशंश्रीकंठंविश्वसाक्षिणं नारायणंमधुरिपुमनिरुद्धंत्रिविक्रमं वासु
देवंजगद्योनिंशेषतल्पगमंतथा संकर्षणंचप्रद्युम्नंदैत्यारिंविश्वतोमुखं जनार्दनंधराधारंश्रीधरंचसमर्चयेत् कुंभस्थितेकांस्यपात्रेपूजये
च्चजनार्दनं आच्छाद्यवस्त्रयुग्मेनपीतेनचयथाविधि विष्णवेचततोदद्यादुपवीतेचशोभने चंदनेनसुगंधेनपुष्पैर्नानाविधैर्नृप धूपैर्नाना-
विधैर्दीपैःपूजयेच्चयथाविधि मिष्टान्नैश्चैवनैवेद्यैर्नागवल्लीदलान्वितैः घंटामृदंगनिर्घोषैःशंखध्वनिसमन्वितैः आरार्तिकंप्रकुर्वीत

कर्पूरागरुचंदनैः प्रदक्षिणानमस्कारान्मंत्रपुष्पंयथाविधि ताम्रपात्रस्थितंतोयंचंदनाक्षतपुष्पकैः अर्घ्यंदद्यात्सपत्नीकः अव्यग्रेणांतरात्मना
नारिंगैर्नारिकेरैश्च फलैर्नानाविधैःशुभैः पंचरत्नसमायुक्तंजानुनीस्थाप्यभूतले आरोप्यभालेहस्तौच श्रद्धाभक्तिसमन्वितः अधिमासे
तुसंप्राप्तेशुभेसूर्याधिदैवते देवदेवमहादेवप्रलयोत्पत्तिकारक गृहाणार्घ्यंमयादत्तंकृपांकुरुममोपरि स्वयंभुवेनमस्तुभ्यंब्रह्मणेमि-
ततेजसे नमोस्तुतेश्रियानंतब्राह्मणानांदयांकुरु एवंस्तुत्वाजगन्नाथंगंधपुष्पोपहारकैः पूजयित्वाजगन्नाथंचतुर्षुप्रहरेषुच तथाजागर
णंकुर्यात्कीर्तनश्रवणादिभिः ततःप्रभातसमयेअमावास्यादिनेनृप विष्णुंचपूजयेद्भक्त्यापश्चाद्धोमंसमाचरेत् समित्तिलाज्यचरु
णापायसेनहुनेन्नृप अतोदेवेतिषट्केनअयुतंवासहस्रकं पूर्णाहुतिंततःकृत्वाहोमशेषंसमापयेत् गुरोःपूजांततःकुर्याद्वस्त्रधान्यादि
सप्तकैः प्रदद्यात्क्रतुनासार्धंप्रतिमांचतथानृप त्रयस्त्रिंशदपूपांश्चकांस्यपात्रसमन्वितान् प्रदद्यात्कुरुवेराजन्घृतशर्करयासह अ
धिमासेतुसंप्राप्तेपापप्रमुक्त्यैजनार्दनं उद्दिश्यापूपदानेनघृतेनसहरुक्मकं विष्णुप्रीत्यैप्रदद्याच्चपृथ्वीदानफलंलभेत् त्रयस्त्रिंशदपूपां
श्चदानाहाँश्चदिनेदिने सुवर्णगुडसंयुक्तान्कांस्यपात्रेनिधायच अधिमासेतुसंप्राप्तेशुभेसूर्याधिदैवते नरकोत्तारणायैवमयादा
नंप्रदीयते त्रयस्त्रिंशदपूपांश्चघृतशर्करयासह सदक्षिणामयातुभ्यंकांस्यपात्रेणदापिताः दानादिवाकरोदेवोगृहीताचदिवाकरःदा
नेनानेनविप्रेंद्रसूर्योमेप्रीयतामिति प्रीयतांदेवदेवेशाब्रह्मशंभुजनार्दनाः तेषांप्रसादात्सकलाममसंतुमनोरथाः गृहाणपरमान्नेनकां

भ.रा.
३३३

स्यपात्रंसंपूरितं सघृतंगुडसंयुक्तं शुभोभवदिवाकर त्वयादत्तमिदंपात्रंपरमान्नेनपूरितं सघृतंप्रतिगृण्हामिप्रीयतांमेदिवाकरः ब्राह्मणा
न्पूजयेत्पश्चाद्वस्त्रालंकारचंदनैः अपूपदानंदद्याच्चकांस्यपात्रसमन्वितं धेनुंसवत्सांदद्याच्चवस्त्रालंकारभूषितां कांस्यदोग्ध्रींरौप्यखु
रींदक्षिणासहितांनृप नत्वानुवाचयेद्विप्रान्सफलंचास्तुमेव्रतं ऋत्विग्भ्योवाससीदद्याच्चत्रयस्त्रिंशच्चकुंभकान् कांस्यपात्रसमायुक्तान
पूपान्घृतसंयुतान् वटकैःसहराजेंद्रयथाशक्त्याचदक्षिणां ब्राह्मणान्भोजयेत्पश्चाच्छर्कराघृतपायसैः द्वादश्यांमलमासस्यद्वायेपा
तेशक्तेभोन्हिवा दुर्बलेनापिकर्तव्यंत्रयस्त्रिंशदपूपकं मलमासेतुसंप्राप्तेएकस्मिंश्चशुभेदिने निष्किंचनेनदातव्यंघृतशर्करयासह मा-
सानांमलमासोयंमलिनःपापसंभवः तस्यपापस्यशांत्यर्थं अन्नदानंकरोतियः यावंतिचैवच्छिद्राणिअपूपादिषुपांडव तावद्वर्षसह-
स्राणिस्वर्गलोकेमहीयते मलमासव्रतंनारीयाकरोतीहभारत दारिद्र्यपुत्रशोकंतुनवैधव्यंलभेतसा यद्ददेधर्मसर्वस्वंकुर्याल्लोकेःपुरा
हतं ब्रह्महत्यादिपापघ्नंप्राप्नुयाद्वैष्णवंपदं एवंप्रार्थ्यचगोविंदंपूजयेद्ब्राह्मणानथ सपत्नीकान्शुचिस्नातान्लक्ष्मीनारायणोस्मरन् पूजयित्वावि
धानेनभोजयेद्घृतपायसैः पूजयित्वाविधानेनसपत्नीकंस्मरान्विभुं स्मर्तव्योद्विजरूपेणपत्नीरूपेणवैनृप परिधाप्ययथाशक्त्यावस्त्रा
लंकारकुंकुमैः द्राक्षाम्रैश्चकपित्थैश्चपनसैःकदलीफलैः नारिकेरैश्चनारिंगैःकूष्मांडैर्दाडिमीफलैः उर्वारुकैर्कर्कटैश्चशृंगवेरैःसमूलकैः
अन्यैश्चविविधैःशाकैरचितैश्चपृथक्पृथक् घृतपक्वान्नगोधूमैःशुभैःसोहालिकैर्वटैः शर्कराघृतपूरैश्चफाणिकैःषडपंडकैः भक्ष्यभोज्यैश्चलेह्यादि

भ.मा.
३३३

कंदुकानिविशेषतः गोरसानांविचित्राणिवासितानिइल्लादिभिः अन्यान्यपिचदानानिदेयानिविविधानिच वित्तशाठ्यंनकर्तव्यमात्मनःश्रे
यइच्छता यथावत्सरसंप्राप्यपरिवेष्यमृदुब्रुवन् इदंस्वादुइदंभोज्यंभवदर्थेविचिंतये याच्यतांरोचतेयच्चयन्मयापाचितंप्रभो धन्यो
स्म्यनुगृहीतोस्मिपावितंममसंदिरं विसर्जयेत्ततोविप्रान्दत्वातांबूलदक्षिणे आसीमांतमनुव्रज्य भुंजीतबंधुभिःसह असंक्रांतव्रतं
नारीयाकरोतिहरिप्रियं दारिद्र्यंपुत्रशोकंत्ववैधव्यंनभवेत्कदा एवंविधोपिपुरुषोयदिकुर्यान्मलिम्लुचे मलिम्लुचंप्राप्यनपूजितोयैःश्री
नाथदेवःपरएवभक्त्या कथंभवच्छ्रेयस्कःस्वंचसंपत्सुतः कलत्रस्वजनाश्चापिभार्या कदाचिन्नहृतंपापैर्मलमासव्रतंनरैः तेषांपापेष्ठ
तानित्यंब्रह्महत्यापदेपदे मार्कंडेयउ॰ एतत्तेकथितंपार्थगुह्याद्गुह्यतरंपरं वाजपेयायुतफलंश्रोतावक्तालभेद्ध्रुवं इतिश्रीभविष्यो॰
मलमासव्रतोद्या॰संपू॰ अथस्वस्तिकव्रतंआषाढपूर्णिमामारभ्यकार्तिकपौर्णिमावधि युधिष्ठिरउ॰ सर्वासांचतिथीनांचकथि
तानिव्रतानिप्रभो तथाचस्वस्तिकंनामयत्त्वयाकथितंप्रभो नैवतस्यविधानंतुकथितंचसुरेश्वर कोविधिर्देवता
काचकिंदानंपूजनंकथं केनेदंहिपुराचीर्णंकिंफलंस्वस्तिकेव्रते श्रीकृष्णउवाच साधुपृष्टंमहाभागलोकानांहि
तकाम्यया येनचीर्णेनराजेंद्रभूमिपुत्रोजायतेनरः स्वस्तिकस्यविधिंराजन्शृणुत्वेकाग्रमानसः स्वस्तिकानिलिखित्वादौपू
जाकर्मसमारभेत् रमयासहितंदेवंपूजयेत्प्रत्यहंपुनः इतिसंकल्प्यमेधावीस्वस्तिकंकर्मकारयेत् अष्टोत्तरस्व

स्तिकानिप्रत्यहंविष्णवेपुनः रंगवल्यालंकृतानियदिभक्त्यासमर्पयेत् शतजन्मार्जितंपापंतस्यनश्यतितत्क्षणात् गोमूत्रंगोमयंराजन्स्थं
डिलेसंविलेपयेत् रंगवल्यादिकंकार्यंसर्वंभक्त्यासमर्पयेत् नीलपीतसितैरक्तैरंगैःस्वस्तिकधारणं यस्तुकुर्याद्गृहस्थात्माविष्णुलोकेम-
हीयते पंचवर्णैस्तुनीलाद्यैःकुर्यात्स्वस्तिकमुत्तमं नारीवापुरुषोवापिप्रसक्तेचजनार्दने विष्ण्वालयेशिवद्वारेगवांगोष्ठेशुचिस्थले विष्णु
प्रीतिकरंकुर्यात्तस्यपुण्यमनंतकं पंचरंगकवर्णैस्तुकोटियज्ञफलंलभेत् रंगवल्यादिकंकृत्वाविष्णोस्तुपुरतोन्यसेत् स्वस्तिकैःशोभ
यित्वाचविष्णोःस्थानंशिवस्यच अशुभंतत्कुलेनैवस्याद्धिविष्णुप्रसादतः सहस्रंस्वस्तिकानांतुयेनभक्त्यासमर्पितं पुत्रपौत्रसमायु-
क्तोमोदमानःपुनःपुनः चिरवासीभवेत्स्वर्गेधनवान्भूमिपोभवेत् तत्कुलेपिदरिद्रत्वंनैवजायेतकर्हिचित् अयुतंस्वस्तिकानांतुविष्णो
वेत्यर्पयेद्यदि पुत्रपौत्रादिकंतस्यस्वस्तिमज्जायतेध्रुवं नरोगार्तिर्भवत्येवगोपालस्यप्रसादतः नारीचेद्विधवानैवपुरुषोवापिकर्हिचित्
जायापत्यसमायुक्तोनात्रकार्याविचारणा नारीणांतुभवत्येवस्वस्तिकैःपूजनंपरं अथस्वस्तिकलक्षं तु यदिकुर्याद्विचक्षणा तस्याः
पुण्यफलंवक्तुंकः शक्तोदिविवाभुवि आषाढेमासिराजेंद्रप्रथमाचरणंभवेत् आश्विनेतुसमाप्तिर्वैकर्तव्यास्वस्तिकारिणा धनिनातु
कृतंविप्रगोदानादिपुरःसरं कर्तव्यंफलसिद्ध्यर्थंनात्रकार्याविचारणा कृतंयदिदरिद्रेणपश्चात्स्वस्तिकलक्षकं कंबलाद्यासनंदद्याद्ध



तस्मात्पुण्यसिद्धये विभवेसतिराजेंद्रहेम्नारौप्येणवाकृतं स्वस्तिकंत्वासनंदद्याद्व्रतसंपूर्तिसिद्धये आहिताग्नेस्तुहोमार्थंतदभावेद्वि

जार्चनं द्विजसंतर्पणादेतत्संपूर्णं जायते नृप शुभकारीणि राजेंद्र स्वस्तिकानि विधापयेत् ब्राह्मणेभ्यः प्रदेयानि व्रतसंपूर्तिहेतवे यथा
वस्तुविधानेन गदितं पुण्यमुत्तमं तथैव स्वस्तिपुण्यानामित्याहुर्वेदवादिनः अथ होमं प्रवक्ष्यामि लक्षस्वस्तिकसिद्धये पायसेन हुनेद्वि
द्वान्स्वसूत्रोक्तविधानतः घृतपायसहोमः स्यात्तद्दशांशेन तर्पणं स्वस्त्ययनं तार्क्ष्यमरिष्टनेमीति च मंत्रतः होममंत्रार्थविधिवत्कुर्वा
णः साधुसाधकाः आहिताग्नेर्वैदिकास्तु मंत्राः स्युर्होमसिद्धये मंत्रा अनाहिताग्नेर्वै प्रोक्तास्तंत्रे विचक्षणैः तन्मंत्रं कथयिष्यामि फला
नां तस्य सिद्धये स्वस्तिनाम परं देवं स्वस्तिकारणकारणं स्वस्त्ययेपायसं चाज्यं स्वाहाग्नये च तत्पठेत् हुतं तुभ्यं महादेव तृप्तो भव महाम
ते स्वस्ति कुरु महादेव स्वाहया संयुतः शिखिन् एवं दशांशतो होमं कुर्याद्विष्णोश्च तुष्टये ब्राह्मणान्भोजयेत्पश्चात्तद्दशांशेन वैबुधः
अथासनानि देयानि पंचरंगयुतानि च ब्राह्मणेभ्यो विशिष्टेभ्यस्तस्यैव फलसिद्धये और्णानि चापि देयानि दर्भजान्यथवा पुनः त
त्पूजाविधिसिद्ध्यर्थमाचार्यं वरयेत्सुधीः त्वं विष्णो इति मंत्रेण तमेव पूजयेत्सुधीः पंचामृतैः स्नापयित्वा पूजयेद्भक्तिसंयुतः धूप-
दीपैस्तथा भोज्यैर्नैवेद्यं परिकल्पयेत् तांबूलैर्धूपदीपैश्च कुसुमैश्च सुगंधकैः शतपत्रैश्च कल्हारैरर्चयेत्परमेश्वरं नमस्कारैस्तथा दि
व्यैः स्तोत्रपाठैर्विशेषतः प्रदक्षिणां ततः कृत्वा वाग्यतः संयतेंद्रियः ततो गोमिथुनं दद्याद्व्रतसंपूर्तिहेतवे तदभावे त्वाढकानां द्रोणमा
त्रं प्रदीयते अथवा त्वाढकानां तु पाठके परिकीर्तनं पूरिकामोदकाद्यैश्च भोजयेद्द्विजसत्तमान् आचार्याय तु तां शक्त्या प्रतिमां दापयेत्सु

धीः हस्तमात्राकर्णमात्राकटिसूत्रादिभिः पुनः पीतांबरैश्च संपूज्य कोटियज्ञफलं लभेत् तस्मादादौ मकर्तव्यं धर्मकामार्थसिद्धये राजा-
नो भिन्नतां यांति शत्रवो यांति दासतां य एवं कुरुते भक्त्या विष्णुभक्तिपुरःसरः तस्यानंतफलं राजन् गदितं वेदपारगैः स्वस्तिकव्रतमे
तत्तु गंगास्नानफलप्रदम् रोगानाभिभवंत्येव स्वस्तिकव्रतचारिणां स्त्रीभिरेवं च कर्तव्यं सर्वसौभाग्यसिद्धये शांडिल्यादृतमेवं तु व्रतं
विष्णुप्रतुष्टये सगरेण दिलीपेन दमयंत्या तथैव च आदौ मासि मकर्तव्यमंते चापि तथैव च मासत्रये समाप्तिः स्याच्चतुर्भिर्वा तथैव च ए-
कस्मिन्नपि मासे तु समाप्तिः कोटिपुण्यदा य इदं शृणुयाद्भक्त्या तस्यापि फलदं भवेत् नेदं कस्यापि व्याख्येयं यदीच्छेद्विपुलं धनं न देयं
यस्य कस्यापि विकल्पोपहतात्मने भक्तिश्रद्धाविहीनाय यज्ञघातकराय च विकल्पहतचित्ताय नास्तिकाय शठाय च न देयं व्रतमेतत्तु
स्वस्तिकारणमुत्तमं देयं पुत्राय शिष्याय फलानां तस्य सिद्धये एवं ज्ञात्वा तु तत्सर्वं च कारैवं युधिष्ठिरः इति श्री भ॰ स्वस्तिकव्रतं सं॰
अथ वारव्रतानि लिख्यंते तत्रादौ रविवारव्रतं मदनरत्ने सौरधर्मे अथ पूजा मासपक्षाद्युल्लिख्य मम समस्तरोगनिरासार्थं आयु-
ष्यादि सकलकामनासिध्यर्थं श्रीसूर्यनारायणप्रीत्यर्थं रविवारव्रतांगत्वेन पूजनमहं करिष्ये गणपतिस्मरणपूर्वकं कलशादि पूजनम-
हं करिष्ये ताम्रपात्रे रक्तचंदनेनाष्टदलं कृत्वा तत्र देवं पूजयेत् तेजोरूपं सहस्रांशुं सप्ताश्वरथगं वरं द्विभुजं वरदं पद्मलांछनं स-
र्वकामदं ध्यानं आगच्छ भगवन्सूर्य मंडले च स्थिरो भव यावत्पूजा समाप्येत तावत्त्वं संनिधो भव आवाहनं हेमासनं महादिव्यं ना

नारत्नविभूषितं दत्तंमेगृह्यतांदेवदिवाकरनमोस्तुते आसनं गंगाजलसमानीतंपरमंपावनंमहत् पाद्यंगृहाणदेवेशधामरू
पनमोस्तुतेपाद्यं भोभोसूर्यमहद्भूतब्रह्मविष्णुस्वरूपिणे अर्घ्यमंजलिनादत्तंगृहाणपरमेश्वर अर्घ्यं गंगादितीर्थजंतोयंजा
तिपुष्पैश्चवासितं ताम्रपात्रेस्थितंदिव्यंगृहाणाचमनीयकं आचम॰ जाह्नवीजलमत्यंतंपवित्रकरणंपरं स्नानार्थंचमयानी
तंस्नानंकुरुजगत्पते मलाप॰ पयोदधिघृतैश्चैवशर्करामधुसंयुतैः कृतंमयाचस्नपनंप्रीयतांपरमेश्वरः पंचामृ॰ गंगागोदा
वरीचैवयमुनाचसरस्वती नर्मदासिंधुकावेरीताभ्यस्नानार्थमाहृतं स्नानं आचम॰ रक्तपट्टयुगंदेवसूक्ष्मतंतुविनिर्मितं
शृद्धंचैवमयादत्तंगृहाणकमलाकर वस्त्रं नमःकमलहस्तायविश्वरूपायतेनमः उपवीतंमयादत्तंगृहाणदिवाकरउपवी॰
कुंकुमागरुकस्तूरीसुगंधैश्चंदनादिभिः रक्तचंदनसुक्तंतुगंधंगृह्णप्रभाकर गंधं जपाकदंबकुसुमरक्तोत्पलयुतानिच पुष्पा
णिगृह्यतांदेवसर्वकामप्रदोभव पुष्पा॰ रक्तचंदनसंमिश्राअक्षताश्चसुशोभनाः मयादत्तागृहाणत्वंवरदोभवभास्कर अक्ष॰
आर्द्राक्षनानसगृह्य अंगपू॰ ॐ मित्राय॰ पादौपू॰ रवये॰ जंघे॰ सूर्याय॰ जानुनी॰ खगाय॰ उरूपू॰ पूष्णे॰ गुह्यं॰ हिरण्यगर्भाय॰ क
टीपू॰ मरीचये॰ नाभिंपू॰ आदित्याय॰ जठरंपू॰ सवित्रे॰ हृदयं॰ अर्काय॰ स्तनौपू॰ भास्कराय॰ कंठंपू॰ अर्यम्णे॰ स्कंधौ॰ भास्करा॰
य॰ हस्तौपू॰ अहस्कराय॰ मुखंपू॰ ब्रध्नेन॰ नासिकांपू॰ जगदेकचक्षुषे॰ नेत्रेपू॰ सवित्रे॰ कर्णौपू॰ त्रिगुणात्मधारिणेन॰ ललाटंपू॰

विरिंचिनारायणाय॰ शिरः पू॰ तिमिरनाशिने॰ सर्वांगं पू॰ दशांगो गुग्गुलोद्भूतः कालागरुसमन्वितः आघ्रेयः सर्वदेवानां धूपोयं प्र-
तिगृह्यतां धूपं कार्पासवर्तिकायुक्तं गोघृतेन समन्वितं दीपं गृहाण देवेश त्रैलोक्य तिमिरापह दीपं पायसं घृतसंयुक्तं नानापक्कान्न
संयुतं नैवेद्यं च मया दत्तं शांतिं कुरु जगत्पते नैवेद्यं॰ कर्पूरवासितं तोयं मंदाकिन्याः समाहृतं आचम्यतां जगन्नाथ मया दत्तं हि भ
क्तितः आचम॰ मलयाचलसंभूतं कर्पूरेण समन्वितं करोद्वर्तनकं चारु गृह्यतां जगतः पते करोद्वर्तनं॰ इदं फलं मया देवस्थापितं
पुरतस्तव तेन मे सफलावाप्तिर्भवेज्जन्मनि जन्मनि फलं एलालवंगकर्पूरखदिरैश्च सपूगकैः नागवल्लीदलैर्युक्तं तांबूलं प्रतिगृह्यतां
तांबू॰ दक्षिणा कांचनी देवस्थापिता च तवाग्रतः गृहाण सन्मुखो भूत्वा प्रभाकर नमोस्तु ते दक्षि॰ पंचवर्तिसमायुक्तं सर्वमंगलदायकं
नीराजनं गृहाण देव सर्वसौख्यकरो भव नीराजनं यानि कानि च पापानि जन्मांतरकृतानि च विलयं यांति तानीह प्रदक्षिण पदे पदे प्र
दक्षिणाः नमः पंकजहस्ताय नमः पंकजमालिने नमः पंकजनेत्राय भास्कराय नमो नमः नमस्का॰ तंडुलैः पूरितं पात्रं हिरण्येन-
समन्वितं रक्तवस्त्रयुगं चैव ब्राह्मणाय निवेदयेत् वायनं यस्योदये स्याज्जगतः प्रबोधो यः कर्मसाक्षी भुवनस्य गोप्ता कुष्ठादिक
व्याधिविनाशको यः स भास्करो मे दुरितं निहन्यात् इति प्रार्थना अथ कथा मांधातोवाच भगवन् ज्ञानिनां श्रेष्ठ कथयस्व प्रसा
दतः त्वद्वक्त्राच्छ्रोतुमिच्छामि व्रतं पापप्रणाशनं सर्वकामप्रदं चैव सर्वामंगलनाशनं पूजार्घ्यदानसहितं नैवेद्यं प्राशनान्वितं एत-

त्कथयसर्वस्त्वंप्रसन्नोसियदिद्विज वसिष्ठउ॰ शृणुराजन्प्रवक्ष्यामियद्भुत्वंव्रतमुत्तमं सर्वकामप्रदंपुंसांकुष्टादिव्याधिनाशनं भा
नोस्तुष्टिकरंराजन्भक्तिमुक्तिप्रदायकं यस्योदयेसुरगणामुनिसंघाःसचारणाः दैत्यादानवयक्षाश्चकुर्वंतिसततार्चनं यस्योद
येनुसर्वेषांप्रबोधोनृपसत्तम तस्यदेवस्यवक्ष्यामिव्रतराजंसविस्तरं पूजार्घ्यंप्राशनंदानंनैवेद्यंशृणुतत्वतः सर्वतीर्थेषुयत्पुण्यंस
र्वयज्ञेषुयत्फलं सर्वदानेनतपसायत्पुण्यंसमवाप्यते॥ प्रातस्नानेनयत्पुण्यंतत्पुण्यंरविवासरे मार्गशीर्षादिमासेषुद्वादशस्वपिभूपते
सूर्यव्रतंकरिष्यामियावद्वर्षंदिवाकर व्रतंसंपूर्णतांयातुत्वत्प्रसादात्प्रभाकर नियमसं॰ ततःप्रातःसमुत्थायनद्यादौविमलेजले
स्नात्वासंतर्पयेद्देवान्पितृंश्चवसुधाधिप उपलिप्यशुचौदेशेसूर्यंतत्रसमर्चयेत् विलिखेत्तत्रपद्मंतुरंगैर्द्वादशवर्णकैः ताम्रपात्रेन
थापद्मंरक्तचंदनवारिणा विलिखेत्परयाभक्त्यासर्वसंतुष्टिकारकं ततःसंपूजयेद्देवंदिननाथंसुरेश्वरं मांधातोवा॰ द्वादशेषुचमासे
षुकेकेदेवाःप्रकीर्तिताः कथंपूज्याश्चतेतेपितद्वदस्वममप्रभो वसिष्ठउ॰ मासेमासेचयेराजन्विशेषास्तान्शृणुष्ववै मार्गशीर्षेयजे
न्मित्रंनारीकेरार्घ्यमुत्तमं नैवेद्यंतंडुलादेयाःसाज्याश्चगुडसंयुताः पत्रत्रयंतुलस्यास्तुप्राशयतिष्ठेज्जितेंद्रियः दद्याद्विप्रायभोज्यं
तुदक्षिणासहितंनृप पौषेविष्णुंसमभ्यर्च्यनैवेद्येकृसरंतथा बीजपूरेणचैवार्घ्यंघृतंप्राश्यपलत्रयं दद्याद्घृतंतुविप्रायभोजनेन
समन्वितं माघेत्वरुणनामानंसंपूज्याज्यंतिलान्गुडे नैवेद्येत्वर्घ्यमध्येतुदद्याद्वैबृहतीफलं द्विजातयेचदद्याद्वैभोजनंचसदक्षिणं

सुष्टिन्नयंतिलानांचप्राशयेन्नियतोव्रती फाल्गुनेसूर्यमभ्यर्च्यनैवेद्यंसघृतंदधि अर्घ्यंजंबीरसहितंदधिप्राश्यपलत्रयं दधितंडुलदानंच
भोजनेसमुदाहृतं चैत्रेभानुंचसंपूज्यनैवेद्यंघृतपूरिकाः दाडिमीफलमर्घ्यंचप्राश्यदुग्धंपलत्रयं विप्रायभोजनंदद्याद्विप्रान्नंतुसद
क्षिणं वैशाखेतपनःप्रोक्तोमाषान्नंसघृतंस्मृतं अर्घ्यंदद्यात्तुद्राक्षाभिःप्राशनेगोमयंस्मृतं कुर्यान्माषान्नदानंचसघृतंवैसदक्षि
णं ज्येष्ठेइंद्रंयजेद्राजन्नैवेद्यंतुकरंभकं अर्घ्यंचसहकारेणप्राश्यांबुत्वंजलित्रयं दध्योदनसमायुक्तंभोजनंब्राह्मणायच आषा-
ढेरविमभ्यर्च्यनैवेद्यंसघृतंतुत्तमं विप्रायभोजनंदद्यात्प्राशयेन्मरिचत्रयं गभस्तिंश्रावणेभ्यर्च्यनैवेद्यंसक्तुपूरिकाः अर्घ्यंदा-
नेचहिप्रोक्तंत्रपुसीफलमेवच सुष्टिन्नयंचसक्तूनांप्राशनेसमुदाहृतं विप्रायभोजनंदद्याद्दक्षिणासहितंनृप यमोभाद्रपदेपू-
ज्योनैवेद्येसाज्यमोदनं गोमूत्रप्राशनंत्वुक्तंब्राह्मणान्भोजयेत्तथा हिरण्यरेताश्चाश्विनेचनैवेद्येशर्करास्मृता दाडिमेनार्घ्यदानं
तुप्राश्यखंडपलत्रयं विप्रायपरयाभक्त्याभोजनंखंडपायसं दिवाकरःकार्तिकेचनैवेद्येपायसंस्मृतं पायसैर्भोजयेद्विप्रान्द
द्यात्तांबूलदक्षिणे एवंव्रतंसमाप्यैतत्ततउद्यापनंचरेत् ततोगुरुगृहंगत्वागृणहीयाच्चरणांबुजे उद्यापनंकरिष्येहमागच्छमम वेश्मनि
माषकेनसुवर्णेनप्रतिमांकारयेद्रवेः पीठंरौप्यमयंकार्यंसर्वोपस्करसंयुतं कृत्वाद्वादशपत्रंतुकमलंरक्ततंडुलैः स्थापयेद्व्रणंकुंभंपंचरत्न
समन्वितं तस्योपरिन्यसेत्पात्रंताम्रंतंडुलपूरितं रक्तवस्त्रसमाच्छन्नंपुष्पमालादिवेष्टितं पंचामृतेनस्नपनमग्न्युत्तारणपूर्वकं प्रतिष्ठांचत-

तः कृत्वा पूजां देवस्य कारयेत् चंदनैः कुसुमैरन्यैर्विविधैः कालसंभवैः अखंडपट्टवस्त्रैश्च कमंडलुसुपानहौ वर्धनीत्रितयं तत्र स्थाप
येद्देवसंन्निधौ संज्ञायावस्त्रयुग्मं च कौसं भं तु महीपते प्रतिपात्रेषु संपूज्यः सूर्यो द्वादशनामभिः मित्रो विष्णु वरुणौ सूर्यो भानुर्वैनपन
स्तथा इंद्रो रविर्गभस्तिश्च शमनश्च तथा स्मृतः हिरण्यरेता दिनकृत् पूज्या एते प्रयत्नतः मध्ये सहस्रकिरणः संपूज्यः संज्ञया -
सह पूगीफलैर्धूपदीपैर्नैवेद्यैर्वस्त्रसंयुतैः नारिकेरेण चैवार्घ्यं दद्याद्देवाय भक्तितः मंत्रेणानेन राजेंद्र व्रतस्य परिपूर्तये नमः
सहस्रकिरण सर्वव्याधिविनाशन गृहाणार्घ्यं मया दत्तं संज्ञया सहितो रवे आरार्तिकं ततः कुर्यान्नमस्कारप्रदक्षिणाः पुष्पांजलिं ततो
दद्यात्संकल्पं कारयेत्ततः ब्राह्मणान्भोजयेद्भक्त्या मिष्टान्नैर्द्वादश प्रभो दंपत्योर्भोजनं देयं परमान्नसमन्वितं ततस्तु दक्षिणां देयां सम
भ्यर्च्य स्रग्गादिभिः उपहारादि तत्सर्वं गुरवे प्रतिपादयेत् गुरुं तत्रैव संतोष्य ब्राह्मणांश्च विसर्जयेत् मंत्रहीनं क्रियाहीनं भक्तिहीनं च यत्
कृतं तत्सर्वं पूर्णतां यातु भूमिदेवप्रसादतः अनुव्रज्य गुरून्विप्रान् भोजनं तु समाचरेत् इष्टैश्च बंधुभिः सार्धं नत्वा देवं दिवाकरं एवं यः
कुरुते मर्त्यो वित्तशाठ्यविवर्जितः सूर्यव्रतं महाराज तस्य पुण्यफलं शृणु ब्राह्मणो लभते विद्यां क्षत्रियो राज्यमाप्नुयात् वैश्यः समृद्धिं
विपुलां शूद्रः स्वर्गमवाप्नुयात् अपुत्रो लभते पुत्रं कुमारी लभते पतिं रोगार्तो मुच्यते रोगाद्बद्धो मुच्येत बंधनात् यं यं चिंतयते कामं तं तं
प्राप्नोति वै ध्रुवं य इदं शृणुयाद्भक्त्या श्लोकं चित्तेन वै नृप सर्वकामानवाप्नोति प्रसादाद्भास्करस्य वै इति भ० रविवारकथा समाप्ता ॥

अथआश्विनादिरविवारेषुआशादित्यव्रतं मासपक्षाद्युल्लिखय्यममसमस्तरोगनिरासार्थं आयुष्यादिसकलकामनासिध्यर्थं द्वादशव
र्षपर्यंतंएकवर्षपर्यंतंवाश्रीसूर्यनारायणप्रीत्यर्थंआशादित्यव्रतंकरिष्ये इतिसंकल्प्य कलशाराधनंआसनबंधादिकृत्वासूर्यंपूजयेत्
ताम्रेणकारयेत्पीठंरथंरौप्यमयंतथा भास्करंपूजयेत्तत्रसुवर्णेनतुकारितं नारदउवा० भगवन्श्रोतुमिच्छामिव्रतानामुत्तमव्रतं स
र्वरोगप्रशमनमाशादित्यव्रतंशुभं स्कंदउ० शृणुनारदगुह्यंतदादित्याराधनंपरं यत्कृत्वासर्वकामानांसकलंफलमाप्नुयात् समुद्रती
रेविमंदपुरीद्वारवतीशुभा वासुदेवेयदुश्रेष्ठेपुण्यराज्यंप्रशासति दुर्वासाअगमत्तत्रकृष्णादर्शनलालसः कृष्णेनपूजितःसोपिपाद्यार्घ्य
पाद्यासनादिभिः भोजनंतस्यवैदत्तंयथाविभवसारतः संपूजितःसकृष्णेनयावद्गच्छत्यसौमुनिः सांबेनहासितस्तत्रस्फुतेनसहसाभि
त क्रुद्धोपिमुनिशार्दूलःकोपंसंहृतवान्स्वयं पूजितेनमयेदानीमन्यत्कर्तुंकथंक्षम सगत्वानारदंप्राहसांबेनहसितोस्मिभो सप्रायांच
रतःकार्यंतस्यशिक्षापनंत्वया इत्युक्तोनारदःप्रायाद्द्वारकांकृष्णसंन्निधौ स्वकंसैन्यंदर्शयस्वममदेवकिनंदन देवयात्राभिषंकृत्वा
हस्त्यश्वरथसंकुलं नारदेनैवमुक्तःस्तुनथैवकृतवान्विभुः दर्शितेतुबलेप्राहनात्रसांबःप्रदृश्यते मयैवानीयतेशीघ्रंद्वारवत्यास्तवां
तिकं गत्वैवमुक्तोमुनिनाश्रेष्ठोजांबवतीसुतः सप्तगारःस्तथानीतोमकरध्वजदर्शनः गत्वालिंग्यसुतंतुस्तंगोप्यःकृष्णपरिग्रहाः
नारदःप्राहभगवद्दुश्चरित्रंतथानय क्रुद्धेनशौरिणाप्रोक्तःकुष्ठीभवनराधम एवमुक्तस्तथापुत्रःकुष्टरोगातुरोभवत् सांबःप्र

पाम्याहपितः किमर्थंशापितस्त्वया स्वशक्तिज्ञानदृष्ट्यातु विचार्यसम्यग्विनिश्चितं ध्यानाद्दुर्वाससोज्ञात्वाविक्रियात्यत्रकारणं अनुग्रहो-
मयापुत्रकार्यस्तेस्वस्त्ययेशुचौ आदित्यस्यव्रतंचैवकुरुकुष्ठविनाशनं सांबउवा॰ कथतांतमयाकार्यंव्रतंसर्वफलप्रदं किंविधानंतुके
मंत्राःकिंदानंकस्यपूजनं कृष्णउवा॰ मासमाश्वयुजंप्राप्ययदारविदिनंभवेत् तदाव्रतमिदंग्राह्यंनरैस्त्रीभिर्विशेषतः यावत्
संवत्सरंतावद्विधिनानेनपुत्रक गोमयेनक्षितौकुर्यान्मंडलंवर्तुलंपुनः रक्तचंदनपुष्पैश्चयुक्तंतत्रसहाक्षतं मंत्रेणानेनसांबत्वमर्घ्यं
देहिरविंप्रति यथाशाविमलाःसर्वाःसूर्यभास्वरभानुभिः तथाशासफलामत्वंकुरुनित्यंममार्घ्यतः अर्घ्यमंत्रः एवंतमर्चयेत्ताव
द्यावद्वर्षसमाप्यते समाप्तेतुव्रतेवत्सकुर्यादुद्यापनंशुभम् गोमयेनानुलिप्तायांभूमौमंडलमालिखेत् रक्तचंदनरेखाभिःकुंकुमे
नविशेषतः तन्मध्येकारयेत्पद्मंद्वादशारंसकर्णिकं सिंदूरपूरितदलंजपाकुसुमशोभितं तन्मध्येस्थापयेत्कुंभंप्रवालांकुरसंयु
तं शालितंदुलसंपूर्णंशर्करांचंदनान्वितं तस्योपरिन्यसेत्पात्रंताम्रंशक्त्याविनिर्मितं सौवर्णंभास्करंकृत्वापद्महस्तंस्वशक्तितः
रक्तवस्त्रयुगोपेतंपात्रोपरिनिवेशयेत् पंचामृतेनस्नपनंरक्तपुष्पैश्चपूजयेत् धूपदीपैश्चनैवेद्यैःफलैःकालोद्भवैस्तथा पूजयेज्ज
गतामीशंयथाविभवसारतः अथांगपूजा ॐ सूर्यायनमः पादौपू॰ अरुणाय॰ जंघेपू॰ माधवाय॰ जानुनीपू॰ धात्रेनमः
उरूपू॰ हरये॰ कटीपू॰ भर्गाय॰ गुह्यंपू॰ सुवर्णरेतसे॰ नाभिंपू॰ अत्रये॰ जठरंपू॰ दिवाकराय॰ हृदयंपू॰ तपनाय॰ कंठंपू॰ भा

नवेन॰ स्कंधौपू॰ हंसाय॰ हस्तौपू॰ मित्राय॰ मुखंपू॰ रवये॰ नासिकांपू॰ खगाय॰ नेत्रेपू॰ पूष्णेन॰ कर्णौपू॰ हिरण्यगर्भाय॰ ललाटंपू॰
आदित्याय॰ शिरःपू॰ भास्कराय॰ सर्वांगंपू॰ नमोनमःपापविनाशनायविश्वात्मनेसप्ततुरंगमाय सामर्ग्यजुर्धामनिधिविधान भवा
ब्धिपोतायनमःसवित्रे इतिप्रार्थना एवंसंपूज्यदद्यात्तुनक्तंभुंजीतवाग्यतः आचार्यंपूजयित्वातुवस्त्रैराभरणैःशुभैः तस्मैतांप्रति
मांकुंभंसहिरण्यंचदापयेत् प्रीयतांभगवान्देवोममसंसारतारकः ब्राह्मणान्भोजयेत्पश्चाद्दध्यूपैःपायसैःसह तेभ्यस्तुकलशा
न्दद्याद्यथाशक्त्यातुदक्षिणां एवंयःकुरुतेसम्यक्व्रतमेतदनुत्तमं आशादित्यमितिख्याततस्यपुण्यफलंमहत् निर्व्याधिश्चस
तेजस्वीपुत्रपौत्रसमन्वितः भुक्त्वेहभोगान्विपुलानमरैरपिदुर्लभान् देहांतेरविसायुज्यंप्राप्नुयादुत्तमोत्तम प्राप्स्यसेपरमामृद्धिं
विमुक्तःकुष्ठरोगतः आशाभंगोनतस्यस्यात्कदाचिदपिजन्मनि एतस्मात्कारणाद्वत्सकुरुष्वव्रतमुत्तमं एतच्छ्रुत्वावचःसांबःपि
त्राकृष्णेनभाषितं व्रतंचरित्वासंप्राप्तःसर्वसिद्धिंसुदुर्लभां यइदंशृणुयाद्भक्त्याश्रावयेद्वापिमानवः तावुभौपुण्यकर्माणौरवि
लोकमवाप्नुतः इतिश्रीस्कंदपु॰ आशादित्यव्रतंसंपूर्णं अथआश्विनशुक्लांत्यभानुवासरमारभ्यमाघशुक्लसप्तम्यवधि
दानफलव्रतं तत्रपूजा ध्येयःसदासवितृमंडलमध्यवर्तीनारायणःसरसिजासनसन्निविष्टः केयूरवान्मकरकुंडलवान्किरीटीहारी
हिरण्मयवपुर्धृतशंखचक्रः इतिध्यानं जगन्नाथाय॰ आवाह॰ पद्मासनाय॰आसनं॰ग्रहपतये॰ पाद्यं॰ तमोहर्त्रे॰ अर्घ्यं॰ मित्राय॰

आचमनीयं॰ विश्वतेजसे॰ पंचामृत॰ सवित्रे॰ शुद्धोदक॰ जगत्पतये॰ वस्त्रं॰ त्रिमूर्तये॰ यज्ञोपवीतं॰ हरये॰ गंधं॰ सूर्याय॰ अक्षतान्
भास्कराय॰ पुष्पं॰ अहस्पतये॰ धूपं॰ अज्ञाननाशिने॰ दीपं॰ लोकेशाय॰ नैवेद्यं॰ रवये॰ तांबूलं॰ भानवे दक्षिणां॰ पूष्णे॰ फलं॰ खगायन॰
नीराजनं॰ भास्कराय॰ पुष्पांजलिं॰ सर्वात्मनेन॰ प्रदक्षिणां॰ नमस्ते पद्महस्ताय नमस्ते वेदमूर्तये नमस्ते देवदेवेश नमस्ते सर्वकामद
नमस्कारः दिवाकर नमस्तुभ्यं पापनाशाय भास्कर त्रयीमयाय विश्वात्मन् गृहाणार्घ्यं नमोस्तु ते अनेन द्वादशार्घ्याणि दद्यात् ततः
ब्राह्मणपूजनं इति पूजा अथ कथा पितृगृहे वर्तमाना कुंती व्यासं ददर्श ह नमस्कृत्वा तु तं भक्त्या पाद्यार्घ्याचमनीयकं दत्वासंप्र
श्नं तं व्यासं कुंती मुकुलितांजलिः पतिपुत्रान्नमोक्षार्थं व्रतं ब्रूहि महामुने व्यास उवा॰ शृणु दानफलं नाम वच्मि सर्वव्रतोत्तमं कैलास
शिखरे रम्ये पार्वती परमेश्वरं व्रतानां सर्वदानानामुत्तमं ब्रूहि तत्वतः शंकर उवा॰ साधु पृष्टं त्वया देवि त्वद्युच्यते सर्वतः शृणु भूमौ तु
भारते वर्षे पुण्ये च यमुनातटे ऋषिपत्नीसमूहश्च व्रतं कर्तुं समागतः तत्र गत्वा देवि शृणु प्रवदिष्यति ताः शृणु शंभोरनुज्ञया देवी कैला
सादागता भुवि यमुनां गंतुकामा सा ददर्श कुसुमावतीं कांचिन्मार्गे तिदुःखेन क्लिश्यंतीं च विपुत्रकां विदेहवासिनीं दीनां पतिभ्रष्टां
सुदुःखितां कुसुमावतीं तदा देवी त्युवाच मधुरं वचः आगच्छ तं मया सार्धं करिष्याव शुभव्रतं पत्या च सह संयोगः पुत्रप्राप्तिर्भ
विष्यति धनप्राप्तिश्च बहुला कृते दानफलव्रते तया सह व्रतं त्वेतत्कर्तुं मासाशु विस्मिता तथैव च पतिभ्रष्टा पुत्रहीनास्मि दुःखिता इ

त्यन्यात्यवदद्देवीं मयासहव्रतंकुरु तच्छ्रुत्वातांगृहीत्वातुताभ्यांसार्धंजगामह पुण्यांचयमुनांगत्वापूर्वाण्हेभानुवासरे तत्रदृष्ट्वातुसादे
वीपप्रच्छरुक्मीकंदंबकं इदंव्रतंकिमेतन्मेवक्तव्यंतुऋषिस्त्रियः स्त्रियऊः पुण्यंव्रतमिदंदेविसौरंपापप्रणाशनं सर्वसंपत्करंस्त्री
णांपतिपुत्रान्नमोक्षदं धर्मार्थकाममोक्षादीन्ददातीदंव्रतंनृणां कन्यादानसहस्राणांगोदानानांभिलक्षकं भूहिरण्यतिलादीनांसर्वे
षामधिकंशिवं सर्वदानस्यफलदंतस्माद्दानफलंव्रतं तच्छ्रुत्वापार्वतीप्राहकरिष्यामोवयंव्रतं दानफलंव्रतंब्रूहिकालद्रव्यविशेषतः
स्त्रियऊः पद्मासनःपद्मकरःपद्मगर्भसमद्युतिः सप्ताश्वरथसंयुक्तोद्विभुजश्चसदारविः ध्येयःसदासवितृमंडलमध्यवर्तीनारा
यणःसरसिजासनःचक्रः एवंध्यात्वाद्विजःसम्यक् भास्करंदेवरूपिणं आवाहयेज्जगन्नाथंभास्करंवेदरूपिणं नमःपद्मासनायेति
दद्यादासनमुत्तमं पाद्यंग्रहपतेतुभ्यंमित्रायाचमनंतथा त्रैलोक्यांधतमोहंत्रेअर्घ्यंदद्यात्प्रयत्नतः पंचामृतविधानेनस्नापयेद्वि
श्वतेजसं शुद्धोदकंचदद्याद्वैसवित्रेचहिपार्वति जगत्पतिंतुवस्त्रंचत्वुपवीतंत्रिमूर्तये रक्तगंधंतुहरयेदद्यात्सूर्यायचाक्षतान् दद्या
त्पुष्पंभास्कराय करवीरादिकंशुभं अहस्पतिंतुवेधूपंदीपमज्ञाननाशिने लोकेशायचनैवेद्यंतांबूलंरवयेतथा दक्षिणांभानवेदद्या
त्तथार्तिक्यंखगायच फलंचपूष्णेदद्याद्वैसर्वकामार्थसिद्धये पुष्पांजलिंभास्करायदद्याद्वैपरयामुदा सर्वात्मनेचदद्याद्वैप्रदक्षिणाश्च
पुनःपुनः नमस्तेदेवदेवेशनमस्तेवेदमूर्तये नमःकमलहस्तायआदित्यायनमोनमः नमस्कुर्यादनेनैवप्रार्थयेद्विश्वतेजसं रक्तगं

धाक्षैस्ताम्रपात्रेणार्घ्यंसमंत्रकं दद्यादनेनमंत्रेणव्रतसंपूर्तिहेतवे दिवाकरनमस्तुभ्यंपापनाशायभास्कर त्रयीमयार्कविश्वात्मन्गृहा
णार्घ्यंनमोस्तुते एवंद्वादशवारंच व्रतीदद्यात्समंत्रकं तैलाम्ललवणक्षारंवर्जयित्वातुभोजने बहुबीजफलंवर्ज्यंशेषंचैवतुभोजयेत् कंद
मूलफलाहारोविशेषेणफलप्रदः नीवारधान्यदध्यादिविशेषःसद्रसःस्मृतः एवंकुर्याद्व्रतंसम्यक्मर्त्येकेभानुवासरे माघमासेशुक्लप-
क्षेसप्तम्यांयावदंतिकं षष्ठ्यांतुपौष्यविधिवत्सप्तम्यामुदयेरवेः रवेरर्घ्यंचविधिवत्प्रतिमांवस्त्रसंयुतां आचार्यणाग्निमादायगोमयेनोप
लिप्यच सघृतंपरमान्नंचहोमयेत्सौरमंत्रतः पायसंप्रतिमांवस्त्रंब्राह्मणायनिवेदयेत् एवंकुर्यात्तंचवर्षेपंचधान्यंसमर्पयेत् पंचप्रस्थ
प्रमाणंतुप्रथमेव्रीहिमेवच गोधूमांश्चद्वितीयेब्देतृतीयेचणकास्तथा चतुर्थेतिलदानंचपंचमेमाषमेवच सफलांदक्षिणांदद्याद्विप्रान्
द्वादशभोजयेत् एवंकुर्याद्व्रतंसम्यक्संपूर्णफलमाप्नुयात् तच्छ्रुत्वातागृहीत्वाथचक्रेव्रतमुत्तमं पद्मावतीप्रतिमाप्यदमयंतीयथान
लं सुमित्राप्राप्यपुत्रंचमानयंतीत्वुमांबहु सर्वभाग्ययुतागौरीस्वर्णमाधूफलंतथा तदहोत्वागतामार्गेददर्शब्राह्मणोत्तमं विप्रायतत्फ
लंदत्वाततःशिवपुरंययौ ततःसफलविप्रस्यगृहंगत्वासविस्मयः धनधान्यसमृद्धस्तुबहुगोधनसंकुलः सर्वरत्नमयोभूत्वाभार्यांवच
नमब्रवीत् सर्वसंपत्प्रदंचाद्यकिंकृतंहिलयाशुभं साब्रवीद्भगवन्स्वामिन् भवद्भिःफलमाहृतं स्वर्णमाधूफलंतच्चकेनदत्तंवदप्रभो म
हादेव्याफलंदत्तंपार्वत्याप्यर्पयामम इतितस्यवचःश्रुत्वाभार्यावचनमब्रवीत् गंतव्यमाशुकैलासंमयासार्धंत्वयाप्रभो ततःशिवपुरंमा

सोभार्ययासंयुतोद्विजः नमस्कृत्ययथाभक्त्यापप्रच्छेदंशिवांद्विजः तत्फलंकथ्यतांदेविकथंप्रामंत्वयाशुभं ततोदेव्याचतत्सर्वंकथितंफल
दायकं तदागत्यकृतंसर्वंतूर्णंदानफलव्रतं कुंतित्वयापिकर्तव्यमिदंदानफलव्रतं यःपठेदिदमाख्यानंशृणोतिश्रद्धयान्वितः तेसर्वेपापनिर्मुक्ता
यास्यंतिपरमांगतिं इतिश्रीस्कं॰ दानफलव्रतंसंपू॰ अथसोमवा॰ पूजाविधिः येभ्योमातेतिजपित्वा आगमार्थंतु॰ घंटानादंकृत्वा
अपसर्पंतितिछोटिकामुद्रां तीक्ष्णदंष्ट्रेतिक्षेत्रपालंसंप्रार्थ्य आचम्यप्राणानायम्यतिथ्यादिसंकीर्त्य ममसकुटुंबस्यक्षेमस्थैर्यविजया-
युरारोग्यैश्वर्याभिवृद्ध्यर्थंउमामहेश्वरप्रीत्यर्थंचतुर्दशवर्षपर्यंतंसोमवारव्रतंकरिष्ये तदंगत्वेनषोडशोपचारैरुमामहेश्वरपूजनंकरि-
ष्ये ध्यायेन्नित्यंमहेशंरजतगिरिनिभंचारुचंद्रावतंसंरत्नाकल्पोज्ज्वलांगंपरशुमृगवराभीतिहस्तंप्रसन्नं पद्मासीनंसमंतात्स्तुत
ममरगणैर्व्याघ्रकृत्तिंवसानंविश्वाद्यंविश्ववंद्यंनिखिलभयहरंपंचवक्त्रंत्रिनेत्रं ध्यानं ॐनमःशिवायेतिषोडशोपचारैःपूजयेत्
अथकथा सूतउवा॰ नित्यानंदमयंशांतंनिर्विकल्पंनिरामयं शिवतत्वमनाद्यंतंयेविदुस्तेपरंगताः विरक्ताःकामभोगेभ्योयेचकुर्वंत्य
हैतुकीं भक्तिंपरांशिवेधीरास्तेषांमुक्तिर्नसंशयः विषयानभिसंधाययेकुर्वंतिशिवेरतिं विषयैर्नाभिभूयंतेभुंजानास्तत्फलान्यपि ये
नकेनापिभावेनशिवभक्तियुतोनरः नविनश्यतियात्येवकालेनापिपरांगतिं आरूरुक्षुःपरंस्थानंविषयांस्त्यक्तुमक्षमः पूजयेत्कर्मणा
शंभुंभोगांतेशिवमाप्नुयात् अशक्ताःकेचिदुत्स्रष्टुंमायाविषयवासनां अतःकर्ममयात्वीक्ताकामधेनुःशरीरिणां मायामयेपिसंसारेये

विहृत्यचिरंसुखं मुक्तिमिच्छंतिदेहांते तेषांधर्मोयमीरितः शिवपूजासदालोकेहेतुःस्वर्गापवर्गयोः सोमवारेविशेषेणप्रदोषादिगुणान्वि
ते श्रावणेचैत्रवैशाखेवऊर्जेवामार्गशीर्षके प्रथमेसोमवारेतुकुर्याद्व्रतमुत्तमं केवलंचापियेकुर्युःसोमवारेशिवार्चनं नतेषांविद्यतेकिंचि
दिहामुत्रचदुर्लभं उपोषितःशुचिर्भूत्वासोमवारेजितेंद्रियः वैदिकैर्लौकिकैर्मंत्रैर्विधिवत्पूजयेच्छिवं ब्रह्मचारीगृहस्थोवाकन्यावा-
पिसभर्तृका विधवावापिसंपूज्यलभतेवरमीप्सितं अत्रापिकथयिष्यामिकथांश्रोतृमनोहरां श्रुत्वामुक्तिंप्रयात्येव भक्तिर्भवतिशांभवी
श्रुत्वाकृतधियःशंभोर्भक्तिंकुर्वंतिसर्वदा आर्यावर्तेनृपःकश्चिदासीद्धर्मभृतांवरः चित्रधर्मेतिविख्यातोधर्मराजोदुरात्मनां स-
गोप्ताधर्मसेतूनांशास्ताद्दुष्पथगामिनां यष्टासमस्तयज्ञानांत्राताशरणमिच्छतां कर्तासकलपुण्यानांदातासकलसंपदां जेतासप
त्नवृंदानांभक्तःशिवमुकुंदयोः सोनुकूलासपत्नीषुपुत्रमेकंनलब्धवान् चिरेणप्रार्थितोलेभेकन्यामेकांवरानना सलब्ध्वातनयांदि
ष्ट्याहिमवानिवपार्वतीं आत्मानंदेवसदृशंसंपूर्णत्वमनोरथं सएकदाजातकलक्षणज्ञानाहूयसर्वान्द्विजान्दृष्टसुमुख्यान् कौतूहलेना
भिनिविष्टचेताःपप्रच्छकन्याजननेफलानि अथतत्रब्रवीदेकोबहुज्ञोद्विजसत्तमः एषासीमंतिनीनाम्नाकन्यानवमहीपते उमेवमां
गल्यवतीदमयंतीवरूपिणी भारतीवकलाभिज्ञालक्ष्मीरिवमहागुणा स्वप्रजादेवमातेवजानकीवधृतव्रता रविप्रभेवसत्कांतिश्चं
द्रिकेवमनोरमा दशवर्षसहस्राणिसहभर्त्राप्रमोदते प्रसूयतनयान्सौपरंसुखमवाप्स्यति इत्युक्तवंतंनृपतिर्धनैःसंपूज्यतंद्विजं

अवापपरमांप्रीतिंतद्वागमृतसेवया अथान्योपिद्विजःप्राहधैर्यवानविशंकितः एषाचतुर्दशेवर्षेवैधव्यंप्रतिपत्स्यति इत्याकर्ण्यवचस्त
स्यवज्रनिर्घातनिष्ठुरं मुहूर्तमभवद्राजाचिंताव्याकुलमानसः अथसर्वान्समुत्सृज्यब्राह्मणानब्रह्मवत्सलः सर्वदैवज्ञतंमत्वानिश्चि
तःप्रार्थितोभवत् सापिसीमंतिनीबालाक्रमेणागतशैशवा वैधव्यमात्मनोभाविसंश्रुत्यात्मसरवीमुखात् परंनिर्वेदमापन्नाचिंतया
मासबालिका याज्ञवल्क्यमुनेःपत्नीमैत्रेयींपर्यपृच्छत मातस्त्वच्चरणांभोजंप्रपन्नास्मिभयाकुला सौभाग्यवर्धनकरं ममशंसि
तुमर्हसि इतिप्रपन्नांनृपतेःकन्यांप्राहमुनेःसती शरणंव्रजतन्वंगिपार्वतींशिवसंयुतां सोमवारेशिवंगौरींपूजयस्वसमाहिता उपो-
षिताचसुस्नाताविरजांबरधारिणी मितवाक्निश्चलमतिःपूजांकृत्वायथोचितां अब्दमेकंव्रतंकुर्याद्व्रतोद्यापनमाचरेत् उमयास
हितंरुद्रंसुवर्णेनचकारयेत् रौप्येणवृषभंकृत्वाकलशोपरिविन्यसेत् तस्याग्रेलिंगतोभद्रंब्रह्माद्यास्थापनंतथा स्वशारवोक्तेनविधि
नाहुनेद्घृततिलोदनं पृथक्शिवशिवामंत्रैरष्टोत्तरशतद्वयं कुर्यादुद्यापनंतस्यसमाप्तौयदुदीरितं उद्यापनविनायत्तुतद्व्रतंनिष्फलंभ
वेत् ब्राह्मणान्भोजयित्वाथशिवंसम्यक्प्रसादय पापक्षयोभिषेकेणसाम्राज्यंपीठपूजनात् गंधदानाच्चसौभा-
ग्यमायुरक्षतदानतः धूपदानेनसौगंध्यंकांतिर्दीपप्रदानतः नैवेद्येनमहाभोगोलक्ष्मीस्तांबूलदानतः धर्मा
र्थकाममोक्षाश्चनमस्कारप्रसादतः अष्टैश्वर्यादिसिद्धीनांजपएवहिकारणम् होमेनसर्वसौख्यानां

समृद्धिरुपजायते सर्वेषामेवदेवानांतुष्टिःसंयमिभोजनात् इत्थमाराध्यशिवंसोमवारेशिवामपि अत्यापदमपिप्राप्तांनिस्तीर्यसुभ-
गाभव घोरात्घोरंविपन्नापिमहाक्लेशभयानकं शिवपूजाप्रभावेननरिष्यसिमहद्भयात् इत्थंसीमंतिनींसम्यक्अनुशास्यमुनेःसती
ययौसापिवरारोहाराजपुत्रीतथाकरोत् दमयंत्यानलस्यासीदिंद्रसेनाह्वयःसुतः तस्यचंद्रांगदोनामपुत्रोभूच्चंद्रसंनिभः चित्रवर्मा
नृपःश्रेष्ठःसमाहूयनृपात्मजं कन्यांसीमंतिनींतस्मैप्रायच्छद्गुर्वनुज्ञया अभून्महोत्सवस्तत्रतस्याउद्वाहकर्मणि यत्रसर्वमहीशा
नांसमुदायोमहानभूत् तस्याःपाणिग्रहंकालेकृत्वाचंद्रांगदःकृती उवासकतिचिन्मासान्तत्रैवश्वशुरालये एकदायमुनांतर्तुंस
राजतनयोबली ममज्जसहकैवर्तैरावर्ताभिहनातरी हाहेतिशब्दःसुमहानासीत्तस्यास्तटद्वये पश्यतांसर्वसैन्यानांप्रलापोदिव
मस्पृशत् तच्चसीमंतिनीश्रुत्वापपातभुविमूर्छिता इंद्रसेनोपिराजेंद्रःपुत्रवार्तांसुदुःसहां आबालवृद्धवनिताःशुश्रुवुःशोकविह्व
लाः साचसीमंतिनीसाध्वीभर्तृलोकमियासती पित्रानिषिद्धास्नेहेनवैधव्यंप्रतिपद्यत मुनिपत्न्योपदिष्टंयत्सोमवारव्रतंशुभं नत
त्याजशुभाचारावैधव्यंप्राप्तवत्यपि एवंचतुर्दशेवर्षेदुःखंप्राप्यसुदारुणं ध्यायंत्याःशिवपादाब्जंवत्सरत्रयमत्यगात् ५० चंद्रांग
दोपिनद्यंतर्निमग्नोयमुनाजले अधोधोमज्जमानोसौददर्शोरगकामिनीः जलक्रीडानुसक्तास्ताःदृष्ट्वाराजकुमारकं विस्मितास्त
मथोनिन्युःपातालंपन्नगालयं सनीयमानस्तरसापन्नगीभिर्नृपात्मजः तक्षकस्यपुरंरम्यंविवेशपरमाद्भुतं सोपश्यद्राजतनयो

महेंद्रभवनोपमं नागकन्यासहस्रेणसमंतात्परिवारितं इक्ष्वाराजसूनोधीरः प्रणिपत्यसभास्थले उत्थितःप्रांजलिस्तस्थौतेजसा-
क्षिप्तलोचनः नागराजोपितंइक्ष्वाराजपुत्रंमनोरमं अथपृष्टोराजपुत्रस्तक्षकेनमहात्मना कस्यासीत्तनयःकस्त्वंकोदेशःकथ-
मागतः राजपुत्रउ॰ अस्तिभूमंडलेकश्चिद्देशोनिषधसंज्ञकः तस्याधिपोभवद्राजानलोनाममहायशाः सत्पुण्यकीर्तिःक्षिति
पोदमयंत्याःपतिःप्रभुः तस्यासीदिंद्रसेनाख्योपुत्रस्तस्यमहात्मनः चंद्रांगदोस्मिनाम्नाहंनवोढःश्वशुरालये विहरन्यमुना-
तोयेनिमग्नोदैववचोदितः एताभिःपन्नगस्त्रीभिरानीतोस्मितवांतिकं इक्ष्वाहंतवपादाब्जपुण्यैर्जन्मांतरार्जितैः अथधन्योस्मि
धन्योस्मिकृतार्थोपितरोमम तक्षकउ॰ भोभोनरेंद्रदायादमाभैषीर्धीरतांव्रज सर्वदेवेषुकोदेवोयुष्माभिःपूज्यतेसदा
राजपुत्रउवा॰ योदेवःसर्वदेवेषुमहादेवइतिस्मृतः पूज्यतेसहिविश्वात्माशिवोस्माभिरुमापतिः इत्याकर्ण्यवचस्तस्यत
क्षकःप्रीतमानसः जातभक्तिर्महादेवेराजपुत्रमभाषत तक्षकउ॰ परितुष्टोस्मिभद्रंतेनवराजेंद्रनंदन दत्तवान्बहुरत्ना-
निदिव्यान्याभरणानिच वाहनायददावेकंराक्षसंपन्नगेश्वरः तत्साहायार्थमेकंचपन्नगेंद्रःकुमारकं नियुज्यतक्षकःप्री
त्यागच्छेतिविससर्जतं इतिचंद्रांगदःसर्वंसंगृह्यविविधंधनं अश्वंकामगमारुह्यताभ्यांसहविनिर्ययौ ततोमुहूर्तेनोन्म-
ज्यतस्मादेवनदीजलात् विजहारतटेरम्येदिव्यमारुह्यवाजिनं अथास्मिन्समयेतन्वीसाचसीमंतिनीसती स्नातुंसमाययौ

तत्रसखीभिः परिवारिता साद्दर्शनदीतीरे विहरंतंनृपात्मजं रक्षसानररूपेणनागरूपेणचान्वितं दृष्ट्वावरूह्यतुरगादुपविष्टः सरि
त्तटे चंद्रांगदोवरारोहासुपवेश्येदमब्रवीत कात्वंकस्यकलत्रंवाकस्यासीःत्वनयासनि किमीदृशंगताबाल्येदुःसहशोकलक्षणं
इतिस्नेहेनसंपृष्टासावधूरश्रुलोचना लज्जितास्वयमाख्यातुंतत्सखीसर्वमब्रवीत् इयंसीमंतिनीनाम्नास्नुषामगधभूपतेः
चंद्रांगदस्यमहिषीतनयाचित्रवर्मणः अस्याःपतिर्दैवयोगान्निमग्नोस्मिन्महाजले तेनेयंप्राप्तवैधव्यबालादुःखेनपीडिता एवं
वर्षत्रयंनीतशोकेनापिबलीयसा अद्येंदुवासरेप्राप्तेस्नातुमत्रसमागता श्रुत्वाचंद्रांगदःसर्वंप्रियायाःशोककारणं अथाश्वास्यप्रि
यांतन्वींविविधैर्वचनैर्नृपः क्वापिलोकेमयादृष्टस्तवभर्तावरानने त्वद्भूतात्वरणाच्छ्रांतःसद्यएवागमिष्यति नाशयिष्यतितेशोकंद्वि
त्रैरेवध्रुवंदिनैः एतच्छंसितुमायातस्तवभर्तुःसखास्म्यहं अत्रकार्योनसंदेहःशपामिशिवपादयोः तावत्त्वयात्वदिदंस्थाप्यंप्रका
श्यंनचकुत्रचित् लज्जानम्रमुखीवक्रेणैशशंसान्यप्रयोजनं इमंवृत्तांतमाख्यातंत्वत्पित्रोःशोकनाशयोः इत्युक्त्वाश्वंसमारुह्यज
गामचतत्क्षणेप्रति सापितद्वचनंश्रुत्वासुधाधाराशताधिकं एषएवपतिर्मेस्याध्रुवंनान्योभविष्यति परलोकादिहायातःकथमेष
स्वरूपधृक् मुनिपत्न्यायदुक्तंमेपरमापद्गतापिच व्रतमेतत्कुरुष्वेतितस्यवाफलमद्यमे नूनंतस्यावचःसत्यंकोविद्यादीश्वरेहि
तं निमित्तानिचदृश्यंतेमंगलानिदिनेदिने प्रसन्नेपार्वतीनाथेकिमसाध्यंशरीरिणां इत्थंविमृश्यबहुधासापुनर्युक्तसंशया ए

वंचंद्रांगदः पत्नीमवापसमयेशुभे ययौस्वनगरींभूयः श्वशुरेणानुमोदितः चंद्रसेनोपितत्पत्नीराज्येस्थाप्यस्वमात्मजं तपसाशिवमा
राध्यलेभेसंयमिनांगतिं दशवर्षसहस्राणि सीमंतिन्यास्वभार्यया सार्धंचंद्रांगदोराजाबुभुजेविषयान्बहून् प्रसूयतनयानष्टौक
न्यामेकांवरानना पतिंसीमंतिनीलेभे पूजयंतीमहेश्वरं शिवलोकंततोगत्वाशिवेनसहमोदते विचित्रमिदमाख्यानंमयासमनु
वर्णितं यः पठेच्छृणुयाद्भक्त्याप्राप्नोतिपरमांगतिं इतिश्रीस्कं० सोमवारकथासमाप्ता अथोद्यापनं स्कंदउवा० व्रतस्योद्या
पनंकर्मकथंकार्यंचमानवैः कोविधिः कानिद्रव्याणिकथयस्वममप्रभो ईश्वरउ० शृणुषण्मुखयत्नेनलोकानांहितकाम्यया उद्या
पनविधिंचैवकथयामितवाग्रतः यदासंजायतेवित्तंभक्तिः श्रद्धासमन्विता सएवव्रतकालश्चयतोनित्यंहिजीवितं चतुर्दशाब्दक
र्तव्यंसोमवारव्रतंशुभं श्रावणेकार्तिकेज्येष्ठेवैशाखेमार्गशीर्षके स्नात्वाप्रातःशुचिर्भूत्वाशुक्लांबरधरोनरः कामक्रोधाद्यहंकार
द्वेषपैशुन्यवर्जितः संपाद्यसर्वसंभारान्मंडलंतत्रकारयेत् वस्त्रैः पुष्पैः समाच्छन्नंपट्टवस्त्रैश्चशोभितं तन्मध्येलेखयेद्दिव्यंलिं
गतोभद्रमंडलं अथवासर्वतोभद्रंमंडपांतः प्रकल्पयेत् शोभोपशोभासंयुक्तंदीपैः सर्वत्रसोज्ज्वलं अव्रणंसजलंकुंभंतस्यो
परिष्टुविन्यसेत् सौवर्णंराजतंताम्रंमृन्मयंवापिकारयेत् आचार्यंवरयेत्तत्रऋत्विग्भिः सहितंशुचिः शिवरूपाश्चतेविप्राःपू
ज्याश्चंदनपुष्पकैः अनुज्ञातश्चतैर्विप्रैः शिवपूजांसमारभेत् रुद्रनाम्नानमोंतेनब्राह्मणानपिपूजयेत् कुंभोपरिन्यसेद्देवमुम-

यासहितंशिवं सौवर्णेप्यथवारौप्ये वृषभेसंस्थितंशुभं उमामहेश्वरींमूर्तिंपूजयेत्सुसमाहितः वस्त्रयुग्मेनसंवेष्ट्यबिल्वपत्रैःप्रपू
जयेत् स्वगृह्योक्तेनविधिनाकृत्वाग्निस्थापनंततः ततोहोमंचमंत्रेणत्र्यंबकेणचकारयेत् गौरीर्मिमायेतिमंत्रेणशानसप्टोत्तरद्वयम्
पलाशानांसमिद्भिश्चयवव्रीहितिलाज्यकैः पूर्णाहुतिंततोदद्यात्कृत्वास्विष्टकृदादिकं होमांतेचगुरुंपूज्यसपत्नीकंसमाहितः।
प्रतिमांकुंभसहितामाचार्यायनिवेदयेत् शंभोप्रसीददेवेशसर्वलोकेश्वरप्रभो तवरूपप्रदानेनममसंतुमनोरथाः प्रतिमादानमंत्रः
यत्कृत्यादेवदेवेशमयाव्रतमिदंकृतं न्यूनंवाप्यक्रियाहीनंपरिपूर्णंतदस्तुमे भुंजीतसहधर्मात्माशिष्टैरिष्टैस्वबंधुभिः अनेनैवविधा
नेनयइदंव्रतमाचरेत् यंयंचिंतयतेकामंतंतंप्राप्नोतिमानवः इहलोकेसुखीभूयाद्भुक्त्वाभोगान्यथेप्सितान् इतिश्रीसोमवारव्र० संपूर्ण
अथप्रकारांतरेणसोमवारव्रतंलिख्यते गंधर्वउवाच कथंसोमव्रतंकार्यंविधानंतस्यकीदृशं कस्मिन्कालेतुकर्तव्यंसर्वंविस्तरतोव
द गौरीशंगउ० साधुसाधुमहाप्राज्ञसर्वभूतोपकारक यन्नकस्यचिदाख्यातंतदद्यकथयामिते सर्वरोगहरंदिव्यंसर्वसिद्धिप्रदाय
कं सोमवारव्रतंनामसर्वभूतोपकारकं सोमवारव्रतंनामसर्वकामफलप्रदं सर्वकामिकविज्ञेयंवर्णानांशुभकारकं नारीनरैःस
दाकार्यंदृष्टादृष्टफलोदये ब्रह्मविष्ण्वादिभिर्देवैः कृतमेतन्महाव्रतं पुनस्तत्सोमराजेनदक्षशापहतेनच अभिमानयुतेनाथ-
शंभुनैवपरेणतु ततस्तुष्टोमहादेवःसोमराजस्यभक्तितः तेनोक्तंयदितुष्टोसिनिवस्वात्रनिरंतरं यावच्चंद्रश्चसूर्यश्चयाव

त्तिष्ठंति भूधराः तावन्मेस्थापितंलिंगमुमयासहहितिष्ठतु रोहिण्याः पतिरेवंतुप्रार्थयित्वामहेश्वरं ततः शशांकशरीरोसौगगनस्थो
विराजते ततःप्रभृतियेकेचित्कुर्वंतिभुविमानवाः तेपितत्पदमायांतिविमलांगाश्चसोमवत् अत्रकिंबहुनोक्तेनविधानंतस्यकी
र्तये यस्मिन्कस्मिंश्चिन्मासेचशशांकेसौम्योभवेद्यदा दंतशुद्धिंपुराब्राह्मेकृत्वास्नानंसमाचरेत् स्वधर्मविहितंकर्मकृत्वास्थानेम-
नोरमे अव्रणाभिनवंशर्कद्दं न्यसेत्कुंभंसुशोभनं चूतपल्लवविन्यासेचंदनेनविचर्चिते श्वेतवस्त्रपरीधानेसर्वाभरणभूषिते
कुंभेपात्रंचविन्यस्यत्वाधारसहितंशिवं अष्टौविघ्नेश्वरान्देवान्सोमनाथसशक्तिकं वासंसासहितंतत्रश्वेतपुष्पैःप्रपूजयेत्
विविधंभक्ष्यभोज्यंचफलंवैबीजपूरकं अनेनैवतुमंत्रेणपूजांहोमंसमाचरेत् कृत्वैवंवंदनंरात्रौप्राप्यचाज्ञांस्वपेन्नरः दर्भश-
य्यांसमारूढोध्यायेत्सोमेश्वरंहरं एवंकृतेतुप्रथमेकुष्ठनाशनंभवेत् द्वितीयेसोमवारेतुकरंजंदंतधावनं देवंसंपूजयेत्सू
क्ष्मंज्येष्ठाशक्तिसमन्वितं शतपत्रैःपूजयित्वामधुप्राश्ययथाविधि नारिंगंतत्रदत्वातुशेषंपूर्ववदाचरेत् एवंकृतेद्वितीयेथगो
लक्षफलमाप्नुयात् सोमवारेतृतीयेथवटजंदंतधावनं शिवोत्तमंयजेद्देवंरौद्रीशक्तिसमन्वितं पूजयेज्जातिपुष्पैश्चगोमूत्रंप्रा
शयेन्निशि नैवेद्यंदापयेच्छुद्धंभक्ष्यभोज्यसमन्वितं एवंकृतेतृतीयेतुकोटियज्ञफलंलभेत् चतुर्थेसोमवारेतुअपामार्गसमु-
द्भवैः कृत्वाकाष्ठैर्दंतशुद्धिंतथानंतेप्रपूजयेत् दाडिमीफलसंयुक्तंनैवेद्यंक्षीरशर्करा दध्नस्तुप्राशनंकृत्वादर्भस्योजागृयान्नि

शि एवंकृतेचतुर्थेतु यज्ञायुतफलंलभेत् पंचमेसोमवारेतुह्लक्षाश्वत्थसमुद्भवं दंतकाष्ठंततःकृत्वाव्द्येकंरुद्रंप्रपूजयेत् नैवेद्येदधिभ
क्तंचकूष्मांडीफलसंयुतं घृतंतुप्राशयेत्तत्रआचार्यंपूजयेत्ततः एवंकृतेपंचमेपिसप्तजन्मसमुद्भवैः ब्रह्महत्यादिभिःसर्वैर्मुच्यते
पापराशिभिः सोमवारेपुनःषष्ठेनिर्गुंडीदंतधावनं त्रिमूर्तिंपूजयेद्देवंरक्तपुष्पैर्विधानतः देवींकल्याविकरिणींफलपुष्पसमंडकैः
कुशोदकंतुसंप्राश्यगीतैर्नृत्यैस्तुजागृयात एवंकृतेततःषष्ठेषडब्दंचफलंलभेत् सप्तमेसोमवारेचप्लक्षजंदंतधावनं श्रीकंठंपूजये
द्देवंततःश्रीवृक्षपल्लवैः बलप्रमथिनींदेवींपूजयेच्चविधानतः विविधंभक्ष्यभोज्यंचनारीकेरसमन्वितं दुग्धंवैप्राशयेत्तत्रशेषंपूर्व
वदाचरेत् सप्तसागरदानस्यसम्यग्गामस्ययत्फलं सोमवारेसप्तमेतुकृतेतत्फलमाप्नुयात् अष्टमेसोमवारेथखदिरंदंतधावनम्
सर्वभूतदमंनाथंपूजयेद्देशिरवंडिनं स्रुगंधवृक्षकुसुमैर्यक्षकर्दमलेपनैः कदलीफलसंयुक्तंभक्ष्यंभोज्यंप्रदापयेत् गोमयंप्रा-
शयेद्रात्रौजागरंतत्रकारयेत् एवंकृतेष्टमेसोमेसंपूर्णफलमाप्नुयात् गंगास्नानेकृतेसोमेकोटिस्नानफलंस्मृतं दशभारसह-
स्राणिकुरुक्षेत्रेरविग्रहे विप्रायवेदविदुषेयद्दत्वाफलमाप्नुयात् तत्पुण्यंकोटिगुणितंसोमवारव्रतेकृते गजानांचशतेदत्तेलक्षेचर
थवाजिनां तत्फलंकोटिगुणितंसोमवारव्रतेकृते सर्वैश्वर्यसमायुक्तःशिवतुल्यपराक्रमः रुद्रलोकेवसेद्दीर्घंब्रह्मणासहमोदते
संप्राप्तेनवमेवारेकुर्यादुद्यापनंशुभं यथाप्रभवतिगंधर्वतथावक्ष्यामितेधुना मंडपेमंडनंकृत्वापताकाभिश्चतोरणैः द्वाराणिचापि

व्र॰रा॰

३४६

चत्वारिकुंडंकृत्वाविधानतः मध्येवेदीप्रकर्तव्याचतुरस्रासुशोभना निषाद्यमंडपंसम्यक्मध्येपद्मंचकल्पयेत् कलशानष्टदिग्भागे
सहिरण्यान्पृथक्पृथक् स्थापयित्वाशक्तयस्तुवामाद्याःपूर्वतःक्रमात् कर्णिकायांतुविन्यस्यश्रीसोमेशंमहाप्रभुं प्रतिरूपंप्रस
न्नायाजपाशांतिसमन्वितः होमपात्रादिकेद्रव्येमधुनापरिपूरिते रुक्मशय्यास्थितंदेवंयत्नस्थंपूजयेत्क्रमात् गंधपुष्पैश्चनैवेद्यै
र्भक्ष्यभोज्यैःपृथक्पृथक् वस्त्रालंकारतांबूलैश्छत्रचामरदर्पणैः दीपिकांचवितानंचपर्यंकंचसतूलिकं सोमेश्वरंसमुद्दिश्यदेय
पौराणिकेगुरौ पूजयित्वातथाचार्यंहोमंतत्रैवकारयेत् देवस्यसन्निधौसम्यक्रात्रौजागरणंचरेत् पंचगव्यंततःपीत्वाध्यायेत्सो
मेश्वरंहृदि प्रभातेथततःस्नात्वादेयागोश्चविधानतः ततोभक्त्यादिगंधर्वक्षीरखंडादिनिर्मितैः भक्ष्यभोज्यैरनेकैश्चभोजयेद्ब्रा
ह्मणान्यतीन् अष्टौविघ्नेश्वरायेचतैश्चहोमंसमाचरेत् वस्त्रयुग्मंततोदत्वागांचदत्वाविसर्जयेत् एवंकृतेव्रतेसम्यक्लभतेपुण्य
मक्षयं धनधान्यसमायुक्तोपुत्रदारैःसमन्वितः नकुलेजायतेतस्यदरिद्रोदुःखितोपिवा अपुत्रोलभतेपुत्रंवंध्यापुत्रवतीभवेत्
काकवंध्याचयानारीमृतपुत्राचदुर्भगा कन्याप्रसूतयाकार्यंरोगिभिश्चविशेषतः एवंकृतेविधानेतुदेहपातेशिवंव्रजेत् कल्पको
टिसहस्राणिकल्पकोटिशतानिच भुंक्तेसौविपुलान्भोगान्यावदाभूतसंप्लवं इत्येतत्कथितंसर्वंसोमवारव्रतंक्रमात् इतिश्री
स्कंदपु॰सोमवारव्रतंसंपूर्णं अथएकभुक्तसोमवारव्रतंलिख्यते श्रावणेचैत्रवैशाखेज्येष्ठेमार्गशिरेतथा प्रथमेसोमवारेचग्र

सो॰

३४६

पहीयाद्धनमुत्तमं यदाश्रद्धा भवेत्कर्तुः सोमवारव्रतंप्रति तदाचार्यंपुरस्कृत्यश्रद्धाभक्तिसमन्वितः स्नात्वाश्च शुचिर्भूत्वाशक्त्याब
रधरोनरः कामक्रोधाद्यहंकारद्वेषपैशून्यवर्जितः आहरेच्छ्वेतपुष्पाणिमालतीकुसुमानिच श्वेतपद्मानिदिव्यानिचंपकानितथैवच
कुंदमंदारजैःपुष्पैःपुन्नागशतपत्रकैः अर्चयेद्युमयासार्धंशंकरंलोकशंकरं मलयाद्रिजधूपेनधूपयेत्पार्वतीपतिं कामिकेनापिमंत्रेण
व्यापकेनमहेश्वरं पूजयेन्मूलमंत्रेणत्र्यंबकेणाथवापुनः भवायभवनाशायशर्वायशशिमौलिने रुद्रायनीलकंठायशिवायभवहा
रिणे ईशानायनमस्तुभ्यंसर्वकामप्रदायच नमोदेवाधिदेवायसर्वांगेपूजयेद्विभुं एवंसंपूज्यदेवेशमुपचारैः पृथक् पृथक् य-
थावित्तानुसारेण भक्त्यापादौप्रपूजयेत् शंकरायनमोजंघे शिवायेतिचजानुनी शूलपाणेनमोगुल्फे कट्यांशंभुंप्रपूजयेत् गुह्यं
स्वयंभुनामानं पूजयेत्पार्वतीपतिं ततोनमोमहादेवपूजयेन्नाभिमंडले उदरेविश्वकर्तारं पार्श्वयोःसर्वतोमुखं स्थाणुंस्तनौचसं
पूज्यनीलकंठंतुकंठके मुखंसंपूजयेन्नित्यंशिवनाम्नेमहात्मने त्रिनेत्रायचनेत्रायशिरसेनागभूषणे नमोदेवाधिदेवायसर्वांगेपू-
जयेद्विभुं एवंसंपूज्यदेवेशमुपहारैर्मनोरमैः यथावित्तानुसारेणतस्यपुण्यफलंशृणु सोमवारेर्चयेंतोयेपार्वत्यासहशंकरं तेलभं
त्यक्षयाल्लोकान्पुनरावृत्तिदुर्लभान् एकभक्तस्ययत्पुण्यंकथयामिसमासतः सप्तजन्मार्जितंपापमभेद्यंदेवदानवैः विनश्यत्येक
भक्तेननात्रकार्याविचारणा एवंसंवत्सरंयावद्भक्त्याव्रतमिदंचरेत् यस्मिन्मासेप्रारभेत्तस्मिन्मासिसमापयेत् उपवासेननैवा

यंसमाचरतिमानवः चिरंव्रतंप्रकुर्वीतव्रतंसंपूर्णतांनयेत् एवंव्रतप्रभावेनतत्सर्वंनिष्फलंभवेत् उमामहेश्वरंहैमंवृषभेनसमन्वितं
यथाशक्त्याप्रकर्तव्यंवित्तशाठ्यंनकारयेत् मंडलंकारयेद्दिव्यंतन्तुलिंगोद्भवंशुभं कलशंपयसापूर्णंश्वेतवस्त्रसमन्वितं पात्रंश
र्करयायुक्तंकुंभस्योपरिस्थापयेत् स्थापयेन्मंडलेदिव्यंकलशंकनकोज्ज्वलं तस्योपरिन्यसेद्देवंतत्वमंत्रविधानतः श्वेतवस्त्रयुगे
नैवपूजयेत्परमेश्वरं उपवीतंसोत्तरीयंभक्ष्याणिविविधानिच धान्यानियान्यभीष्टानितानितानिप्रकल्पयेत् शय्यांतूलींतथादर्शं
देवस्याग्रेप्रकल्पयेत् अथश्वेतानिपुष्पाणिदेवस्योपरिविन्यसेत् ततोहोमंप्रकुर्वीतशिवमंत्रेणवैव्रती पालाशाभिःसमिद्भिश्चजु
हुयाच्छतमष्टकं आप्यायस्वेतिमंत्रेणघृतदाज्याहुतीःशुभाः यवव्रीहितिलाज्येनऋत्विजश्चपृथक्पृथक् होमांतेचगुरुंपूज्यस
पत्नीकंसमाहितः वस्त्रैराभरणैश्चापिगृहोपकरणादिभिः श्वेतागौःकपिलावापिसुशीलाचपयस्विनी सवस्त्रवरपुच्छाचघंटा
भरणभूषिता दक्षिणासहितादेयाशिवःसंप्रीयतामिति ब्राह्मणान्भोजयेत्पश्चात्त्रयोदशसुशोभनान् घंटास्त्रयोदशादेया
वंशपात्रंसमाहितः इदंपीठंगृहाणत्वंसर्वोपस्करसंयुतं सर्वंमेपरिपूर्णंस्याच्छिवोमेप्रीयतामिति इतिश्रीस्कं॰सोमवारव्र॰
अथोद्यापनं कैलासस्थंमहादेवमपर्णासहितंशिवं पप्रच्छप्रणतोभूत्वाकिंचिदुद्यतमंगुहः देवताखिलदेवेशसर्वभूतात्म
कप्रभो त्वत्प्रसादान्मयापूर्वंविज्ञातंधर्मसाधनं किंचिज्ज्ञानव्यमस्त्यन्यत्वत्तएवमयाप्रभो यन्नदृष्टंश्रुतंवापितन्मेव्याख्यातुमर्ह-

सि किंदानंकिंनपस्तीर्थंकिंव्रतंवामहाफलं यस्मिन्कृतेमहाप्रीतिर्युवयोःस्याद्रुमेशयोः तन्मेत्वंपुत्रवात्सल्यात्सर्वलोकहितायच विशे
षंब्रूहिदेवेशयज्ज्ञात्वास्यान्महत्सुखं इत्याकर्ण्यवचस्तस्यप्रसन्नवदनोहरः परिष्वज्यस्कंदंप्रीत्याप्रोवाचेदंवचस्तदा शंकरउवाच
सम्यक्पृष्टंत्वयावत्सप्रीतोस्मिवचसानव अस्तिकिंचिद्व्रतंपुण्यंतन्मेकथयतःशृणु वेदशास्त्रपुराणानांयद्रहस्यंव्रतंमहत् यदद्य
कथनीयंतेत्वत्तःकोममवैप्रियः सोमवारव्रतंनामसर्वव्रतफलाधिकं यस्मिन्कृतेपराप्रीतिरावयोःस्याद्रुमेशयोः निशम्येतद्वच-
स्कंदःप्रोवाचवदतांवरं कीदृशंतद्व्रतंदेवविधानंतस्यकीदृशं कदाप्रारभ्यंकथंकार्यंकिंदानंकस्यपूजनं उद्यापनविधानंचविस्तरेणवद
स्वमे शिवउ० मधौमास्यष्टमीशुक्लाशिवेंदुदिनसंयुता तदाप्रारभ्यव्रतंचैतदनेनविधिनाशुभं प्रातःकृष्णतिलैःस्नात्वाआचार्य
सहितोव्रती पूर्वाण्हेविधिवत्कार्यमुमाशंकरपूजनं ततःपुष्पांजलिंदत्वाप्रणम्यदंडवद्भुवि विधिनानेनगृण्हीयाद्व्रतंसंकल्पपूर्वकं
गृण्हामिभवरोगार्तःसोमवारव्रतौषधं व्रतेनानेनमेप्रीतौभवतांपार्वतीश्वरौ विसर्जनंततःकुर्यादाचार्यंपूजयेत्ततः शिष्टैरिष्टैःप
रिवृतोभोजनंकारयेत्ततः अहःशेषंततोनीत्वासत्कथाश्रवणादिभिः शयीनाथस्ततोरात्रावभुक्तोब्रह्मचर्यवान् अनेनविधिना
वत्समदीयंवत्सरंयदा कुर्वन्व्रतमवाप्नोतिमह्यावंनात्रसंशयः तस्मिन्दिनेकृतंकिंचिद्दानंहोमोजपस्तथा व्रतंवाप्रीतिदंस्कंदद्युम
यासहितस्यमे अतःसोमाह्वयोवारःप्रशस्तोयंममप्रियः एवंसोमाष्टकंकृत्वाव्रतस्योद्यापनंशुभं माघाद्येपंचकेकार्यंशुक्लप-

क्षे विशेषतः शिवर्क्षतिथियोगानामेकैकेनापि संयुते सोमवारे विधातव्यं तथा चंद्रबलान्विते विधाय रदनोल्लेखं प्रातः स्नात्वा विधानतः आचार्यं वरयेदेकं विधिज्ञं श्रुतिपारगं पुराणस्मृतिधर्मज्ञं निगमागमवेदिनं उपोष्य सोमवारं च सायंसंध्यामुपास्य च शिवालये गृहे वापि शस्तोद्देशे यथवा गृहे अष्टांगुलोच्छ्रितां वेदीं वितस्तिद्वयसंमितां तस्यां षोडशपत्राणि तंडुलैः परिपूरयेत् विचित्ररचनोपेतां पताकाद्युपशोभितां चित्रां विचित्रैर्विविधैः फलराजिविराजितां एवं प्रकल्पयेद्वेदीं चतुरस्रां समंततः ध्यात्वा सम्यङ् नियमं कृत्वा सर्वाभ्युदयिकं तथा आचार्येण समं कुर्यान्मदाराधनमादरात् पद्ममध्ये नवीनं च धवलं स्थापयेद्घटं वाससा वेष्टितं पूर्णमक्षतैः परिपूरितं समंतादंतिकेचापि नामभिस्त्वीश्वरादिभिः गणेशं मातृकाश्चापि दुर्गां क्षेत्राधिपं तथा समाहितमनाः कोणेष्वाग्नेय्यादिषु विन्यसेत् ततः कनकसंभूतं मद्रूपमुमयान्वितं पंचामृतोदकैः स्नाप्य गंधपुष्पाक्षतैर्जलैः गृहीत्वावाहयेत्कुंभे ध्यायेन्मद्रूपमीदृशं त्र्यंबकं च तथा गौरीमिमां येन जपन्सुधीः पंचाक्षरं तथा मंत्रं पूर्वादिषु दलेष्वपि मूर्तयोष्टौ मदीयाश्च पूजनीयाः प्रयत्नतः अनंतसूक्ष्मौ च शिवस्ततश्चैकनेत्ररुद्रौ च तथैव पूज्यौ त्रिमूर्तिश्रीकंठशिखंडिनौ च प्रागादिपत्रेषु समर्चनीयाः तद्बाह्ये लोकपालाश्च पूजनीयाः प्रयत्नतः विस्तराद्युपचाराश्च दातव्या मूलमंत्रतः बिल्वपत्राक्षतैः पुष्पैर्धूपदीपैः समर्चयेत् मनोरमा विधातव्या पूजा वित्तानुसारतः ततो वेद्यधोभूमौ सर्वतोभद्रमंडले ब्रह्माद्या देवताः सर्वाः पूजनीयाः प्रयत्नतः नैवेद्यादि विचित्राणि तांबूलानि प्रकल्पयेत् ततो जागरणं कुर्याद्गीतवादित्रनिः

स्तवनैः पुराणैरितिहासैश्च रात्रिशेषं नयेद्व्रती अपरेद्युः कृतःस्नानः प्रातःसंध्यामुपास्य च पुनर्यागगृहं गत्वा ह्युपचारान्प्रकल्पयेत् हृ
वनार्थे विधातव्यमुपलेपादिकं ततः प्रतिष्ठाप्यानलं सर्वमन्वाधानादि पूर्ववत् स्वगृह्यविधिना कार्यमाज्यभागान्तमेव च अनादेशादि
भिर्हुत्वा महाव्याहृतिसंज्ञकाः होतव्याः सर्पिषा चैव पायसं सघृतं सुधीः त्वं सोमासीति मंत्रेण हुनेदष्टोत्तरं शतं ततः स्विष्टकृतं हु-
त्वा होमशेषं समापयेत् ततो होमावसाने च गामरोगां पयस्विनीं सवत्सां धवलां साध्वीं सवस्त्रां कांस्यदोहनीं दद्याद्व्रतसमृद्ध्यर्थ
माचार्याय सदक्षिणां वस्त्रैराभरणैरन्यैराचार्यं परितोषयेत् ततः षोडशसंख्याकान् भोज्यैर्नानाविधैस्तथा ब्राह्मणान्भोजये-
त्पश्चादर्चयेन्नामभिः क्रमात् सोमेश्वरस्तथेशानः शंकरो गिरिजाधवः महेशः सर्वभूतेशः स्मरारिस्त्रिपुरांतकः शिवः पशु-
पतिः शंभुस्त्र्यंबकः शशिशेखरः गंगाधरो महादेवो वामदेव इति क्रमात् वस्त्राणि कुंडलादीनि चंदनैरुपलेपयेत् उपवीतानि ते
भ्योपि दद्यात्कुंभान्फलान्वितान् शक्त्या च दक्षिणां देयां दंपती पूजयेत्ततः अन्यानपि यथाशक्ति ब्राह्मणानपि तोषयेत् व्रतं ममास्तु
संपूर्णमित्युक्त्वा तान्प्रपूजयेत् अस्तु संपूर्णमित्युक्ते ततो यागभुवं व्रजेत् उपचारादिकं कृत्वा स्तुत्वा नत्वा पुनः पुनः विसर्जनं विधाया
थशिष्टैरिष्टैः समन्वितः भुंजीयाद्यज्ञशेषं तद्वाग्यतो नियतः शुचिः एवं कृते महापुण्ये व्रतस्योद्यापने शुभे नारी वा पुरुषो वापि समहे
शस्य परं पदं अपुत्रो लभते पुत्रान्निर्धनो धनवान्भवेत् अविद्यो लभते विद्यामिति धर्मविदो विदुः पृथिव्यां यानि तीर्थानि व्रता-

न्यन्यानियानितु सोमवारव्रतस्यास्यकल्पंनार्हंतिषोडशीं इतिश्रीभवि॰सोमवारव्रतोद्यापनंसंपूर्णं अथमंगलव्रतं भौमवारेअ
रुणोदयवेलायांअपामार्गेदंतधावनंविधाय तिलामलकचूर्णेननद्यादौगृहेवास्नात्वाधौतमारक्तवस्त्रंपरिधायरक्तोत्तरीयंचस्त्रीवा
प्येवंपरिदध्यात् ततस्ताम्रपात्रेरक्ताक्षतारक्तपुष्परक्तचंदनानिनिक्षिप्य अग्निर्मूर्धेतिमंत्रेण अष्टोत्तरशतार्घ्याणिदद्यात् ततोगृ
हमागत्य रक्तगोमयेनभूमिंविलिप्य शूद्रदेशेपुत्रार्थीधनार्थीच पत्न्यासहमंगलपूजामारभेत् तत्रविधिः मासपक्षाद्युल्लि-
ख्य ऋणव्याधि नाशनार्थंपुत्रधनप्राप्तयेच भौमव्रतंकरिष्ये इतिसंकल्प्य तदंगत्वेनभौमपूजनमहंकरिष्ये ततःप्रार्थयेत्
अद्यदेवेशते भक्त्याकरिष्येव्रतमुत्तमं ऋणव्याधिविनाशायधनसंतानहेतवे यंत्रोपरिस्थंभौमंपूजयेत् तत्रयंत्रप्रकारउक्तः
संग्रहे त्रिकोणंपूर्वमुद्धृत्यपंचधाविभजेत्ततः तृतीयरेखाचिह्नाभ्यांलांछयेत्समभागतः आद्यरेखाग्रयुगुलंतृतीयाचिह्नयोर्न्य
सेत् द्वितीयाग्रंसमाकृष्यंतृतीयाचिह्नयोर्न्यसेत् पुनारेखांतृतीयांतुसमांभज्यात्समांशकं तुर्यांचिह्नद्वयेनाथत्रिभिस्त्रिचिह्नैस्तुपंच
भिः तृतीयाग्रेप्रकुर्वीत पंचम्यामथचिह्निते तुर्यामेयोजयेत्सम्यक् पंचम्यचिह्नयोर्द्वयोः चिह्नैस्तुपंचभिर्दद्यात्सूत्रयुग्मंविच-
क्षणः एवमेकाधिकंसम्यक्कोणानांविंशतिर्भवेत् तृतीयातुर्ययोर्मध्येस्थितचिन्हगृहेर्चयेत् देवंतदग्रतोमंत्रीत्रिकोणेदक्षिण
क्रमात् मंगलाद्यांतरेपूर्वान्निमोतानेकविंशतिः एकविंशतिकोष्ठेपुनामंमंत्रान्समालिखेत् ततःपूजाप्रकर्तव्यापुत्रसंपत्तिहेतवे

पूजाप्रकारमाह रक्तमाल्यांबरधरःशक्तिशूलगदाधरः चतुर्भुजोमेषगमोवरदस्याद्धरासुतः एह्येहि भगवन्भौम अंगारक महाप्रभो
त्वयिसर्वंसमायातंत्रैलोक्यंसचराचरं भौममावाहयिष्यामि तेजोमूर्तिंदुरासदं रुद्ररूपमनिर्देश्यचक्रंचअरुणप्रभं अग्निर्मूर्धा-
गिरसोविरूपोंगारकोगायत्री मंगलावाहनेवि० ॐ अग्निर्मूर्धेतिऋक् ॐ नमोभगवतेधनसमृद्धिदायमंगलायनमः मंगलंआ०
अथन्यासः ॐ ह्रांहृदयाय० ॐ ह्रींशिरसेन० ह्रूंशिखायै० ह्रैंकवचाय० ह्रौंनेत्रत्रयाय० ह्रः अस्त्रायफट् स्वंस्वःइतिदिग्बंधः
ॐ ह्रां अंगुष्ठाभ्यां ॐ ह्रींतर्जनीभ्यां० ॐ ह्रूंमध्यमाभ्यां० ॐ ह्रैं अनामिकाभ्यां० ॐ ह्रौंकनिष्ठिकाभ्यां० ॐ ह्रः करतलकरपृष्ठा
भ्यां हंसः आत्मनेनमः स्वंस्वःपरमात्मनेनं० ततःअग्निर्मूर्धेतिमंत्रेण मंगलगायत्र्यावाआसनादि पुष्पांतैःपूजयित्वा यं
यस्यएकविंशतिकोष्ठेषुनाममंत्रेणपूजयेत् अर्घ्याणिचदद्यात् शिखायांमंगलःपातुभूमिपुत्रश्चमूर्धनि ललाटेऋणहर्तीच
चक्षुषोश्चधनप्रदः स्थिरासनःश्रोत्रयोश्चमहाकायश्चनासिके आस्यदंतोष्ठजिह्वासुसर्वकामवरोधकः हनौमेलोहितःपातु
लोहिताक्षश्चकंठके स्कंधयोरुभयोरक्षेत्सामगानांकृपाकरः धरात्मजोभुजौपातुकुजोरक्षेत्करद्वयं भौमोमेहृदयंपातुभूति-
दस्तुस्तथोदरे भूमिनंदननाभौतुगुह्येत्वंगारकंन्यसेत् उरूममयमोरक्षेज्जान्वोरोगापहारकः जंघयोर्वृष्टिकर्ताचअपहर्ताचगुल्फ
योः पादांगुष्ठोचगुल्फौचसर्वकामफलप्रदः शक्तिर्मेपूर्वतोरक्षेच्छूलंरक्षेच्चदक्षिणे पश्चिमेचधनुःपातुउत्तरेचशरस्तथा ऊर्ध्वंषडा

नतःपातु अधस्तात्पृथिवीमम एवंन्यस्तशरीरोसौचिंतयेद्भूमिनंदनं अथध्यानं अस्तृगरुणावर्णोरक्तमाल्यांगरागंकनककमलमालामालि
नींविश्ववंद्यं अनिललितकराभ्यांबिभ्रतंशक्तिशूले भजतधरणिसूनुंमंगलंमंगलानां इतिध्यात्वा अग्निर्मूर्धाइतिऋक् अष्टोत्तरशतंजपेत्
अंगारकायविद्महे शक्तिहस्तायधीमहि तन्नोभौमःप्रचोदयात् ततःस्तोत्रंपठेत् मंगलोभूमिपुत्रश्चऋणहर्ताधनप्रदः स्थिरासनो
महाकायःसर्वकर्मावरोधकः लोहितोलोहिताक्षश्चसामगानांकृपाकरः धरात्मजःकुजोभौमोभूतिदोभूमिनंदनः अंगारकोयमश्चै
वसर्वरोगापहारकः वृष्टिकर्तापहर्ताचसर्वकामफलप्रदः एतानिकुजनामानिनित्यंयःप्रयतःपठेत् ऋणंनजायतेतस्यसंतानंवर्धतेस
दा एकविंशतिनामानिपठित्वातुदिनांतके रूपवान्धनवांश्चैवजायतेनात्रसंशयः एककालंद्विकालंवायःपठेत्सुसमाहितः एवंकृतेनसं
देहोऋणंहित्वासुखीभवेत् इतिस्तोत्रंपठेत् धरणीगर्भसंभूतंविद्युत्कांतिसमप्रभं कुमारंशक्तिहस्तंचमंगलंप्रणमाम्यहं इतिनम
स्कारः खदिरांगारेणरेखात्रयंकृत्वा अंगारकमहीपुत्रभगवन्भक्तवत्सल त्वांनमस्यामिमेशेषंऋणमाशुविनाशय ऋणरोगा
दिदारिद्र्यंपापक्षुदपमृत्यवः भयक्लेशमनस्तापानश्यंतुममसर्वदा ऋणदुःखविनाशायपुत्रसंतानहेतवे मार्जयाम्यसिनारे
खास्तिस्रोजन्मसप्तसमुद्भवाः दुःखदौर्भाग्यनाशायसुखसंतानहेतवे कृतरेखात्रयंवामपादेनमार्जयाम्यहं इतिमंत्रेणमार्जयेत् त
तःप्रार्थना ऋणहर्त्रेनमस्तेस्तुदुःखदारिद्र्यनाशक सुखसौभाग्यधनदोभवमेधरणीसुत ग्रहराजनमस्तेस्तुसर्वकल्याणका

रक्त प्रसादात्तवदेवेशसदाकल्याणभाजन देवदानवगंधर्वयक्षराक्षसपन्नगाः प्राप्नुवंतिशिवंसर्वेसदापूर्णमनोरथाः प्रसादंकुरु-
मेभौमसौभाग्यमंगलप्रद बालःकुमारकोयस्तुसभौमःप्रार्थितोमया उज्जयिन्यांसमुत्पन्नोभौमोनामचतुर्भुजः भरद्वाज-
कुलेजातःशूलशक्तिगदाधरः इतिप्रार्थयेत् पुनस्तोत्रंपठेत् ततःवायनदानं तिलगुडमिश्रितेनएकविंशतिलड्डुकान्गो
धूमेनवाफलदक्षिणासहितान्वेदविदेदद्यात् दानमंत्रः मंगलायनमस्तुभ्यंसर्वमंगलदायक वायनेनचसंतुष्टःकु रुमेत्वम-
नोरथान् देवस्यत्वेतिमंत्रेणमंगलःप्रीयतामितिदद्यात् आवाहनंनजानामि० इतिपूजनं अथकथा सूतउवाच० पूजितोदेवदे
त्यैस्तुमंगलोमंगलप्रदः गौतमेनपुराप्रष्टोलोहितांगोमहाग्रहः गौतमउवाच० कथयस्वमहाभागगुह्यंपूजनमुत्तमं मंत्रमाराध
नंदानंसर्वपापप्रणाशनं रूपंरक्तवर्णसंकाशवाहनायुधसंयुतं येनपूजितमात्रेणजायतेसुखमुत्तमं धर्मार्थकाममोक्षाणांका
लेनैवफलप्रदं सर्वपापप्रशमनंसर्वव्याधिविनाशनं सर्वसौभाग्यदंदेवतयापातकनाशनं सर्वयज्ञफलंप्रोक्तंसर्वकामफलप्रदं
तपसांजपदानानांफलंचैवतुलभ्यते तद्व्रतंब्रूहिमेदेवलोहितांगमहाग्रह यस्मिन्नाराधितेमर्त्यःसर्वसौभाग्यवान्भवेत् मंग
लउवाच० शृणुविप्रमहाभागसर्वज्ञऋषिसत्तम व्रतंचपूजनंदानंप्रख्यातंभुवनत्रये आसीत्पूर्वंहिसर्वज्ञोब्राह्मणोवेदपारगः त
स्यभार्यासुनंदाचनाम्नाख्यातासुलोचना तस्यापत्यंचसंजातंवृद्धत्वान्नकदाचन तेनान्यस्यसुतांपुण्यांगृहीत्वापोषिताध्रुवं

ब्राह्मणस्यकुलेजाता सुरूपागुणसंयुता सर्वलक्षणसंपन्ना मयत्नेनैवगौतम पुराजनौतयाचाहमेकभावेनपूजितः तांपुत्रींस्वगृहेनी-
त्वाब्राह्मणेनैवपालिता नित्यंहिस्मवर्ततस्या असंगंकनकंबहु तत्सुवर्णेनविप्रोसौधनाढ्योमृदगर्वितः कोटिकोटीश्वरोजातोराज
तेभूमिमंडले हृष्टानंदकविप्रेणदशवर्षावरार्थिनी विवाहार्थंचविप्राय दत्तासोमेश्वरायच वेदोक्तविधिनातेनविवाहसकरोत्तदा
वर्षैःकतिपयैर्विप्रः स्वांपत्नींप्रोदयोवनां लब्ध्वास्वदेशमार्गेणव्रजन्विप्रोप्यहर्निशं निशांतेगह्वरेघोरे अरण्येपर्वतोत्तमे स
र्वशून्येवनेतस्मिन्महालुब्धेनलोभितः मार्गेचलतिविप्रोसिंश्चौरैस्त्वविनिपातिते तंपतिंमृतमालोक्यसानारीशोकपीडिता पतिना
सहविप्रेंद्रमरणेकृतनिश्चया स्वपतिंतन्मयंविश्वंचिंतयंतीपदेपदे पतिंप्रदक्षिणीकृत्यचिंतयात्स्वसमीपतः तस्मिन्क्षणेचतुष्टो
हंवरार्थंचप्रचोदिता वरंब्रूहिमहाभागेयत्तेमनसिवर्तते इतिश्रुत्वाततोवव्रेसानारीपतिमानसा ब्राह्मण्युवाच॰ यदितुष्टोसिमे
देवतर्हिजीवतुमेपतिः मंगलउवाच॰ अजरामरवत्साध्वीतवभर्ताभविष्यति अन्यंयाच्चमहासाध्वीवरंत्रिभुवनोत्तमं ब्राह्मण्युवाच॰
यदितुष्टोसिमेदेवग्रहाणामधिपेश्वर येत्वांस्मरंतिदेवेशंरक्तचंदनचर्चितं रक्तपुष्पैश्चसंपूज्यप्रत्यूषेभौमवासरे बंधनव्याधिरो
गाश्चकदाचिन्नोपजायतां नचसर्पाग्निशत्रुभ्योभयंचस्वजनैःसह नवियोगोमहीपुत्रभक्तानांसौख्यदोभव मंगलउ॰ एकवि
शतिभौमांश्चएकभुक्तोजितेंद्रियः एकांतेनासितान्नेनचतुर्दीपान्वितेगृहे अर्घ्यंचमंगलेमंत्रैर्वेदपौराणिकोद्भवैः सुवर्णरक्तमनड्वा

हंसवैणिस्करसंयुतं स्वशक्त्याभोजयेद्विप्रान् दानंव्यंसहिरण्यकं तेषांवैग्रहपीडाचनभवेत्तुकदाचन भूतवेतालशाकिन्योनभवंतिनहिंसकाः
दारिद्र्यंनश्यतेतेषांपुत्रपौत्रश्चवर्धते एवमुक्त्वाचतत्रैवमंगलोपिदिवंगतः एवंव्रतंसमाख्यातंसर्वसौख्यप्रदायकं इदंव्रतंकरिष्यंतितेषां
पीडानजायते स्त्रीभिर्व्रतंप्रकर्तव्यंपुरुषैश्चविशेषतः तेषांमुक्तिर्भवत्येवस्वर्गवासोनसंशयः इतिश्रीपद्मपुराणेभौमवारव्र०सं०
अथोद्यापनं गौतमउ० उद्यापनविधिंब्रूहिममसम्यङ्महेश्वर येनजातेनजगतोह्युपकारोमहान्भवेत् मंगलउवा० विधेयोमं
डपःसम्यग्द्विहस्तप्रमाणतः स्थंडिलंमध्यतःकार्यंहस्तेकेनप्रमाणतः मंडलंतुप्रकर्तव्यंमासमकंरक्ततंडुलैः पूर्वोक्तानिचनामानिमंड
लेपूजयेत्ततः एकविंशतिकोष्ठेषुचतुर्दीपान्वितेषुच एकविंशतिकुंभांश्चस्थापयित्वाप्रदयतः सौवर्णीप्रतिमांतत्रस्थापयेत्कलशोप-
रि रक्तवस्त्रेणसंवेष्ट्यपूजयेत्कुसुमैःशुभैः अग्निर्मूर्धेतिमंत्रेणहोमंखादिरसंभवैः अष्टोत्तरशतंहुत्वादिक्पालांश्चहुनेत्ततः
अंगपूजाप्रकर्तव्यानामभिर्ममसर्वदा मंगलायचपादौतुभूमिपुत्रेतिगुल्फके ऋणहर्त्रेतुनाभौचमहाकालायवक्षसि सर्वकाम
प्रदात्रेचममबाहूप्रपूजयेत् लोहितोहस्तयोश्चैवलोहिताक्षश्चकंठके आस्येसंपूजयेन्मांचसामगानांकृपाकरः धरात्मजंना-
सिकायांकुजंचनयनद्वये भौमंललाटेपादौतुभूमिजायभ्रुवोस्तथा भूमिनंदननामानंमूर्ध्निसंपूजयेत्तथा अंगारकंशिरवा-
यांतुयमंतुकवचेसदा सर्वरोगापहर्तारमस्त्रदेशेप्रपूजयेत् आकाशेवृष्टिकर्तारंअपहर्तामधस्तथा सर्वांगंचप्रभूतोस्मिसर्व-

कामफलप्रदः एवंपूज्यततोहोमंपश्चाद्गंधादिनार्चयेत् भोज्येत्कविंशतिंविप्रान्दद्यात्कुंभान्सवस्त्रकान् आचार्यंपूजयेत्तत्पश्चाद्दत्वा
धेनुंसवत्सकां सर्वंनिवेदयेत्तस्मैगुरवेचस्वविस्मितः अच्छिद्रंयाचयेत्तेभ्योसर्वेब्रूयुर्व्रतंशुभं दत्वादीनाथकृपणान्स्वयंभुंजीतवाग्यत
तः इदंव्रतंकरिष्यंतिदारिद्र्यंनश्यतिध्रुवं कर्तव्यंतुप्रयत्नेनउद्यापनसमन्वितं इतिपद्मपु०मंग०तोद्यापनंसं० अथश्रावणेशु
क्रवारेवरदलक्ष्मीव्रतं तत्रपूजाविधिः क्षीरसागरसंभूतांक्षीरवर्णसमप्रभां क्षीरवर्णसमंवस्त्रंदधानांहरिवल्लभां ध्यानं ब्रा
ह्मीहंससमारूढाधारिण्यक्षकमंडलू विष्णुतेजोधिकादेवीसामांपातुवरप्रदा आवा० महेश्वरिमहादेविआसनंतेददाम्यहं
महैश्वर्यसमायुक्तेब्रह्माणिब्रह्मणःप्रिये आसनं० कुमारशक्तिसंपन्नेकौमारिशिखिवाहने पाद्यंददाम्यहंदेविवरदेवरलक्ष्म
णे पाद्यं तीर्थोदकैर्महादिव्यैःपापसंहारकारकैः अर्घ्यंगृहाणभोलक्ष्मीर्देवानामुपकारिणि अर्घ्यंस० वैष्णवीविष्णुसंयुक्ता-
असंख्यायुधधारिणि आचम्यतांदेवपूज्येवरदेऽसुरमर्दिनि आचम० पद्मेपंचामृतैःशुद्धैःस्नपयिष्येहरिप्रिये वरदेशक्तिसंभूते
वरदेविवरप्रिये पयोदधिघृतंचैवमधुशर्करयातथा पंचामृतेनस्नपनंक्रियतांपरमेश्वरि पंचामृतस्ना० गंगाजलसमानीतंसुगं
धिद्रव्यसंयुतं स्नानार्थंतेमयादत्तंगृहाणपरमेश्वरि स्नानं रजताद्रिसमंदिव्यंक्षीरसागरसन्निभं चंद्रप्रभासमंदेविवस्त्रं
तेप्रददाम्यहं वस्त्रं मांगल्यमणिसंयुक्तंमुक्ताफलसमन्वितं दत्तंमंगलसूत्रंतेगृहाणसुरवल्लभे कंठसूत्रं० सुवर्णभूषितंदि

व्यंनानारत्नसंशोभितं त्रैलोक्यभूषिते देवि गृहाणाभरणं शुभं आभरणानि रक्तगंधं सुगंधाढ्यं अष्टगंधसमन्वितं दास्यामि देवि वर
दे लक्ष्मीर्देवि प्रसीद मे गंधं हरिद्रां कुंकुमं चैव सिंदूरं कज्जलान्वितं सौभाग्यद्रव्यसंयुक्तं गृहाण परमेश्वरि सौभाग्यद्र॰ नानाविधा
नि पुष्पाणि नानावर्णयुतानि च पुष्पाणि ते प्रयच्छामि भक्त्या देवि वरप्रदे पुष्पाणि अथांगपू॰ ॐ वरदलक्ष्म्यै नमः पादौ पू॰ कम
लवासिन्यै न॰ गुल्फौ पू॰ पद्मालयायै॰ जंघे पू॰ श्रियै न॰ जानुनी पू॰ इंदिरायै॰ उरू पू॰ हरिप्रियायै॰ नाभिं पू॰ लोकधात्र्यै॰ स्तनौ पू॰
विधात्र्यै॰ कंठं पू॰ धात्र्यै॰ नासां पू॰ सरस्वत्यै॰ मुखं पू॰ पद्मनिधये॰ नेत्रे पू॰ मांगल्यै॰ कर्णौ॰ क्षीरसागरजायै॰ ललाटं पू॰ श्रीवरदल
क्ष्म्यै॰ शिरः पू॰ श्रीमहाकाल्यै॰ सर्वांगं पू॰ ३॰ धूपं दास्यामि ते देवि गोघृतेन समन्वितं प्रतिगृह्ण महादेवि भक्तानां वरदप्रिये धूपं
साज्यं च वर्ति॰ दीपं॰ नैवेद्यं परमं दिव्यं देहि प्रीतिकरं शुभं भक्ष्यभोज्यादिसंयुक्तं परमान्नादिसंयुतं नैवेद्यं नागवल्लीदलैर्युक्तं चूर्णं
क्रमुकसंयुतं वरलक्ष्मी गृहाण त्वं तांबूलं प्रतिगृह्यतां तांबूलं॰ सुवर्णं सर्वधातूनां श्रेष्ठं देवि च तत्सदा भक्त्या ददामि वरदे स्वर्णवृष्टिं
च देहि मे दक्षिणां नीराजनं सुमंगल्यं कर्पूरेण समन्वितं चंद्रार्कवह्निसदृशं गृह्ण देवि नमोस्तु ते नीराजनं सर्वमंगलमांगल्ये स
र्वपापप्रणाशिनि दोरकं प्रतिगृह्णामि सुप्रीता हरिवल्लभे दोरकग्रहणं करिष्यामि व्रतं देवि त्वद्भक्तः त्वत्परायणः श्रियं देहि यशो
देहि सौभाग्यं देहि मे शुभे दोरकबंधनं क्षीरार्णवसुतलक्ष्मीश्चंद्रस्य च सहोदरि गृहाणार्घ्यं महालक्ष्मी देवि तुभ्यं नमोस्तु ते -

पुनरर्घ्यं श्रीवृक्षस्यदलंदेविमहादेविप्रियंसदा बिल्वपत्रंप्रयच्छामिपवित्रंतेस्तुनिर्मलं बिल्वपत्रं इहजन्मनियत्पापंममजन्मांतरेषुच
निवारयमहादेविलक्ष्मीर्नारायणप्रिये प्रदक्षिणाः दामोदरिनमस्तेस्तुनमस्त्रैलोक्यनायके हरिकांतेनमस्तेस्तुत्राहिमांदुःखसाग
रात् नमस्कारः क्षीरार्णवसमुद्भूतेकमलेकमलालये प्रयच्छसर्वकामांश्चविष्णुवक्षस्थलालये व्रतसमर्पणं छत्रचामरमांदोलंदला
व्यजनदर्पणे गीतवादित्रनृत्यैश्चराजसन्माननैस्तथा सूपचारैःसमभ्यर्च्यक्षमाप्यचमहेश्वरीं वरलक्ष्मीर्महादेविसर्वकामप्रदायि
नी यन्मयाचकृतंदेविपरिपूर्णंकुरुष्वतत् प्रार्थनां एकविंशतिपक्वान्नैर्घृतशर्करसंयुतैः इंदिराप्रीयतांदेविपद्मेशांतिंप्रयच्छमे इं
दिराप्रतिगृण्हातिइंदिरावैददातिच इंदिरातारकोभाभ्यामिंदिरायेनमोनमः इतिवायनमंत्रः पंचवायनकंदत्वापक्वान्नैश्चसदक्षिणैः
विप्रायचाथयतयेदद्यात्तुब्रह्मचारिणे स्त्रीवासिन्यैततस्त्वेकंदापयेच्चयथाविधि इतिपूजा अथकथा सूतउ॰ कैलासशिखरेर
म्येसर्वदेवनिषेविते गौर्यासहमहादेवोदीव्यन्नक्षैर्विनोदतः जितोसित्वंमयाचाहपार्वतीपरमेश्वरं सोपित्वंचजितेत्याहस्त्रीविवा-
दस्तयोरभूत् चित्रनेमिस्तदाप्रष्टोमृषावादमभाषत तदाकोपसमाविष्टागौरीशापददौततः कुष्टीभवमृषावादिन्चित्रनेमिर्हतम
भः नानृतंहिसमंपापंक्वापिदृष्टंश्रुतंमया चित्रनेमिर्महाप्राज्ञःसत्यंवदतिनोमृषा प्रसादःक्रियतांदेविदेवीप्राहवृषध्वजः प्रसा
दस्तुसुरवीतस्मैविशापंचजगादसा यदासरोवरेरम्येकरिष्यंतिस्त्रुव्रतं ततःस्वर्गणिकाःसर्वावस्त्यंतित्वांसमाहिताः तदात्व-

विशापः स्यादित्युक्तः सपपातह ततोऽतिपयाहोऽपि चित्रनेमिः सरोवरे कुष्ठीभूत्वावसंस्तत्र ददर्शस्त्रीर्विलासिनीः देवतापूजनास-
क्ताः प्रच्छन्नमणिपत्यताः किमेतद्भोमहाभागाः किंपूजा किंचवांछितं किंमयाचत्यनुष्ठेयामिहामुत्रफलप्रदं इतिब्रुवंतंचित्रनेमिः प्रप-
च्छुस्त्रीर्विलासिनीः येनाहंगिरिजाशापात्मोक्ष्यामिचिरदुःखितः अप्सरसऊचुः ताऊचुः क्रियतामद्यव्रतमेतद्नुत्तमं वरदलक्ष्मीव्रतं
दिव्यंसर्वकामसमृद्धिदं यदारवौकुलीरस्थेमासेचश्रावणेतथा गंगायमुनयोर्योगेतुंगभद्रासरित्तटे तस्मिन्वैश्रावणेमासिशक्लप-
क्षेभृगोर्दिने प्रारब्धव्यंव्रतंतत्रमहालक्ष्म्यायतनात्मभिः सुवर्णप्रतिमांकुर्याच्चतुर्भुजसमन्वितास्त्रु पूर्वंगृहमलंकृत्यतोरणैरंगवल्लिभिः
गृहस्यपूर्वदिग्भागेईशान्यांचविशेषतः प्रस्थमितांतंडुलांश्चभूमौनिक्षिप्यपूजयेत् संस्थाप्यकलशंतत्रतीर्थतोयैः प्रपूरयेत्
फलानिचविनिक्षिप्यसुवर्णंप्रक्षिपेत्ततः पल्लवांश्चविनिक्षिप्यवस्त्रेणाछादयत्ततः प्रतिमांस्थापयेत्तत्रपूजयेच्चयथाविधि अग्न्यु
त्तारणपूर्वंतुशुद्धस्नानंयथाक्रमम् पंचामृतेनस्नपनंकारयेन्मंत्रतःसुधीः शुद्धस्नानंततःकृत्वादेवीसूक्तेनवैततः अष्टगंधैःसम-
भ्यर्च्यपल्लवैश्चसमर्चयेत् अश्वत्थवटबिल्वाम्रमालतीदाडिमास्तथा एतेषांपत्रमादायएकविंशतिसंख्यया नानाविधानिपुष्पाणि
मालत्यादीनिवैततः धूपदीपैर्महालक्ष्मींपूजयेत्सर्वकामदां पायसंभक्ष्यभोज्यंचनानाव्यंजनसंयुतं एकविंशतिसंख्याकैरपूपैःपू
जयेच्छिवां निवेद्यसर्वंदेव्यैतुवरंप्रवृणुयात्ततः एवंसपूजयित्वाचतांबूलाद्यैश्चषोडशैः उपचारैःषोडशभिर्धूपदीपैरनेकधा नृत्य

गीतादिसहितोदेवींसंप्रार्थयेच्छिवं रमांसरस्वतींध्यायन्शचींचाभयवादिनीं अप्सरोभिःकृतंसम्यक्व्रतंसर्वसमृद्धिदं पूजावसानपर्यं
तंचित्रनेमिरवलोकयन् होमधूम्रंसमाघ्रायघृतदीपप्रभावतः गतकुष्ठःस्वर्णतेजोशक्तिस्तद्गतमानसः तत्रैवचिंतयन्सम्यक्मनःसंधा-
यतद्व्रतं पंचवायनकंदत्वाकथांशृणुतेयत्नतः यथामौनंगृहीत्वातु पंचाग्निर्विधानेनपूजयेत् अनंतंचकुर्वतांगृह्यएकंपूगफलंतथा पर्णकं
चूर्णरहितंचर्वणीयंप्रयत्नतः आरक्तंयदिजायेतकुर्याद्व्रतमनुत्तमम् नोचेन्नतद्व्रतंकार्यंसर्वथाभूतिमिच्छता अनेनैवविधानेनव्रतंगृह्णी
तयत्नतः अहंयत्नात्करिष्यामिव्रतंसर्वसमृद्धिदं इत्युक्त्वासर्वदेवीस्तुकारयामासतत्क्षणात् स्वर्णनिर्मितांदेवींवस्त्रालंकारसं-
युतां पूर्वोक्तेनविधानेनपूजांकृत्वाप्रयत्नतः पंचवायनकंदत्वाकृत्वानेभ्योयथाक्रमं ततोवेणवपात्राणिफलान्नेभ्यःसदक्षिणैः विप्रायचाथ
यतयेदेव्यैतुब्रह्मचारिणे सुवासिन्यैततस्त्वेकमर्पितंचित्रनेमिना एवंसम्यक्क्रमेणैनदत्वावायनपंचकं ततोगृहंगतंतेनदेवींनत्वायथा
क्रमं ततोनुज्ञांचसंप्रार्थ्यभक्षणार्थंततोव्रती नागवल्लीदलंत्वेकंक्रमुकंचूर्णवर्जितं भक्षयित्वातुचेलांतेदंतांतेचनिरीक्ष्यच आरक्तेचततो
जातंव्रतस्यास्यप्रभावतः अद्याहंगतपापोस्मिदेव्यादर्शनयोगतः एतत्तस्यव्रतंचीर्णंभक्तिभावेनयन्मया चित्रनेमिर्व्रतंकृत्वाकैला
संशंकरालयं गत्वाप्रणम्यदेवेशंदेवींसादरपूर्वकं पार्वतीचतदाप्राहचित्रनेमेस्त्वगुणवान् पालनीयोमयात्वंचेत्सत्यमित्यवधार्यताम्
चित्रनेमिस्तदाप्राहपार्वतींहरवल्लभे तवपादांबुजंदृष्टंवरलक्ष्मीप्रसादतः महादेवस्ततःप्राहचित्रनेमिंशुभव्रतं अद्यप्रभृतिकैला-

सेभुक्त्वभोगान्यथेप्सितान् पश्चाद्गंतासिवैकुंठंव्रतस्यास्यप्रसादतः पार्वत्यापिकृतंपूर्वंपुत्रलाभार्थमेवच लब्धश्चषण्मुखोदेव्याव्रत
राजप्रसादतः नंदश्चविक्रमादित्योराज्यंप्राप्तोमहाव्रती नंदश्चकांतयाहीनोकांतांलब्ध्वासकलक्षणां तयाचतत्कृतंतत्कृत्स्नंकृतंवैपुत्रहेत
वे पुत्रप्रसूःसुवेसाचत्रैलोक्यभरणक्षमं इहभुक्त्वातुविपुलान्भोगान्वैसुमनोहरान् नदाप्रभृतिलोकेस्मिन्वरलक्ष्मीव्रतंशुभम्
व्रतंकरोतियानारीनरोवापिशक्तिप्रतः भुक्त्वाभोगांश्चविपुलानंतेशिवपुरंव्रजेत् रच्यातंपुण्यंमयाविमावरलक्ष्मीव्रतंशुभं यइदं-
श्रृणुयान्नित्यंश्रावयेद्वासमाहितः धनधान्यमवाप्नोति वरलक्ष्मीप्रसादतः इतिश्रीपा० श्रावणशुक्लशुक्रवारेवरलक्ष्मीव्रतंसं०
अथश्रावणमंदवारेशनैश्चरव्रतं अद्येत्यादिममसमस्तरोगपरिहारार्थंदस्युदरलत्तागतशनैश्चरपीडानिरासार्थंशनैश्चरव्रतंकरि
ष्ये निर्विघ्नतासिध्यर्थंगणपतिपूजनंकलशाराधनंचकरिष्ये कृष्णांगाय० आवाह० नीलाय० आसनं० श्वेतकंगाय० पाद्यं० नीलम-
यूरवाय० अर्घ्यं० नीलोत्पलदलाय० आच० नीलदेहाय० स्नानं० कुब्जाय० पंचामृतस्ना० शनैश्चराय० शुद्धोदकस्नानं० दीप्यमानजटा-
धराय० वस्त्रं० पुरुषगात्राय० यज्ञोपवीतं० स्थूलरोमाय० अलंकारान्० नित्याय० गंधं० धूर्ताय० अक्षतान्० सदान्नप्राय० पुष्पं० मंदाय०
धूपं० निस्स्पृहाय० दीपं० तामसाय० नैवेद्यं० नीलोत्पलाय० आचमन० कृष्णवपुषे० करोद्वर्तनं० दीर्घदेहाय० तांबूलं० मंदगतये० दक्षिणां०
ज्ञाननेत्राय० प्रदक्षिणा० सूर्यपुत्राय० नमस्कारं० कोणस्थःपिंगलोबभ्रुःकृष्णोरौद्रांतकोयमः सौरिःशनैश्चरोमंदःपिप्पलादेनसं-

स्तुनः एतानिशनिनामानिजपेदश्वत्थसंनिधौ शनैश्चरकृतापीडानकदाचिद्भविष्यति इतिप्रार्थना मूलतोब्र॰ अश्वत्थायनमोनमः सप्त
प्रदक्षिणाः सप्तनमस्कारान्कुर्यात् इतिपूजा अथकथा दशरथउ॰ नमः कृष्णांगनीलायशवेतकंठनिभायच नमःपुरुषगात्रायस्थूलरो
मायतेनमः नमोमंदगतेतुभ्यंनिस्पृहायनमोनमः नित्यानित्यकृधार्तायसदातृप्तायतेनमः तपसादग्धदेहायनित्ययोगधरायचे न
मस्तेज्ञाननेत्रायकाश्यपपत्यार्कसूनवे इतिश्रुत्वानृपश्रेष्ठप्रसन्नश्चशनिस्तदा शनिरुवा॰ तुष्टोहंतवराजेंद्रतपसापौरुषेणच दा-
स्यामितेवरंभद्रंनिश्चयाद्रघुवंशज दशरथउवा॰ अद्यप्रभृतिपिंगाक्षपीडाकार्यानतेमम जगत्त्रयंत्वयानाथपीडितोदुःखितो
जनः तस्माज्जगत्त्रयंदेवरक्षणीयंत्वयानघ शनिरुवा॰ ग्रहाणामहमेकोहिमदधीनाग्रहाःसदा तपसानवतुष्टोहंपीडांनच-
करोम्यहं जगत्त्रयंमहाराजदुःखितंमेसदैवहि दशरथउ॰ भगवन्केनविधिनात्वदीयाराधनंभवेत येनतुष्टोसिपिंगाक्षत
त्सर्वंवक्तुमर्हसि शनैश्चरुउ॰ श्रावणेमंदवारेषुदंतधावनपूर्वकं स्नानंकृगंधतैलेननित्यकर्मसमाचरेत् कर्तव्यंसर्ववारे
षुतेनतुष्टोस्म्यहंनृप शमीचिर्मूलाशामीवृक्षगत्वातत्रैवपूजयेत् तदभावेथराजेंद्रगत्वाश्वत्थंप्रपूजयेत् तत्रसंपूज्यमांराज-
न्गंधपुष्पाक्षतादिभिः धूपदीपैश्चनैवेद्यैस्तांबूलप्रार्थनादिभिः वेष्टयेत्सप्तसूत्रैश्चनमस्कारांस्तथैवच सप्तप्रदक्षिणाःकृ
त्वाश्रुत्वापुण्यकथामिमां एवंविधास्त्रयश्चिंशन्मंदवारान्कुरुष्वमे ततःशांतिंचमेवारेकुर्यादुद्यापनंशुभं आचार्यंवरयेत्तत्रश्रो

विप्रंवेदपारगं स्कवर्णस्यशमीवृक्षंभद्रभावेतुपिप्पलं मदीयांप्रतिमांकुर्याल्लोहमत्रुरसंयुतां द्विभुजंदीर्घदेहंचदंडपाशधरंतथा
पिंगाक्षंस्थूलदेहंचश्वेतग्रीवंतथार्चयेत् रुक्मपत्रंतथासप्तकृष्णावस्त्राणिवेष्टयेत् उपवीतादिभिर्द्रव्यैः पूर्ववद्देवमर्चयेत् शम-
मिग्निरितिमंत्रेणहुनेदष्टाधिकशतं कृसरान्नंहोमयेत्तुतेनैवबलिमुद्धरेत् कृष्णाधेनुंसवत्सांचदद्यादथपयस्विनीं सप्तविप्रान्समभ्य
र्च्यगंधपुष्पफलादिभिः वस्त्राणिदक्षिणांचैवयथाशक्त्याप्रदापयेत् तिलमाषविमिश्रान्नैर्भोजयेद्द्विजसत्तमान् तेषांगृत्वाशिषंप
श्चाद्भुंजीयाद्बंधुभिःसह सर्वस्वमपितस्मैचआचार्यायनिवेदयेत् एवंकृतेथराजेंद्रसर्वाभीष्टंददाम्यहं जपेदिदंपठेत्स्तोत्रंभक्त्या
चैवकृतांजलिः सप्तजन्मसुराजेंद्रतस्यैश्वर्यंभविष्यति पुत्रपौत्रयुतोनित्यंततोमोक्षमवाप्स्यति तुष्टोहंतवराजेंद्रपीडांनचकरोम्य
हं गोचरेवाथवर्गेपिविषमस्थोयदाशनिः तुष्टोराज्यप्रदः सद्योक्रुद्धोराज्यापहारकः जन्मस्थोद्वादशस्थोवाअष्टमोवापिकुत्रचि
त् श्रावणेमंदवारेषुपूजितोहंसुखप्रदः ब्रह्माशिवोहरिश्चैवमुनयःसनकादयः लक्ष्मीरुमाचसावित्रीमुनिपत्न्यश्चवैशुभाः
नृपाअन्येमयासर्वेराज्यभ्रष्टाश्चपीडिताः देशाश्चनगरग्रामागजाश्चावथवाजिनः रौद्रदृष्ट्यामयादृष्टानाशमायांतितत्क्षणात् अ
तोमयापीडितानांमनुष्याणांनराधिप परिहर्तुंनशक्ताश्चब्रह्मविष्णुमहेश्वराः एतच्छ्रुत्वाशनेर्वाक्यंराजापरमहर्षितः प्रदक्षि-
णानमस्कृत्यवरंप्राप्यपुरंययौ गत्वास्वनगरंराजापूजितोवैशनैश्चरः श्रावणादिषुवारेषुप्रसन्नोभूच्छनैश्चरः पृथ्वीपतिरघु-

ह्याज्ञायग्रहराजप्रसादतः यइमंप्रातरुत्थायसौरिवारेसदार्चयेत् तस्याभीष्टप्रदोमंदोभविष्यतिनसंशयः स्त्रियावापुरुषेणापिशनैश्च
रव्रतंकृतं मुच्यतेसर्वपापेभ्योसर्वाभीष्टंलभेत्क्षणात् ब्राह्मणोवेदसंपूर्णोक्षत्रियोराज्यमाप्नुयात् वैश्यस्तुलभतेवित्तंशूद्रःसुखम
वाप्नुयात् कन्यार्थीलभतेकन्यांपुत्रार्थीलभतेसुतं कामार्थीलभतेकामान् मोक्षार्थीलभतेगतिं मुच्यतेसर्वपापेभ्यो-
ग्रहलोकंसगच्छति इतिश्रीस्कंदपुराणेशनिवारव्रतोद्यापनंसंपूर्णं अथव्यतीपातव्रतंलिख्यते युधिष्ठिरउ॰
श्रुतानित्वन्मुखाद्देवव्रतानिसकलान्यपि व्यतीपातव्रतंब्रूहिसोद्यापनफलान्वितं कृष्णउ॰ पुराव्यासेनकथितंशाक्यायवंशवृद्धये
तद्व्रतंकथयिष्यामिशृणुराजन्यसत्तम शाकउ॰ कथंयोगस्त्वतःपूज्योव्यतीपातमहामुने पूजितेकिंफलंतात विधिंमेब्रूहिविस्तरात्
व्यासउ॰ इममर्थंपुरापृष्टोधरण्याचजगद्गुरुः व्यतीपातव्रतंसर्वंयत्समाख्यातवान्प्रभुः तद्व्रतंकथयिष्यामिपरलोकहितायच ध
रण्युवा॰ यस्त्वयोक्तोव्यतीपातस्तस्यकर्मवदस्वतत् कदाजातःकथंपूज्यःपूजितेचात्रकिंफलं श्रीवराहउवा॰ यदाबृहस्पतेर्भा
र्यांताराजग्राहशीतगुः मित्रत्वात्प्राहतंसूर्यस्त्यजदारान्बृहस्पतेः तदासोमोनिरुष्टश्चरविंक्रूरंविलोकयत् उभयोर्दृष्टिसंपातात्
क्रुद्धयोःसोमसूर्ययोः उद्यतास्त्योभवद्घोरःपुरुषःपिंगलेक्षणः दष्टोष्ठदीर्घदशनोभ्रुकुटीकुटिलाननः पिंगलश्मश्रुकेशांतोलंब
स्तम्बकृशोदरः शिरालोदीर्घजिह्वश्चसूर्याग्नियमसन्निभः त्रैलोक्यंभक्षितुंप्राप्तोरवींदुभ्यांनिवारितः सोपृच्छदथसूर्येंदूक्षुधि

तोभक्षयामिकिं त्रैलोक्यंभोक्तुकामोहं भवद्भ्यांविनिवारितः क्रोधक्षुधौमांबाधेतेपात्येतेकुत्रतेमया सोमसूर्यावूचतुः कोपदृष्टेर्नोवि
विधादतिपाताद्भवानभूत् व्यतीपातस्ततोनामभवान्भुविभविष्यति सर्वेषामपियोगानांपतिस्त्वंभवितासदा तेषांमध्येपुण्यतमो
भविष्यसिनसंशयः यस्मिन्कालेत्वदुत्पत्तिः कल्याणंनैवकारयेत् स्नानदानादिकंकिंचित्त्वत्कालेचैवाक्षयंभवेत् इतिताभ्यां
वरोदत्तस्ततःप्रभृतियोगराट् त्रिषुलोकेषुविख्यातोबहुपुण्यफलप्रदः व्यतीपातमहावीरत्रैलोक्यव्यापकप्रभो त्वयिमासेनरैः
किंचिद्दातव्यंशुभकांक्षिभिः तद्दत्तंक्षुधितोभुंक्ष्वनोचेत्कोपोनिपात्यतां व्यतीपातउ॰ नमोवांपितरौमेस्तुक्रोधपातस्यभाजनः
दत्तोभक्ष्यामद्धनाप्रसादःक्रियतांमम रवींदावूचतुः स्नानदानजपहोमपूर्वकंयस्त्वदीयसमयेसमाचरेत् तस्यपुण्यमिहतेप्र
सादतोनंतमस्तुसुखतवैभवार्णव तत्कालेतवविदधातिपूजनंयस्तस्येष्टंभवतुभवेत्सप्रद्रूपः पुत्रायुर्धनसुखरक्कीर्तिपुष्टिरूपा
रोग्याद्यंगुणिजनवल्लभंचपूर्वम् धरण्युवा॰ अस्यार्चनविधिंब्रूहिविस्तरेणाजगद्गुरो कृतेतस्मिन्व्रतेदेवकिंफलंप्राप्यतेनरैः व
राहउवा॰ एतस्मात्कारणाद्भूमेव्यतीपातःसउच्यते अर्चितेचफलंयत्स्यात्तदुक्तंचसमासतः विस्तरेणार्चनविधिंकथितुंकेनश
क्यते यथार्चितोव्यतीपातःसविधिःश्रूयतामिह शुभेव्यतीपातदिनेवगाहयेत्ससेव्यमानेनमहानदीजलं उपावासेदुपवमा
न जापकोजपेच्चमंत्रंव्यतीपाततेनमः छादितेताम्रवस्त्रेणशर्करापूरितेघटे कांचनाद्यंप्रतिष्ठाप्यहेमप्रष्टभुजंनरं अष्टपु-

जमष्टादशभुजउत्पत्तिवाक्येव्यतीपातमूर्तेः अष्टदशभुजश्रवणादुत्पत्तिवाक्यानुसारित्वाच्चविनियोगवाक्यस्य तथाभगवद्गीतासुच
चत्वारोमनवस्तथेतिचत्वारश्चतुर्दशेत्यर्थः गंधपुष्पाक्षतैर्धूपैर्दीपवस्त्रनिवेदनैः भक्ष्यैर्भोज्यैःफलैश्चित्रैर्मासिमार्गशिरेर्चयेत् न
मस्तेस्तुव्यतीपातसोमसूर्यस्वरूपभो यद्दानादिकृतंकिंचित्तदनंतमिहास्तुमे इत्युक्त्वापंचरत्नाढ्यंसपुष्पाक्षतमंजलिं प्रक्षिप्यत-
त्क्षणादेवसर्वपापक्षयोभवेत् यदिद्वितीयेचदिनेव्यतीपातोभवेन्नहि तदापूर्वोपवासस्तुप्रदद्यात्सकलंगुणैः पारणंचव्यतीपातेकु
र्यात्संप्राश्यगोमयं अथैकस्मिन्दिनेधात्रिव्यतीपातोभवेद्यदि तत्रैवाह्नितदादत्वाउपवासंसमाचरेत् कुर्यादेवंमासिमासिव्यतीपा
तांस्त्रयोदश चतुर्दशेतुसंप्राप्तेकुर्यादुद्यापनंबुधः व्यतीपातायस्वाहेतिक्षीरवृक्षसमिच्छतं आज्यक्षीरफलानांचहोतव्यंवैशतंश
तं शर्करापूर्णकुंभेनसहस्रोपस्करंनरं शय्यांचोपस्करैर्युक्तांप्रदद्यात्तत्त्वदर्शिने वंदेव्यतीपातमहंमहांतंरवींदुसूनुंसकलेष्टलब्ध्यै
समस्तपापस्यममक्षयोस्तुपुण्यस्यचानंतफलंममास्तु इतिसमार्च्यगुरुंपरिपूज्यतंकटककुंडलकंठविभूषणैः सकलमेवसमर्प्ययथो-
चितंतदुपलभ्यमिहस्रगुणंतन्महि गांचपयस्विनींदद्यात्सुवर्णवरदक्षिणा तस्मैशय्यांसमादायसारदारुमयींदृढां दंतपत्रसितांरम्यां
हेमपट्टैरलंकृतां हेमतूलीप्रतिच्छन्नांशक्रभोगेंदूपधानकां प्रच्छादनपटीयुक्तांधूपगंधादिवासितां तांबूलंकुंकुमंमोदंकर्पूरागरुचंदनं
दीपकौपानहौछत्रंप्रदद्याच्चामरासने देहांतेसूर्यलोकायविमानैरत्नसन्निभैः अप्सरोगणसंभोगैर्गीतनृत्यविलासिभिः गत्वाकल्पा

ऊ० दशानं सादरं त्रिदशार्चितः तद्दत्ते राज्यराजस्याद्रूपसौभाग्यभाग्भवेत् कीर्त्यौ दयौ गुणपुत्रायुरारोग्यधनधान्यवान् प्रतापादिमहैश्वर्ययु
क्तो भोगी बहुश्रुतः जनसौभाग्यसंपन्नो यावज्जन्माष्टकायुतं दर्शे दशगुणं दानं तच्छतघ्नं दिनक्षये शतघ्नं तच्च संक्रान्तौ शतघ्नं वि
षुवे ततः युगादौ तद्दशगुणमयने तच्छतं भवेत् सोमग्रहे तच्छतघ्नं तच्छतघ्नं रविग्रहे असंख्येयं व्यतीपाते दानं वेदविदो विदुः
उत्पत्तौ लक्षगुणं कोटिगुणं भ्रमणनाडिकायां तु अर्बुदगुणितं पतने जपदानाद्यक्षयं पतिते जन्मद्वाविंशतिं नाडी भ्रम
णं लेकविंशानि व्यतीपातस्य पतने दश सम्स्थितिं विदुः संप्रार्थितं यद्व्यतिपातकाले पुनः पुनस्तद्दिवि शीतरश्मौ प्रयच्छतः कल्प
शतार्बुदानि विवर्धमानं न हि हीयते न तत् तस्मान्महीत्वं व्यतिपातपूजां कुरुष्व चेत्पुण्यमनंतमिष्टं यदि स्थिरत्वं शतनं तु वेष्टं सम-
स्तरिष्टं यद्भीष्मितं तत्तु गणायित्वा व्यतीपातकाया पूनिव्रतो नरः सर्वपापहरौ तस्य लभते फलमीप्सितं परगतिलिरवतियुः श्व
णौ ति वेतत्कृथयाति पश्यंति कारयत्सवश्य इति शाशीदिवसयास्य सोपि देवैश्चिरमयं परिपूज्यमानवास्ते इति वराहेनोक्तं
व्यतीपातव्रतं अथ तत्रैव नारदीये व्यतीपातव्रतं युधिष्ठिर उ० केन व्रतेन चीर्णेन न पश्येद्यमशासनं परिपृच्छाम्यहं विप्र
व्रतानामुत्तमं व्रतं तद्व्रतं ब्रूहि विप्रर्षे कृत्वा प्राप्नुवति स्फुटं मार्कंडेय उ० शृणु राजन्व्रतमिदं हयग्रीवेन पुरा कृतं तेन राज्ञानुवेद-
तं स्तूकराय चदुः खिते कदाचिन्मृगयां कुर्वन्हयग्रीवो राजसत्तमः वनमध्ये चरन्राजा दृष्टवानेकसूकरं दग्धपादकटं चैव दग्ध-

कथंसुखोदरं दुःखात्तथाविधंत्वंतुरूपांचकेनृपोत्तमः केनकर्मविपाकेनत्व्यवस्थांप्राप्तवानयम् अहोकष्टमहंकष्टंसूकरेणोपभुज्य
ते अवश्यमपिभोक्तव्यंकृतंकर्मशुभाशुभं इत्युक्त्वातत्स्वरूपेणराजातंमाहसूकरं ईदृशीकिमवस्थानेतन्मेब्रूहिचसूकर
तच्छ्रुत्वानृपतेर्वाक्यंनिश्वसन्सूकरोमुहुः स्मृत्वापुराकृतंकर्मप्रत्युवाचनृपंप्रति शृणुराजन्नहंपूर्ववैश्योधनबलान्वितः आशाद्व
-द्योनदत्तंहिआश्रितेभ्यश्चकिंचन श्रुताश्चबहवोधर्माःपुराणश्रुतिचोदिताः तथापिपापबुध्यामेनकृतंआत्मनोहितं आशापा
शमनुप्राप्तोशुभाशास्त्रविवर्जितः कृतवान्पापमेवाहंनकिंचित्सुकृतंकृतं एकदातुद्विजःकश्चिद्व्यतीपातेगृहंमम आगतोयाच
यन्मांचनकिंचिद्दत्तवानहं मयानिराकृतोत्यंतंवचोभिर्निष्ठुरैस्तथा व्यतीपातोद्यरेवैश्यकिंचिद्देह्यर्थिनेखल तन्मेरुरूपंभव-
तिप्राप्स्यसेत्वन्यजन्मनि कुपितेनमयानस्मैनिष्ठुरावाक्समीरिता ततश्चकुपितोविप्रोममशापमथाददत् आशाभिर्दहतेयद्व
-न्ममांगानिपृथक्पृथक् तथैवतुनवांगानिदावाग्निःपुरुषाधम अरण्येनिर्जलेदेशेनिर्जनेद्रुमविस्तृते तत्रसूकरयोनौत्वमुत्पन्नो
दुःखमाप्नुहि प्रसादितोमयापश्चात्पुनरप्युक्तवांस्तदा उद्धरिष्यतिराजात्वांसूकरत्वेदयापरः इत्युक्त्वाचजगामाथअन्यवैश्य
गृहंप्रति तेनशापेनवैराजन्सूकरत्वमवाप्तवान् अहंदुःखीचसंजातोविजनेनिर्जलेवने राजोवा॰ केनत्वंमुच्यसेपापान्ममाच
क्ष्वेहसूकर येनशक्योप्यहंकर्तुंतवशापस्यसंक्षयं वराहउवा॰ श्रूयतांममराजेंद्रमुक्तिःस्याद्येनकर्मणा व्यतीपातव्रतेना-

मह्ळतंराजंस्त्वयापुरा यथामातासुतस्येहसर्वत्रसुखकारिणी तथाव्रतमिदंराजन्निहलोकेपरत्रच यथैवाभ्युदितःसूर्योत्प्रशो
षंचतमोदहेत् व्यतीपातस्तथैवेहसर्वपापव्यपोहति यथाविष्णुर्ददातीहनृणांपरमनिर्वृतिं ददात्येवंनसंदेहस्तथाव्रतमि-
दंशुभं शतमिंदुक्षयेदानंसहस्रंतुदिनक्षये विषुवेशतसाहस्रंव्यतीपातेत्वनंतकं विधानंव्यतीपातस्यशृणुराजन्प्रयत्नतः
द्वाविंशतिसमुत्पत्तौ २२ भ्रमणेचैकविंशतिः २१ पतनेदशनाड्यस्तु १० पतितेसप्तनाडिकाः ७ यत्फलंलक्षमुत्पत्तौ भ्रमणेकोटि
रुच्यते पतनेदशकोट्यस्तुपतितेदत्तमक्षयं आकृतिर्मूर्छनाकाष्ठाशैलतुल्यास्वनाडिकाः लक्षकोट्यर्बुदगुणमनंतंस्याद्यथाक्रमं
व्यतीपातविभागेषुदानमुक्तंनृपोत्तम शंखकर्णंप्रलंबोष्ठंलंबभ्रूदीर्घनासिकं अष्टनेत्रंचतुर्वक्त्रंभुजैरष्टादशैर्युतं शतयोज
नविस्तीर्णंसोमसूर्यंशतंध्रुवं माघेवाफाल्गुनेमार्गेवैशाखेश्रावणेथवा व्यतीपातोदिनेयस्मिन्आरभेद्व्रतमुत्तमं व्यतीपा
तव्रतसम्यक्शुचिर्मूलासमाहितः पंचगव्यतिलैर्धात्र्यैःशुचिस्नायात्समाहितः ततःसंकल्पयेदेतद्व्रतंसर्वार्थसाधकं व्यतीपातव्र
तेतिष्ठन्स्वर्णदानकरोम्यहं नवारोनचनक्षत्रंनतिथिर्नचचंद्रमाः यदावैजायतेभक्तिस्तदाग्राह्यमिदंव्रतं किंव्रतैर्बहुभिस्ती
र्थैः किंदानैर्बहुभिःकृतैः सर्वेषांफलमाप्नोतिव्यतीपातव्रतेनवै इतिसंकल्प्यमनसाव्यतीपातव्रतंचर सर्वपापविशुद्ध्यर्थं
यावत्संवत्सरोभवेत् आमंत्र्यतद्दिनेविप्रंवेदवेदांगपारगं तिलैःपूर्णशरावंचसगुडंरारवेर्पयेत् शंखचक्रगदापाणिंपद्महं

स्त्वंहिरण्मयं वस्त्रयुग्मेनसंवेष्ट्यपूजयेद्गरुडध्वजं उपचारैःषोडशभिःपूजयित्वासमाहितः हेमदानेनततःकुर्याद्द्याद्विभव
सारतः मंत्रेणानेनविधिवत्करेधृत्वासुवर्णकं नमस्तेस्तुव्यतीपातसोमसूर्यसुतप्रभो दास्यामिदानंयत्किंचित्तदक्षय्यमिहास्तुमे
गुंजामात्रमपिस्वल्पंहेमविप्रकरार्पितं गृह्यतांव्रतसिध्यर्थं पूजयस्वमनोरथान् हेमाद्रिशिखरंभूत्वासुवर्णकोटिरुच्यते इदं-
क्षेत्रंकुरुक्षेत्रंसाक्षान्नारायणोद्विजः सुवर्णस्यचदानेनप्रीतोभवजनार्दन नवहस्तोव्यतीपातोवैधृतिश्चरणौस्मृतौ संक्रांति-
र्हृदयस्थानममावैनाभिरुच्यते पूर्णिमाष्टष्ठतोज्ञेयापंचांगंपंचपर्वणि एवंविष्णुशरीरस्यमुखंवैद्वादशीस्मृता अमाचपितरो
ज्ञेयामातामन्वादयस्तथा भगिनीद्वादशीज्ञेयाव्यतीपातस्तुसोदरः पितुःशतगुणंप्रोक्तंसहस्रंमातुरेवच भगिन्यांदशसाह-
स्रंसोदरेदत्तमक्षयं व्यतीपातदिनेदेवकिंचिद्विप्रेसमर्पितं भवत्वनंतफलदंममजन्मनिजन्मनि एवंप्रार्थ्यत्हृषीकेशंनत्वाच
वपुनःपुनः तत्सर्वंगुरवेदद्याच्छ्रोत्रियायकुटुंबिने व्रतोपदेष्टेविप्रायपुराणज्ञायभक्तितः ब्राह्मणान्भोजयित्वातुव्रतमेतत्समा
पयेत् इदंव्रतंमयादेवगृहीतंपूर्वजन्मनि स्वर्गापवर्गदंनृणांसूकरायददाम्यहं एवमुक्त्वानृपश्रेष्ठसूकरायफलंददौ तत्क्षणा
त्तेनपुण्येनसूकरोमुक्तकिल्बिषः मुक्तःसूकरदेहाच्चसर्वाभरणभूषितः दिव्यंविमानंसंप्राप्यगतोस्वर्गंचसूकरः नजानंति
द्विजाःसर्वेव्यतीपातव्रतोत्तमं इहलोकेचसुखदंस्वर्गमोक्षप्रदायकं अतस्त्वंकुरुराजेंद्रव्यतीपातव्रतोत्तमं सर्वपापक्षयक-

रंनृणांभवतिसर्वदा कुर्यादेवंमासिमासिव्यतीपातांस्त्रयोदश चतुर्दशेतुसंप्राप्तेकुर्यादुद्यापनंबुधः आदौमध्येतथाचांतेयथाश
क्तिस्तथाचरेत् निष्कत्रयेणचार्धेनतदर्धार्धेनवापुनः व्यतीपातस्वरूपंहिकुर्यादष्टभुजंनरः गणेशपूजनंकार्यंस्वस्तिवाचनमा
चरेत् नांदीमुखंवास्ततोभ्यर्च्यआचार्यंवरयेत्सुधीः वरयेच्चततोविप्रानृत्विजश्चत्रयोदश देवागारेतथागोष्ठेशुद्धेचस्वीयमं
दिरे पुष्पमंडपिकांकृत्वापट्टकूलादिवेष्टितां तन्मध्येसर्वतोभद्रंरचयेल्लक्षणान्वितं तत्पूर्वेस्थापयेत्कुंभंशर्करापूरितंशुभं
तस्योपरिन्यसेत्पात्रंताम्रंवैणवमृन्मयं निष्कत्रयेणप्रतिमांसुवर्णपरिनिर्मितां स्वशक्त्याकारयेन्मूर्तिंलक्ष्मीनारायणस्यच
लक्ष्मीनारायणौमूर्तिर्व्यतीपातसमन्विता स्थापयेत्प्रतिमांतत्रब्रह्माद्यावाहनंततः ततःपूजांविनिर्वर्त्यमहासंभारविस्तरैः
अर्घ्यंचापिततोदेयंसुगंधैःकुसुमैर्जलैः गृहाणार्घ्यंव्यतीपातसोमसूर्यसुतप्रभो सप्तजन्मकृतंपापंत्वत्प्रसादात्प्रणश्यतु मं
त्रेणानेनदेवायदद्यादर्घ्यंसमाहितः होमंसमारभेत्पश्चात्सोमोधेनुमितिस्मृतः आकृष्णोनेतिमंत्रेणसूर्यायविधिवन्नरः
अश्वत्थार्कसमिद्भिश्चशतमष्टोत्तरंतथा इदंविष्णुरितिमंत्रेणहोमस्यात्पायसेनच व्याहृतीनांफलेहोमंकुर्यादष्टोत्तरंशतं
त्रयोदशब्राह्मणांश्चभोजयेल्लड्डुपायसैः एवमाराधितान्विप्रान्दक्षिणाभिश्चतोषयेत् आचार्यंपूजयेत्पश्चाद्गांचदद्यात्पय-
स्विनीं इत्थंव्रतंतुयःकुर्यान्नरोभक्तिसमन्वितः कोटिजन्मकृतैःपापैर्मुच्यतेनात्रसंशयः अस्मिन्कृतेव्रतेराजन्वैधव्यंस्त्रीन

चाप्नुयात् अकालमृत्युर्दौर्भाग्यंशोकोदुःखंनजायते सर्वसौख्यमवाप्नोतिव्यतीपातप्रसादतः इतिश्रीवराहपुराणेव्यतीपातव्र-
तोद्या॰ संपू॰ अथआश्विनशुक्लैकादशीमारभ्यकार्तिकशुक्लैकादशीपर्यंतंमासोपवासव्रतंलिख्यते हेमाद्रौविष्णुरहस्ये
नारदउ॰ भगवन्श्रोतुमिच्छामिव्रतानामुत्तमंव्रतं विधिंमासोपवासस्यफलंचास्ययथोदितं यथाविधानरैःकार्यंव्रतचर्याय
थाभवेत् आरभ्यतेकथंपूर्वंसमाप्यंचयथाविधि यावत्संख्यंचकर्तव्यंतद्ब्रूहिपितामह व्रतमेतत्सुरश्रेष्ठविस्तरेणममानघ
ब्रह्मोवा॰ साधुनारदपृष्टंहिसर्वेषांहितकारकं यादृङ्मतिमतांश्रेष्ठतच्छृणुष्वब्रवीमिते सुराणांचयथाविष्णुस्तपतांचयथारविः
मेरुःशिखरिणांयद्वद्वैनतेयस्तुपक्षिणां तीर्थानांतुयथागंगाप्रजानांतुयथाद्विजः श्रेष्ठंसर्वव्रतानांहितद्वन्मासोपवासकं सर्व
व्रतेषुयत्पुण्यंसर्वतीर्थेषुयद्भवेत् सर्वदानोद्भवंवापिलभेन्मासोपवासकृत् अग्निष्टोमादिभिर्यज्ञैर्विधिवद्भूरिदक्षिणैः नतत्पु
ण्यमवाप्नोतियन्मासपरिलंघनात् तेनदत्तंहुतंजप्तंतपस्तप्तंस्वधाहुतं यःकरोतिविधानेननरोमासमुपोषणं प्रविश्यवैष्णवं
यज्ञंपूजयेच्चजनार्दनं गुरोराज्ञांततोलब्ध्वाकुर्यान्मासोपवासकं वैष्णवानियथोक्तानिकृत्वाचैवव्रतानितु द्वादश्यादीनिपुण्या
नितत्तोमासमुपावसेत् अतिकृच्छ्रंपराकंचकृच्छ्रंचांद्रायणंतथा मासोपवासंकुर्वीतज्ञात्वादेहबलाबलं वानप्रस्थोयतिर्वापि
नारीवाविधवामुने मासोपवासंकुर्वीतगुरुविप्राज्ञयाततः आश्विनस्यामलेपक्षेएकादश्यामुपोषितः व्रतमेतत्तुगृण्हीयाद्या

वृद्धिं शाद्दिनावृधि वासुदेवं समुद्दिश्य कार्तिकं सकलं नरः मासं चोपवसेद्यस्तु स मुक्तिफलभाग्भवेत् अच्युतस्यालये भक्त्या त्रिका
लं कुसुमैः शुभैः मालतीन्दीवरैः पद्मैः कमलैस्तु सुगंधिभिः कुंकुमागरुकर्पूरैर्बलिप्यैश्च सुगंधकैः नैवेद्यैर्धूपदीपाद्यैरर्चयेत्तु
जनार्दनम् मनसा कर्मणा वाचा पूजयेद्गरुडध्वजं कुर्यान्नरस्त्रिषवणं महद्भक्त्या जितेंद्रियः नाम्नासेवेत्तथालापं विष्णोः कु
र्यादहर्निशं सुखेन च स्तुतिर्वाच्या मृषावादं विवर्जयेत् सर्वसत्वदयायुक्तः शांतश्चानिरहिंसकः सुप्तो वा आसनस्थो वा वासु
देवं प्रकीर्तयेत् स्मृत्वालोकानुगंधादि स्वाह्वन्नं न च कीर्तयेत् अन्यस्य वर्जयेत्सर्वं आत्मनः शुभकांक्षिभिः गात्राभ्यंगं शिरो
भ्यंगं तांबूलं च विलेपन वनस्थो वर्जयेत्सर्वं यच्चान्यच्च निराकृतं वदस्थानसदा किंचिद्दुष्कृतमत्यत्र कारयेत् देवलायतनेनेनिष्ठेन्न-
गृहस्थश्चरेद्व्रतं कृत्वा मासोपवासं तु संयतात्मा जितेंद्रियः ततोर्चयेन्महाभक्त्या द्वादश्यां गरुडध्वजं पूजयेत्पुष्पमालाभिर्गं
धधूपविलेपनैः वस्त्रालंकाररत्नाद्यैस्तोषयेदच्युतं नरः स्नापयेत्तु हरिं भक्त्या तीर्थचंदनवारिभिः चंदनेनानुलिप्तांगं पुष्पधू
पैरनेकशः वस्त्रदानादिभिश्चैव भोजयेच्च द्विजोत्तमान् दद्याच्च दक्षिणां तेभ्यो तांबूलादि च दापयेत् क्षमापयित्वा विप्रांश्च वि
सृजेन्नियतो व्रती एवं वित्तानुसारेण भक्तियुक्तेन चेतसा एवं मासोपवासं तु कृत्वाभ्यर्च्य जनार्दनं भोजयित्वा द्विजांश्चैव विष्णु
लोके महीयते एवं मासोपवासस्य दिनत्रिंशद्द्विजोत्तमः निर्वापयेत्ततस्तोच्चैर्विधिना येन तच्छृणु कारयेद्वैष्णवं यज्ञमेकादश्या

सुपोषितः पूजयित्वाचदेवेशमाचार्यानुज्ञयाहरिं अर्चयित्वाहरिंभक्त्याअभिवाद्यगुरुंतथा ततोतुभोजयेद्विप्रान्यथाशक्तियथा
विधि विशुद्धकुलचारित्रान्विष्णुपूजनतत्परान् पूजयित्वाद्विजान्सम्यक्त्रिंशद्वैभोजयेत्सुधीः तावंतिवस्त्रयुग्मानिआसना
दिकमंडलून् योगपट्टादिशस्त्राणिब्रह्मसूत्राणिचैवहि दद्याच्चैवद्विजाग्र्येभ्यो पूजयित्वाप्रणम्यच ततोनुकल्पयेच्छय्यांशुभ्रास्त
रणसंस्थितां वितानसंयुतांश्रेष्ठांसोपधानामलंकृतां विष्णोस्तुकारयेन्मूर्तिंकांचनींतुस्वशक्तितः न्यसेत्तस्यांतुशय्यायांअर्च
यित्वास्रगादिभिः आसनंपादुकेछत्रंवस्त्रयुग्मसुपानहौ पवित्राणिचपुष्पाणिशय्यायामुपकल्पयेत् एवंशय्यांतुसंकल्प्यप्र
णिपत्यचतान्द्विजान् प्रार्थयेच्चानुमोदार्थंविष्णुलोकंव्रजाम्यहं एवमभ्यर्चिताविप्रावदेयुर्व्रतिनंतदा व्रजव्रजनरश्रेष्ठविष्णोः
स्थानमनामयं विमानंवैष्णवंदिव्यंसशय्यापरिकल्पितं तेनविष्णुपदंयाहिसदानंदमनामयं ततोविसर्जयेद्विप्रान्प्रणिप-
त्यानुगम्यच ततस्तुपूजयेद्भक्त्यागुरुंज्ञानप्रदायकं तांशय्यांकल्पितांसम्यक्गुरुव्रतसमापकं प्रणम्यशिरसाशान्तोगुरवेप्र
तिपादयेत् एवंपूज्यहरिंविप्रगुरुंज्ञानप्रकाशकं कृत्वामासोपवासंचनिर्वाप्यविधिवन्मुने कुलानांशतमुद्धृत्यविष्णुलोकंव्रजे
न्नरः यस्मिन्वरेमहापुण्येकुलेमासोपवासकृत् सर्वपापविनिर्मुक्तोविष्णुलोकेमहीयते नरोमासोपवासानांकर्तापुण्यकृतांव
रः पितृमातृकुलाभ्यांचसमंविष्णुपुरंव्रजेत् नारीयाविधवाजातायथोक्तव्रतचारिणी कृत्वामासोपवासंचव्रजेद्विष्णुंसनातनं

नारद उवा॰ सुदुष्करमिदंदेवमूर्छाग्लानिकरंपरं व्रतंमासोपवासाख्यंभक्तिंजनयुतेक्ष्यते पीडितस्यभृशंदेवमुमूर्षोर्व्रतिनस्तदा
त्यागोवानुग्रहोवाथकिंनुकार्यंपितामह ब्रह्मोवा॰ व्रतस्थंकृषितंदृष्ट्वामुमूर्षुंवातपोधनं दृष्ट्वातुब्राह्मणास्तस्यकुर्युःसम्यगनुग्र
हं अमृतंपाययेत्क्षीरमिच्छमानंसकृन्निशि यथेहनवियुज्येत प्राणैःक्षुत्पीडितोव्रती अतिमूर्छान्वितंक्षीणंमुमूर्षुंक्षुत्प्रपी
डितं पाययित्वाशृतंक्षीरंरक्षेद्दत्वाफलानिच अहोरात्रंवृथानित्यंव्रतस्थःपरिपालयेत् पयोमूलफलंदत्वारक्षेच्चव्रतिनंसदा
एवंमासोपवासस्थ आरूढःप्राणसंशये अव्रतघ्नगुणैर्दिव्यैः परीक्षेद्ब्राह्मणाज्ञया नैनेव्रतंविनिघ्नंतिहविर्विप्रानुमोदनम्
क्षीरौषधंगुरोराज्ञात्थापोमूलंफलानिच एवंकृत्वापरिक्षेतसगुडंपायसंतथा पाययेत्क्षीरतोयंचव्रतपश्चात्समापयेत् अथवि
ष्णुव्रतंनाविष्णुर्दाताविष्णुव्रतीतथा सर्वविष्णुमयंज्ञात्वाव्रतस्थंक्षीणमुद्धरेत् यदामुमूर्षुर्निश्चेष्टःपरिग्लानोतिमूर्छितः तदा
समुद्धरेत्क्षीणमिच्छंतंविमुखंस्थितं परिपाल्यव्रतीदेहंव्रतशेषंसमापयेत् यथोक्ताद्द्विगुणंतस्यफलंविप्रमुखोदितं इंद्रिया
र्थेषुसक्तोयोसदेवविमलात्मनिः परितोषयतेविष्णुंनोपवासोयतात्मनां किंतस्यबहुभिस्तीर्थैःस्नानहोमजपव्रतैः अजितो-
पींद्रियगणोजितोयेनस्वचेतसा जितेंद्रियःसदाशांतःसर्वभूतहितेरतः वासुदेवपरोनित्यंनक्लेशंकर्तुमर्हति कृत्वानूनंय-
थोक्तंतुवैष्णवंपदमव्ययं प्राप्नोतिपुरुषोनित्यंपुनरावृत्तिदुर्लभं येस्मरंतिसदाविष्णुंविशुद्धेनांतरात्मना तेप्ययांतिभयंत्यक्त्वा

विष्णुलोकमनामयं ततोविष्ण्वर्चनंसम्यक्प्रातःस्नात्वाक्रमेणच कीर्तयंत्यच्युतंयेवैतेनरातिभवार्णवं आनंदितोथदुःखार्तःक्रुद्धः
शांतोथवाहरिं एवंयःकीर्तयेद्भक्त्यासगच्छेद्वैष्णवींपुरीं गर्भजन्मजरारोगदुःखसंसारबंधनैः नबाध्यतेनरोनित्यंवासुदेवंम
नःस्मरन् स्थावरेजंगमेसत्वेस्थूलेसूक्ष्मेशुभाशुभे विष्णुंपश्यतिसर्वत्रयःसविष्णुःस्वयंनरः सर्वंविष्णुमयंज्ञात्वात्रैलोक्यंस
चराचरं यस्यध्यानात्मात्मनिस्तेनपूजितोगरुडध्वजः इदंकल्पानुकल्पाभ्यांव्रतानामुत्तमंव्रतं विष्णुलोकमवाप्नोतिचक्रपाणेःप्रसा
दतः विधिर्मासोपवासस्ययथावत्परिकीर्तितः मतस्महात्मुनिश्रेष्ठसर्वलोकहितायच कृत्वाविष्ण्वर्चनंभक्त्यानरोविष्णुपुरीं
व्रजेत् नाभक्तायप्रदातव्यंनदेयंदुष्टचेतसे इतिश्रीविष्णुरहस्योक्तंमासोपवासव्रतंसं· अथआषाढशुक्लैकादशीमार
भ्यकार्तिकशुक्लैकादशीपर्यंतधारणापारणाव्रतंलिख्यते कृष्णउवा· शृणुकौंतेयवक्ष्यामिधारणापारणाव्रतं बांधवादिव
धोत्पन्नदोषघ्नंचसुखप्रदं कुलवृद्धिकरंचैवसर्वेंद्रियनियामकं चातुर्मास्येतथाचाद्येमासिकौंतेयसव्रतः पुण्याहंकारयेत्पूर्व
मेकादश्यांशुभेदिने पश्चात्संकल्प्यराजेंद्रतदारभ्यव्रतंचरेत् आद्येमासितथाचांतेचातुर्मास्यमथापिवा एकस्मिन्धारणं-
कार्यंपारणंचतथापरे उपवासोधारणंस्यात्पारणंभोजनंभवेत् पारणेतुदिनेप्राप्तेअर्घ्यंपूर्वंनिवेदयेत् पारणंतुततःकार्यंमंत्रम
ष्टाक्षरंजपेत् अष्टोत्तरशतंदद्यादर्घ्यंदेवायतन्मनाः समाप्तेमासिराजेंद्रकुर्यादुद्यापनंबुधः चातुर्मास्यव्रतंचाथमासेमासेतुका

रयेत् उपवासदिने प्रातः पुण्याहं कारयेत्सुरा आचार्यं वरयेत्पश्चाद्ब्राह्मणांस्तु ततः परं कुर्यात्सुमतिमांश्चैव ध्यानं लक्ष्मीनारायणस्य वै पंचामृतैस्तथा पु
ष्पैस्तुलसीदलचंपकैः मालतीकेतकीभिश्च मल्लिकाकुसुमैस्तथा रात्रौ जागरणं कुर्यात्पुराणपठनादिभिः प्रातःकाले समायाते ब्राह्मणांस्तु नि
मंत्रयेत् मासे विप्राः पंचदश द्विमासे द्विगुणं भवेत् चातुर्मास्ये तथा राजन्नृतथा विंशति भूसुरान् आनीय संख्यया राजन्ब्राह्मणांस्तु शुचिव्र
तान् पश्चात्स्नानादिकं कृत्वा देवपूजां समाचरेत् पश्चादग्निं समाधाय होमं कुर्याद्यथाविधि निष्पुसीदेति मंत्रेण जुहुयाच्च तिलौदनं अरायिका
णेमंत्रेण जुहुयाच्च घृतौदनं अष्टाक्षरेण मंत्रेण पायसं जुहुयात्ततः लक्ष्मीनारायणं देवं स्थापयेत्तत्र देवताः पूर्णाहुतिं ततो हुत्वा होमशेषं
समापयेत् ब्राह्मणान्भोजयेत्पश्चादाचार्यं पूजयेत्ततः एवं कृत्वा महाभाग ब्रह्महत्यादिपातकैः मुच्यते नात्र संदेहस्तस्मात्कुरु महाव्रतं सु
ग्रीवस्तु पुरा राजन्हत्वा वालिनमाहवे रामादिष्टं ततो कृत्वा धारणापारणाव्रतं विमुक्तः सततं दोषान्नानापातकसंचयात् नारदेन तथा राज
न्पूर्वजन्मनि शूद्रतः द्विजानां सुपदेशाच्च धारणापारणा कृता होमादिकं विधायाथ तस्य पुण्यप्रभावतः जितेंद्रियस्ततो जातो ब्रह्मलोकादि
कांश्चरन् तस्मात्सर्वप्रयत्नेन कुर्याद्धारणपारणं इंद्रियाणां वशार्थाय सर्वपापापनुत्तये तस्मात्त्वमपि राजेंद्र कुरु षड्व्रतमुत्तमं किं दानैस्तप
साकिं वा नियमैश्च व्रतैर्यमैः धारणापारणा कुर्या कृतानां सुक्रमव्रतं सर्वयज्ञेषु तीर्थेषु सर्वदानेषु यत्फलं तत्फलं समवाप्नोति कृत्वा धारणा
पारणं इदं व्रतं महापुण्यं तपसां सुत्तमं तपः तस्मात्त्वमपि राजेंद्र कुर्विदं विधिपूर्वकं बाधवादिवधाद्दोषान्मुच्यसे नात्र संशयः इति तं सं-

वृद्दिध्यात्वाविष्णुःस्वांचपुरींययौ वंद्यमानःपौरजनैःसमस्तैःपांडुनंदनैः युधिष्ठिरोपिराजर्षिश्चकारेदंमहाव्रतं विमुक्तःस
र्वपापेभ्योवंशवृद्धिस्ततोभवत् इतिश्रीभ० धारणापारणव्रतंसं० अथसंक्रांतिव्रतानिलिख्यंते तत्रादौधान्यसंक्रांति
व्रतं हेमाद्रौस्कांदे नंदिकेश्वरउ० अथाहंसंप्रवक्ष्यामिधान्यव्रतमनुत्तमं यत्कृत्वेहनरोराजन्सर्वान्कामानवाप्नुयात् अयने
विषुवेचैवस्नानंकृत्वायथाविधि व्रतस्यनियमंकुर्याद्ध्यात्वादेवंदिवाकरं करिष्यामिव्रतंदेवत्वद्भक्तस्त्वत्परायणः तत्रविघ्नोनमे
भूयात्तवदेवप्रसादतः इत्युच्चार्यलिखेत्पद्मंकुंकुमेनाष्टपत्रकं भास्करंपूर्वपत्रेतुआग्नेयेचतथारविं विवस्वंतंतथायाम्येनैर्ऋत्ये
पूषणंतथा आदित्यंवारुणेपत्रेवायव्येतपनंतथा मार्तंडमितिकौबेरऐशान्येभानुमेवच एवंचक्रमशोभ्यर्च्यविश्वात्मामध्यदेव
ता कृतांजलिपुटोभूत्वाअर्घ्यंदद्यात्समंत्रकं कालात्मासर्वदेवात्मावेदात्माविश्वतोमुखः व्याधिमृत्युजराशोकसंसारभयनाश
नः इत्यर्घ्यमंत्रः पुष्पैर्धूपैःसमभ्यर्च्यशिरसाप्रणिपत्यच रविंध्यात्वाततोदद्यात्धान्यप्रस्थंद्विजातये प्रतिमासंपुनस्तद्वत्
पूज्योदेवःसहस्रपात् एवंसदाप्रदातव्यंधान्यप्रस्थंद्विजातये एवंसंवत्सरेपूर्णेकुर्यादुद्यापनक्रियां अर्घ्यपात्रंहिसौवर्णंका
रयेन्मंडलशोभनं द्विभुजंपूजयेद्भानुंरक्तवस्त्रयुगान्वितं धान्यद्रोणेनसहितंतदर्धेनस्वशक्तितः स्वर्णशृंगींरौप्यखुरींकांस्य
दोहांपयस्विनीं रविरूपंद्विजंध्यात्वातत्सर्वंविनिवेदयेत् अग्निष्टोमसहस्राणांफलंप्राप्नोतिमानवः सप्तजन्मसहस्राणिधनधा

न्यसमन्वितः निर्व्याधिर्निरुजोधीमान्रूपवानभिजायते इतिस्कंदपु॰ धान्यसंक्रांतिव्रतं अथलवणसंक्रांतिव्रतं अथातःसं
प्रवक्ष्यामिलवणसंक्रांतिमुत्तमं संक्रांतिवासरंप्राप्यस्नानंकृत्वाशुभेजले वस्त्रालंकारसंवीतोभक्तिभावसमन्वितः कुंकुमेनलि
खेत्पद्ममष्टपत्रंसकर्णिकं भास्करंपूजयेद्भक्त्याधान्यप्रस्थसमन्वितः तदग्रेलवणंपात्रंसगुडंस्थापयेत्ततः पूजितस्त्वंयथाश
क्त्याप्रसीदममभास्कर लवणंसगुडंपात्रंब्राह्मणायनिवेदयेत् एवंसंवत्सरेपूर्णेप्रात्रंकुर्याद्धिरण्मयं रक्तवस्त्रयुगच्छन्नंरक्तचंद
नचर्चितं कंबलंलवणंपात्रंधेन्वासार्द्धंद्विजातये प्रदद्यात्प्रदानुसुहृद्विश्वविश्वात्माप्रीयतामिति एवंकृत्वातुयत्पुण्यंप्राप्यतेभुविमा
नवैः तत्केनगदितुंशक्यंवर्षकोटिशतैरपि लवणाचलदानस्यफलंप्राप्नोतिमानवः सर्वकामसमृद्धात्माविमानवरमध्यगः सूर्य
लोकेवसेत्कल्पंपूज्यमानःसुरासुरैः इतिलवणसंक्रांतिव्रतं अथभोगसंक्रांतिव्रतं तत्रैव संक्रांतिदिवसंप्राप्यस्नात्वा
चैवशुचिव्रतः सुवासिन्यैप्रदातव्यंनानासौभाग्यकंचुकं कुंकुमंकज्जलंचैवसिंदूरंकुसुमानिच सुगंधीनिचद्रव्याणितांबूलं
चशताधिकं तंडुलान्गुडसंयुक्तान्ताभ्योदद्याद्विचक्षणः दद्यात्प्रत्यहमनसामिथुनेभ्योयथाविधि भोजयित्वायथाशक्त्या
वस्त्रयुग्मंप्रदापयेत् एवंसंवत्सरस्यांतेरविंसंपूज्यपूर्ववत् धेनुंसदक्षिणांदद्यात्सपत्नीकायद्विजायच स्यात्सुखीसर्वमर्त्येषुभो
गीजन्मनिजन्मनि इतिभोगसंक्रांतिव्रतं अथरूपसंक्रांतिव्रतं तत्रैव संक्रांतिवासरेस्नानंकुर्यात्तैलेनवैसुधीः हेमपात्रंघृत

युतंहिरण्येनसमन्वितं स्वरूपंवीक्ष्यतत्तात्रेब्राह्मणायनिवेदयेत् एकभक्तंततःकृत्वापूजयित्वारविंव्रती व्रतांतेकांचनंदद्याद्बहुलधेनुस
मन्वितं इतिरूपसंक्रांतिः अथतेजःसंक्रांतिव्रतं शालितंडुलसंयुक्तकरकंकारयेच्छुभं दीपंसंस्थाप्यतन्मध्येज्वलितंतुस्वतेजसा
तन्मुखेसोदकंस्थाप्यब्राह्मणायनिवेदयेत् रविंसंपूज्ययत्नेनअर्घ्यंदद्याद्विचक्षणः एकभक्तंचकर्तव्यंयावत्संवत्सरंभवेत् संवत्सरे
तुसंपूर्णेकुर्याद्उद्यापनंबुधः शोभनंदीपकंकार्यंस्वर्णेनतुनारद ताम्रस्यकरकंकुर्याद्दीपंन्यस्यततोपरि कपिलासहदातव्याकरके
णद्विजातये इतितेजःसंक्रांतिः अथसौभाग्यसंक्रांतिव्रतं संक्रांतिवासरेप्राप्तेस्नात्वाचैवशुचिव्रतः पूर्वकृत्वानुसूर्यमभ्यर्च्य
तथैवचसुवासिनीं सौभाग्याष्टकसंयुक्तंवस्त्रयुग्मंतुयोषिते विप्रायवेदविदुषेभक्त्यातत्प्रतिपादयेत् एवंसंवत्सरेपूर्णेकुर्याद्ब्राह्म
णपूजनं पर्वतंलवणंकृत्वायथाविभवसारतः कांचनंकमलंकृत्वाभास्करंचैवकारयेत् गंधपुष्पादिनापूज्यविप्रायप्रतिपादयेत्
ऐक्षवंतृणराजंचनिष्पावाश्चसुशोभनाः धान्यकंजीरकंचैवकोसुंभंकुंकुमंतथा लवणंचाष्टमंतत्रविप्रायविनिवेदयेत् इतिसौ
भाग्यसंक्रांतिः अथतांबूलसंक्रांतिव्रतं संक्रांतौप्रातरुत्थायस्नात्वाचैवयथाविधि रविमभ्यर्च्ययत्नेनचंदनेनसुगंधिना तांबूलं
चंदनाद्यैश्चपूजयेच्चाद्विजोत्तमान् एवंसंवत्सरंकार्यसंक्रांतौरविपूजनं तांबूलभक्षयेद्विप्रैःकारयेत्तत्पुरःसरं वत्सरांतेतुकमलं
कृत्वाचैवतुकांचनं पर्णकोशंप्रकुर्वीततथापूगफलालयं चूर्णभांडंप्रकुर्वीतपूगप्रस्फोटनंतथा सुखवासादिचूर्णानांभांडानिवि-

विधानिच द्विजदांपत्यमावाद्यसर्वोपस्करसंयुतैः द्रव्यैस्तुपूजयेद्भक्त्याषड्रसैर्भोजयेद्विजान् उपकल्पितंतुयत्किंचिद्ब्राह्मणायनिवे
दयेत् एवंकरोतियानारीतांबूलाख्यंव्रतोत्तमं भर्त्रापुत्रैश्चपौत्रैश्चमोदतेस्वगृहेसदा इतितांबूलसंक्रांतिः अथमनोरथसंक्रा
तिव्रतं गुडेनपूर्णकुंभेनवत्सरंतुस्वशक्तितः संक्रांतिवासरेदद्याद्ब्राह्मणायकुटुंबिने एवंसंवत्सरेपूर्णेप्रतिसंक्रमणेर्चिते रविम-
भ्यर्च्ययत्नेनकुर्यादुद्यापनंशुभं गुडस्यपर्वतंकृत्वावस्त्ररत्नैश्चभूषितं अयनेचोत्तरेदद्याद्वित्तशाठ्यंनकारयेत् यंयंकामयतेकामं
तंतंप्राप्नोतिपुष्कलं शेषंधान्यसंक्रांतिवत् इतिमनोरथसंक्रांतिव्रतंसं० अथअशोकसंक्रांतिव्रतं अयनेविषुवेचैवव्यतीपातो
भवेद्यदि एकभुक्तंततःकुर्यात्तिलदानप्रपूर्वकं कांचनंभास्करंकृत्वायथाविभवशक्तितः स्नापयेत्पंचगव्येनगंधपुष्पैस्तुपूजयेत्
संछाद्यरक्तवस्त्राभ्यांताम्रपात्रेनिधायच भास्कराय० पादौपू० रवये० जंघेपू० आदित्याय० जानुनीपू० दिवाकराय० उरूपूज०
अर्यम्णे० कटीपू० भानवेन० उदरंपू० पूष्णेन० बाहूपू० मित्राय० स्तनौपू० विवस्वते० कंठंपू० सहस्रांशवे० मुखंपू० नमोहंसे० नेत्रेपू०
तेजोराशये० शिरःपू० अरुणसारथिने० सर्वांगंपू० अर्घ्यंचपूर्ववत्कार्यंब्राह्मणायनिवेदयेत् एवंसंवत्सरेपूर्णेकांचनेनदिवाकरं
संपूज्यपद्मकुसुमैर्यथाविभवसारतः धूपैर्दीपैश्चनैवेद्यैरक्तवस्त्रेणवेष्टितं ततोहोमंप्रकुर्वीतरविमंत्रेणनारद द्वादशाःकपि-
लादेयावस्त्रालंकारसंयुताः अशक्तःकपिलामेकांवित्तशाठ्यविवर्जितः आयुरारोग्यमैश्वर्यंभार्यापुत्रसमन्वितः इतिअशोक

संक्रांतिः अथआयुःसंक्रांतिः अथान्यांतप्रवक्ष्यामिआयुःसंक्रांतिमुत्तमां संक्रांतिदिवसेस्नात्वापूजयेच्चदिवाकरं कांस्येक्षीरं
घृतंदद्यात्सहिरण्यंस्वशक्तितः मंत्राः पृथक्चवक्तव्याः पूजासैवप्रकीर्तिता तत्क्षीरंस्करभाजातंपीयूषंसमसर्पिषायुक् आयुरारोग्य
मैश्वर्यमतोदेहिद्विजालये अनेनविधिनावर्षसर्वंदद्यादतंद्रितः उद्यापनादिकंसर्वंधान्यसंक्रांतिवद्भवेत् निर्व्याधिश्चैववदीर्घायुस्ते
जस्वीकीर्तिमांस्तथा अपमृत्युभयंनास्तिजीवेच्चशरदांशतं इतिआयुःसंक्रांतिः अथधनसंक्रांतिव्रतं संक्रांतिदिवसेपूज्यो
भास्करस्तुविधानतः कलशांनिर्व्रणंकृत्वावारिपूर्णान्निदापयेत् सुवर्णप्रतिमांकृत्वाप्रतिमासंतुदापयेत् विधिनानेनवर्षांतेप्रीय
तांमेदिवाकरः भानोरुदयवेलायांस्नात्वासूर्यंप्रपूजयेत् इक्षुसारान्नेनपक्वान्नघृतयुक्तेनभूरिणा ब्राह्मणान्भोजयेद्धत्वाच्चापेमा
मेदिवाकरे पूजाविधानंतद्वत्तुधान्यसंक्रांतिवद्भवेत् सौवर्णकलशंकृत्वासूर्यंतूपरिविन्यसेत् सुवर्णघटितंपद्मंसूर्यायवि-
निवेदयेत् गोदानंतत्रदानव्यमेवंसंपूर्णतांव्रजेत् जन्मनांशतसाहस्रं धनयुक्तोभवेन्नरः आयुरारोग्यसंपन्नोसूर्यलोकेमहीयते
इतिधनसंक्रांतिः अथसर्वसंक्रांत्युद्यापनंलिख्यते हेमाद्रौमात्स्ये नंदिकेश्वरउ० अथान्यदपिवक्ष्यामिसंक्रांत्युद्यापनफलं
विषुवेत्वायनेचैवसंक्रांतिव्रतमाचरेत् पूर्वेद्युरेकभक्तेनदंतधावनपूर्वकं संक्रांतिवासरेप्रातस्तिलैःस्नानंसमाचरेत् रविसंक्रमणे-
भूमौचंदनेनाष्टपत्रकं पद्मंसकर्णिकंकुर्यात्तस्मिन्नावाहयेद्रविं कर्णिकायान्यसेद्देवमादित्यंपूर्ववत्तथा नमःसोमाधिपंचाग्नेया-

य्येकरमंडलायच नमः सविशेनैर्ऋत्येवारुणेतपनंबुधः वायव्येमिमभावाह्य पूजयेत्तुयथाक्रमं मार्तंडमुत्तरेविष्णुमीशान्येविन्यसेत्स
दा द्विजायसोदकंकुंभंतिलपात्रंहिरण्मयं कमलंतुयथाशक्त्याकारयित्वानिवेदयेत् चंदनोदकपुष्पैश्चदेवायार्घ्यंन्यसेद्बुवि
विश्वायविश्वरूपायविश्वधाम्नेस्वयंभुवे नमोनंतनमोधात्रेऋक्सामयजुषांपते अनेनविधिनासर्वंमासिमासिसमाचरेत्
वत्सरांतेतथाकुर्यात्सूर्यंद्वादशधानरः संवत्सरांतेघृतपायसेनसंतर्प्यवह्निंद्विजपुंगवान्वै कुंभान्पुनर्द्वादशधेनुयुक्तान्समर्प्य
हैरण्मयपद्मगर्भान् पयस्विनीःशीलवतीश्चदद्यात्ताम्राःस्वरूपेणसुवस्त्रयुक्ताः गावोथवासमचकांस्यदोहामाल्यांबरावा-
चतुरोप्यशक्तः द्वेवाप्यशक्तःकपिलामथैकांनिवेदयेद्ब्राह्मणपुंगवाय हैमींचदद्यात्पृथिवीमशेषांकृत्वाथरौप्यामथवासकृता-
म्रीं पैष्टीमशक्तोथतिलैर्विधायसौवर्णसूर्येणसमंप्रदद्यात् नवित्तशाठ्यंपुरुषोत्रकुर्यात्कुर्वन्नधोयातिनसंशयोत्र यावन्महे
न्द्रमसुरवानगेंद्राःपृथ्वीचससाब्धिसुतेहतिष्ठेत् तावत्सगंधर्वगणैरशेषैःसंपूज्यतेनारदनाकपृष्ठे ततस्तुभूमौद्विजवर्यजोवा
क्षत्राधिपःस्यात्कुलशीलयुक्तः सुदृष्टसुरवंतुगवपुःसुभार्यःप्रभूतपुत्रोरिपुवंदितांघ्रिः इतिसंक्रांत्युद्यापनं अथधनसंक्रम
णेविशेषः रवौधनुषिसंप्राप्तेस्नायादर्णोदयेसदा सर्वनैत्यंचसंपाद्यमुहूर्तंनगतोरविः कृसरान्नेनविप्रान्वैभोजयेद्घृतपायसैः
दक्षिणाभिश्चसंतोष्यस्वयंभुंजीतवाग्यतः एवंनिरंतरंकुर्यादशक्तोभानुवासरे इहभुक्त्वातुभोगान्वैसूर्यलोकंसगच्छति ३

तिधनुर्मासमहिमा अथरवेर्घृतस्नपनंहेमाद्रौभविष्ये उत्तरेत्वयनेमासेघृतप्रस्थेनयोहरिं स्नापयित्वाब्राह्मणेभ्योयःप्रयच्छति
मानवः घृतधेनुंतथाद्द्याद्ब्राह्मणायकुटुंबिने सर्वपापविनिर्मुक्तःसूर्यलोकेचिरंवसेत् ततोभवतिभूपालःप्रजानंदविवर्धनः इ
तिउदगयनेघृतस्नपनं अथमकरसंक्रांतौशिवरहस्येघृतकंबलदानमहिमा माघेमासिमहादेवंयःकुर्याद्घृतकंबलं सभुक्त्वास
कलान्भोगानंतेमोक्षंचविंदति नराभूपतयोजाताघृतकंबलदानतः जातिस्मराश्चतेजातामुक्ताश्चांतेशिवार्चकाः पुरासूनागं
संविप्रजाबालिश्रुतिपारगं पप्रच्छश्रूलकर्णाभोधर्मंदारिद्र्यनाशकं सूनागउ॰ असितायाःसितायावाधेनोर्घृतमनुत्तमं सं
पादनीयंयत्नेनधनीभूतंचशोभनं तद्घृतंतुलयोत्तीर्णप्रस्थसार्धशतत्रयं महाकंबलमेतद्धिघृतस्यपरिकीर्तितं तदर्धंवानदर्धं
वासायंनयंशिवालयं घृतेनान्येनदेवेशमभिषिंच्यमहेश्वरं ततोघनघनीभूतमर्पयेच्छिवमस्तके ततस्तिलैःसर्षपैश्चबिल्वप
त्रैश्चकोमलैः हेमपद्मैश्चदेवेशःपूजनीयोमहेश्वरः धूपदीपादिकंदेयंमहानैवेद्यमादरात् ततोनीराजनंदत्वादेयःपुष्पांजलिस्त
तः प्रदक्षिणांनमस्कारान्कृत्वाचतदनंतरं शैवंपंचाक्षरंजप्त्वाशिवायैतन्निवेदयेत् ततोजागरणंकुर्याच्छिवस्मरणपूर्वकं ततः
प्रातःसमुत्थायकृत्वास्नानादिकंपुनः पूजनीयोमहादेवोघृतसेचनपूर्वकं भोजनीयास्तथाशैवाभक्ष्यैर्भोज्यैश्चयत्नतः ततःस्व
यंचभोक्तव्यंबंधुभिःसहसादरं अनेनतवदारिद्र्यंनाशमेष्यतिसर्वथा भोगांश्चविपुलान्भुक्त्वाशिवलोकंगमिष्यसि इतिमकर

संक्रांतौघृतकंबलदानंसमाप्तं अथमकरसंक्रमणेदधिमंथनदानं तद्विधिः मासपक्षाद्युल्लिख्य ममेहजन्मनिजन्मांतरेच अखं
डितसौभाग्यपुत्रपौत्रधनधान्याभिवृद्ध्यर्थंश्रीसवितृसूर्यनारायणस्वरूपिणेब्राह्मणायदधिमंथनदानंकरिष्ये इतिसंकल्प्य
तिलोद्वर्तनपूर्वकंस्नात्वाशुचिवस्त्रंपरिधाययशोदाकृष्णासुवर्णप्रतिमांसंपूज्यप्रार्थयेत् यशोदेत्वंमहाभागेसुतंदेहिमनोर
मं पूजितासिमयादेविदधिमंथनभाजने श्रीकृष्णपरमानंदसंसारार्णवतारक पुत्रंदेहिमनोज्ञंचऋणत्रयविमोक्षणं इति
प्रार्थ्य दानमंत्रः गृहाणत्वंद्विजश्रेष्ठदधिमंथनभाजनं नवनीतेनसहितंदेवक्यासहितंहरिं प्रसादःक्रियतांमत्यंसूर्यरूप
नमोस्तुते ब्रह्मांडपुराणेरंगदानमाहात्म्येकृपींप्रतिदुर्वाससोपदिष्टं अथकथा सूतउ० पीडिताहंदरिद्रेणअपुत्रत्वाच्चतपो
धन तपसोभंगभीत्याच्चयत्त्वंनाचरतेपतिः ममसर्वस्वमेकागौः स्वल्पदोहावयोमहत् जीवनंममतक्रेणधर्मवार्तागरीयसी केनोपा
येनभोब्रह्मन्तन्मेब्रूहिसुखंमम दुर्वासाउ० दानंदेहिचसुभगेयेनपूर्णमनोरथा नंदजायासुतंलेभेब्रह्माद्यैःपूजितंमहत् श्रीकृ
ष्णाख्यंपरंतत्वंयोगिभिश्चदुरासदं दधिमंथनदानंचपुत्रप्राप्तिकरंपरं नान्यदस्तिदरिद्राणांदानादस्मात्कथंचन तस्मात्त्वमपिदेयंमे
क्षुधितायतपस्विने भविष्यतितवसुतोचिरंजीवीशुचिव्रतः विरच्यस्वस्तिकंपूर्वमनुलिप्यमहीतलं द्रोणमानंधान्यपुंजंगोधूमै-
श्चविशेषतः दध्यमत्रकमासाद्यकृष्णलीलात्वदादिस्मरन् संसिद्धमथनेनस्मिन्सौवर्णप्रतिमांतथा संकल्पादिविधायाशुपूज्येप्र

ज्ञनमंथकं हरिद्राकुंकुमाद्यैश्च दधिभांडं विलेपयेत् रक्तसूत्रेण संवीतं रक्तवस्त्रेण वेष्टयेत् माल्यैरन्यैश्च संयुक्ते देवीमावाहयेत्तथा सू-
र्यं चावाहयेद्द्वंद्वे दीपानष्टौ प्रदीपयेत् लड्डुकान् पृथुकान् लाजान् इक्षुखंडानि वै तथा नानाविधानि खाद्यानि समंतात्स्थापयेत्ततः कृष्णा
प्रीतिकरं त्वेतद्धनधान्यसमृद्धिदं क्षौमं वासः पृथुकटितटे बिभ्रती सूत्रनद्धं पुत्रस्नेहस्नुतकुचयुगं जातकंपं च सुभ्रूः रज्ज्वाकर्षश्रमभु-
जचलत्कंकणौ कुंडलेच स्विन्नं वक्त्रं कबरविगलन्मालती निर्ममंथ परिधीवस्त्रमासाद्य ययात्वे जननीं हरिः गृहीत्वा दधिमंथानं न्यषेधत्
प्रीतिमावहन् नानाखाद्यैर्वारितोपि न च मुंचति माधवः अंकमारुह्य स्तन्यं सः पिबन्मुखं विलोकयन् विचित्रैः पट्टकूलैश्च गंधमाल्यैर्वि-
शेषतः पूजयित्वा प्रसाद्यैवं यशोदां पुत्रवत्सलां यशोदे त्वं महाभागे सुतं देहि मनोरमं पूजितासि मया देवी दधिमंथनभाजने श्री-
कृष्णापरमानंद संसारार्णवतारक पुत्रं देहि मनोज्ञं मे ऋणत्रयविमोक्षणं ब्राह्मणं वेदवेत्तारं सुपवेश्य सुखासने गंधमाल्यैश्च संपूज्य-
दानं दद्याद्द्विजातये गृहाण त्वं द्विजश्रेष्ठ दधिमंथनभाजनं नवनीतेन सहितं देवक्या सहितं हरिं प्रसादः क्रियतां मह्यं सूर्यरूप नमो-
स्तु ते दुर्वाससोपदिष्टं सा द्रोणभार्या सुलोचना मकरस्थे यदा सूर्ये तिलोद्वर्तनपूर्वकं स्नात्वा च जाह्नवीतोये संप्रार्थ्य मुनिपुंगवं पू-
जयित्वा मुनिं सापि अददद्दधिमंथनं अश्वत्थामानं च सुतं दधिमंथनदानतः कृपी लेभे सुयशसं ऋणत्रयविमोक्षणं मुक्ता दारि-
द्र्यदुःखात्सा बुभुजे भोगमुत्तमं एवं पूर्वं कृपी कृत्वा आनंदं समपद्यत एवं या कुरुते नारी वित्तशाठ्यविवर्जिता सर्वान्कामानवाप्नो-

निःसूर्यलोकेसहीयते इतिश्रीब्रह्मां० मकरसंक्रांतौदधिमंथनदानंस० अथतांबूलोद्यापनं युधिष्ठिरउ० तांबूलदानमाहा
त्म्यंकथयस्वममप्रभो उद्यापनविधिंतस्यसर्वकामार्थसिद्धये श्रीकृष्णउ० सर्वेषामेवदानानांतांबूलंचोत्तमंस्मृतं आनं
दोदीर्घमायुष्यंसौमनस्यंचपुष्टिदं सौभाग्यंचंदनादिभ्योविद्यालाभस्तथैवच एतच्चतुष्टयंराजन्तांबूला ल्लभतेनरः क्ष
तिपासाहरंस्वादुसौभाग्यंनिर्मलंस्मृतं द्वात्रिंशत्पत्रकैर्युक्तंपूगीफलसमन्वितं एलालवंगकर्पूरैर्युक्तंतांबूलमुच्यते यथा
लाभंभवेद्वापिदेयंद्विजवरायच द्विजाभावेसुवासिन्यैतदभावेकुमारिकां उद्यापनंप्रकर्तव्यंयथाविभवसारतः शु
भेऽह्निमासेकर्तव्यंऋक्षेवैवाहिकेततः पंचसप्तचसद्विप्रान्सपत्नीकांश्चपूजयेत् पूर्वरात्रौचसंपूज्यलक्ष्मीनारायणावुभौ
उमामहेश्वरौपूज्यौसावित्रीब्रह्मणासह रतिंचपंचबाणंचपूजयेच्चयथाविधि ऋद्धिसिद्धीविघ्नराजं लोकपालांश्चपू
जयेत् रात्रौपूजाप्रकर्तव्याषोडशोपचारकैः तांबूलोपस्कारास्तत्रसंस्थाप्योत्तरदेवताः पुरुषोत्तमाय० शार्ङ्गपाणये० ग
रुडध्वजाय० अनंताय० यज्ञपुरुषाय० पुंडरीकाक्षाय० नित्याय० वेदगर्भाय० गोवर्धनाय० सुब्रह्मण्याय० शौरिणे० ईश्वरा
य० एतानिद्वादशनामानिपूजनेहवनेतथा घृतंवापायसंवापिपंचामृततिलोदनं तत्तन्मंत्रैश्चहोतव्यंअष्टाविंशतिसंख्यया पर्णस्था
पनपात्रंचचूर्णपात्रंतथैवच स्वर्णरौप्यमयंवापिपित्तलंसीससंभवं सर्वशोभासमायुक्तांलोहजांपूगभाजिकां तेषांपूजाप्रकर्तव्या

गंधपुष्पादिभिस्तथा पूर्णाहुतिंततःकुर्याद्ब्राह्मणान्भोजयेत्ततः तांबूलंसकृदुयोदद्याद्ब्राह्मणेभ्योतिभक्तितः मेधावीसुभगःप्रा-
ज्ञोदर्शनीयश्चजायते फलंनतुष्यतेब्रह्मापुत्रेणाभगवान्हरिः चूर्णीसीश्वरस्तस्यर्थैरखदिरःकामस्तुस्मये कर्पूरैलालवंगादिजातिप
त्रफलैस्तथा इंद्राद्यालोकपालाश्चसंतुष्टाश्चभवंतिहि वारिदःसुखमाप्नोतिराज्यमाप्नोतिचान्नदः दीपदश्चक्षुरमाप्नोतिश्रयंतांबू
लदानतः एवंकृतेविधानेनसर्वान्कामानवाप्नुयात् इतिवायुपुराणेतांबूलव्रतोद्यापनंसंपू० अथमौनव्रतोद्यापनं नारदउवा०
ब्रह्मन्ब्रूहिममत्वंवैमौनव्रतफलंशुभं फलंकिमस्यदानंवाकथमुद्यापनंभवेत् ब्रह्मोवा० शृणुनारदयत्नेनसावधानेनचेतसा
चातुर्मास्यव्रतंकुर्यान्मौनारव्यंव्रतमुत्तमं यस्याचरणमात्रेणगम्यतेविष्णुमंदिरं विधिंतस्यप्रवक्ष्यामि शृणुनारदमन्मुखात् व्र
तमध्येव्रतस्यांतेव्रतादौवायथाविधि उद्यापनंप्रकुर्वीतव्रतसंपूर्णहेतवे स्नात्वानित्यविधिंकृत्वाकुर्यात्संकल्पमादितः सर्वतो
भद्रमालिख्यतत्रविष्णुंप्रपूजयेत् लक्ष्म्यायुतंतुदेवेशंब्रह्माद्यादेवतास्तथा द्वारदेशेतुसंपूज्यौपुण्यशीलसुशीलकौ जयंचवि
जयंचैवगदादीन्यायुधानिच मंडपेतोरणैर्युक्तेपट्टवस्त्रेणभूषिते सुवर्णप्रतिमांतत्रघंटागरुडलांछितां उपचारैःषोडशभिर
र्चयित्वारमापतिं रात्रौजागरणंकुर्याद्गीतवाद्यादिमंगलैः घृतेनाष्टोत्तरशतंपावकेहवनंचरेत् अतोदेवेतिमंत्रेणब्राह्मणान्भो
जयेत्ततः पीठदानंततःकुर्याद्घंटादानंतथैवच घंटादानस्यमाहात्म्यंवक्तुंकेननशक्यते दीपदानंततःकुर्याद्व्रतसंपूर्णहेतवे इदं

व्रतंमयापूर्वंकृतमुत्पत्तिहेतवे तेनव्रतप्रभावेनसृष्ट्युत्पत्तिर्मयाकृता कर्तव्यंतुप्रयत्नेनसर्वकामार्थसिद्धये यइदंकुरुतेवत्ससंसाक्षा
न्मामकीतनुः इतिश्रीब्र॰ ब्रह्मनारदसंवादेमौनव्रतोद्यापनंसं॰ अथप्रपादानविधानं युधिष्ठिरउ॰ कथंकृष्णातरंत्यत्रसंसारग
ह्वरान्नराः स्वल्पेनैवतुकालेनतथादानेनमेवद कृष्णउ॰ विधानमेकमतुलंसामान्यंनरसेवितं विधिंप्रपाख्यंराजेंद्रकथ्यमानंशृ
णुष्वतत् यस्मिन्पथिजलंनास्तिनास्तिग्रामःसमीपगः प्रपातत्रप्रकर्तव्यास्वर्गकामेप्सुभिर्नरैः माघमासेसितेपक्षेशिवरात्रौ
विशेषतः कृत्वातुमंडपंरम्यंचतुर्द्वारंसुशोभितं छायाशीतमयीकार्याहृद्यैःस्तंभैर्विशेषतः एकवक्त्राद्विवक्त्रावापूर्वोत्तरसुख
शुभा मार्गाणांयत्रबाहुल्यंतत्रकार्याविचक्षणैः दृढांस्तांप्रमयान्रम्यान्मृन्मयान्वासमाहितः पूजांचैवसमादिश्यसर्वकामः
प्रयत्नतः प्राक्कडायांतियावद्वैजलैःकुंभान्प्रपूरयेत् यवागूंतक्रसंयुक्तांव्यंजनैस्तुसमन्वितां अन्यैश्चबहुभिर्द्रव्यैःशर्करापान
कैर्युतां तक्रंलवणसंयुक्तंतांबूलंचयथाविधि प्रपायांभोजयेच्छक्त्याजलंवाकेवलंशुभं ब्राह्मणार्थंपृथक्पात्रंब्रह्मचिन्हेनलक्षि
तं स्वस्तिवाचनपूर्वंतुसर्वमेतत्प्रकल्पयेत् एवंविधाप्रपाप्रोक्ताविद्वद्भिर्धर्मकोविदैः शिशूनांजननीयद्वत्क्षुत्तृडाहरणेक्षमा
सर्वेषामपिवर्णानां प्रपावैपोषणेक्षमा नंदंतिपितरस्तस्यतुष्यंतिकुलदेवताः स्तुवंतिमनुजास्तंतुयेनाध्वनिकृताप्रपा क्रतुको
टिशतैर्यत्तुपुण्यंचलभतेनरः उद्यापनविधिंकृत्वाप्रपादानमनुत्तमं तस्याःसर्वाणिपात्राणिब्राह्मणायनिवेदयेत् भोजयेच्चय

थाशक्त्याब्राह्मणांस्तोषयेत्ततः प्रपामंदिरदानेनकृतकृत्योभवेन्नरः दुर्भिक्षेग्रासमात्रान्नंग्रीष्मेबिंदुसमंजलं तत्तुल्यंक्रतुलक्षेणाद्द्य
यमेतत्ततोधिकं एवंविधाप्रपामोक्तामुनिभिस्तत्त्वदर्शिभिः वरावालघुवाराजन्सर्वकामविवर्धिनी कावडिस्थेनयत्नेनमार्गेनत्
प्रापयेज्जलं इतिश्रीभवि॰प्रपादानंसोद्यापनंसं॰ अथलक्षपद्मव्रतविधिः ब्रूहिकृष्णव्रतंश्रेष्ठंमुक्तिदंदुःखनाशनं पुत्रपौत्रादि
कंचैवकृपयामधुसूदन श्रीकृष्णउ॰ शृणुराजन्प्रवक्ष्यामिव्रतानामधिकंव्रतं सर्वदुःखहरंस्त्रीणांसर्वकामफलप्रदं लक्षपद्मंर
गवल्याश्शुभेमासिसमारभेत् गुरुशुक्रास्तरहितेशुक्लवर्णेनयत्नतः तंडुलैःपूजयेच्छुक्लैः सूर्यस्थंजगदीश्वरं उद्यापनंसमा
प्तौचकुर्याद्यत्नेनसिद्धये संपूर्णंजायतेयेनतच्छृणुष्वप्रयत्नतः सूर्यस्यप्रतिमांकुर्यात्सुवर्णस्यचशक्तितः वेदिकायांप्रकर्तव्यस्स्व
स्तिकंपद्मसंयुतं तन्मध्येकलशंस्थाप्यरक्तवस्त्रेणवेष्टितं पंचामृतेनसंस्नाप्यदेवंतत्रप्रपूजयेत् गंधपुष्पाक्षतैर्दिव्यैर्धूपदीपादि
भिःशुभैः सुवर्णनिर्मितंपद्मंदेवायविनिवेदयेत् आचार्यंवरयेत्तत्रवेदवेदांगपारगं ततोहोमःप्रकर्तव्यस्तिलाज्यैःपायसैस्त
था अष्टोत्तरंसहस्रंवाशतंत्रयमथापिवा गायत्रीमंत्रतःकुर्यान्मूलमंत्रेणहोमयेत् गोदानंचप्रकर्तव्यंसूर्यस्थहरितुष्टये ब्रा
ह्मणान्भोजयेच्छक्त्याशर्कराघृतपायसैः तेभ्योपिदक्षिणांदद्याद्वित्तशाठ्यविवर्जितः प्रतिमांकलशंचैवदद्यात्पूजादिकंतथा
अनोदेवेतिमंत्रेण आचार्यायनिवेदयेत् प्रदक्षिणानमस्कारंकुर्यान्मूर्ध्निकृतांजलिः श्रीकृष्णउवा॰ एतत्तेव्रतमाख्यातंस्त्रीणां

कामफलाप्तये पुत्रपौत्रादिसंतानवृद्ध्यर्थं कुरु नंदन या नारी कुरुते भक्त्या हरिस्तस्याः प्रसीदति इति श्रीसौरपु० लक्षपद्मप्रकर
णोद्यापनं सं० अथ लक्षदीपदानविधिः स्कं द उ० रुद्रसंख्याशिवायाथ अर्पयेद्दीपमुत्तमम् वर्षमेकं तदर्धं वा वर्षद्वयमथापि वा
लक्षसंख्यानदर्धं वा द्विलक्षं वा स्वशक्तितः लक्षदीपं प्रकुर्वंति नराः परमधार्मिकाः एतेन यत्प्रकुर्वंति तेषां पुण्यं वदामि ते दीपमा
लां यथाशक्त्या कार्तिके श्रद्धयान्वितः यावत्कालं प्रज्वलति दीपायस्य शिवाग्रतः तावद्युगसहस्राणि स्वर्गलोके महीयते कौसुं
भेन च तैलेन दीपान्दद्याच्छिवालये तेन पुण्येन कैलासे वसते शिवसन्निधौ अतसीतैलसंयुक्तान्दीपान्दद्याच्छिवालये दशपू
र्वान्दशपरांस्तु स गच्छेच्छिवालये ज्ञानिनो हि भविष्यंति दीपदानफलेन हि तिलतैलेन यो दीपान्ददते च शिवालये तेजस्विनो महाभागाः कुलेन च शतेन वै
तैलयुक्ताः कृता दीपा दापिताश्च शिवालये आर्तिक्यं च सकर्पूरं ये कुर्वंति दिने दिने ते प्राप्नुवंति सायुज्यं नात्र कार्या विचारणा लक्षदीपस्य संपूर्त्यै
कार्यमुद्यापनं बुधैः उपवासं प्रकुर्वीत पूर्वस्मिन्दिवसे तदा कर्षमात्रसुवर्णेन तदर्धार्धेन वा पुनः प्रतिमां शंकरस्याथ उमया सहितस्य च आचा
र्यं वरयेत्तत्र अभिज्ञं वेदपारगं कलशं स्थापयेद्धान्ये स्वस्तिवाचनपूर्वकं उमामहेश्वरं रम्यं स्थापयेत्कलशोपरि उपचारैः षोडशभिः स्थापये-
च्च पृथक् पृथक् रात्रौ जागरणं कुर्यात्पुराणश्रवणादिभिः प्रातःस्नानं विधायाथ होमकर्म समारभेत् तिलसर्पिर्यवैश्चापि चरुणा बिल्वप
त्रकैः आज्यप्लुतैश्च प्रत्येकं सद्योजातादिमंत्रतः शतमष्टोत्तरं हुत्वा होमशेषं समापयेत् उमामहेश्वरं देवं पूजयेच्च पुनर्व्रती प्रति-

मांवस्त्रसहितामाचार्यायनिवेदयेत् सहिरण्यांसवत्सांचधेनुंदद्यात्प्रयत्नतः अनेनविधिनायस्तुव्रतमेतत्समाचरेत् सभुक्त्वाविपु-
लान्भोगान्शिवसायुज्यमाप्नुयात् ब्राह्मणान्भोजयेत्पश्चाद्वस्त्रालंकारभूषणैः गुरोराज्ञांगृहीत्वातुभुंजीयाद्बंधुभिःसह एवंयः
कुरुतेमर्त्योलक्षदीपप्रदीपनं नरोवाप्यथवानारीसोऽश्नुतेपदमव्ययं ज्ञानमुत्पद्यतेतस्यसंसारभयनाशनं सर्वपापक्षयकरंजन्म
जन्मार्जितंचयत् बाल्येवयसियत्पापंयौवनेवापियत्कृतं वार्धके पिकृतंपापंतत्सर्वंनश्यतिध्रुवं सर्वपापविनिर्मुक्तोभुक्त्वाभोगा
न्महीतले सर्वान्कामानवाप्याथसोऽश्नुतेपदमव्ययं इतिश्रीस्कंदपु॰ लक्षदीपोद्यापनंसंपू॰ अथलक्षदूर्वापूजनविधिः शृणुसे
नउ॰ लक्षपूजाविधिंसम्यक्कथयस्वममाग्रतः यंकृत्वाप्राणिनःसर्वेभवंतिसुखभागिनः श्रावणेचचतुर्थ्यांतुभौमवारोयदाभ
वेत् शुभेन्हिवासरेवापिपूजाकर्मसमारभेत् दंपत्यूचतुः चक्रवर्तीनृपोजातोतेनतृप्तिंनवैगमः आवाभ्यांतुदरिद्राभ्यांकिंदेयं
तृप्तिकारकं नदीनदजलैर्योब्धिरसंख्यैर्नापिपूर्यते बिंदुमात्रेणासहसासकथंपूर्यतेवद कौंडिन्यउ॰ भक्त्यादत्तंस्वल्पमपिबहु-
तृप्तिकरंमम अभक्त्यायच्चदंभेनबहुदत्तंवृथाभवेत् दंपत्यूचतुः आवयोर्नगृहेकिंचिच्छुभंवस्तुद्विजोत्तम पूजायैगणनाथ
स्यमातर्दूर्वांकुरात्मना पूजितोगणनाथस्तुसएकोत्यवशिष्यते भक्त्यादत्तःसएकोपितृप्तयेस्यात्त्वदीयता कौंडिन्यउवा॰
विरोचनाददौतस्मैश्रुत्वावाक्यंनदीरितं एकंदूर्वांकुरंभक्त्यातेनतृप्तोभवद्द्विजः शाल्यन्नंपायसान्नंचनानापक्वान्नमेवच व्यं

जनान्यपिसर्वाणिलेह्यचोष्याण्यनेकधा भक्त्याविरोचनादत्तेजातंदूर्वांकुरैरखिलं गृहीत्वाब्राह्मणस्तंतुबुभुक्षुः परयामुदा नस्मि
न्दूर्वांकुरेभक्त्यादत्तेतेनाथभक्षिते प्रशमस्याद्द्विजस्यास्यतत्क्षणाज्जठरानलः तृप्तिश्चपरमातेनप्राप्तानतत्क्षणमात्रतः
आलिलिंगत्रिशिरसंतृप्तोहंहर्षयन्द्विजः तत्याजकुत्सितंरूपंप्रकटोभूद्गजाननः चतुर्भुजोरविंदाक्षःशुंडादंडोविराजितः
कमलंपरशुंमालांदंतंकरतलेदधत् महार्हमुकुटोराजन्कर्णेकुंडलमंडितः दिव्यवस्त्रपरीधानोदिव्यगंधानुलेपनः उवाचतौ
प्रसन्नात्मादंपतीसगजाननः वृणीतंतंवरंशीघ्रंमनसायोयइच्छितः तावूचतुः जन्मजन्मांतरेवापिभक्तिरस्तुदृढावयोः मुक्ति
र्दीयतांदेवअस्मात्संसारसागरात् नायाचेकिंचिदन्यद्धिपादपद्मादिमानेन कौंडिन्यउ॰ इतितद्वाक्यमाकर्ण्यतथेत्युक्त्वागजा
ननः पुनरालिंग्यप्रददेभक्तिंत्रिपुरसूदनः एतस्माद्दूर्वाभारोस्मैदीयतांदीयतेमया असंख्यभक्षणाद्देवोनतृप्तिंचसमाययौ
दूर्वांकुरेणचैकेनसतृप्तिंपरमांययौ इतिसम्यक्समाख्यायमहिमानंपरंशुभं दूर्वासमर्पणेनैवसप्रभवेत्सर्वकामदः इतिहास-
मिमंभक्त्याशृणुतेश्रावयेच्चयः सपुत्रधनमाप्नोतिस्वर्गलोकेचमोदते गजाननेचयोभक्तिंनिष्कामोमुक्तिमाप्नुयात् श्रुत्वापी-
त्थमितीहासंआश्चर्यात्संशयंपुनः प्रपेदेत्वद्दितज्ज्ञात्वाकौंडिन्योमुनिरब्रवीत् आश्चर्येशृणुमेवाक्यंसंशयस्यापनुत्तये यद्ददा
मित्वद्दिस्थस्यमयाज्ञानस्यतेनघे एकंदूर्वांकुरंगृह्यगच्छशीघ्रंबिडौजसं वदाशीर्वचनंपूर्वंपश्चाद्याचस्वकांचनं दूर्वांकुरेणतु

लितंगृहीत्वात्वमिहानय नन्यूनंनाधिकंयावद्धंतस्यभाराच्छुभानने आज्ञांप्राप्यमुनेःसातुप्रस्थितास्यार्द्धसिद्धये एकंदूर्वांकुरंगृ
त्वाशक्रसन्निधिमाययौ तामुवाचाश्रमाशक्रदेहिमेकांचनंशुभं याचितुंत्वांसमायाता भर्तृवाक्यात्सुरेश्वर इंद्रउ॰ किमर्थं
त्वमिहायातामम्माज्ञाप्रेषिताभवत् मयानुप्रेषितंतस्यस्वशक्त्यातुसुवर्णकं आत्रेयीवा॰ दूर्वांकुरस्यतुलयायद्भवेत्कांचनं
शुभं गृहीष्येशचिभर्तस्त्वंन्यूनंनचततोधिकं इंद्रउवा॰ दूर्वांकुरप्रमाणंमेनास्तिद्रव्यंशुभानने कुबेरभुवनंगच्छजानरूपंप्र-
दास्यति इंद्रेणप्रेषितासाध्वीसुमुनिपत्नीमयासह प्रापितंभुवनंतेद्यदेहिदूर्वामितंधनं कुबेरउ॰ अत्याश्चर्यमहंमन्येमुनेःश
क्रस्यचाश्रमे मोहाविष्टोनजानातिदूर्वांकुरमितंकियत् कांचनेनकिमेतेनबहुलंनेच्छतेकुतः आज्ञापयद्धनाध्यक्षोकोशका
रंधनस्यच देहिअस्याधनंस्वेच्छंमुनिपत्न्याममाज्ञया एवंस्तुलादद्दौतस्यैबहुलंकांचनंतुसः नजग्राहभयाद्भर्तुदूर्वाधिक
विशंकया स्वर्णकारतुलायांतंदूर्वांकुरमधारयत् नाभवत्तुलयातस्यपर्याप्तंतुहाटकं वणिक्तुलासमानीतातत्रापिनाभव
त्समं तैलकारसमानीतानजातापूरणेक्षमा धटेमहत्यतोक्षिप्तंहाटकंदत्तमेकतः दूर्वांकुरोहितत्रापिअधस्तात्धातिभारतः
अन्यदन्यद्ददौतत्रकुबेरःकांचनंबहु तदपिनाभवत्तेनसमंदूर्वांकुरेणच सर्वकोशगतंद्रव्यंदत्तगुरुतरमहत् तथापिनाभवत्तु
ल्यतेनदूर्वांकुरेणच पत्नीमाहूयतांप्राहकुबेरःकौतुकान्वितः कुरुमद्वाक्यतःसुभ्रूर्धटारोहणमप्रतः नसमंचेत्समारोक्ष्यसि

जसलरिरक्षया पतिव्रताज्ञयातस्यघटमारुरुहेतदा ततोपिनसमाजाताननः सर्वासुरींद्रदौ घटमध्येकुबेरोपिनोर्ध्वंजातोंकुरस्ततः
श्रुत्वाद्भुतंसुरवादिंद्रोगजारूढः समाययौ स्वकीयद्रव्यसहितोघटमारुरुहेस्वयं सममनयातिदूर्वावैघटभारेणचानय अधोसुरवो
गतश्चिंतांकिमेतदितिचिंतयन् विष्णुंहरंचसंस्मारतत्रारोहणकाम्यया शिवोविष्णुःसमागत्यघटमारुरुहेतदा तथापिनोर्ध्वग
मनंतदादूर्वांकुरस्यहि शिवोविष्णुःकुबेरोपिह्याश्चर्यंसमपद्यत वरुणेंद्राग्निमरुतोकौंडिन्यंचसमाययुः देवादेवर्षयश्चापिसि-
द्धविद्याधरोरगाः दिनांतेसमनुप्राप्तेयत्रागच्छंतिपक्षिणः नमस्कृत्यमुनिंसर्वेप्रोचुर्विद्याधरोरगाः सर्वेऊ॰ अज्ञानंविलयंयातंद
र्शनान्नोमुनेतव पूर्वपुण्यभवादद्यकल्याणंनोभविष्यति तवपत्न्याहृतंसर्वंसर्वेषामनघस्फुटं महिमानंनजानीमो दूर्वांकुरसमुद्भ
वं एवंदूर्वांकुरतुलांत्रैलोक्यमपिनाभवत् गजाननशिरस्थस्यत्वयाभक्त्यार्पितस्यच जानीयान्महिमानंकः सम्यक्दूर्वांकुरस्यच
गजाननेनभक्तस्यतपतस्तपतोभृशं तवापिमहिमानंकोजानातित्रिभुवनत्रये एवमुक्त्वामुनिंसर्वेपूज्यमानंगजाननं सेवंसभार्यां
ययजुस्तुष्टुवुर्नन्तुर्जगुः नब्रह्मानहरिःशिवेंद्रमरुतोनाग्निर्विवस्वान्मरुच्छेषोशेषकलानिधिश्चवरुणोनोचंद्रमानाश्विनौ नो
वाचामधिपोनचैवगरुडोयक्षाधिपोनागिरा माहात्म्यंपरिवेदवेदनिगमैरज्ञातरूपस्यते एवंसंतोष्यसर्वेतेदेवदेवंगजाननम्
मुनिंचसमनुप्राप्ययमुःस्वंस्वंनिकेतनं आज्ञयापितनोज्ञात्वादूर्वामाहात्म्यमुत्तमं विश्वस्ताभर्तृवाक्येनसादूर्वांपर्यपूजयत्

विघ्नेश्वरंसर्वदेवंसर्वैर्दूर्वाभिरर्चितं प्रणनामचकौंडिन्यंभर्तारंसत्यवादिनं उवाचतंप्रसन्नात्मासात्मानंनिंदतीभृशं मादृशीनैवदुष्टा
स्तिपतिवाक्येनशासिता विशेषविदुषास्वामिन्विशेषविदुषात्वया सम्यक्कृतंममविभोसर्वभूतदयावता तत्क्षमस्वापराधंमे-
त्वामहंशरणागता ततःप्रातःसमुत्थायदूर्वामादायसत्वरो स्नात्वादेवंसमभ्यर्च्यदूर्वार्पणमकुर्वता अनन्यभक्त्याज्ञात्वातौदूर्वा
माहात्म्यमुत्तमं सायंप्रातर्देवदेवंपूजयंतौनिरंतरं त्यक्त्वायज्ञंव्रतंदानंज्ञात्वादेवोगजाननः कृपयापरयाविष्टोस्वधामप्रत्यचोद-
यत् गणाऊचुः अगाधंवर्णितंदूर्वामाहात्म्यमिदमुत्तमं अशेषवर्णनेशेषोनशक्तिंसमपद्यत त्रैलोक्यंतुलयात्वस्यानसमंजा-
यतेमुने दूर्वेतिस्मरणात्पापंत्रिविधंविलयंव्रजेत् तत्स्मृतंस्मर्यतेदेवोयतःसोपिगजाननः इतिचिंतामणेःक्षेत्रमहिमावर्णितः
स्फुटं श्रवणात्कीर्तनाध्यानाद्भुक्तिमुक्तिफलप्रदः एतस्माक्कारणाद्दानंत्रयाणांप्रेषितंशृणु रासभस्यमुखाद्दूर्वागतादेवोपरिप्र
भो चांडालशीतनाशायआनीतात्तृणभारतः वायुनाप्रेरितासापिगतादूर्वागजानने यतश्चास्यप्रियादूर्वासंतुष्टोसौविनायकः
निःपापत्वात्त्रयाणांचसान्निध्यंदत्तवान्निजं गंधमात्रेणदूर्वायाःसंतुष्टोजायतेविभुः प्रसन्नोवतिभक्त्यावैकिंपुनर्मस्तकार्पणा
त् ब्राह्मणाऊचुः इतिदूतमुखाद्राजन्संस्तुतोमहिमानदा दूर्वायामुनिभिःसर्वैःसप्रष्टोनचसंस्तुतः स्नात्वादूर्वांकुरान्गृह्यसुपुपूजु
स्तेविनायकं सेवकाश्चापिदूर्वाभिरानर्चुःश्रीगजाननं आसन्सर्वेदिव्यदेहास्तेजसासूर्यवर्चसः शृण्वंतोदिव्यविद्यानानानारा

वानूसमंतः विमानवरमारूढादिव्यवस्त्रानुलेपनाः यानावैनायकंधामकेचिद्रूपंचधारिणः नरानागरिकाःकेचिदागनास्तंमहोत्सवं
द्रष्टुंदूर्वाभिरानर्चुरेकविंशत्पृथकूपृथक् भुक्त्वाभोगांश्चतेसर्वेगणेशस्थानमागमन् विमानमपिचलितमूर्ध्वंतत्पुण्यतेजसः तस्मा
द्गणेशभक्तेनकार्यंदूर्वाभिरर्चनं नकरोतिनरोयस्तुप्रमादात्ताभिरर्चनं चांडालःसतुविज्ञेयोनरकान्प्राप्नुयाद्बहून् नतस्यमुखंनिरीक्षे
त्कदाचिदपिमानवः यस्तुदूर्वाभिःपूज्येनदेवदेवंगजाननं तस्यदर्शनतोन्योपिपापीशुद्धत्वमाप्नुयात् लक्षसंख्याकदूर्वाभिःपूजये
द्योगजाननं तेनापिकोटिगुणिताकृतापूजानसंशयः ब्रह्मोवाच उद्यापनंचकुर्यात्तुदेशकालानुसारतः माघेवाकार्तिकेभाद्रे आषा
ढेश्रावणेपिवा अन्येषुपुण्यमासेषुव्रतमेतत्समाचरेत् प्रातःस्नानंविधायाथदंतधावनपूर्वकं धौतवस्त्रधरोभूत्वानित्यकर्मस-
माचरेत् देवपूजागृहेवापिदेवालयमथापिवा गोमयेनानुलिप्याथशुद्धधातुनामृन्मयेनवा पंचभिर्ब्राह्मणैःसार्धंकृत्वाचस्वस्तिवाच
नं नांदीश्राद्धंप्रकुर्वीतलक्षपूजाविधौद्विजः प्राणायामत्रयंकृत्वादेशकालौस्मरेत्सुधीः गजाननंचतुर्बाहुंएकदंतंविपाटितं विधाय
हेम्नाविघ्नेशंहेमपीठासनस्थितं तथाहेममयींदूर्वांतदाधारेव्यवस्थितां संस्थाप्यविघ्नहर्तारंकलशेताम्रभाजने वेष्टितंरक्तवस्त्रे
णसर्वतोभद्रमंडले पूजयेत्कुंकुमैःशमीदूर्वाभिरर्चयेत् गंधपुष्पैश्चधूपैश्चदीपैर्नैवेद्यतोषकैः पश्चाद्गंधादिदूर्वाभिरर्चये
द्गणनायकं गणाधीशंसहस्रेणअथवाशतनामभिः सुसंख्यासफलापूजासंख्याहीनातुनिष्फला एवंसंपूज्यविधिवत्पूजांते-

होममारभेत् आचार्यवरयेत्पूर्वमूर्त्विग्भिश्चैकविंशतिः गणानांत्वेतिमंत्रेणअयुतंहोममाचरेत् अथवादूर्वामंत्रेणअयुतंतुसमाचरेत् दूर्वामंत्रः तंदूर्वे
मृतजन्मासिवंदितासिसुरासुरैः सौभाग्यंसंततिंदेहिसर्वकार्यकरीभव यथाशाखाप्रशाखाभिर्विस्तृतासिमहीतले तथाममापिसंतानं
देहित्वमजरामरं सहस्रनामभिर्होमंस्वाहाकारसमन्वितं मधुमिश्रैस्तिलैर्लाजैः पृथुकैरिक्षुखंडकैः लड्डुकैःपायसान्नेनसघृते
नहुनेत्ततः पूर्णाहुतिंततःकृत्वाबलिदानंततश्चरेत् होमशेषंसमाप्येनब्राह्मणान्भोजयेत्ततः आचार्यं पूजयेत्तस्मा इस्त्रालंका
रभूषणैः एवंमेब्रह्मणादिष्टंव्रतंलोकोपकारकं तदेतत्कथितंतेद्यकुरुपुत्रार्थमादरात् इतिनानाविधोराजन्महिमाकथितस्त
व सेतिहासस्तुदूर्वाणांश्रवणात्पापनाशनः नाख्येयोदुष्टबुद्धेस्तुप्रियपुत्रेनिवेदयेत् यइदंशृणुयाद्भक्त्यावाजपेयफलंलभेत्
इतिगणेशपु॰ उपोसनाकांडे दूर्वामाहात्म्येलक्षदूर्वापूजोद्यापनसं॰ अथशिवलक्षप्रदक्षिणाविधिः युधिष्ठिरउवा॰ पुरातुऋष
यःसर्वेनैमिषारण्यवासिनः शौनकाद्यामहात्मानःसर्वशास्त्रविशारदाः तीर्थयात्राप्रसंगेनगंगाद्वारमुपागमन् तत्रस्नाता-
कृतजपाविधिवद्दत्तदक्षिणाः यावत्सुखोपविष्टास्तेहर्षनिर्भरमानसाः तावत्तेददृशुस्तत्रसूतंशास्त्रार्थकोविदं ददर्शसोपि
तांस्तत्रऋषीन्विगतकल्मषान् ननामदंडवद्भक्त्यातैश्चापिप्रतिपूजितः तेचक्रुःपरमातिथ्यंकुशलंप्रश्नमेवच सुखोपविष्टंतंसू
तंपप्रच्छुरिदमादरात् ऋषयऊ॰ सूतसूतमहाप्राज्ञचिरंदृष्टोसिसुव्रत कस्मिन्तीर्थेथवादेशेकालोहिनिहतस्त्वया त्वद्दर्शनेन

सौख्यंतुजातंनःपरमाद्भुतं किंविधिंज्ञातुमिच्छामस्तच्छृणुष्वमहामते त्वयोक्ताविविधाधर्मास्तथानानाविधाः कथाः व्रतानिच
विचित्राणिमनोरथकराणिच इदानींवददेवस्यव्रतंपरमपावनं यत्कृत्वासर्वसिद्धिः स्यान्नराणांवांछितप्रदं सूतउ० सम्यक्
पृष्टमृषिगणाव्रतंदेवस्यचाद्भुतं ममापिकथितुंहर्षोजायतेनात्रसंशयः युधिष्ठिरउ० धर्माबहुविधाः प्रोक्तास्त्वयानंतफल
प्रदाः इदानींश्रोतुमिच्छामिव्रतंसंपत्करंशुभं श्रीकृष्णउ० शृणुराजन्प्रवक्ष्यामिशिवस्यव्रतमुत्तमं लक्षप्रदक्षिणानामव्रत
मस्तिसुदुर्लभं ब्रह्मघ्नस्यसुरापस्यगुरुदारावमर्शिनः संकीर्णकानिपापानिसंकलीकरणानिच प्रकीर्णकानिपापानिमलिनीक
रणानिच भ्रातृपत्नीसुतादीनांगामिनःकाममोहिताः गुरोर्विश्वासहीनस्यव्रतभ्रष्टस्यपापिनः संध्याकर्मविहीनस्यजगद्द्रुह्या
र्गवर्तिनः दासीवेश्यासंगिनश्चचांडालीगामिनस्तथा परस्वहारिणश्चापिदेवद्रव्यापहारिणः ब्राह्मणद्वेषिणश्चापिवृत्तिच्छेदकर-
स्यच रहस्यभेदकस्यापिरहसीकृतपापिनः ब्रह्मयज्ञविहीनस्यदुःशास्त्रनिरतस्यच गुरुनिंदादिश्रोतुश्चगुरुद्रव्यापहारिणः ब्रह्म
हत्यादिपापानांप्रायश्चित्तंयदीच्छसि संकलीकरणानांचमलिनीकरणस्यच अपात्रीकरणानांचप्रायश्चित्तंयदीच्छसि भ्रातृपत्नी
सुतानांचगामिनःशमनंतथा श्वश्रूभ्रातृवधूनांचइच्छयागामिनांतथा लक्षप्रदक्षिणानामव्रतंकुर्यान्महीपते संध्याकर्मादित्याग-
स्यचांडालीगामिनस्यवै दासीवेश्यासंगिनश्चक्षयंयांतिनसंशयः वर्धनंसर्वभूतानांसदाविजयकारणं किमेभिर्बहुभिर्वाक्यैः क

थितेस्म पुनःपुनः दारिद्र्यनाशनंपुण्यंसर्वैश्वर्यप्रदंशिवे दुर्लभंसर्वमर्त्यानांपुत्रपौत्रप्रवर्धनं योयान्प्रार्थयतेकामान्सतानाप्नोतिमानवः
ऋषयऊ॰ सूतसूतमहाभागवेदविद्याविशारद यथाप्रदक्षिणाकार्यामनुजैर्विधिपूर्वकं सूतउ॰ एवमेवपुरापृष्टोभगवान्शिवया
शिवः तद्ब्रवीमिमुनिश्रेष्ठाः शृणुवंतुविधिमुत्तमं देव्युवा॰ भगवन्देवदेवेशप्रदक्षिणविधिंवद शिवलक्षेप्यनेनाशुनिःपापःपुण्यवा
न्भवेत् श्रीमहादेवउ॰ श्रावणेमाधवेऊर्जेमाघमासेव्रतंचरेत् लिंगप्रदक्षिणाःकुर्यात्सुंदरिविधिपूर्वकाः श्रीदेव्युवा॰ लिंगप्रद
क्षिणेदेवनियमाःकेभवंतितान् वदस्वेतितदाशेषविश्वनाथकृपानिधे शिवउ॰ प्रतिग्रहंपरान्नंचपरदाराभिभाषणं परस्वग्रहणं
स्नेहादसद्वार्त्तांचवर्जयेत् असतांपापिनांसंगंनकुर्यात्प्रयत्नतोनरः असत्समागमात्सर्वंनिःफलंजायतेनृणां ममद्रोहपरैःसाकंनव्रजे
द्विष्णुनिंदकैः परापवादंनोकुर्यात्सद्द्रोहंनकारयेत् निंदांचगुरुशास्त्राणांशिवधर्मरतात्मनां तीर्थलिंगतपोनिंदांनकुर्यात्तुकदाचन
ब्रह्महत्यादिपापानांप्रायश्चित्तंनचापरं शिवलिंगेमहादेवियःकुर्वंतिप्रदक्षिणाः अनंतकोटिगुणितंभवेत्सर्वंनसंशयः शिवापतेः
प्रत्यहंचपूजाकार्याःप्रयत्नतः उमापतेःपूजनेनसिद्धिर्भवतिनान्यथा एवंयःकुरुतेमर्त्योव्रतमेतत्सुदुर्लभं यंयंचिंतयतेकामंतंतंप्रा
प्नोत्यसंशयः शिवउवा॰ लक्षंसमाप्यपश्चात्तुकुर्यादुद्यापनंव्रती एवंसंपाद्यविधिवच्छुभेमासेशुभेदिने देव्युवा॰ व्रतस्योद्यापनंक
र्मेकथंकार्यंचमानवैः कोविधिःकानिद्रव्याणिकथयस्वममप्रभो ईश्वरउ॰ शृणुभद्रेप्रयत्नेनलोकानांहितकाम्यया उद्यापनविधिं

चैवकथयाभिनवायतः यथासंजायतेवित्तंभक्तिः श्रद्धासमन्वितः सएवव्रतकालस्स्यायतोनित्यंहिजीवितं कामक्रोधाद्यहंकारद्वेषपै
शून्यवर्जितः संपाद्यसर्वसंभारान्मंडपंतत्रकारयेत् प्रातःस्नात्वाशुचिर्भूत्वाकुर्यादुद्यापनंबुधः मासतिथ्यादिसंकल्प्यकुर्यात्स्वस्त्यय
नंततः पुण्याहवाचनंकार्यमाचार्यवरणंततः ततोब्राह्मणमाहूयवेदवेदांगपारगं आचार्यंवरयेत्पूर्वंऋत्विगेकादशैःसह देवागारेत
थागोष्ठेशून्येवास्वीयमंदिरे पुष्पमंडपिकांकृत्वापट्टकूलादिवेष्टितां तन्मध्येलिंगतोभद्रंरचयेल्लक्षणान्वितं अव्रणंसजलंकुंभंतस्यो
परितुविन्यसेत् सौवर्णंराजतंताम्रंमृन्मयंवापिकारयेत् तस्योपरिन्यसेत्पात्रंताम्रंवैणवंमृन्मयं कुंभोपरिन्यसेद्देवमुमयासहितंशि
वं उमामहेश्वरींमूर्तिंपूजयेद्वृषभेस्थितां ब्रह्माणंदक्षिणेभागेसावित्र्यासहसप्रभं कौबेर्यांस्थापयेद्विष्णुंलक्ष्म्यासहगरुत्मता
महेशंस्थापयेन्मध्येशिवावृषसमन्वितं ततःपूजांविनिर्वर्त्यमहासंभारविस्तरैः परमान्नंचनैवेद्यंभक्त्यादेवायदापयेत् उपोष्यजाग
रंकुर्याद्गीतोत्सवकथयामुदा ततःप्रभातसमयेस्नात्वाशुद्धेजलेशुचिः मृदाचस्थंडिलंकार्यंकुर्यादग्निमुखंततः मदक्षिणादशांशेन
हवनंकारयेद्व्रती हवनस्यदशांशेनतर्पणंकारयेत्ततः तर्पणस्यदशांशेनमार्जनंकारयेत्ततः मदक्षिणाशतांशेनब्राह्मणान्भोजयेत्सु
धीः स्वशाखोक्तेनविधिनाहोमयेद्रुद्रमंत्रकैः मूलमंत्रेणगायत्र्याशंभोर्नामसहस्रकं पलाशस्यसमिद्भिश्चयवव्रीहितिलाज्यकैः पू
र्णाहुतिंततोदद्यात्कृत्वास्विष्टकृदादिकं होमांतेचगुरुंपूज्यसपत्नीकंसमाहितः प्रतिमांकुंभसहितामाचार्यायनिवेदयेत् शंभोःप्र-

सीदद्देवेशसर्वलोकेश्वरप्रभो तवरूपप्रदानेनममसंतुमनोरथाः यद्भक्त्यादेवदेवेशमयाव्रतमिदंकृतं न्यूनंवाथक्रियाहीनंपरिपूर्णंत
दस्तुमे अनेनैवविधानेनयइदंव्रतमाचरेत् यंयंचिंतयतेकामंतंतंप्राप्नोतिमानवः इहलोकेसुखीभूत्वाभुक्त्वाभोगान्यथेप्सितान् अं
तेविमानमारुह्यशिवलोकंसगच्छति इतिस्कंदपु॰ शिवप्रदक्षिणाव्रतोद्यापनंसं॰ अथाश्वत्थप्रदक्षिणाविधिः ऋषिरुवा॰ भगवन्
सर्वधर्मज्ञसर्वशास्त्रविशारद स्त्रीणांपुत्रविहीनानांनराणांसुखसंपदां उपायंचैवमेब्रूहिसुतसिद्धिःकथंभवेत् अथर्वणउ॰ पुरा
ब्रह्मादयोदेवाःसर्वेविष्णुंसमाश्रिताः अपृच्छन्देवदेवेशंराक्षसैःपीडितावयं कथंभवेच्चतच्छांतिरस्माकंवदनिश्चितं ऋषयऊ॰ पला
शत्वंकथंप्राप्तंब्रह्मणावैमहात्मना वटत्वंचशिवोवापिविष्णुर्वैपिप्पलोभवत् वालखिल्याऊ॰ ब्रह्मणातुपुरासृष्टाःसर्वेदेवाःसवास
वाः मिलित्वासर्वएवैतेब्रह्माणंवाक्यमब्रुवन् ब्रह्मन्सर्वाधिकोरुद्रःसर्वदेवेषुपठ्यते कुर्मस्तद्दर्शनंदेवगच्छामोभवनासह इतींद्रादि
वचःश्रुत्वासर्वदेवपुरोगमः ब्रह्माकैलासमगमत्सर्वदेवगणैर्वृतः शिवद्वारंसमासाद्यदेवाःसर्वेपिसंस्थिताः नदृश्यतेद्वारपालःशि
वश्चाभ्यंतरेस्थितः गंतव्यंवानगंतव्यमस्माभिःशिवसन्निधौ परावृत्याथवास्तस्मिन्स्थानेगंतव्यमेववा एवंचिंतयमानेस्तैर्नारदोमु
निसत्तमः पुरादृष्टोदेववृंदैस्तंप्रोचुःप्रणताश्चते देवाऊ॰ मुनेवेदविदांश्रेष्ठब्रूहिप्रश्नंसुशोभनं किंकरोतिमहादेवोगंतव्यंवावनांतरे
नारदउ॰ चंद्रनाशदशायांतुदेवाःसंप्रस्थितगृहात् तस्मात्कश्चिन्महाविघ्नोभवतांसंभविष्यति किंकरोतिशिवश्चेतिप्रश्नोत्यंतेनयाविधोः

तस्मात्संभोगकार्येयं वर्ततेत्रिपुरांतकः इंद्रउवाच सर्वेषामेवदुःखानांनाशकर्त्तादिवस्पतिः मय्यागतेकथंनाशोदेवतानांभविष्यति विभी
षणायदेवानांवस्त्रानांचाकरोन्मुनिः इतींद्रस्यवचःश्रुत्वाव्याकुलोभून्मुनिस्तदा कथंमद्वचनंसत्यंभविष्यत्सर्वघवज्रिणि अद्यमद्वचनं
सत्यंयदिशीघ्रंभविष्यति लक्ष्मीनारायणमुदे करिष्येव्रतमुत्तमं एवंसंचिंत्यमनसातूष्णींभूत्वामुनीश्वरः इंद्रोविचारयन्देवाः किमि
दानींविधीयतां ततोवह्निर्महावाचदेवन्हेमद्वचनंशृणु गृहीत्वाविप्ररूपंत्वंशिवस्याभ्यंतरंविश यदिप्रसंगोस्त्यस्माकंतदावार्तांनिवे
दय यदिनास्तिप्रसंगश्चेद्यास्यकृतेनयाहिच अवध्यत्वादताज्यत्वात्भिक्षुकत्वेनतद्व्रज इतिदेवेंद्रवचनंश्रुत्वावह्निस्तथाकरोत् अभ्यं
तरेददर्शांशाशिवयासहसंगतं शिवयापिचसोदृष्टोलज्जिताभोगमत्यजत् कोसिकोसीतिसंपृष्टोभिक्षुकोहंक्षुधायुतः क्षुद्बोस्म्यं
धोस्मिदीनोस्मि भोजनंममदीयतां नेनाहृष्टमितिज्ञात्वापार्वतीतमभोजयत् सोपिभुक्त्वासमाचारंवक्तुंसंप्रस्थितोबहिः तस्मिन्नेव
क्षणेप्राप्तोनारदः पार्वतीयदो शिरोनिधायपार्वत्याःपादयोःसरुरोदह अहोबालककिंजातंतच्छीघ्रमभिधीयतां करोमिनिष्कृ
तिंतस्यसाध्यासाध्यस्यनान्यथा मातर्वक्तुंनशक्तोमित्युपहासस्यकारणं कृतंयद्वैद्वादिदेवैस्तथाकोन्यःकरिष्यति इतितस्यव
चःश्रुत्वापुनःपुनरपृच्छत सुदयित्वाततोनेत्रेकराभ्यांसमुनीश्वराः उवाचवचनंनीचसुरवोसोगहृदाक्षरं नारदउवाच इंद्रोयंयुव
योर्भोगंदेवनाभ्योत्यदर्शयत् युवयोश्चकृतानिंदानाश्रुत्वादुःखितोप्यहं भोगविच्छित्तयेवह्निः प्रेषितोद्विजरूपकः अथवाकि

प्र·रा
३७६

मनेनापिकथनेनममांबिके जगन्मातासिदेवित्वंकातेस्यादुपहासता इतितस्यवचःश्रुत्वापार्वतीक्रुद्धमानसा स्फुरदोष्ठारक्तनेत्राहस्ता
तांनारदोययौ देवान्प्रतिप्रोवाचेदंसंभोगाद्विरतोहरः आगम्यतांदर्शनार्थंदूरतोसौविलोकितः वक्रेरेवंवचःश्रुत्वादेवेंद्रःसगणोययौ
प्रणिपत्यमहादेवंकृतांजलिपुटोभवत् इत्थंतस्याविधंशक्रंपार्वतीवाक्यमब्रवीत् अहल्याजारदुष्टात्मन्सहस्रभगवासव उपहा
सःकृतोमेद्यफलंतत्समवाप्नुहि यावंत्यःसंतिदेवानांनार्योवैसर्वएवते अजानन्स्त्रीसुखंवानिशाखिनःसंतुसस्त्रियः इतिदेवी
वचःश्रुत्वाकंपिताःसर्वदेवताः ब्रह्मविष्णुमहेशाद्यास्तुष्टुवुर्जगदंबिकां ततोदेवीप्रसन्नाभूद्देवेंद्रंवाक्यमब्रवीत् देवामद्वचनंमि
थ्यात्रिकालेपिनजायते तस्मादेकांशतोवृक्षायूयंसर्वेभवतुवै इतिदेव्यावचःश्रुत्वाजातादेवास्तुपादपाः अश्वत्थरूपीभगवान्व
टरूपीसदाशिवः पलाशोभूद्विधाताचवज्रःशक्रोबभूवह इंद्राणीसालताजातादेवनार्योलतास्तथा मालत्याद्याःपुष्पवृक्षाउर्व
श्याद्याप्सरोभवन् तस्मात्सर्वप्रयत्नेनसर्वदाश्वत्थमर्चयेत् नारीवापुरुषोवापिलक्षंकुर्यात्प्रदक्षिणाः लक्ष्मीनारायणंपूज्यमंदवा
रेचततले दंपतीभोजयेल्लक्ष्मीनारायणस्वरूपिणौ भावयित्वासपत्नीकान्पश्चाद्भुंजीतवाग्यता वंध्यादिर्लभतेपुत्रमितरासांतुका
कथा मूलतोब्रह्मरूपायमध्यतोविष्णुरूपिणे अग्रतःशिवरूपायपिप्पलायनमोस्तुते विष्णोश्चप्रतिमाभावेकीर्तनंजागरादिकं
अश्वत्थमूलेकर्तव्यंविष्णोराराधनंपरं सदासंनिहितोविष्णुर्द्दषत्सुब्राह्मणेतथा विष्णुरुवाच अहमश्वत्थरूपेणशालग्रामशि

लु·प्र·
३७६

लाकृत्व तस्मात्सर्वप्रयत्नेनकुरुष्वतरुसेवनं तेनसर्वाणिभद्राणिभविष्यंतिनसंशयः अश्वत्थपूजास्पर्शेनकर्तव्याशनिवासरे अन्य
वारेश्वत्थसंगाद्दरिद्रीजायतेनरः विष्णुर्यदुक्तवांस्तेभ्योतद्धनंतेवदाम्यहं नदानैर्नतपोभिश्चनाध्वरैर्भूरिदक्षिणैः अश्वत्थसे
वनादन्यत्कलौनास्त्यपराक्रिया तद्विधानंनिमित्तानिसख्याकृतिश्चपूजनं हवनंतर्पणंविप्रभोजनंनियमंतथा व्रताधिकारि-
णाकृतंविधानंचविशेषतः एतत्सर्वंपिप्पलादीन्वक्ष्यामितवसुव्रत दारुणोविविधोत्पातोदिव्यभौमांतरिक्षजः परचक्रभयं
देशविप्लवोदेशविग्रहः दुःस्वप्नंदुर्निमित्तंसंग्रामोद्भुतदर्शनः मारीभयंराजभयंतथाचोराग्निजंभयं क्षयापस्मारकुष्ठाद्याः
प्रमेहोविषमज्वरः उदरंमूत्रकृच्छ्रंचग्रहयक्ष्मास्तथैवच अन्येचरक्तरोगाश्चव्रणरोगास्तथैवच एतेषांचविनाशायकुर्यादश्वत्थ
सेवनं प्रातरुत्थायनद्यादौस्नात्वासम्यक्कृतक्रियः अश्वत्थदेशमास्थित्यगोमयेनोपलेपयेत् तमश्वत्थमलंकृत्यसूत्रेणगैरिका
दिना पूजाद्रव्याणिसंपाद्यपुण्याहंवाचयेत्तथा आचार्यऋत्विजैःसार्द्धंकृत्वापूजांसमाचरेत् ध्यानमावाहनंचैवपाद्यमाचमनंत
था तथैवपिप्पलतरुंतथानारायणंप्रभुं श्वेतगंधाक्षतैःपुष्पैर्धूपदीपैर्निवेदनैः अर्चयेत्पुरुषसूक्तेनतथैवध्यानपूर्वकं तेने-
वहवनंकुर्यात्तर्पणंवानमस्क्रियाम् श्वेतवर्णंसलक्ष्मीकं चिंतयेत्पुरुषोत्तमम् इतिध्यात्वावाहनाद्यैरुपचारैश्चषोड
शैः ततअश्वत्थमभिमंत्र्य आरान्नइत्यस्याग्निकांडांतःपातित्वादग्निर्ऋषिः वनस्पतिर्देवता अनुष्टुप्

छंदः वनस्पत्यभिमंत्रणेविनियोगः आरात्तेअग्निरस्त्वाचआरात्परशुरस्तुते निवातेत्वाभिवर्षंतुस्वस्तितेस्तुवनस्पते अक्षय्यंदंभुज
स्यंदंदुःस्वमंदुर्विचिंतितं शत्रूणांचसमुत्पन्नं अश्वत्थंशमयस्वमे ततःप्रदक्षिणाःकुर्यात्तत्सर्वंसफलंभवेत् लक्षमेकंद्विलक्षं
वात्रिचतुःपंचलक्षकं कार्यस्यगौरवंज्ञात्वाद्वादशांतंसमाचरेत् ब्रह्मचारीहविष्याशीत्यधःशायीजितेंद्रियः मौनीध्यानपरो
भूत्वापिप्पलस्यस्तुतिंपठेत् विष्णोर्नामसहस्रंचपौरुषंवैष्णवंतथा एवंसंपाद्यविधिवच्छुभेमासेशुभेदिने प्रातःस्नात्वाशु
चिर्भूत्वाकुर्यादुद्यापनंबुधः गणेशपूजनंस्वस्तिवाच्यनांदीचकारयेत् आचार्यंवरयेत्पश्चात्सर्वलक्षणसंयुतम् देवागारेत
थागोष्ठेअश्वत्थेस्वीयमंदिरे पुष्पमंडपिकांकृत्वापट्टकूलादिवेष्टिताम् तन्मध्येसर्वतोभद्रंरचयेल्लक्षणान्वितम् त
न्मध्येस्थापयेत्कुंभंसजलंवस्त्रसंयुतम् तस्योपरिन्यसेत्ताम्रंताम्रंमृन्मयवैणवम् अष्टपत्रान्वितंपद्मंकर्णिकाभिः
समन्वितम् पंचकृष्णाकलादूर्ध्वंस्वर्णपरिनिर्मितम् लक्ष्मीनारायणींमूर्तिमश्वत्थेनसमन्विताम् स्थापयेत्पद्ममध्येतुब्रह्म
ण्यावाहनंततः ततःपूजांविनिवर्त्यमहासंसारविस्तरैः परमान्नंचनैवेद्यंभक्त्यादेवायदापयेत् उपोष्यजागरंकुर्याद्रात्रौसत्क-
थयामुदा ततःप्रभातसमयेस्नात्वाशुद्धजलेशुचिः मृदाचस्थंडिलंकार्यंकुर्यादग्निमुखंततः कृतलक्षदशांशेनहवनंकारये-
द्बुती हवनस्यदशांशेनतर्पणंकारयेत्ततः पुरुषसूक्तेनजुहुयात्तिलाज्यंपायससंमितम् स्वशाखोक्तेनविधिनाजुहुयाद्विष्णुसं

मंत्रैः उक्तैः षोडशभिर्मंत्रैः कुर्याद्धोमं यथाविधि हवनस्य दशांशेन मिष्टान्नं भोजयेद्द्विजान् ब्राह्मणानां स्वयं कुर्याद्यथोक्तनियमं
तथा असामर्थ्ये स्वयं कर्तुं सर्वमन्येन कारयेत् उक्तप्रमाणादधिकं फलं दशगुणं भवेत् ततश्चतुर्गुणं पीठरजतं चतुरस्रकं उपरि
द्रोणमर्धं वा तिलान्परि विनिक्षिपेत् श्वेतवस्त्रेण संछाद्य पूर्ववत्पूजयेत्तरुं दरिद्राय सुशीलाय श्रोत्रियाय कुटुंबिने उदङ्मुखाय
पूर्वस्थाय स्वयं पूर्वमुखस्थितः सुवर्णाश्वत्थराजं च मंत्रेणप्रतिपादयेत् इह जन्मनि वान्यस्मिन्बाल्ययौवनवार्धके मनोवाक्काय-
जैर्दोषैर्मुच्यते नात्र संशयः आचार्येणार्थिविप्रेण सर्वं यत्नेन कारयेत् एवं कृत्वा व्रती सम्यग्व्रतस्य परिपूर्तये हेमाश्वत्थतरुं दद्या
च्छुक्लांगं तत्पयस्विनीं पिप्पलो वृक्षराजेंद्र त्वं ह्यग्निगर्भस्त्वमेव हि प्रभुर्वनस्पतीनां च सर्वजन्मनि यत्कृतं अघौघं नाशय क्षिप्रं तव
रूपप्रदानतः अमुं तरुं गृहाणालं विष्णुरूप द्विजोत्तम स्वीकृत्य दुष्करं घोरं क्षिप्रं शांतिं प्रयच्छ मे एवं व्रतं यः कुरुते पुत्रपौत्रप्रव
र्धकं भुक्त्वा भोगान्सुविपुलान्विष्णुसायुज्यमाप्नुयात् इति श्रीभ० अश्वत्थप्रदक्षिणोद्यापनं सं० अथ विष्णुलक्षप्रदक्षिणाविधिः
युधिष्ठिर उ० भगवन्देवदेवेश सर्वविद्याविशारद किंचिद्विज्ञप्तुमिच्छामि वक्तुमर्हस्यशेषतः अज्ञानादथवा ज्ञानात्प्रमादाच्च कृता
नि भो दायादवधपूर्वाणि कथयं यानि सर्वं विभो पापानि सुबहून्यत्र वदस्व मुनिसत्तम व्यास उ० लक्षप्रदक्षिणाकृतं नारदोक्तं विधिं
शृणु नारद उ० ये लोकाः पापसंयुक्ता धर्माधर्मविवर्जिताः व्रतहीना व्रतभ्रष्टा दुराचाराश्च कुत्सिताः अग्निकार्येण रहिताः शास्त्र

धर्मबहिष्कृताः नास्तिकाभिन्नमर्यादाहेतुकाः कितवाः शठाः मातापित्रोर्विरुद्धाश्च गुरुश्वशुरद्रोहकाः एतेषां निष्कृतिं नाथ कृपया वद मेधुना
अज्ञानात्तु हि जीवानां साधूनां त्वं सकृत्वत्स्मृतः अनाथनाथ देवेश तत्कृपास्त्वादृशा जनाः एतच्छ्रुत्वा नतो ब्रह्मा हर्षादुत्फुल्ललोचनः साधुसा
ध्विति देवेशो वचनं चेदमब्रवीत् ब्रह्मोवाच किं वर्णयामि साधूनां माहात्म्यं च भवादृशां हरेर्लोकैकनाथस्य करुणामुक्तिदायिनी ब्रह्म
हत्यादिपापेषु संकलीकरणेषु च जातिभ्रंशकरेष्वेवं अभक्ष्यभक्षणेषु च हरिणा निर्मितं पूर्वं व्रतं लक्षप्रदक्षिणं सर्वेषामपि पापानां मू
लादुत्कृन्तनं परं पापांधकारनाशाय पापेंधनदवानलं नारायणे जगन्नाथे योगनिद्रामुपेयुषि प्रारभेत व्रतमिदं कुर्याद्यावत्प्रबोधिनी
द्वादश्यां वा चतुर्दश्यां पौर्णमास्यामथापि वा स्नानं कृत्वा नदीतोये नित्यकर्म समाप्य च पश्चात्प्रदक्षिणावर्तः कर्तव्यो हरिरीश्वरः अनं
तमव्ययं विष्णुं लक्ष्मीनारायणं हरिं जगदीश नमस्तुभ्यं प्रदक्षिणपदे पदे इति मंत्रं समुच्चार्य कुर्यादावर्तमादरात् प्रदक्षिणाः प्रकर्तव्या
दिवसे दिवसे विभोः यावत्प्रदक्षिणावर्तस्तावन्मणिं विनिक्षिपेत् आवाहनादितः सम्यक् धूपदीपादिभिस्तथा नैवेद्यं पायसं प्रोक्तं तां
बूलं दक्षिणान्वितं भोजयेच्च यथाशक्त्या विप्रान्सर्वफलप्रदान् सर्वपापविनाशार्थं नारीभिः पुरुषैरपि प्रदक्षिणाः प्रकर्तव्या यावत्प्रबु
द्धोधिनी भवेत् लक्षप्रदक्षिणाः कार्या अंते उद्यापनं चरेत् उपवासः प्रकर्तव्यो अधिवासनवासरे सौवर्णीं प्रतिमां कृत्वा विष्णोरमितते
जसः गरुडेन समायुक्तां स्थापयेत्कलशोपरि आचार्यं वरयित्वा तु ऋत्विजश्च निमंत्रयेत् होमं च विष्णुगायत्र्या तद्दशांशेन वाग्यतः

पायसंज्जुहुयात्तत्र अश्रुतंतिलसर्पिषा हुत्वाग्निस्विष्टकृदाज्यंचदद्याद्दानानिसर्वशः कार्पासंलवणंचैवगामेकांचपयस्विनीं आचार्यायस
पीठंतांप्रतिमांचनिवेदयेत् ब्राह्मणान्भोजयेत्पश्चात्संचविंशतिसंख्यकान् इतितस्यवचःश्रुत्वानारदस्तुतथाकरोत् धर्मेणचकृतंसर्वं
मुनेस्त्वद्वदनाद्भुतं इति॰प॰वि॰ल॰म॰ द्यापनंसं॰ अथतुलसीलक्षप्रदक्षिणाविः नारदउ॰ शेष्यतेयेनविधिनातुलसीपूज्यतेसदा तदाचक्ष्वम
हादेवममानुग्रहकारणात् महादेवउ॰ शृ॰भेपक्षेश॰भेवारेश॰भेऋक्षेश॰भोदये सर्वथाकेशवार्थेतुरोपयेत्तुलसींमुने गृहस्यांगणमध्ये
वागृहस्योपवनेपिवा शुचौदेशेचतुलसीमर्चयेद्बुद्धिमान्नरः मूलेचवेदिकांकुर्यादालवालसमन्वितां प्रातःसंध्याविधिंकृत्वास्ना
नपूर्वंदिनेदिने गायत्र्याष्टशतंजप्त्वातुलसींपूजयेत्ततः प्राङ्मुखोदङ्मुखोवापिस्थित्वाप्रयतमानसः ध्यायेच्चतुलसींदेवींश्यामां
कमललोचनां प्रसन्नांपद्मवदनांवराभयचतुर्भुजां किरीटहारकेयूरकुंडलादिविभूषणां धवलांशुकसंयुक्तांपद्मासननिषेवितां
ध्यानं देवित्रैलोक्यजननीसर्वलोकैकपावनी आगच्छभगवत्यत्रप्रसीदतुलसीप्रिये आवाहनं सर्वदेवमयादेविसर्वदाविष्णुव
ल्लभे देविस्वर्णमयंदिव्यंगृ हाणासनमव्यये आसनं सर्वदेवमयेदेविसर्वदेवनमस्कृते दत्तंपाद्यंगृहाणेदंतुलसीत्वंप्रसीदमे
पाद्यं सर्वतीर्थमयाकारेसर्वागमनिषेविते इदमर्घ्यंगृहाणत्वंदेविदैत्यांतकप्रिये अर्घ्यं सर्वलोकस्यरक्षार्थंसदासन्निधिकारि
णी गृहाणतुलसीप्रीत्याइदमाचमनीयकं आचम॰ गंगादिसर्वतीर्थेभ्योमयानीतंशुभंजलं स्नानार्थंतुलसीस्वच्छंप्रीत्यानत्वम

निगृह्यतां स्नानं क्षीरोदमथनोद्भूतचंद्रलक्ष्मीसहोदरे गृह्यतांपरिधानार्थंइदंक्षौमांबरंशुभे वस्त्रं कंचुकीं आचमनीयं॰ गंध
पुष्पंतथाधूपंदीपंनैवेद्यमेवच तांबूलंदक्षिणांचैवमंत्रपुष्पंततस्मरेत् प्रसीदममदेवेशिकृपयापरयासुदा अभीष्टफलसिद्धिंचकुरु
मेमाधवप्रिये देवैस्त्वंनिर्मितापूर्वंअर्चितासिमुनीश्वरैः नमोनमस्तेतुलसिपापंहरहरिप्रिये तुलस्यमृतजन्मासिसदात्वंकेशव
प्रिये केशवार्थंविचिन्वामिवरदाभवशोभने इतिप्रार्थना इत्येवमर्चयेन्नित्यंप्रातरेवशुचिर्नरः मध्याह्नेवाथसायाह्ने पूजयेत्प्रय
तोनरः वैशाखेकार्तिकेमाघेचातुर्मास्येविशेषतः पूजयेत्तुलसींदेवींअपूपफलपायसैः अन्यद्गुह्यतमंकिंचित्कथयामितवाग्रतः
प्रदक्षिणाफलंचैवनमस्कारंतथैवच एवंकुर्याद्बुद्धिकामःसर्वकामःसदैवतु पंचाशद्भिर्भवेल्लक्ष्मीः शतेश्चविजयःस्मृतः विद्यार्थी
तुसहस्रंवैत्वयुतेसर्वसंपदा लक्षेतुसर्वसिद्धिःस्यान्नात्रकार्याविचारणा यंयंचिंतयतेकामंतंतंप्राप्नोतिसर्वशः भुक्त्वायथेप्सिता
न्भोगानंतेमोक्षमवाप्नुयात् इदंफलंकोटिगुणंभवेदत्रनसंशयः लक्षसंख्याश्चकर्तव्यास्तुलस्याश्चप्रदक्षिणाः तदाउद्यापनंकुर्या
त्तेनसम्यक्फलंभवेत् उद्यापनंविनाविप्रफलंनैवभवेत्क्वचित् तस्मात्सर्वप्रयत्नेनउद्यापनविधिंशृणु सौवर्णीप्रतिमांविष्णोः शं
खचक्रगदान्वितां तुलस्यायतनंचैवकुर्यात्सौवर्णनिर्मितं हेमादिनिर्मितेकुंभेपूर्णपात्रसमन्विते पुण्योदकैः पंचरत्नैःकुशदूर्वा
प्रपूरिते तस्योपरिन्यसेद्विष्णुंलक्ष्म्याचतुलसीसमं पूजांपुरुषसूक्तेनकुर्यात्सर्वप्रयत्नतः उपचारैःषोडशभिर्भक्तिभावसमन्वितः

रात्रौजागरणंकुर्यात्सौरापौर्वेदपाठकैः वैष्णवैश्चप्रबंधैश्चनृत्यैर्वाद्यैस्तथैवच ततःप्रातःसमुत्थायहोमंकुर्याद्विधानतः वैष्णवेनतु
मंत्रेणतिलाज्येनविशेषतः पायसेनघृताक्तेनअष्टोत्तरसहस्रकं आचार्यायसवत्सांगांदक्षिणावस्त्रसंयुतां ब्राह्मणान्भोजयेत्
पश्चात्सहस्रंवाथशक्तितः शतंवाभोजयेद्धीमानष्टाविंशतिवापुनः तेभ्योपिदक्षिणांदद्याद्वित्तशाठ्यंनकारयेत् एवंयःकुरुते
मर्त्योनस्यपुण्यफलंशृणु अश्वमेधसहस्रस्यवाजपेयशतस्यच तत्पुण्यंलभतेमर्त्योनात्रकार्याविचारणा इदंरहस्यंपरमंन
वाच्यंयस्यकस्यचित् विष्णुप्रीतिकरंयस्मात्तस्मात्सर्वशताधिकं तुलसीप्रदक्षिणानांतुमाहात्म्यंशृणुयान्नरः सकृद्वापठतेयो
वैसगच्छेद्वैष्णवंपदं इतिश्रीभविष्येलक्षतुलसीप्रदक्षिणोद्यापनंसंपूर्णं अथगोब्राह्मणाग्निहनुमल्लक्षप्रदक्षिणाविधि
धिः युधिष्ठिरउ० भगवन्ज्ञानिनांश्रेष्ठसर्वविद्याविशारद किंचिद्विज्ञप्तुमिच्छामिवक्तुमर्हस्यशेषतः अज्ञानादथवाज्ञा
नात्प्रमादाद्वाकृतंहियत् पापानिचबहून्यत्रविलयंयांतितद्वद व्यासउ० लक्षप्रदक्षिणाःकार्याब्राह्मणेष्वोगवितथा नारदउ०
येचपापरतानित्यंधर्माधर्मविवर्जिताः व्रतहीनादुराचाराज्ञानहीनाश्चजंतवः तेषांपापविनाशार्थंप्रायश्चित्तंकथंभवेत् ब्रह्मो
वा० किंवर्णयामिसाधूनांमाहात्म्यंचभवादृशां साधुसाधुत्वयाप्रोक्तंवच्मितेव्रतमुत्तमं ब्रह्महत्यादिपापेषुसंकलीकरणेषुच
जातिभ्रंशकरेचापिअभक्ष्यभक्षणेतथा विष्णुनानिर्मितंपूर्वंव्रतंलक्षप्रदक्षिणं सर्वेषामपिपापानांनाशकंपरमंशुभम्

आषाढे शुक्लपक्षे तु एकादश्यां विशेषतः द्वादश्यां पौर्णमास्यां वा प्रारभेद्व्रतमुत्तमं देशकालौ तु संकीर्त्य नत्वा गुरुविनायकौ लक्ष
प्रदक्षिणाः कार्याः स्त्री नग्नी न शक्रश्चिव्रतः जितेंद्रियो जितमाणो सुखेन मनु मुच्चरेत् नमस्ते गार्हपत्याय नमस्ते दक्षिणाग्नये नम
आहवनीयाय महावेद्येनमो नमः गवां प्रदक्षिणाः कार्या लक्षसंख्या यथाविधि पूर्वं पूज्य च गामेकां दत्वा नैवेद्यमुत्तमं पश्चात्प्रदक्षि
णाः कार्या नत्वा तां च पुनः पुनः गवामंगेषु तिष्ठंति भुवनानि चतुर्दश यस्मात्तस्माच्छिवं मेस्यादिह लोके परत्र च एवं प्रदक्षिणाभ्र
ता सर्वपापैः प्रमुच्यते कर्मनिष्ठः शक्तिश्चिविधं पूजयेद्दधि वृद्धयः ततः प्रदक्षिणाः कार्या यावल्लक्षं भवेद्व्रतं भूमिदेव नमस्तुभ्यं न
मस्ते ब्रह्मरूपिणे पूजितो देवदैत्यैस्त्वमतः शांतिं प्रयच्छ मे एवं हनूमते कार्या भूतप्रेतविनाशिने षोडशैरुपचारैश्च पूजयेद्वा-
युनंदनं ततः प्रदक्षिणाः कार्या आत्मकार्यार्थसिद्धये मंत्रः मनोजवं मारुततुल्यवेगं जितेंद्रियं बुद्धिमतां वरिष्ठं वातात्मजं वान
रयूथमुख्यं श्रीरामदूतं शरणं प्रपद्ये एवं प्रदक्षिणावर्तं कुर्याद्देवं प्रयत्नतः भूतप्रेतपिशाचाद्या विनश्यंति न संशयः आदित्यादि
ग्रहाः सर्वे शांतिं यांति शिवाज्ञया उद्यापनं च सर्वासां कुर्यात्संपूर्णफलाप्तये उद्यापनविधानादौ पुण्याहं वाचयेत्ततः आचार्यं वरयित्वा
च प्रतिमाः स्वर्णसंभवाः अव्रणं कलशं पूर्णं स्थापयेन्मंडले शुभे विरच्य लिंगतोभद्रं पूजयेद्देवमंजसा पायसं जुहुयात्तत्र त
न्मंत्रैर्विचक्षणः अष्टोत्तरसहस्रं तु मायश्चित्तं चरेच्छुभं मंडलं दक्षिणायुक्तमाचार्याय निवेदयेत् ब्राह्मणान् भोजयेच्छक्त्या

वित्तशाठ्यविवर्जितः येकुर्वंतिव्रतमिदंपापमुक्ताभवंतिते भुक्त्वायथेप्सितान्भोगानंतेसायुज्यमाप्नुयात् इतिश्रीभवि॰ विप्राग्नि
गोहत्त्रमलक्षमदक्षिणोद्यापनंसं॰ अथलक्षबिल्वपत्रपूजा व्यासउ॰ पूर्वजन्मनिव्याधोसौकथासीद्राक्षसोपिसः किमर्थं
कर्मकृतवान्कथंपत्रंसमर्पितं किंशीलंकः समाचारस्तन्ममाचक्ष्वनाभिज किंनामसकथंभासः सालोक्यंतद्वदस्वमे ब्रह्मोवा॰
विदर्भदेशेनगरंमोदोशाख्यंबभूवह विख्यातंत्रिषुलोकेषुकुबेरनगरोपमं भीमोनामाभवद्व्याधोनगरेमांसविक्रयी परेषां
दोषकथनेदोषोयद्यपिवर्तते मर्मेकृतमवक्तव्यं यथातथ्यंनमत्सरात् ब्रह्मोवा॰ सराज्यकार्यंकुरुतेस्वयंभुंक्तेवरांगनाः राष्ट्रे
शृणोतिरामांसयातांवासपतिंयथा बलादानीयतेभोक्तुंक्रंदतींरुदतीमपि नवांगनार्थंकुरुते भेदंविषयलंपटः वाचाकुंकु
रुतेनारीतस्यदृष्टिपथंगता तामालिंग्यलसौकामीचुंबत्येनांभजत्यपि परद्रव्याणिगृण्हातिधनानिसबलात्पुनः सोपिता
दृग्गुणोमंत्रीदुष्टबुद्धिरघेरतः एवंदुराचाररतानकन्यांनचमातरं नवर्जयतिसंभोगेभगिनीमपिनिर्घृणः नब्रह्महत्यामनुतेन-
स्त्रीबालवधंतथा एवंपापसमाचारौपापस्यपर्वताविव आस्तांसुभौदुष्टबुद्धीराजामात्यौसुदुःसहौ नब्राह्मणोनसन्यासी
तद्गृहेयातिभिक्षितुं नराष्ट्रेनामतस्यासद्गृण्हातिमाद्भुतोपिच एकदामृगयार्थंतौयातौचगहनंवनं हतानिमृगयूथानिपक्षि
रूपाण्यनेकशः तानिमाप्यथ्यनगरेअश्वारूढौस्वयंपुनः शिवस्यचमहास्थानंपथितौपश्यतःस्मह यस्मिन्विराजतेमूर्तिः

ब्र·रा
१७

शक्त्यासहशिवस्यच स्थापितानामभिद्रासापुत्रार्थंकुर्वतातपः भक्त्यासाक्षात्कृतोयत्रदेवदेवोह्युमापतिः पंचाक्षरेणमंत्रेणध्यायताब
हुवासरं दत्वानस्मैवरान्देवोप्रददेवांछितान्यपि ततोवसिष्ठहस्तेनतेनेयंस्थापिताहृढा उमामहेश्वरीमूर्तिर्वसिष्ठेनपुराकृता यस्या
दर्शनतोनृणांपुरुषार्थाश्चतुर्विधाः स्मरणात्पूजनाच्चापिसेव्यतेनात्रसंशयः एवंवसिष्ठवाक्येनसापतद्भुविपप्रथे शिवस्यभोज-
नेनास्यस्मरणेनार्चनेनच रामलक्ष्मणशत्रुघ्नभरताःस दृशाःकृताः जाताल्लोकेषुविख्याताः सर्वज्ञाःशूरसंमताः एवंदृक्षामहार-
म्यंप्रासादंराजनिर्मितं उमामहेश्वरींमूर्तिंराजामात्यौप्रपूजतुः बिल्वपत्रैश्चसंपूज्यअच्छिद्रैःकोमलैःशुभैः प्रदक्षिणीकृत्यगृह-
मीयतुःक्षणमात्रः एतदेवपुरेपुण्यंदेवाज्जातंतयोस्तदा एवंपापसमाचारौराज्यंकृत्वाथसंमृतुः बध्वापाशैर्याम्यहस्तैर्नीतौनौशम-
नांतिकं चित्रगुप्तंसमाहूयपप्रच्छसशुभाशुभं तेनोक्तंनैतयोरस्तिपुण्यलेशोरवेःकृत पापानांगणनानास्तिततोदूतान्ब्रवीद्यमः वध्य
तांवध्यतामेतौक्षिप्यतांनरकेषुच मृत्युलोकेततोह्येतौनीचयोनिंगतावुभौ कुंडेवीचिमयेपंकेसहस्रंपरिवत्सरान् एकैकस्मिन्क्रमे
णैतौकुंडेभुक्त्वायसंचयौ अनयोःपुण्यलेशोस्तिदूताःशृणुतसत्कृतिं प्रसंगादर्चितोहृष्टोदेवोआभ्यामुमापतिः तेनपुण्येनतत्येतौ
पापंव्यतितरिष्यतः एवमाकर्ण्यतद्वाक्यंदूतैर्बध्वाहतंदृढं कुंभीपाकेशोणितोदेनिरयेगौरवेपितौ निक्षिप्तौकालकूटेचक्रमशःश
तवत्सरान् ताभिस्तेचांधताभिस्तेपूयशोणितकर्दमे कंटकेषुक्षतांगौतौसंतप्तौतप्तवालुके भक्षितौक्रिमिभिस्तत्रभृशंशश्वन्निसुखेह्युभौ

उ·खं
३९१

असिपत्रवनेघोरेततोनीतावुभावपि यत्रशस्त्राभिघातेनवर्माभिद्येतपापिनां ततस्तप्तशिलायांतौनिक्षिप्तौयमयातनः भुक्त्वातुनरका
नेकविंशतिंबहुवत्सरं तद्दुःखंवंशक्यनेवक्तुंशेषेणापिकदाचन एवंबहुसहस्राणिभुक्त्वाभोगाननेकशः निस्तीर्णभोगौतौपापशेषे
णाभुवमागतौ एकोजातःकाकयोनौउलूकोभूत्परोपिच ततोएकोदर्दुरोभूदपरःसरगोभवत् ततएकोविषधरोपरोभूद्वृश्चिकोपिच
तत्रापिक्रूरुतःपापेनानालोकविदंशतः शनीमार्जारयोनौतौजातौनकुलसूकरौ वृकजंबूकयोनौतौजातौघोटकगर्दभौ ततउष्ट्रगजौ
जातौततोनक्रमहाझषौ ततोव्याघ्रमृगौजातौततोवृषभकासरौ एवंनानायोनिगतौजातौचांडालअंत्यजौ राक्षसौभिल्लयोनिंचततः
श्वांतेसमीयतुः पिंगाक्षिदुर्बुद्धिरितिनाम्नाजातौचभूतले आजन्मकृतपापस्यकथनेबहुदोषता यदातौराज्यप्रभृतिआस्तांपापरतौ
सदा एकपुण्यंतयोरासीन्मृगयांसर्पतोःक्वचित् शंकरस्यचनमनंदर्शनंचप्रदक्षिणा अर्चनंबिल्वपत्राद्यैस्तुष्टआसीदुमापतिः
अगाधंतत्तयोःपुण्यंपूर्वजन्मनिसंचितं यदापुनाराक्षसोसौभूमिपंभक्षितुंगतः सआरूढोबिल्ववृक्षंतत्पत्राणिचमस्तके पति
तानिउमेशस्यतुष्टोभूत्सद्वयोरपि दिव्यदेहंतयोर्दत्वास्वर्लोकंप्रापयद्विभुः एतत्तेकथितंपूर्वजन्मकर्मचचैतयोः बिल्वपत्रार्चनादेव
तुष्टोभूत्सउमापतिः लक्षपूजांप्रकुर्याच्चप्रसन्नोहिशिवोभवेत् एवंहिबिल्वपत्रैश्चसर्वकामार्थसिद्धये श्रीकामोबिल्वपत्रैश्चपू-
जयेच्चतथाशिवं लक्षेणसर्वसिद्धिश्चनात्रकार्याविचारणा यंयंचिंतयतेकामंतंतंप्राप्नोतिसर्वशः अथविप्रप्रवक्ष्यामिबिल्वपत्रे

ब्र॰रा॰
३८२

श्चपूजनं शंभुप्रीतिकरं नृणां शिवभक्तिविवर्धनं वैशाखे श्रावणे ऊर्जे बिल्वपत्रार्चनं स्मृतं दिने दिने सहस्रेण अर्चयेद्बिल्वपत्रकैः एवं मा
सत्रयं कुर्यात्ततउद्यापनं चरेत् उद्यापनं प्रवक्ष्यामि व्रतस्य परिपूर्तये आहूय ब्राह्मणान्सर्वान्स्वचंद्रे च शुभे दिने यत्र चोद्यापनं कार्यं मंड
लं तत्र कारयेत् कर्तव्यं स्वगृहे वा विप्रैस्तत्सर्वं सुकृतं भवेत् वेदिका तत्र कर्तव्या मंडपे च सुशोभने गीतवादित्रघोषेण ब्रह्मघोषेण भू
यसा प्रविश्य मंडपे तस्मिन् आचार्येण द्विजैः सह मासतिथ्यादि संकीर्त्य कुर्यात्स्वस्त्ययनं ततः पुण्याहवाचनं कार्यं आचार्यव
रणं तथा ततो ब्राह्मणमाहूय वेदवेदांगपारगं आचार्यं वरयेत्पूर्वं कलिंगकादर्शैः सह देवागारे तथा गोष्ठे शुद्धे वा स्वीयमंदिरे पु
ष्पमंडपिकां कृत्वा पट्टकूलादिवेष्टितां तन्मध्ये लिंगतोभद्रं रचयेल्लक्षणान्वितं कुंभस्य रुद्रकोणे तु रचयेद्वेदिकां व्रती वस्त्रेणाच्छा
दितां वेदीं रचयेत्तत्र तंडुलैः कुर्यात्तंडुलकैलासं त्रिकूटं तस्य चोपरि न्यसेद्देविकया सार्द्धं शंकरं लोकशंकरं सौवर्णीं प्रतिमां कृत्वा
स्थापयेत्तंडुलोपरि ब्रह्माणं दक्षिणे भागे सावित्र्या सह सुप्रभं कौबेर्यां स्थापयेद्विष्णुं लक्ष्म्या सह गरुत्मता महेशं स्थापयेन्
मध्ये पार्वत्या सह सुप्रभं कलशं स्थापयेत्तत्र ताम्रं वा मृन्मयं शुभं गंगोदकसमायुक्तं पंचरत्नसमन्वितं पंचपल्लवसंयुक्तं स्था
पयेत्तत तो व्रतः वस्त्रयुग्मेन संवेष्ट्य कैलासं कलशं शुभं यदुक्तं तत्र कल्पोक्तं पूजनं तत्र कारयेत् वेदशास्त्रप्रमाणेन
रात्रिं तां गमयेद्व्रती ततः प्रभातसमये स्नायच शुचिर्भवेत् स्थंडिलं कारयेत्तत्र स्वशाखोक्तविधानतः हवनं च प्र

ल॰वि॰
३८२

कुर्वीतसतिलाज्येनपायसैः मूलमंत्रेणगायत्र्याशंभोर्नामसहस्रकैः येनमंत्रेणपूजातुकृतातेनैवकारयेत् हवनंतद्दशांशेननदशांशो
नतर्पणं वंदनंतद्दशांशेनकुर्यात्तिलयवैःसह एवंहोमःप्रकुर्वीत अष्टोत्तरसहस्रकं बिल्वपत्रंसुवर्णस्यअर्पयेच्चउमापतिं आचार्यंपूज
येद्विप्रांस्तोषयेद्दक्षिणादिभिः पयस्विनींचगांदद्याद्धिरण्येनसहैवतु मणिभांचसवत्सांचकलशंपर्वतंतथा दत्वाक्षमापयेत्पश्चाद्दे
वदेवंजगद्गुरुं अनेनैवविधानेनलक्षपूजांकरोतियः पुत्रपौत्रप्रपौत्रैश्चराज्यंप्राप्नोतिशाश्वतं यइदंपठतेनित्यंश्रद्धाभक्तिसमन्वितः
देवदेवोमहादेवोददातिविपुलांगतिं इतिश्रीस्कंदपु॰ बिल्वदललक्षपूजनोद्यापनंसं॰ अथशिवस्यनानालक्षपूजाविधिः
ऋषयऊचुः यानिकानिचतीर्थानिपुण्यान्यायतनानिच किमुद्दिश्यचकार्याणितत्सर्वंकथयप्रभो शिवाख्यानपरोलोके त्वत्तोन्यो
नहिविद्यतेकृपयाव्यासदेवस्यसर्वज्ञोसिमहामते लोमशउ॰ पृथिव्यांयानितीर्थानिसागरांतानिभोद्विज माहात्म्यानिचशास्त्राणि
कथितानिमयापुरा इदानींवक्तुमिच्छामिलक्षपूजांशिवस्यच स्कंदेनचसमाख्याताअगस्त्यायमहामते तेनैवकथितापूजासमा
ग्रेलक्षपुष्पिका यद्यद्दत्तोभवेत्पुष्पंशंकरेतुसमर्पयेत् श्रावणेमाधवेऊर्जेविदध्याल्लक्षपुष्पिकां एकैकंमूलमंत्रेणरुद्रमंत्रेणवापुनः
अथवारुद्रसूक्तेनसहस्रेणाथवाव्रती अर्चयेत्पार्वतीनाथंनमोरुद्रायवाजपेत् अनेनैवप्रकारेणलक्षपूजांसमर्पयेत् ऋषयऊचुः
यानिकानिचपुष्पाणिविशिष्टानिशिवार्चने तानिसर्वाणिभोब्रह्मन्कथयस्वयथामम लोमशउ॰ बार्हतंकर्णिकारंचकरवीरंतिल

स्यच बिल्वपुष्पंचकल्हारमर्कंमंदारमेवच नीलोत्पलंचकमलंकुमुदंचकुशेशयं मालतीचंपकंचैवतथामोगरकंशुभं तगरंशतपत्रंच
सौवीरंमुनिसंज्ञितं जातीपाटलकंचैवपुन्नागंचविशिष्यते कदंबंचकुसुंभंच अशोकंबकुलंतथा पालाशंकोरंटंचैवबकुलंधत्तुरंत
था एतान्यन्यानिपुष्पाणिविशिष्टानिशिवार्चने एतेषांलक्षपूजांवैयः करोतिनरोत्तमः भुक्त्वाभोगान्सुविपुलान्शिवेनसहमोदते आ
युःकामेनकर्तव्यंचंपकैः पूजनंमहत् विद्याकामेनकर्तव्यंअर्कपुष्पैर्विशेषतः पुत्रकामेनकर्तव्यंबार्हतेपूजनंमहत् करवीरैर्जातिकुसु
मैश्चंपकैर्नागकेसरैः बकुलीतिलपुन्नागैर्धनकामेनपूजयेत् दुःस्वप्ननाशनार्थायद्रोणपुष्पैस्तुपूजनं कल्हारैःकर्णिकारैश्चमंदारैः
कुसुमैःशुभैः श्रीकामेनचकर्तव्यंबिल्वपत्रैस्तुपूजनं विद्याकामेनकर्तव्यंशंकरस्यप्रपूजनं पालाशैःपाटलैश्चैवकदंबकुसुमैस्तथा
महाव्याधिनिरासार्थंपारिजातैस्तुपूजनं वशीकरणकामेनसौवीरैस्तोषयेत्तुयः तस्यविश्वंभवेदृश्यंनात्रकार्याविचारणा देवदान
वगंधर्वावशीभवंतिनान्यथा पुत्रकामेनकर्तव्यंधत्तूरकुसुमैःशुभैः उत्तमांश्रियमाप्नोतिप्रसादाच्छंकरस्यच एवंसर्वैश्चपुष्पैश्चसर्वका
मार्थसिद्धये पूजयेत्पार्वतीनाथंभक्तियुक्तेनचेतसा यंयंचिंतयतेकामंतंतंप्राप्नोतिमानवः लक्षपुष्पैःपूजनेनप्रसन्नःशंकरोयथा उद्याप
नंप्रवक्ष्याभिव्रतस्यपरिपूर्तये आहूयब्राह्मणान्सर्वान्शुभेचतिथिवासरे यत्रउद्यापनंकार्यंमंडपंतत्रकारयेत् स्वशाखोक्तेनकर्तव्यं
तत्सर्वंसफलंभवेत् वेदिकाचप्रकर्तव्यामंडपेतत्रशोभने गीतवादित्रघोषेणब्रह्मघोषेणभूयसा प्रविश्यमंडपेतस्मिन्आचार्येणद्विजैः

सह तिथिनक्षत्रंच संकल्प्य कुर्यात्स्वस्त्ययनंततः पुण्याहवाचनंकार्यमाचार्यवरणंततः वेदिकायांतुकर्तव्यंस्वस्तिकंपरमंशुभं तन्मध्येवि
धिवद्विप्रमंत्रैर्वेदोक्तस्वस्तिकैः कुर्यात्तंडुलकैलासंत्रिकूटंतस्यचोपरि तस्योपरिन्यसेत्कुंभंताम्रंमृन्मयमेववा ब्रह्माणंदक्षिणेभागे
उदीच्यांविष्णुमेवच सौवर्णीप्रतिमांकुर्यात्स्थापयेत्तंडुलोपरि महेशंस्थापयेन्मध्येपार्वत्यासहसुप्रभं पंचपल्लवसंयुक्तंस्थापयेत्त
स्यचाग्रतः वस्त्रयुग्मेनसंवेष्ट्यकैलासंकलशंशुभं यदुक्तंरुद्रकल्पेतुपूजनंतत्प्रकारयेत् वेदशास्त्रपुराणेनरात्रौजागरणंचरेत् ततः
प्रभातसमयेनद्यांस्नात्वाशुभेजले स्थंडिलंकारयेत्तत्रस्वशाखोक्तविधानतः हवनंरुद्रमंत्रेणतिलाज्येनचपायसैः नानाविधैर्भक्ष्य
भोज्यैर्गंधधूपादिभिस्तथा मार्चयेच्छंकरंदेवंविरिंचिंविष्णुनासह सावित्रींपार्वतींचैवलक्ष्मींगणपतिंतथा स्कंधभैरवचामुंडाःप्र
शिवारांस्ततोर्चयेत् नैवेद्यैर्विविधैश्चैवतोषयेद्गिरिजापतिं शर्कराघृतचूर्णेनचरुणाजुहुयात्सह श्रेयःसंपादनंकार्यमाचार्यपूजनंतथा
ऋत्विजःपूजयेत्तस्माद्वस्त्रालंकरणैःशुभैः गोभूहिरण्यवस्त्राद्यैस्तोषयेद्ब्राह्मणांस्ततः अभिषेकंततःकुर्यात्पुराणमुनिचोदितं ततः
शिवालयेगत्वासभार्येणद्विजैःसह स्नानंपंचामृतेनैवरुद्रसूक्तविधानतः पूजांसुवर्णपुष्पैश्चऋतुकालोद्भवैस्तथा कारयेत्तस्य
लिंगस्ययथाशक्त्यातुपूजनं वस्त्रयुग्मंसमभ्यर्च्यदंपतीभोजयेत्ततः सदक्षिणानमस्कारान्कृत्वासूर्येकृतांजलिः क्षमापयेन्महादे
वंमुहुर्मुहुरतंद्रितः महादेवजगन्नाथभक्तानांकार्यकारक त्वत्प्रसादादहंयाचेशीघ्रंकार्यप्रदोभव अनेनैवविधानेनतस्यपूजांकरो

तियः पुत्रपौत्रप्रपौत्रैश्च राज्यंप्राप्नोतिशाश्वतं यइदंपठतेनित्यंश्रद्धाभक्तिसमन्वितः देवदेवोमहादेवोददातिविपुलांमतिं इतिश्री
स्कंदपु०उत्तरखंडेलक्षपुष्पपूजोद्यापनसं० अथतुलसीलक्षपूजाविधिः मासपक्षाद्युल्लिख्य ममसमस्तपापक्षयार्थंश्री
महाविष्णुप्रीत्यर्थंतुलसीलक्षपूजांकरिष्ये इतिसंकल्प्य तुलसीप्रार्थना देवैस्त्वंनिर्मितापूर्वमर्चितासिमुनीश्वरैः नमोन
मस्तेतुलसिपापंहरहरिप्रिये प्रार्थना तुलस्यमृतजन्मासिसदात्वंकेशवप्रिये केशवार्थेविचिन्वामिवरदाभवशोभने तुलसी
पत्राणिसंगृह्यविष्णोर्भक्त्यासमर्पयेत् कृष्णाउ० अथराजन्प्रवक्ष्यामिलक्षश्रीतुलसीव्रतं विष्णुप्रीतिकरंनृणांविष्णुभक्ति
विवर्धनं तुलसीप्रभवैः पत्रैर्योनरःपूजयेद्धरिं नसलिप्यतेपापौघैः पद्मपत्रमिवांभसा सुवर्णभारमेकंतुरजतंतच्चतुर्गुणं त
त्फलंसमवाप्नोतितुलसीदलपूजनात् रत्नवैडूर्यमुक्ताभिःप्रवालादिभिरर्चितः नतुष्यतितथाविष्णुस्तुलसीपूजनाद्यथा तुलसी
मंजरीभिस्तुपूजितोयेनकेशवः आजन्मकृतपापस्यतेनसंमार्जितालिपिः यादृष्टानिखिलाघसंघशमनीस्पृष्टावपुःपावनी रोगा
णामभिवंदितानिरसनीसिक्तांतकत्रासिनी प्रत्यासत्तिविधायिनीभगवतःकृष्णस्यसंरोपितायस्यार्चाकरणेविमुक्तिफलदात-
स्यैतुलस्यैनमः कार्तिकेमासिकुर्वंतिमाघेवामधुसूदने दिनेदिनेसहस्रंतुत्वर्पयेत्तुलसीच्छदान् एवंमासत्रयंकुर्यात्ततउद्याप
नंचरेत् वैशाखेमाघऊर्जेवाकुर्यादुद्यापनंक्रमात् यस्मिन्मासेप्रकर्तव्यंगुरुशुक्रोदयेसति हरेर्दिनेशुभेमासिकुर्यादुद्यापनंव्र

तौ आचार्यंवरयेदादौ वेदवेदांगपारगं दांतंशांतंतथासौम्यंनित्यंब्राह्मणवर्चसं विधिज्ञंतत्ववेत्तारंशुचिश्रुतंतपस्विनं स्वगृह्योक्ते
नमार्गेणपरेद्युःस्वस्तिवाचनं सौवर्णीप्रतिमांविष्णोःशंखचक्रगदान्वितां तुलस्यायतनंचैवकुर्याद्धेम विनिर्मितं हेमादिनिर्मितं
कुंभंपूर्णपात्रसमन्वितं पुण्योदकैःपंचरत्नैःकुशदूर्वाप्रपूरितं तस्योपरिन्यसेद्विष्णुंलक्ष्म्याचतुलसीसमं पूजांपुरुषसूक्तेनकुर्याद्ब्र
ह्मादिदेवताः उपचारैःषोडशभिःपूजयेच्चतथाहरिं रात्रौजागरणंकुर्यात्पुराणैर्वेदपाठकैः ततःप्रातःसमुत्थायहोमंकुर्याद्विधा
नतः वैष्णवेनतुमंत्रेणतिलाज्येनविशेषतः पायसेनघृताक्तेनत्वष्टोत्तरसहस्रकं आचार्यायसवत्सांगांदक्षिणावस्त्रसंयुतां
ब्राह्मणान्भोजयेत्पश्चात्सहस्रंवाथशक्तितः शतंवाष्टाविंशतिंचभोजयेद्ब्राह्मणान्बुधः तेभ्योपिदक्षिणांदद्याद्वित्तशाठ्यंनका
रयेत् एवंयःकुरुतेमर्त्योविष्णुसायुज्यतांव्रजेत् विष्णुप्रीतिकरंयस्मात्तस्मात्सर्वव्रताधिकं तुलसीलक्षपूजोक्तंमाहात्म्यंशृणुयान्नरः सकृद्वापिप
वैनित्यसगच्छेद्वैष्णवंपदं होमभस्मसमादायरक्षांकृत्वातथात्मनः ब्रह्मराक्षसभूतानांशांतयेकारयेदिदं सर्पादिबाधकेप्रासेगर्भिण्याश्चावि
निर्गमात् भस्मप्रोक्षणमात्रेणसर्वंनश्येत्क्षयंनृणां इतिभ॰ल॰तुल॰व्रतोद्या॰सं॰ अथविष्णोर्लक्षपुष्पपूजाविधिः ऋषयऊचुः यानि
कानिचतीर्थानिपुण्यान्यायतनानिच किंचिदृश्यचकार्याणितत्सर्वंकथयप्रभो लोमशउ॰ पृथिव्यांयानितीर्थानिसागरांतानिभो
द्विजाः माहात्म्यानिचसर्वाणिकथितानिमयापुरा इदानींवक्तुमिच्छामिपुष्पाणांपूजनंतव लक्षपूजांप्रवक्ष्यामिविष्णोरमिततेजसः

पुष्पाणांलक्षपूजांतुकार्तिक्यांचसमाचरेत् माघेवाबहुलेवापिविदध्याल्लक्षपुष्पिकां यद्यहृतौभवेत्पुष्पंविष्णवेचसमर्पयेत् एकैकंमू
लमंत्रेणविष्णुसूक्तेनवापुनः अथवाविष्णुगायत्र्यानाम्नाचैवप्रपूजयेत् विष्णोःसहस्रनाम्नावैलक्षपूजांतुकारयेत् अतसीकर्णि
कारंचकरवीरंतिलस्यच बार्हतंकेतकींचैवतथामंदारमेवच नीलोत्पलंसकुमुदंमालतींचंपकंतथा जातीपाटलकंचैवपुन्नागंचकुंदं
बकंकल्हारंमोगरंचैवचाप्यशोकंबकुलंतथा मुनिपुष्पाणिशस्तानिविष्णोरमिततेजसः पालाशंकंदलीपुष्पंकमलंकोरदंतथा नीलपुष्पंधा
त्रिपुष्पंहरेःशस्तानिवैसदा एवंकुर्वंतियेभक्त्यातेयांतिहरिमंदिरं आयुःकामेनकर्तव्यमतसीधात्रिजैस्तथा पुत्रकामेनकर्तव्यं-
बार्हतीपूजनंहरेः करवीरैर्जातिकुसुमैश्चंपकैर्नागकेसरैः बकुलीतिलपुन्नागैर्धनकामेनपूजयेत् कल्हारैःकर्णिकारैश्चमांदारैः
कुसुमैःशुभैः विद्याकामेनकर्तव्यंविष्णोर्भक्त्याचपूजनं पालाशैःपाटलैश्चैवकदंबैःपूजनंमहत् महाव्याधिविनाशार्थंपारिजा
तैश्चपूजनं वशीकरणकामेनसौवीरैस्तोषयेद्धरिं तस्यविश्वंभवेद्वश्यंनात्रकार्याविचारणा देवदानवगंधर्वावशीभवंतिनान्यथा
श्रीकामेनतुकर्तव्यंकेतकीपूजनंमहत् एवंहिसर्वपुष्पैश्चसर्वकार्यार्थसिद्धये लक्षपूजांप्रकुर्वीतप्रसन्नोहिहरिर्भवेत् उद्यापनं
तथाकार्यंमंडपंतत्रकारयेत् आहूयब्राह्मणान्सर्वान्सुनक्षत्रेशुभेदिने वेदिकाचप्रकर्तव्यामंडपेतुशुभेदिने गीतवादित्रघोषे
णब्रह्मघोषेणभूयसा प्रविश्यमंडपेतत्रत्याचार्येणद्विजैःसह पुण्याहवाचनंकृत्वाआचार्यादीन्वरेत्ततः उपोष्यदिवसेतस्मिन्रा

श्चैजागरणंचरेत् वेदिकायांतुकर्तव्यंस्वस्तिकंपरमाद्भुतं तन्मध्येतंडुलैःकुर्याद्धृतदीपंसुशोभनं पंचपल्लवसंयुक्तंन्यसेद्वस्त्रसुशोभ
नं तस्योपरिन्यसेत्कुंभंपूर्णपात्रेणसंयुतं सौवर्णीप्रतिमांतत्रस्थापयेच्चहरेर्विभोः पूजांतत्रप्रकुर्वीतपंचामृतपुरःसरैः धूपदीपे-
श्चनैवेद्यैर्गीतवादित्रनृत्यकैः वेदशास्त्रपुराणैश्चतांरात्रिंगमयेद्व्रती ततःप्रभातसमयेस्नात्वाशुचिर्भवेत् स्थंडिलंकारये
त्तत्रस्वशाखोक्तविधानतः हवनंचप्रकुर्वीतसतिलाज्येनपायसैः मूलमंत्रेणगायत्र्याविष्णोर्नामसहस्रकैः येनमंत्रेणपूजावाकृता
तेनैवहोमयेत् शर्करापृतपूर्णेनचरुणाजुहुयात्ततः एवंहोमःप्रकर्तव्यअष्टोत्तरसहस्रकैः ततःस्विष्टकृतंहुत्वापूर्णाहुतिमतःपरं
श्रेयःसंपादनंपश्चादाचार्यंपूजयेत्ततः ब्राह्मणान्भोजयेत्पश्चात्तेभ्योदद्याच्चदक्षिणाम् आचार्यंपूजयेत्सम्यकूवस्त्रा
लंकरणैःशुभैः पयस्विनींचगांदद्याद्धिरण्यादितथैवच प्रतिमांचसवस्त्रांचकुंभेनाचार्यमर्पयेत् दत्वाक्षमापयेत्पश्चाद्देवदेवं-
जनार्दनं येनयेनप्रकुर्याच्चलक्षपूजांचविष्णवे सौवर्णंचैवतत्सर्वमर्पयेच्चहरिंततः ब्राह्मणांश्चसपत्नीकान्भूषणैस्तोषयेत्ततः
प्रदक्षिणानमस्कारान्कृत्वाभूम्निकृतांजलिः एवंयःकुरुतेपूजांतस्यविष्णुःप्रसीदति इतिविष्णु॰विष्णोर्लक्ष॰द्याप॰सं॰ अथबि
ल्ववर्त्युद्यापनवि॰ द्रौपद्युवा॰ बिल्ववर्तिविधिंब्रूहिदुर्वासःसर्वदर्शन कस्मिन्कालेसमारंभःकस्मिंश्चैवसमापनं दुर्वासाउवा॰
राजपुत्रिप्रवक्ष्यामिविधानंसर्वकामदं श्रद्धावित्तंयदास्याद्वानदैवमारभेद्व्रतं कार्पासस्यस्वहस्तेनतंतुनिष्कासयेत्ततः स्वकीये

वीचविप्राद्यैरंगुलीत्रयसंमिता त्रिह्यताशोभनाचैवबिल्ववर्तिरुदाहृता ततःसंवर्तयेद्वर्तिस्वप्रदेशिनिसंमितां एवंलक्षमिताःकार्याःशक्तौ-
कोटिमिताअपि सर्वशक्तोतुकार्पासस्यांगुलेनैवनिर्मिताः घृतेनमज्यवातैलेस्थापयेत्ताम्रपात्रके स्थापयेन्मृन्मयेपात्रेप्रत्यहंसंरव्ययया
न्विताः श्रावणेमाधवेमाघेकार्तिकेतुविशेषतः दिनेदिनेसहस्रंतुअर्पयेद्विल्ववर्तिकाः त्र्यंबकेश्वरमुद्दिश्यदेवागारेविशेषतः गंगा
तीरेथवागोष्ठेयद्वाब्राह्मणसन्निधौ प्रज्वालयेत्तुपूजांतेब्रह्मलोकजिगीषया नारीवापुरुषोवापिभक्तियुक्तेनचेतसा एकस्मिन्नेवदिव
सेज्वालयेद्यद्विसंस्मृति नमःशंभवइत्येवंमंत्रोरुद्राक्षरैर्मितः पूजनस्यदशांशेनशिवमंत्रेणकारयेत् तर्पणंतद्दशांशेनतद्दशांशेनवंद
नं तद्दशांशेनवैहोमंकुर्याच्चरुतिलाज्यकैः अष्टोत्तरसहस्रंवामंत्रैःपौराणिकैस्ततः दद्याद्वर्तिंयमुद्दिश्यतद्देवस्यमनुर्मतः एवंसंपाद्य
वैशाख्यांकार्तिक्यांवाविशेषतः माघ्यांवाप्यथवायस्यांकस्यांचित्पूर्णिमातिथौ प्रातःस्नात्वाशुचिर्भूत्वाकुर्याद्दुद्यापनंबुधः गणेशपू
जनंस्वस्तिवाच्यंनांदीचकारयेत् आचार्यंवरयेत्तस्मात्सर्वलक्षणसंयुतं देवागारेथवागोष्ठेशुद्धेवास्वीयमंदिरे पुष्पमंडपिकांकृत्वाप-
दुकूलादिवेष्टितां तन्मध्येलिंगतोभद्रंरचयेल्लक्षणान्वितं ततोवैरुद्रकोणेतुरचयेद्वेदिकांभुवी वस्त्रेणाच्छादितांवेदींरचयेत्तत्रतंडुलैः
अष्टपत्रान्वितंपद्मंकर्णिकाभिःसमन्वितं कलशंस्थापयेत्तत्रअव्रणंसजलंतथा ताम्रमृन्मयपात्रंवातस्योपरिन्यसेत्सुधीः तस्योपरि
न्यसेद्देवमुमयासहितंशिवं सुवर्णनिर्मितंदेवंवृषभेणसमन्वितं रजतस्यदीपपात्रेकृत्वाशास्त्रयथाविधि सुवर्णवर्तिकांकृत्वातन्म

ध्येस्थापयेत्सुधीः स्थापयेल्लिंगतोभद्रे ब्रह्माद्यावाहनंततः ततःपूजांविनिर्वर्त्यमहासंभारविस्तरैः परमान्नंचनैवेद्यंभक्त्यादेवायदापये
त् उपोष्यजागरंकुर्याद्रात्रौसत्कथयामुदा ततःप्रभातेविमलेजलेस्नात्वाप्रसन्नधीः वर्तिसंख्यादशांशेनतर्पणंकारयेद्व्रती तर्पणा
स्यदशांशेन होमयेद्रुद्रमंत्रतः तिलाज्यचरुभिर्बिल्वैरुद्रमंत्रेणहोमयेत् आचार्यायप्रदातव्यागौःसवत्सापयस्विनी ब्रह्मादिमं
डलंमूर्तिंदद्यात्सोपस्करांतथा यजमानस्तथाचार्यस्त्वभिषिंचेद्गृहान्वितं विसर्जयेत्ततोदेवंब्रह्मादिसहितंपुनः दद्याच्चभूयसींक
र्मसमाप्त्यार्थविचक्षणाः होमस्यतुदशांशेन ब्राह्मणान्भोजयेत्ततः दत्वाचदक्षिणांतेभ्योगृण्हीयादाशिषःशुभाः वर्धमानंरौप्य
मयंहेमवर्तिसमन्वितं अथवाकांस्यपात्रंच घृतेनापूरितंशुभं ब्राह्मणायप्रदातव्यंदक्षिणासहितंशुभं ततोभुंजीततच्छेषंशिष्टै
रिष्टैश्चबंधुभिः एवंद्रुपदराजेंद्रपुत्रिसत्यव्रतेनये लक्षवर्तिव्रतविधिस्तवाग्रेकथितोमया यंकृत्वाभक्तिभावेननारीवापुरुषोपि
वा दारिद्र्यतमसः सद्योमुच्यतेनात्रसंशयः पुत्रपौत्रप्रपौत्रंच स्वकरवंसंप्राप्यभूतले अंतेदिव्यविमानेनलभतेज्वलितंपदं नैषधा-
धिपतेर्भार्याभर्तृदर्शनलालसा कृत्वाव्रतमिदंप्रापराज्यंभर्तृसुतान्वितं अन्याभिऋषिपत्नीभिर्ऋषिभिस्थापितत्वगेः कृतमेतद्व
तंदेविस्वस्वकामार्थसिद्धये राजपुत्रिमहाभागेवनव्यसनदुःखिते कुरुष्वैतद्व्रतंसम्यक्प्राक्कथाःकालबंधनं अयंकार्तिकमास
श्चमासानामुत्तमोत्तमः आगामिन्यांपौर्णिमास्यामुद्यापनविधिंचर इदंदुर्वाससाख्यातंद्रौपद्यैव्रतमुत्तमं येकरिष्यंतिमनुजास्ते

लभेत्सुः समीहितं इतिजैमिनीयेआरण्यकेबिल्ववर्त्युद्यापनंसं॰ अथरुद्रवर्त्युद्यापनविधिः नारदउवा॰ देवदेवजगन्नाथजगदा
नंदकारक कौतुकेनेशिनंकिंचिद्धर्मप्रश्नंकरोम्यहं श्रुतानिदेवदेवेशव्रतानिनियमास्तथा तीर्थानिचमहंतीश्चयज्ञदानान्यनेकशः
नास्तिमेनिश्चयोदेवश्रामितोहंत्वयापुनः कथयस्वमहादेवयद्गोप्यंव्रतमुत्तमं शिवउ॰ शृणुनारदयत्नेनव्रतानांव्रतमुत्तमं रुद्रवर्त्ये
भिधंपुण्यंसर्वोपद्रवनाशनं सुखसंपत्करंचैवपुत्रराज्यसमृद्धिदं शंकरप्रीतिजनकंशिवस्थानप्रदायकं स्वभर्त्रासहनारीणांमहा
स्नेहकरंपरं शृणुनारदयत्नेनगिरिशोयत्रतुष्यति दीपानांलक्षदानंयत्कुर्यात्परमधार्मिकः यावत्कालंप्रज्वलंतिदीपास्तुशिवसन्निधौ
ब्रह्मणोयुगसाहस्रंदानात्स्वर्गेमहीयते कार्पासवर्तिकायुक्तादीपादत्ताः शिवालये सुचिरंतेपिकैलासेतिष्ठंतिशिवमूर्तयः एवंहि
बहवः संतिदीपास्तुद्विजसत्तम अधुनासंप्रवक्ष्यामियत्पूर्वंकथितंतव यत्कृत्वाकृतकृत्याःस्युर्देवाःसुरमुनीश्वराः एवंज्ञात्वानकुर्वं
तितेज्ञेयादुःखभागिनः रुद्रवर्तिसमंनास्तित्रिषुलोकेषुसुव्रतं अतएवसदाकार्यंव्रतमेतत्सुदुर्लभं मयाख्यातंव्रतमिदंकिमन्यच्छ्रो
तुमिच्छसि नारदउ॰ केनचीर्णंव्रतमिदंकथयस्वप्रसादतः पूजाविधिंचमेब्रूहिउद्यापनसमन्वितं शिवउवा॰ शृणुनारददेवर्षेय
त्त्वंश्रोतुमिहेच्छसि तदहंसंप्रवक्ष्यामिविस्तरेणमहामते नर्मदायुत्तरेदेशेपुरीचोज्जयिनीशुभा तस्यामासीत्सुगंधाचवारस्त्री
अतिसुंदरी तयाशुल्कंकृतंविप्रयुवभिश्चसुदुःसहं सुवर्णानांशतंसाग्रंप्रतिज्ञातंचतैः कृतं युवानश्चतयाविप्राःप्रंशितास्सुगं

धया राजानोराजपुत्राश्चनग्रीकृत्यपुनःपुनः येषांद्रव्यंगृहीतंतवयिक्रुतास्तेस्कंधया एवंहिबहवोलोकालुंठितानश्चसदात्वया कदाचि
त्सागताक्षिप्रांकौतुकाविष्टमानसा ददर्शचमनोरम्यांपक्षिभिः परिसेवितां केचित्ध्यानपराविप्राः केचिज्जपपरायणाः केचिच्छिवा
र्चकाविप्राः केचिच्छक्तिप्रपूजकाः तेषांमध्येवसिष्ठोहितत्राद्दृष्टोमहामुनिः उपविष्टःकर्मस्कवेकुशलोनीतिमार्गवित् तस्याधर्मे
भवद्बुद्धिर्भाविपुण्यबलात्तदा विगताशाजीवनेसाविषयेषुविशेषतः विनम्रकंधराभूत्वाप्रणिपत्यपुनःपुनः स्वकर्मपरिहारायपप्र
च्छमुनिपुंगवं स्कंधोवा॰ अनाथनाथविप्रेंद्रसर्ववेदविशारद प्रसीदपाहिमांदेवशरणागतवत्सल मयाकृतानिविप्रेंद्रपापा
निस्कबहूनिच तस्यपापस्यनाशायकारणंब्रूहिमेप्रभो शिवउ॰ एवमुक्तस्तयाविप्रोवसिष्ठोमुनिरादरात् तेनज्ञातंचतत्सर्वंत
स्याःकर्मपुरातनं ततोब्रवीत्सचमुनिर्वचस्तांसत्यसागरः वसिष्ठउवा॰ शृणुस्कंधोणिस्कभगेतवपापस्यसंक्षयः येनयज्ञाय
तेपुण्यंतत्सर्वंकथयामिते यत्त्वतीर्थंमहत्पुण्यंत्रिषुलोकेषुविश्रुतं प्रयागमितिविख्यातंसर्वदेवैश्चरक्षितं गत्वातत्रप्रयागेवैव्रतं-
त्रैलोक्यदुर्लभं रुद्रवर्त्यभिधंपुण्यंशिवप्रीतिकरंपरं कार्पासतंतुभिःकार्यारुद्रवर्तीशिवप्रिया हस्तेनैवप्रकर्तव्याशुभ्रकंस्कदृढं-
शुभं एकादशैस्तंतुभिश्चकारयेद्रुद्रवर्तिकां लक्षसंख्याचकर्तव्यागव्याज्येनपरिप्लुता सौवर्णंराजतंताम्रंमृन्मयंवानवंदृढं त
त्पात्रेस्थापयेद्वर्तिंघृततैलेनपूरयेत् देयाशिवालयेनित्यंभक्तियुक्तेनचेतसा अथवातिलतैलेनकर्तव्यालक्षवर्तिका कृत्वाव्रतमि

ब्र॰रा॰
३९८

दंभाद्देयास्य सिल्लंपरांगतिं शिवउ॰ ततःसाकोशमादायभृत्यंचैवस्वमित्रकं आयातातीर्थराजंवैदत्वादानानिसर्वशः व्रतंकृत्वायथो
क्तंयथास्वमित्रेणासमन्विता कृत्वासर्वाणितीर्थानिविश्वेशंप्रणिपत्यच उपोष्यरजनीमेकांजागरश्चतथाकृतः स्नात्वाचोत्तरवाहिन्यां
दत्वादानानिभूरिशः ततश्चक्रेव्रतंविप्रवसिष्ठेनोदितंचयत् यथोक्तविधिनासर्वंतथाचानुष्ठितंव्रतं ततःसास्वशरीरेणतस्मिन्लिंगेल
यंययौ एवंयाकुरुतेनारीव्रतमेतत्सुदुर्लभं यंयंचिंतयतेकामंव्रतस्यास्यप्रभावतः पुत्रपौत्रान्धनंधान्यंलभतेनात्रसंशयः शिवउ॰
अथचोद्यापनंवक्ष्येव्रतसंपूर्णहेतवे प्रारभेत्कार्तिकेमाघेवैशाखेश्रावणेतथा तेषुचोद्यापनंकार्यंयथोक्तविधिनाततः अष्टकु-
र्णिकयायुक्तंमंडलंकारयेच्छुभं कलशंस्थापयेत्तत्रपिधानेनसमन्वितं रौप्यंताम्रंमृन्मयंवावस्त्रयुग्मेनवेष्टितं तस्योपरिन्यसे
द्देवमुमयासहितंशिवं रजतस्यदीपपात्रंकृत्वाशक्त्यायथाविधि स्वर्णवर्तिकांकृत्वातन्मध्येस्थापयेत्सुधीः स्वर्णनिर्मितंदेवंवृ
षभेणसमन्वितं पूर्वोक्तेनविधानेनपूजांकृत्वासमाहितः आचार्यंवरयेत्पूर्वंद्विजैरेकादशैःसह होमंचैवस्वसंपाद्यतिलपायसबि
ल्वकैः अष्टोत्तरसहस्रंवाअथवाष्टोत्तरशतं रुद्रसूक्तेनवाविप्रमूलमंत्रेणवापुनः दीपलक्षंप्रकुर्वीतनरःपरमधार्मिकः दीपान्घृते
नसंयुक्तान्नरोदद्याच्छिवालये स्वर्णवर्तियुतंदीपमाचार्यायनिवेदयेत् ततःपूर्णाहुतिंकृत्वाब्राह्मणैःस्वस्तिवाचनं आचार्यंपूज
येद्भक्त्यावस्त्रालंकारभूषणैः तस्मैदेयासवत्साचगौरेकापयस्विनी ऋत्विजःपूजयेत्पश्चाद्वस्त्रालंकरणैःशुभैः वस्त्रोपानद्यु

रु॰व॰
३९८

गंधैंव भोज्यैश्चविविधैरपि नैवेद्यैर्भोजनीयाश्चसपत्नीकाः प्रयत्नतः स्वर्णवर्तिकांकृत्वारौप्यपात्रेनथैवच दद्याच्छिवप्रीतयेचसर्व
कामार्थसिद्धये घृतपूर्णंरौप्यपात्रंकांस्यपात्रंतथैवच स्वर्णवर्तिसहितमाचार्यायनिवेदयेत् रुद्रप्रीत्यंसमानिममाचार्यायसमर्पये
त् कांस्यंविष्णुमयंरौप्यंगोघृतेनसमन्वितं स्वर्णवर्तिसंयुक्तमतःशांतिंप्रयच्छमे महादेवजगन्नाथभक्तानुग्रहकारक त्वत्प्रसा
दादहंयाचेशीघ्रंकार्यप्रदोभव अनेनैवविधानेनरुद्रवर्तिंकरोतियः पुत्रपौत्रैःपरिवृतोराज्यंप्राप्नोतिशाश्वतं एवंयाकुरुतेनारीसर्व
पापैःप्रमुच्यते श्रुत्वाकथांविधानेनस्थाप्यंसर्वंनिवेदयेत् अश्वमेधसहस्राणिवाजपेयशतानिच कथाश्रवणमात्रेणतत्फलंलभतेन
रः इतिश्रीशिवनारदसंवादेरुद्रवर्तीव्रतोद्यापनंसंपूर्णं अथमाणिक्यवर्त्युद्यापनं अद्येत्यादिमासपक्षाद्युल्लिख्यममइहजन्म
निजन्मांतरेवारजोदोषनिमित्तपापपरिहारार्थंपुत्रपौत्रावैधव्यप्राप्तयेकृतंयल्लक्षवर्तीदीपदानंतत्सांगतासिध्यर्थंतदुद्यापनंकरिष्ये
तदंगंगणपतिपूजनंस्वस्तिवाचनंआचार्यवरणंचकरिष्ये इतिसंकल्प्य शिवउ॰ प्रसंगेनापिवक्ष्यामिवर्तिंमाणिक्यसंज्ञिकां तस्या
दानेनदेवित्वंममार्धासनभागिनी जातासिमत्प्रियाहित्वंयावदाभूतसंप्लवं सूतउवा॰ आर्यावर्तेपुराकाचिद्देश्याभूल्लक्षणाह्वया
तस्याभुजंगोमित्रोभूद्दासोनाममहाबली सालक्षणाकृतुस्नातास्थितागोदावरीतटे बालवैधव्यदुःखेनरुदंतींचकुमारिकां मृतंप
तिंपुरःस्थाप्यबंधुभिःपरिवारितां विलपंतींततोवीक्ष्यशनैस्तांमत्यपद्यत लुंठंतींभुविकायेनमुहुर्म्यंतीमुरोबहु जडानामपिकारु

एवंजायतेतांमपश्यच तदातांलक्षणोवाक्यंभुजंगोवाचसत्तमः भुजंगउ॰ कुलजानांचनारीणांदशेयंचसदारुणा अवस्थात्रयमेतासां
नत्रेयंचसदारुणा कन्यात्वंजीवपत्नीत्वंविधवात्वमितित्रिधा पारवश्यंचनारीणांदुःखमामरणांतिकं मृतापत्यंचवैधव्यंतथैवापुत्रता-
स्त्रियः आसत्यमेतत्त्रितयंवैधव्यंतत्रचोत्तरं बालेयंशोचतेतीवकस्येदंकर्मणःफलं निवर्ततेवाकेनेयंकोवावेत्तितथाविधां उवाच
दासनामासौभुजंगःसूनृतंवचः भुजंगउ॰ शृणुभद्रेप्रवक्ष्यामिधात्रासृष्टाःपुराद्विजः देवानांचैवलोकानांहितार्थेमंत्रकोविदाः
शास्त्रज्ञानात्स्वभावाच्चजीवानांयत्सुराकृतं जानंतिकर्मचफलंप्रष्टव्यास्त्वधुनाव्रताः भुजंगवचनंश्रुत्वातथैवोमितिसापुनः ततोगत्वा
महाहृद्ययाज्ञवल्कंनामवैद्विजं पप्रच्छतंदयालुंचप्रश्नकातरमानसा लक्ष्मणोवा॰ मुनेत्वहंदुराचाराकुलटालक्षणाकृया तथापित्वंदया
पात्रंपृच्छतेमांनिबोधय साधूनांसमचित्तानांजनाः सर्वेसमाप्रभवि दुर्गंधोवासुगंधोवायथावायोःसमोप्रभवि मुनेदशेयंनारीणां
तृतीयातीवदुःसहा कर्मणाजायतेयेनकेनवायनिवर्तते एतद्विचार्यमेब्रह्मन्कृपयावदसत्वर शांडिल्यउ॰ इतितस्यावचःश्रुत्वा
याजकोवाक्यमब्रवीत् दैवकर्मणिपित्र्येचनार्यःपाकेषुसंस्थिताः अकस्माच्चरजोदृष्ट्वास्पृष्ट्वाभांडाद्युपस्कराः अज्ञानाद्वाथवाद्वा-
पिकामाल्लोभात्कचित् स्त्रियः अवेदयित्वातिष्ठंतितेनदुष्यंतिसत्क्रियाः क्रियालोपकरात्वेताःपापादस्माद्दुरत्ययात् दशामिमामा
प्नुवंतिसर्वाअपिनसंशयः बाल्येवायौवनेवापिवार्धक्येवाकदाचन तत्रयातुदुराचारापरानेवाभिकांक्षति श्वश्र्वोश्वपतिबंधूनानि-

त्ववाचास्कृदुःखवता एतत्सहायतोनारीयादूषयतिसत्क्रियाः बाल्येवैधव्यमाप्नोतिसानारीनात्रसंशयः ऋतुस्नातातुयानारीबालकानव
लोकयेत् लब्धभर्त्तानितोगर्भबालानामपिघातिनी एतत्कर्मसहायेनरजसादूषितामुना मृतापत्यातथाभूत्वावैधव्यंयौवनेव्रजेत् या
नारीरजसादुष्टासर्वभांडादिसंकरं कुरुतेयदिसानारीवैधव्यंवार्धकेव्रजेत् वाचानुकूलरहितापतिधर्मेषुसर्वदा बाल्येवैधव्यमापन्नाग
तिहीनाभवत्यलं सर्वासामपिवैधव्यनिदानंपापसंभवं शांतिंतत्रप्रवक्ष्यामिकर्मणोस्यापिलक्षणे कृतेपिमुनिपंचम्यांव्रतेपापंविशो
षितं हस्तेनकारयेद्वर्तिकार्पासंशोध्यसत्प्रभं अनेनैवविधानेनविष्णुवर्तिकरोतिया पापंगच्छतिनारीणांइतिवेदविदोविदुः सप्तरूपंवा
यनंकृत्वाकृतेलक्षव्रतादिके समूलशोषंव्रजतिरजोदोषोनसंशयः निर्मूलंचभवत्याशुलक्षवर्तिव्रतेशुभे रजसोत्थमहापापंनारीणांना
त्रसंशयः इतितस्यवचःश्रुत्वापुनःपप्रच्छलक्षणा मनसाशंकिताभूत्वासादरंमुनिपुंगवं साधुसाधुमहाभागचित्तंमेभयविह्वलं ल
क्षवर्तिव्रतस्यास्यविधानंकीदृशंवद कस्मिन्मासेप्रकर्तव्यंकस्मिंश्चैवसमर्पणं उद्यापनंकथंकार्यंकिंफलंतस्यवामुने तयापृष्टोथाज-
कोपिलोकानांहितकाम्यया फलंविधानंतत्सर्वंतदावोचन्महामुनिः शांडिल्यउ० कालोहिकार्तिकोमासोमाघवैशाखमेववा सह-
स्रगुणितंतत्तुव्रतमेतद्धिकार्तिके तस्मात्कोटिगुणंदत्तेमाघेमासिव्रतोत्तमं तस्मादनंतगुणितंफलंवैशाखमासिवै तस्मान्मासत्रये
कार्यंयस्मिन्मासेसमाप्यते तस्मान्मासद्वयात्पूर्वंप्रारब्धव्यंव्रतंत्विदं अंतेमासिप्रकुर्वीतसमाप्तिंचविचक्षणः सहस्रवर्तिभिःकुर्यादा

रात्रिर्विष्णवेन्वहं घृतेनाप्यथतैलेन सम्यग्गन्धैर्मनोरमैः यस्मिन्मासे समाप्तिः स्यात्पूर्णिमायां च कारयेत् उद्यापनं विधानेन व्रतसंपूर्तिकार
णं प्रातः स्नात्वा शुचिर्भूत्वा पंचगव्यं तु प्राशयेत् पुण्याहवाचनं कृत्वा वरेदाचार्यमुत्तमं ब्रह्माणं ऋत्विजश्चैव कुर्यात्तर्पणमंजसा सलिलेश्च
यवैः कुर्यादग्नेनयक्षच्चाद्विजः वर्त्या दशांशतः कुर्यात्तर्पणं तु विचक्षणः तर्पणस्य दशांशेन होमं कुर्याद्विधानतः तर्पणोक्तेन मंत्रेण पाय
सं च घृतान्वितं पालाशसमिधश्चैव मंत्रे होमश्च वैष्णवैः घृतं तु विष्णुगायत्र्या होमस्यायं विधिः स्मृतः अष्टकर्णिकया युक्तं सर्वतोम
डलं लिखेत् कलशास्तु तथा स्थाप्यः सपिधानः सवस्त्रकः रौप्यस्ताम्रो मृन्मयो वा वस्त्रयुग्मेन वेष्टितः तस्योपरि न्यसेद्देवं लक्ष्म्या
सहस्रवर्णकं राजतं दीपपात्रं च स्वर्णवर्तिसमन्वितं ततो मासाधिदेवांश्च स्थापयेद्देवसंनिधौ कालो विष्णुस्तथा वक्रीरविर्दामोद
रो हरिः रुद्रः शेषो जगद्व्यापी तेजोरूपी निशाकरः निरंजनो फलाध्यक्षो विश्वरूपी जगत्प्रभुः स्वप्रकाशो स्वयंज्योतिश्चतुर्व्यूहो-
जनाश्रयः परं ब्रह्म विंशतिभिः पूजयेज्जगदीश्वरं शिरो ललाटं नेत्रे च कर्णौ नासां मुखं तथा कंठं स्कंधौ तथा बाहू स्तनौ वक्षस्तथोद
रं नाभिं कटीं च जघने ऊरू जानुनि गुल्फके पादौ तदग्रकमशोऽङ्गान्येतैश्च पूजयेत् धूपदीपौ तथा दत्त्वा नैवेद्यं च निवेदयेत् आचार्यं
पूजयेत्पश्चाद्ब्राह्मणानृत्विजस्तथा गां प्रदद्यात्सवत्सां च सालंकारां गुणान्वितां त्रिंशत्पलं कांस्यपात्रं घृतेन परिपूरितं स्वर्णवर्ति
संयुक्तमाचार्याय निवेदयेत् कांस्यं विष्णुमयं रौप्यं गोघृतेन समन्वितं सुवर्णवर्तिसंयुक्तमतः शांतिं प्रयच्छ मे इति मंत्रेण दद्यात्

तथादशपलंकांस्यंतथाघृतसमन्वितं अथवातुयथाशक्त्यादद्यादावश्यकंत्विति व्रताभावेचयोदद्यात्कांस्यंचघृतपूरितं यावज्जी
वंसुखमाप्नोतिभवत्येवनसंशयः रजोदोषाद्विमुक्तास्यात्तीर्णमास्यांददातिया ब्राह्मणान्भोजयेत्तस्माद्वित्तशाठ्यंनकारयेत्
यात्वेवंकुरुतेनारीतस्याःपुण्यफलंशृणु यानिचान्यानिपापानिरहस्येवकृतानिच नश्यंतितानिसर्वाणिव्रतस्यास्यप्रभावतः चां
डालगामिनीवापितथाशूद्राभिमर्शिनी कारुकरजकादीनांगामिनीदुष्टचारिणी ब्रह्मक्षत्रियवैश्येषुप्रतिलोमेषुगामिनी मातुले
यपितृव्यादिभ्रातृपुत्राभिगामिनी बालघ्नीवापतिघ्नीवाभर्तृमातृवधेरता गोघ्नीवातस्करीवापिरजःसंकरकारिणी वह्निदागरदाचे
वनित्यंचाप्रियवादिनी पत्यौजीवतियानारीमृतेवाप्यभिचारिणी एवमादिमहापापैराढ्यापिकुलांगना कृत्वाचैतद्व्रतंपुण्यंमुच्यते
नात्रसंशयः व्रतानामुत्तमंचैतत्स्त्रीणामावश्यकंत्विदं एकांतिकंप्रयत्नेनविष्णोस्त्वमिततेजसः कोट्योब्रह्महत्यानामगम्यागम्य-
कोटयः तथैवान्युग्रपापानांकोटयोथसहस्रशः नश्यंतिनात्रसंदेहोनारीणांवानरस्यच विलक्षवर्तिभिर्विष्णोःकृतेचारार्तिकार्पणे
किमत्रबहुनोक्तेननानेनसदृशंव्रतं पुरुषोपिव्रतंकृत्वापूर्वोक्तैःपापसंचयैः मुच्यतेनात्रसंदेहोमधुसूदनशासनात् एतत्सर्वंमयाख्या
तंपृष्टंयत्त्वयाऽनघमानदे व्रतंकुरुसुखंनित्यंयथातेरोचतेमनः इतितद्वचनंश्रुत्वापुनःपप्रच्छलक्षणा अज्ञानाद्दुष्टभावाद्वानविश्वासो
ममेहवै मत्ययार्थेततोब्रह्मन्प्रत्यक्षंकुरुमेधुना इतितद्वचनंश्रुत्वायाजकोवाक्यमब्रवीत् ६७ शांडिल्यउ० कथंतेप्रत्ययोभूयादि

नितांकरुणानिधिः साचोवाचपुनर्विप्रंविस्मयोत्फुल्ललोचना नववैधव्यमापन्नारुदत्येषाकुमारिका अस्याःपतिःकथंजीवेद्वैधव्यं
चैवनश्यति तथाकुरुमुनिश्रेष्ठदयादानवतांधनं इतितद्वचनंश्रुत्वाविस्मितोवाक्यमब्रवीत् शांडिल्यउ॰ अधुनामकरंप्राप्तोभा-
स्करोलोकभास्करः माघोयंचवरोमासःसर्वक्रतुफलाधिकः प्रातःस्नात्वाचमासेस्मिन्प्राप्नुवत्यतुलंफलं स्नानंकृष्णार्पणंकृत्वा
देहिभर्त्रेमृतायच तेनजीवेदयंनूनंब्रह्महत्योपिस्फुरापिच यस्माद्दयंराजयक्ष्मरोगेणचमृतिंगतः तथापिमाघमासस्यपुण्याद्व-
ज्जीवयिष्यति दापयित्वाहरेरार्तिकांस्यपात्रेघृतेनच जीवत्पत्नीभवत्वंहियावदामरणंध्रुवं लक्षणावचनंश्रुत्वाजलंस्पृष्ट्वाचवा
ग्यता स्नानंविष्णवर्पणंकृत्वाददौतस्मैफलंतदा तदापुण्यप्रभावेणतत्क्षणादेवसोत्थितः भुजंगंसंप्रेषयित्वानीत्वापात्रंचकांस्यकं
कुमार्यादापयामासवैधव्यस्यापनुत्तये एतत्पुण्यप्रभावेनकुमारीसापिशोभना यावज्जीवंजीवपत्नीबभूवबहुपुत्रिका कुमारी
शोभनानामपतिंप्राप्यस्वशोभनं तद्बांधवास्तथासर्वेतुष्टुवुस्ताश्चलक्षणां याजकंचबहुस्तुत्वाजग्मुस्तेस्वनिकेतनं लक्षणासापिदा
नेनस्वजंगेनचसंयुता माघस्नानंतथाकृत्वाव्रतमेतच्चकारसा ततस्तुमरणंप्राप्तोदासस्तस्याःसहायकृत् गयोनामसमहाराजाच-
क्रवर्तीबभूवसः सालक्षणाचतत्पत्नीसर्वलक्षणसंयुता बभूवलोकविख्याताजीवत्पत्नीसपुत्रिका अनेनैवविधानेनविष्णुवर्तिंक
रोतियः पुत्रपौत्रैःपरिवृतोराज्यंप्राप्नोतिशाश्वतं एवंयाकुरुतेनारीसर्वपापैःप्रमुच्यते लक्षवर्तिकथामेतांमीत्याश्रोष्यतिमानवः

सोपिनत्फलमाप्नोनितात्रकार्याविचारणा इतिश्रीचाश्रुपु॰ माणिक्यवर्तिव्रतोद्यापनंसंपूर्णं अथविष्णुवर्तिव्रतं युधिष्ठिरउ॰
देवदेवजगंनाथसंसारार्णवतारक वदमेसर्वपापघ्नंव्रतंसर्वव्रतोत्तमं यस्याचरणमात्रेणजनानांसर्वकामदं अस्तिकिंचित्तदाब्रू
हिममदेवदयानिधे श्रीकृष्णउ॰ लक्षवर्तिव्रतंवच्मिसर्वकामफलप्रदं विष्णुवर्तीतिविख्यातंशृणुराजन्समासतः शुभेतिथौ
शुभेलग्नेताराचंद्रेचशोभने सम्यक्विशोध्यकार्पासंतृणधूलिविवर्जितं यस्यसूत्रंविधायाशुचतुरंगुलिकंतथा पंचसूत्रयुताव
र्तिर्विष्णुवर्तीनिकथ्यते एवंकुर्यात्लक्षसंख्यागोघृतेनपरिप्लुताः उद्दीपयेच्चविष्ण्वग्रेपात्रेराजतमृन्मये अथवाप्रत्यहंदेयाःसह
स्रद्वयसंमिताः एवंदिनानिपंचाशदंतेउद्यापनंचरेत् कुरुराजन्प्रयत्नेनसर्वपापप्रणाशनं भुक्त्वायथेप्सितान्भोगानंतेसायुज्य
माप्नुयात् पार्वत्याचपुराप्रष्टंशंकरायमहात्मने तेनेदंकथितंदेव्याविष्णुवर्तिव्रतंशुभं तयाकृताविष्णुवर्तीलक्षसंख्याशुभप्रदा
उद्दीपितानयाभक्त्यासंतुष्टोहंव्रतेनच दत्तंकैलासभवनंशंकरेणाचधारिता कर्तव्यंतुप्रयत्नेनजनेनशुभमिच्छता येनउद्दीपितोविष्णुः
सर्वसौभाग्यदायकः सभवेत्पापनिर्मुक्तोविष्णुलोकेमहीयते उद्यापनंयथार्थत्वंशृणुराजन्ममाग्रतः येनकृत्वाचसकलंफलमाप्नोति
मानवः कार्तिक्यामथवामाघ्यांवैशाख्यांवाशुभेदिने प्रतिमांकारयेद्विष्णोःसौवर्णींमाषमात्रतः कलशंकारयेत्ताम्रंपूर्णपात्रेणसं
युतं आचार्यंवरयेत्पूर्वंपंचऋत्विग्युतंव्रती पुण्याहवाचनंकृत्वागणेशंपूजयेत्ततः विधायसर्वतोभद्रंपंचवर्णंयथाविधि स्थापये

व्र॰रा
३९२

त्स्यनिमांविष्णोःकलशेचनवेशुभे वस्त्रद्वयेनसंवेष्ट्यपूजयेत्कलशोपरि पूजयेच्चयथाशक्त्याब्रह्माद्यादेवताःशुभाः रात्रौजागरणंकुर्याच्छृ
णुयाद्वैष्णवींकथां प्रभातेविमलेस्नात्वापुनःसंपूज्यवैविभुं प्रतिष्ठाप्यततोवह्निंपायसंहवनेस्मृतं जुहुयाद्विष्णुगायत्र्यासहस्रंपायसं
शुभं तर्पणंदशसाहस्रंमार्जनंशतमाचरेत् सौवर्णींवर्तिकांकृत्वापात्रेराजतसंभवे कार्पासवर्तिसंयुक्तेनीराज्योहरिरीश्वरः आ
चार्यंपूजयित्वातुमंडलंतुनिवेदयेत् ब्राह्मणान्भोजयेत्सम्यक्स्वयंभुंजीतवाग्यतः इतिविष्णुरहस्येविष्णुव्रतोद्यापनंसंपूर्णम्
अथदेहवर्तिव्रतंलिख्यते सूतउवाच कैलासशिखरासीनंदेवदेवंजगद्गुरुं पंचवक्त्रंदशभुजंशूलपाणिंत्रिनेत्रकं कपालखट्वांग
धरं खड्गखेटकधारिणं पिनाकपाणिंदेवेशंवरदाभयपाणिनं भस्मांगव्यालशोभाढ्यंशशांककृतशेखरं कैलासशिखरेवासंसू
र्यकोटिसमप्रभं क्रीडतेभगवांस्तत्रगणेशादीन्विसृज्यच विसृज्यदेवताःसर्वाःएकाकीउमयासह तंदृष्ट्वादेवदेवेशंप्रहृष्टंचारुलो
चनं अथापृच्छत्तदादेवीयद्गोप्यंव्रतमुत्तमं देव्युवाच तदहंश्रोतुमिच्छामिकथयस्वममप्रभो दानधर्माननेकांश्चतपस्तीर्थान्यने
कशःनास्तिमेनिश्चयोदेवश्रुत्वाभिनाहंत्वयापुनः व्रतानामुत्तमंदेवभुक्तिमुक्तिप्रदायकं येनचीर्णेनदेवेशमानुषैःप्राप्यतेभुवि स्वर्गा
पवर्गदंसौख्यंनरकार्णवतारकं तदहंश्रोतुमिच्छामिमनुष्याणांहितायच येनश्रुतेनलोकोयंशिवसायुज्यमाप्नुयात् शिवउवाच
यन्नकस्यचिदाख्यातंनराणांमुक्तिदायकं शृणुदेविप्रयत्नेनकथयामितवाखिलं कार्तिकेमार्गशीर्षेवामाघेमासिप्रयत्नतः पक्ष

दे॰व॰
३९२

योरुभयोर्मध्ये शुभेयोगे शुभेदिने एकादश्यांत्रयोदश्यांचतुर्दश्यामुपोषितः कार्पासंनिस्तृणंकृत्वावर्तिंकुर्यात्प्रयत्नतः पादांगुष्ठशि-
खांतंचस्वशरीरप्रमाणतः सूत्रंनिर्माययत्नेनतंतुत्रितयसंयुतं तस्यवर्तिंविधायाथसम्यग्गोऽयघृतेनवै दीपदानंप्रकुर्वीतप्रीतयेम
मचानघे मत्यहंदापयेद्दीपंयावत्संवत्सरंभवेत् अथवाएकमासेवाषष्ठ्युत्तरशतत्रयान् दीपान्प्रज्वालयेद्दत्त्यामसंतोषहेतवे उद्या
पनंवत्सरांतेकुर्याद्विभवसारतः देहदीपसमंदानंनकिंचिदिहविद्यते महापापप्रशमनंस्वर्गद्वारविवर्धनं अत्रेदंकथयिष्यामिइतिहा
संपुरातनं शृणुदेविप्रयत्नेनकथांपौराणिकींशुभां ईश्वरउ॰ अरण्येवर्तमानास्तेपांडवाभार्ययासह आत्मनोदुःखनाशार्थंप
प्रच्छुःकेशवंप्रति युधिष्ठिरउ॰ केनोपायेनदेवेशसंकटाद्दुद्धराम्यहं भुक्त्वाराज्यंचदेहांतेकेनमुक्तिर्भवेन्मम श्रीकृष्णउ॰ अस्तिगु
ह्यंमहाराजव्रतंसर्वार्थदायकं नारीणांचविशेषेणपुत्रपौत्रप्रवर्धनं देहवर्तिसमाख्यातांप्राणिनांसौख्यदायका आत्मदेहसमंसूत्रं
तंतुत्रितयसंयुतं तस्यवर्तिंविधायाशु आज्येयोज्यप्रदीपयेत् एवंसंवत्सरेपूर्णेदद्याच्छंकरतुष्टये अथवामासमध्येवादिनम
ध्येयथाविधि नीराजयेन्महादेवंतेनतुष्यतिशंकरः ददातिविपुलान्भोगानंतेसायुज्यमाप्नुयात् इतिश्रुत्वाचकारासौधर्मराजोनृ
पोत्तमः उद्यापनंतथाकुर्यान्मंडपंकारयेच्छुभं पुण्याहवाचनंकार्यमाचार्यंवरयेत्ततः ऋत्विजश्चरुद्रसंख्यान्वृणुयाच्छिवतुष्टये
विरच्यसर्वतोभद्रंकलशंचनवंदृढं सौवर्णींप्रतिमांतत्रभवानीशंकरस्यच उपचारैःषोडशभिःपूजयेत्कलशोपरि दीपपात्रंराजतं

हिर्वार्निष्कृत्वा सुवर्णजां त्र्यंबकेणचमंत्रेणहुनेदष्टोत्तरंशतं आचार्यायचतत्पीठंदद्याद्दक्षिणयायुतं ब्राह्मणान्भोजयेत्पश्चात्स्वयंभुंजी
तवाग्यतः इदंव्रतंमहादेविसर्वकामसमृद्धिदं कुरुत्वंचप्रयत्नेनसर्वान्कामानवाप्स्यसि इतिश्रीस्कं॰ पार्वतीशंकरसंवादेदेहृव॰द्याप
नंसंपूर्णं अथविष्णुसूर्यलक्षनमस्कारवि॰ अंबरीषउवा॰ इक्ष्वाकूणांकुलगुरोब्रह्मन्धर्मज्ञसुव्रत ब्रूहिपापक्षयकरंव्रतंसर्वो
त्तमंमुने ब्रह्मघ्नस्यसुरापस्यगुरुदारावमर्शिनः संध्याकर्मविहीनस्यतथादुर्मार्गवर्तिनः दासीवेश्यासंगिनश्चचांडालीगामिनस्त
था परस्वहारिणश्चापिदेवद्रव्यापहारिणः देवब्राह्मणवृत्तीनांछेदकस्यनरस्यच रहस्यभेदकस्यापिरहसिकृतपापिनः ब्रह्मयज्ञवि
हीनस्यदुःशास्त्रनिरतस्यच गुरुनिंदादिश्रोतुश्चगुरुद्रव्यापहारिणः नराणांचविशेषेणप्रायश्चित्तंव्रतंवद वसिष्ठउ॰ शृणुगो
प्यातिगोप्यंचव्रतानामुत्तमंव्रतं चतुर्वेदैःपुराणेश्चस्मृतिभिश्चैवनिश्चितं ब्रह्महत्यादिपापानांप्रायश्चित्तंयदीच्छसि संकलीकरणा
नांचमलिनीकरणस्यच अपात्रीकरणानांचप्रायश्चित्तंयदीच्छसि भ्रातृपत्नीसुतानांचगामिनःकामिनस्तथा श्वश्रूमातृवधूनांच
इच्छयागामिनस्तथा तदालक्षनमस्कारंव्रतंकुरुमहीपते संध्याकर्मादित्यागस्यचांडालीगामिनस्तुवै दासीवेश्यासंगिनश्चक्षयंच
यदिवांछसि शृणुनृपविधिंवक्ष्येस्मरणात्पापनाशनं चातुर्मास्येतुसंप्राप्तेकेशवेशयनंगते आषाढस्यसितेपक्षेएकादश्यांसमाहि
तः संकल्पंतुविधायादौपुरतश्चक्रपाणिनः अहंलक्षनमस्कारव्रतंकर्तुंसमुद्यतः निर्विघ्नंत्वत्प्रसादेनकुरुत्वंकृपयाहरे पापपंकेनिम

ग्रंमांपापरूपंदुरासदं व्रतेनानेनसंप्रीतोसमुद्धरजगत्पते इतिसंकल्प्यमनसापारभेद्व्रतमुत्तमं विष्णोर्वाथसवित्रेवानमस्कारान्प्र
यत्नतः प्रातःस्नात्वासदाकुर्यान्मध्याह्नावधिवाग्यतः यथासंख्यांप्रकुर्वीतकार्तिकेव्रतसमापयेत् दुष्टशाकमथान्नवानभुंजी
तकदाचन अनृतंनवदेत्क्वापिनध्यायेत्पापपूरुषं देवार्चनंजपंहोमंनत्यजेत्तुकथंचन अतिथीन्पूजयेन्नित्यंयथाशक्त्यातु
कारयेत् कार्तिकेमासिसंप्राप्तेपौर्णमास्यांततःपरं संस्थाप्यकलशंपूर्णंसवस्त्रंसपिधानकं विष्णोश्चप्रतिमांकुर्यात्ससूर्य
स्यापिस्वर्णजां नामभिःकेशवाद्यैश्चमित्राद्यैश्चप्रपूजयेत् परमान्नंचनैवेद्यंकुर्यात्तस्याश्चतर्पणं पौरुषेणचसूक्तेनतिलगो
धूमतंडुलैः देवदेवजगन्नाथसर्वक्रतुफलप्रद व्रतेनानेनसंप्रीतोगृहाणार्घ्यमयार्पितं एवमर्घ्यंत्रयंदद्यात्पश्चाद्धोमंसमाच
रेत् पौरुषेणचसूक्तेनशतमष्टोत्तरंचरुं आकृष्णेनेतिसूर्यार्थंशतमष्टोत्तरंहुनेत् होमशेषंसमाप्याथपूर्णाहुतिमतःपरं आ
चार्यंपूजयेत्पश्चाद्दद्याद्गांमिथुनंततः ब्राह्मणान्भोजयेत्पश्चाच्छुनर्विंशतिपंचच दक्षिणांचयथाशक्त्यामंडलंचैवदापयेत्
अनुज्ञातस्तुतैश्चैवस्वयंभुंजीतबंधुभिः इदंपुण्यव्रतंराजन्पापारण्यदवानलं सर्वकामप्रदंनृणांसद्योविष्णुप्रियंकरं मोक्षप्र
दंचकर्तृणांज्ञानमार्गप्रदर्शकं नानेनसदृशंकिंचित्त्रिषुलोकेषुविद्यते सर्वेषामाश्रमाणांचविहितंश्रुतिचोदितं नारीणांसधवा
नांचविधवानांविशेषतः इतिश्रीभविष्यो० सूर्यविष्णुलक्षनमस्कारोद्यापनंसंपूर्णं अथमंगलागौरीव्रतोद्यापनपूजनविधिः

युधिष्ठिर उवा॰ उद्यापनविधिं ब्रूहि व्रतराजस्य केशव यतो निरुद्यापनकं व्रतं निष्फलमुच्यते कृष्ण उवा॰ वदामि व्रतराजस्य स्त्रीणां क
र्तव्यमुत्तमं श्रावणे मासि भौमेषु चतुर्षु व्रतमाचरेत् प्रातरुत्थाय सुस्नाता संकल्प्य व्रतमुत्तमं दीपमहांतं प्रज्वाल्य मंगलां पूजयेच्छु
चिः अथ पूजाविधिः अद्येत्यादि देशकालौ संकीर्त्य मम पुत्रपौत्रादिदृष्टादृष्टये अवैधव्यासुरादिसकलाभिवृद्धिद्वारा श्रीशिवमंग
लागौरीप्रीत्यर्थं पंचवर्षपर्यंतं श्रीमंगलागौरीव्रतं करिष्ये प्रथमे वत्सरे मातुर्गृहे कर्तव्यमेव च ततो भर्तृगृहे कार्यमवश्यं स्त्रीभि
रादरात् पंचमे वत्सरे मासे कुर्यादुद्यापनं शुभं आचार्यं वरयेत्तत्र वेदवेदांगपारगं श्रावणे मासि भौमेषु ह्युद्यापनविधिं चरेत् प्रात
रुत्थाय सुस्नाता संकल्प्य व्रतमुत्तमं चतुरस्रं मंचतुर्द्वारं कदलीस्तंभमंडितं घंटिकाचामरयुतं कमलैरुपशोभितं मध्ये वितानं
बध्नीयात्पंचवर्णैरलंकृतं तन्मध्ये स्थापयेत्पीठं दृषदं उपलं तथा रौप्येण कारयेत्पीठं दंडः काञ्चननिर्मितः रौप्यहेम्नोरभावे पि पाषा
णस्य विधीयते पीठोपरि न्यसेद्देवीं ततोग्रे दृषदं तथा तस्याग्रे लिंगतोभद्रं लिखेद्रंगैश्च पंचभिः हरिद्रापिष्टकं कृत्वा तन्मध्ये ष्टद
लं लिखेत् तस्योपरि न्यसेद्व्रीहीन् द्रोणेन परिसंमितान् सौवर्णं राजतं ताम्रं कलशं विन्यसेद्बुधः पंचरत्नानि निक्षिप्य सर्वौषधिस
मन्वितं तस्योपरि न्यसेत्पात्रं ताम्रं वैणवसंभवं उमामहेश्वरौ मूर्ती कांचनेन च निर्मितौ तस्योपरि न्यसेद्राजन् पूजयेच्छिवमंग-
लां गृहाण वेद इति मंत्रेण मूर्तिं पीठोपरि न्यसेत् तदस्तु मित्रावरुणेत्यृचा वाहनमाचरेत् गोधूमोद्भवपिष्टेन कारयेद्दीपमुत्तमं कृत्वा प-

ज्वालितोदीपोघृतवर्तिसमन्वितः उपचारैः षोडशभिर्गंधपुष्पादिभिस्तथा पत्रैः पुष्पैः षोडशैश्चनानाजातैश्चजीरकैः तंडुलैर्धान्यकैश्चैव

स्वच्छैःषोडशसंज्ञकैः अपामार्गस्य पत्रैश्चदूर्वाधत्तूरसंज्ञकैः षोडशैर्दूर्वसंख्याकैः बिल्वपत्रैश्चपंचभिः नीराजनंततःकुर्याद्दीपैःषोडशसंख्यकैः

अथपूजा कुंकुमागरुलिप्तांगांसर्वाभरणभूषितां नीलकंठप्रियांगौरींवंदेहंमंगलाह्वयां ध्यानं अत्रागच्छमहादेविसर्वलोकसुखप्रदे या

वद्व्रतमहंकुर्वेपुत्रपौत्रादिवृद्धये आवाह० रौप्येणचासनंदिव्यंरत्नमाणिक्यशोभितं मयानीतंगृहाणत्वंगौरीकामारिवल्लभे आस० गंधपु-

ष्पाक्षतैर्युक्तंपाद्यंसंपादितंमया गृहाणमंगलेगौरिसर्वान्कामांश्चपूरय पाद्यं गंधपुष्पाक्षतैर्युक्तमर्घ्यंसंपादितंमया गृहाणपुत्रपौत्रादी

न्प्रसन्नाभवसर्वदा अर्घ्यं कामारिवल्लभेदेविकुर्वाचमनमंबिके निरंतरमहंवंदेचरणौतवपार्वति आचम० पयोदधिघृतंचैवमधुशर्कर-

यासमं पंचामृतेनस्नपनात्प्रीयतांपरमेश्वरी पंचामृ० जाह्नवीतोयमानीतंशुभंकर्पूरसंयुतं स्नपयामिसुरश्रेष्ठेत्वांपुत्रादिफलप्रदाम्

स्नानं आचमनीयं वस्त्रंचसोमदेवत्यंलज्जायास्तुनिवारणं मयानिवेदितंभक्त्या गृहाणपरमेश्वरि वस्त्रं कंचुकीमुपवस्त्रंचनानारत्नैः

समन्वितं गृहाणत्वंमयादत्तंपार्वतिजगदीश्वरि कंचुकीवस्त्रं कुंकुमागरुकर्पूरचंदनंकस्तुरींतथा विलेपनंमहादेविगंधंदास्यामि

भक्तितः गंधंसमर्पयामि रंजिताकुंकुमौघेनअक्षताश्चातिशोभनाः ममैषांदेविदानेनप्रसन्नाभवपार्वति अक्षतान् हरिद्रांकुंकु

मंचैवसिंदूरंकज्जलान्वितम् सौभाग्यद्रव्यसंयुक्तंगृहाणपरमेश्वरि सौभाग्यद्रव्याणि सेवंतिकाबकुलचंपकपाटलाब्जैःपुंनागजा

निकरवीररसालपुष्पैः बिल्वप्रवालतुलसीदलमालतीभिस्त्वां पूजयामिजगदीश्वरिमेप्रसीद पुष्पाणि अपामार्गस्यपत्रैश्चदूर्वाधत्तूर
संज्ञकैः षोडशैर्दूर्वसंख्याकैर्बिल्वपत्रादिपंचच अथपत्रपूजा अथांगपूजा उमायै॰ पादौपू॰ गौर्यै न॰
जंघेपू॰ पार्वत्यैन॰ जानुनीपू॰ जगद्धात्र्यैन॰ उरूपू॰ जगत्प्रतिष्ठायै॰ कटीपू॰ शांतिरूपिण्यै॰ नाभिं॰ देव्यै॰ उदरं॰ लोकवंद्यैन॰
स्तनौपू॰ काल्यै॰ कंठं॰ शिवायै॰ मुखं॰ भवान्यै॰ नेत्रेपू॰ रुद्राण्यै॰ कर्णौपू॰ महादेव्यै॰ ललाटंपू॰ मंगलदात्र्यै॰ शिरःपू॰ पुत्रदायि-
न्यै॰ सर्वांगंपू॰ देवद्रुमरसोद्भूतोकृष्णागरुसमन्वितः आघ्रेयःसर्वदेवानांधूपोयंप्रतिगृह्यतां धूपं त्वंज्योतिःसर्वदेवानांतेजसांते
जउत्तमं आत्मज्योतिःपरंधामदीपोयंप्रतिगृह्यतां दीपं अन्नंचतुर्विधंस्वादुरसैःषड्भिःसमन्वितं भक्ष्यभोज्यसमायुक्तंनैवेद्यं
प्रतिगृह्यतां नैवेद्यं आचमनीयं करोद्वर्तनं फलं तांबूलं दक्षिणां वज्रमाणिक्यवैडूर्यमुक्ताविद्रुममंडितं पुष्परागसमायु
क्तंभूषणंप्र॰ भूषणानि नीराजनं नमोदेव्यै॰ पुष्पांजलिं प्रदक्षिणा नमस्कारः पुत्रान्देहिधनंदेहिसौभाग्यंदेहिमंगले अन्यां
श्चसर्वकामांश्चदेहिदेविनमोस्तुते इतिप्रार्थना ततोवैणवपात्रेतुसौभाग्यद्रव्यमाक्षिपेत् अन्नकंचुकिसंयुक्तंसवस्त्रफलद
क्षिणं वायनंगौरिविप्रायददामिप्रीतयेनव सौभाग्यारोग्यकामानांसर्वसंपत्समृद्धये गौरीगिरीशतुष्ट्यर्थंवायनंतेददाम्यहं
इतिमंत्राभ्यांवायनं ताम्रेवावैणवपात्रेसौभाग्यद्रव्यमाक्षिपेत् लड्डुकंचुकिसंयुक्तंसवस्त्रफलदक्षिणं मात्रेस्त्रुवासिनीभ्यश्च

देयंवायनमुत्तमं जननींमातृसंबंधिस्त्रियः षोडश भोजयेत् नीराजनंततःकुर्याद्दीपैः षोडशसंख्यकैः भोक्तव्यादीपकाश्चाथस्त्रीभिः
सहस्वयंततः अन्नंलवणवर्जंतुमौनेनभोजयेत्स्वयं सुवासिनीश्चापितथा वस्त्रालंकारभूषणैः पूजयेच्चततः पश्चात्कुर्याद्गौरीविस
र्जनं विप्रायप्रतिमांदद्यात्रत्नवस्त्राणिभूरिशः एवंकृतेविधानेस्मिन्नार्यवैधव्यमाप्नुयात् इतिमंगलागौरीपूजोद्यापनविधिः
अथकथा युधिष्ठिरउवाच नंदनंदनगोविंदश्रृण्वतोबहुलाःकथाः श्रुताउत्कृष्टपुत्रायुःकरंश्रोतुंव्रतंमम श्रीकृष्णउ० अवैध-
व्यकरंवक्ष्येव्रतंचारिनिषूदन श्रृणुत्वंसावधानःसन्कथावक्ष्येपुरातनीं कुंडिनंनामनगरंख्यातंतत्रद्विजप्रियः आसीद्वणिग्ध
र्मपालोनाम्नाबहुधनोपिसः सपत्नीकोप्यपुत्रोसौनास्तीतिव्याकुलोहृदि तस्यगेहेभस्मलिप्तोदेहेरुद्राक्षधारकः जटिलोभि
क्षुकोनित्यमागच्छन्प्रियदर्शनः नस्वीकुर्वन्मदन्नंसइतिदृष्ट्वाबलावदत् स्वामिन्नयंसदायातिभिक्षुकोजटिलोगृहे नस्वीकरो
त्यस्मदन्नमितिदृष्ट्वासमाधिकं दुःखंप्रजायतेनित्यंश्रुत्वाभार्यावचोब्रवीत् धर्मपालउवाच प्रियेकदाचिद्गुप्तात्वंसस्वर्णांगणे
भव यदाभिक्षार्थमायातिभिक्षोर्वस्त्रांतरेत्वया तदातस्मैप्रदेयानिस्वर्णानिप्रियेनघे अनंतरंतस्यभार्याचीकरत्स्वामिनोदि
तं जटिलेनतुसाशप्तापत्यंतेनभविष्यति श्रुत्वाभिक्षोरिदंवाक्यंदुःखितातमुवाचह स्वामिन्शप्तात्वयापापाच्छापादुद्धरसंप्र
ति इत्युक्त्वातस्यचरणौववंदेदीनभाषिणी जटिलउ० भर्तुःसमीपवक्तव्यंत्वयापुत्रिममाज्ञया नीलवस्त्रःसमारुह्यनीलाश्वंग-

च्छकाननं रवननंतत्र कर्तव्यं यत्राश्वस्तोस्खलिष्यति रम्यं पक्षिभिरायुक्तं मृगसंघद्रुमाकुलं सुवर्णरचितं रत्नमाणिक्यादिविभूषितं ना
नायुधैः समायुक्तं दृश्यं देवालयं ततः वर्तिनेतत्र भवती भवानी भक्तवत्सला आराधयत्वं मनसा यथा विघ्नं दूरिष्यति त्वां भवानीति
वचनं श्रुत्वा भिक्षोः सुरवपदं ववंदे तस्य चरणौ पुनः पुनरुवाच ह तदैव काले जटिलो अंतर्भूतो बभूव सः सावदत्सा तिमत्रैहि स्मृणु
भिः सूक्तमादरात् यथोक्तमवदद्भक्तान् श्रुत्वा वाक्यमब्रवीत् नीलवक्त्रः समारुह्य नीलाश्वं प्रस्थितो वनं गच्छन्नानाविधान्वृक्षा
न्पथि पश्यद्भयंकरान् मृगान्सिंहान्ददर्श भूकान्पथि पश्यन्भयाकुलः ददर्शासौ नडागं च बाहुल्येन विराजितं रक्तनीलोत्पलैश्चक्र
वाकद्वंद्वैश्च राजितं स्नानं चकार तत्रासौ तर्पणार्घ्यापभूरिशः पुनरश्वं समारुह्य जगाम गहनं वनं स्खलितवाजिनं पश्यन् अ-
श्वाद्धतीर्य एव च चरवान् पृथिवीं तत्र यावद्देवालयं गतः ददर्श च महास्थूलं देवालयमसौ ततः रत्नैर्मुक्ताफलैश्चैव माणिक्यैश्चा
पि सर्वतः पूजयामास जटिलवाक्यं स्मृत्वा तिविस्मितः सुवर्णायुक्तवस्त्राणि चंदनान्यक्षतान् शुभान् चंपकादीनि पुष्पाणि धू
पदीपं विशेषतः नानापक्वान्नसंयुक्तं रसैः षड्भिः समन्वितं नानाशाकैः समाक्रांतं मधुदधिघृतशर्करं नैवेद्यं करशुद्ध्यर्थं चंदनं मल
याद्रिजं संपाद्य तुष्टहृदयः फलतांबूलदक्षिणाः जजापमंत्रान्सुतोसौ सगुणध्यानपूर्वकं देवी भक्तगृहोद्दैत्यलोभयामास सादरं
प्रसन्ना वददत्रेयं पूजासंपादितां कथं येन संपादिता तस्मै ददामि वरमद्भुतं इति श्रुत्वा धर्मपालो देव्यग्रे प्रांजलिः स्थितः भगवत्युवाच

धर्मपालत्वयासम्यक्पूजासंपादितानघ वरंयाचयमत्तस्त्वंददामिबहुलंधनं धर्मपालउवा बहुलाधनसंपत्तिर्वर्ततेत्वत्प्रसादतः अप
त्यंमाक्षुमिच्छामिपितॄणांनारकंसुभ्रं आयातिभिक्षुकोगेहेगृण्हातिनमदन्नकं तेनमेबहुलंदुःखंसभार्यस्योपजायते इतिदीन
वचःश्रुत्वादेवीवचनमब्रवीत् देव्युवा॰ धर्मपालकृतेदृष्टेपत्यंनास्तिसुखमदं तथापिकिंयाचयसिकन्यांविगतभर्तृकां पुत्रमल्पा-
युषंवाथाप्यथंदीर्घायुषंसुतं धर्मपालउ॰ पुत्रमल्पायुषंदेहितावताहंकृतकृत्यतां प्राप्तोमिचोद्धरिष्यामिपितरोममघोरगाः देव्युवा॰
मत्पार्श्वेवर्तमानस्यनाभावारूढ्यस्तुंडिनः तत्पार्श्ववर्तिचूतस्यगृहीत्वाफलमद्भुतं पत्न्यैदेयंततःपुत्रोभविष्यतिनसंशयः इतिदेवी
वचःश्रुत्वागत्वातत्पार्श्वएवच नाभिंगजमुखस्याथारूढ्यजग्राहमोहतः फलान्युत्तीर्यचततःफलमेकंददर्शसः एवंपुनःपुनः
कुर्वन्फलमेकंददर्शसः क्रुद्धोगणपतिश्चाथधर्मपालायशप्तवान् षोडशेवत्सरेमासेऽहिःपुत्रंदंशिष्यति धर्मपालोफलसम्य
कुवरुत्तबध्वागमद्गृहं फलंपत्न्यैददौसापिभक्षयित्वापतिव्रता गर्भंसाधारयामासपत्यासहसंगता संपूर्णेनवमेमासेप्रासू
तसुतमुत्तमं जातकर्मचकारास्यपितासंतुष्टमानसः षष्ठीपूजांचकारास्यषष्ठेतुदिवसेततः द्वादशेहनिसंप्राप्तेशिवनाम्नाजुहा
वतं षष्ठमासिचकारासावन्नप्राशनमद्भुतं तृतीयेवत्सरेचूडामष्टमेब्देत्युत्तमं कृत्वोपनयनंपार्थविप्रोहृष्टुष्टमानसः दशमे
वत्सरेप्राप्तेब्रवीद्भार्यापतिव्रता भार्योवा॰ बालकस्यविवाहोपिकर्तव्यःसुमुहूर्तके धर्मपालउ॰ मयासंकल्पितंकाश्यांगमनं-

बालकस्यतत्र हृत्वासमायातुततोविवाहोस्यभविष्यति पुत्रोसोमेषिनस्तेनशालकेनसमन्वितः वाराणस्यांप्रस्थितोसौगृहीत्वाब
हुलंधनं कुर्वतोपथिसद्यःसंप्राप्तिष्ठापुरमागतुः क्रीडंत्यःकन्यकादृष्टास्तत्रदेशेमनोरमे तासांसमाजेगौरांगीसुशीलानामकन्य
कातयासहसखीकाचिच्चकारकलहंभृशं गालनंचददौतस्यैरंडेभाग्येमुहुर्मुहुः सुशीलोवाच सखिलयागालनंसेव्यर्थंदत्तंश
भानने जनन्यामेमानवत्याश्चाविगौरीव्रतंशुभं तस्यप्रसादात्सफलाःसंबंधिन्यःप्रियास्त्रियः आजन्माविधवाजाताःकिंपुनः
कन्यकाध्रुवं वक्ष्येतस्यप्रभावंकिंवनराजस्यभामिनि पूजनेधूपदीपार्थंयत्रतत्रसुखंभवेत् इतिश्रुत्वाततोवाक्यंविस्मयोत्फुल्ल
लोचनः मातुलश्चिंतयामासबालकस्यप्रियंततः शतंजीवोभवेदेषोएतत्कृत्वाक्षतायदि पतंत्यस्यशिरसिइतिभाव्यपुनःपुनः
सुशीलामेवपश्यन्सविस्मयोत्फुल्ललोचनः सुशीलाप्रस्थितागेहेतदनुप्रस्थिताबुभौ स्वगृहंप्रापगौरांगीनिकटेतद्गृहस्यतौ सत
डागेरम्यदेशेवासंचक्रतुरादरात् विवाहकालेसंप्राप्तेसुशीलाजनकोहरिः विवाहोद्योगवान्जातोविचचारहरंवरं असमर्थं
हरंदृष्ट्वातन्मातापितरावुभौ ययाचतुःशिवंबध्वांजलीविनयमुक्तको वरपितरावूचतुः उपस्थितोविवाहोनोपुत्रस्यशुभयाह
रेःसुशीलयाकन्ययायप्रसमर्थश्चदृश्यते अतोदेयोशिवःश्रीमान्लग्नकालेत्वयाविभो लग्नंभविष्यतिततोदेयोस्माभिःशिवस्त
व मातुलउ॰ अवश्यंलग्नकालेसौशिवोमात्यःप्रियंवदः ततोमुहूर्तेसंप्राप्तेविवाहमकरोच्छिवः तत्रैवशयनंचक्रेससुशीलः

प्रियंवदः स्वप्नेसामंगलागौरीमातृरूपेणभास्वता सुशीलामवदत्साध्वीहितंवचनमेवच गौर्युवाच सुशीलेतवगौरांगिभर्तृदंशार्थ
मागतः महान्भुजंगउत्तिष्ठदुग्धंस्थापयतत्पुरः यदंचस्थापयाशुत्वंतन्मध्येसगमिष्यति कूर्पासमंगान्निष्कास्यबंधनीयस्त्वयायदः
मानरुत्थायदेहित्वंमात्रेवायनकंशुभं इतिगौरीवचःश्रुत्वासुशीलाक्षणमुत्थिता ददर्शाग्रेनिःश्वसंतंकृष्णसर्पमहाभयं ततस्त्वका
रगौर्युक्तंमयाकृतानिदिष्टंततः उवाचवरआसन्नोऽत्रमहानीमम भक्षणायाशुदेहित्वंलड्डुकादिकमुत्तमं श्रुत्वेतिवाक्यंपात्रेसा
ददौलड्डुकमुत्तमं भक्षयित्वाशिवेहेमेवस्मिन्यान्नंगुलीयकं दत्वातत्स्थापयामासस्थलेशुभे शुभाननः सुखेनशयनंचक्रे पृथिव्यां
सर्वकोविदः ततःप्रभातसमयेशिवआगाद्गृहंस्वकं स्नानशुद्धासुशीलासामात्रेवायनकंददौ मातादर्शतन्मध्येमुक्ताहारमनुत्त
मं ददौप्रियायैकन्यायैसहसातुष्टमानसा क्रीडाकालेसुसंप्राप्तेहरआगात्तुमंडपे आदेशायत्सुशीलांतांक्रीडार्थंजननींततः
सुशीलोवाच नायंवरोमेजननियेनपाणिग्रहःकृतः अनेनसहमनसाक्रीडनेच्छातथानमे इतिश्रुत्वासमाक्रांतौचिंतयापितरौत
तः अन्नदानमुपायंचविरचेत्तुइतिकृतं तदारभ्यचक्रतुस्तौपुराणोक्तविधानतः सुशीलापादयोश्चक्रेक्षालनंमुद्रिकान्विता ज
लधारांददौमाताचंदनंपुत्रकोहरेः हरिर्ददौचतांबूलंबुभुजुस्तत्रमानवाः इतिरीत्यान्नदानंतत्प्रवृत्तंभिक्षुसौख्यदं तावुभौमस्थि
तौकाश्यांमासौकाशींसुखप्रदां निर्मलाभासिगंगायाः स्नानंचक्रतुरादरात् स्वर्गद्वारंसमस्थितौतौकुर्वंतौधर्ममुत्तमं पीतांबराणिद

दत्तुर्भिक्षुकाणांगृहेगृहे आशिषश्चदद्दुस्तस्मैचिरंजीवोभवेदिति विश्वेश्वरंसमायातौनत्वास्तुत्वापुनःपुनः स्वयंगृहंप्रस्थितौनौशि
वोमार्गंदृष्ट्वातंवदन् शिवउवा॰ कायेमेकिंचिदस्वास्थ्यंमातुलप्रतिभातिहि ततःप्राणोत्क्रमेतस्ययमदूताउपस्थिताः मंगलागौरि
काचापितेषांयुद्धमभून्महत् जित्वातान्मंगलाप्राणान्ददौतस्मैशिवस्यच शिवोकस्मादुत्थितोसौमातुलंप्रत्युवाचह स्वप्नेयु
द्धंमयादृष्टंमंगलायमभृत्ययोः जितास्तेमंगलागौर्याततोहंशयनच्युतः मातुलउवा॰ यज्ज्ञातंशिवतज्ज्ञातंनस्मर्तव्यंत्वयापुनः
गच्छावश्चावांनगरेपितरौद्रष्टुमुत्सकौ प्रस्थितौतौततस्तस्मात्प्रतिष्ठापुरमापतुः रम्येतडागेतत्रैतौपाकारंभंविचक्रतुः दृष्टौतौहरि
दासीभिर्धैर्यौदार्यधरौशुभौ दास्यऊचुः अन्नदानंहरेर्गेहेप्रवृत्तंतत्रगम्यतां ऊचतुः भोदास्योयात्रिकावावांगच्छावोनक्कचिद्गृ
हे इतिश्रुत्वातयोर्वाक्यंदास्योजग्मुःस्वकंगृहं स्वस्वामिनिकटेवाक्यमवदन्सादरंतदा सर्वंदासीवचःश्रुत्वातदर्थंमधुरादरात् प्रेष
यामासहस्त्यादिरत्नवस्त्राणिभूरिशः तंदृष्ट्वाविस्मितौतावागच्छावश्चहरेर्गृहं हरिर्मातुलमभ्यर्च्यशिवंपूजितुमागतः क्षालयं
तीचसाकन्याचरणौतस्यसत्रपा अभूद्दूरोमेयभिनिजजननींप्रत्युवाचह हरिःपप्रच्छसाश्चर्यंशिवंमंगलदर्शनं हरिरुवा॰ किंचि-
च्चिह्नंतवास्त्यत्रब्रूहिमेवरदर्शन शिवउ॰ ममेदंचिह्नमस्तीहइत्युक्त्वागृहमागतः ततआनीयतत्पात्रंदर्शयामाससादरं तत्पात्र
चहरिर्दृष्ट्वाकन्यादानंचकारसः ददौरत्नानिवस्त्राणिसुवर्णानिबहून्यपि तामादायप्रस्थितौतौददतौबहुलंधनं श्रावणेमासिसंप्रा

स्रव्रतं भोमेचकारसा भुक्त्वासर्वेप्यस्थितास्ते योजनंजग्मुरुत्तमाः सुशीलोवा॰ गौरीविसर्जनंचापिदीपमानंकरिष्यति ततोगंतव्यमस्माभिः पितरौ
द्रष्टुमादरात् १०० इत्युक्त्वा आगतास्तत्र गौर्याआवाहनंकृतं ददृशुस्तत्र सौवर्णंदेवालयमनुत्तमं गौरीविसर्जनंदीपमानंसाचव्यचीकरत् त
तःसर्वेप्यस्थितास्तौपितरौद्रष्टुमुत्सुकाः कुंडिनासन्नदेशेतान्दृष्ट्वाविस्मयिनोजनाः अब्रुवुस्तेधर्मपालंसोत्कंठप्रियदर्शनाः जनाऊ॰ धर्मपा
लाद्यतेपुत्रोसभार्यः श्यालकस्तथा समायातोवयंदृष्ट्वाअधुनैवसमागताः यावज्जनावदंस्तत्रतावत्सोपिसमागमः नमस्कारांश्चकारसौपितृभ्यां
पितृवल्लभः मातुलोपिननिंचक्रे भगिनीधर्मपालयोः सुशीलाश्वशुरायापिश्वश्र्वै नत्वास्थितातदा श्वश्रूरुवा॰ सुशीलेनव्रतंब्रूहियद्व
तस्यप्रभावतः आयुर्वृद्धिः शिशोर्मेपिजानाकमललोचने सुशीलोवा॰ नजानेहंव्रतंश्वश्रूजानेमानवतीहरौ श्वशुरंधर्मपालंचश्व
श्रूंचभवनीतथा मंगलांदेवतांजानेवरंतुयुवयोःकृतं इत्युक्त्वाचसुशीलासाबुभुजेस्वांनहर्षिता कृष्णउ॰ तस्माद्व्रतमिदंधर्मस्त्री-
भिःकार्यंसदैवतु युधिष्ठिरउ॰ फलमस्यश्रुतंकृष्णविधानंब्रूहिकेशव कृष्णउवा॰ श्रावणेमासिभौमेषुचतुर्षुव्रतमाचरेत् मातरु
त्थायसुस्नातासंकल्प्यव्रतमुत्तमं उपचारैः षोडशभिः पूजयेन्मंगलांतथा नीराजनंततःकुर्याद्दीपैःषोडशसंख्यया मात्रेसुवा-
सिनीभ्यश्चदेयंवायनमुत्तमं भोक्तव्यादीपकाश्चापि अन्नलवणवर्जितं विसर्जनंमंगलायादीपमानंततःक्रमात् पंचसंवत्सरेष्वे
वंकर्तव्यंपतिमिच्छुभिः इतिश्रीभवि॰ मंगलागौरीव्रतोद्यापनंसंपू॰ अथमौनव्रतं नंदिकेश्वरउ॰ कथयस्वप्रभावेनव्रतंप

रमदुर्लभं येनासौवरदोदेवस्तन्मेकथयषण्मुख स्कंदउ॰ शृणुनंदिन्प्रवक्ष्यामिव्रतंपरमदुर्लभं नकस्यचिन्मयाख्यातंत्वामेवकथयाम्यहं येनसंतु
ष्टमात्रेणसर्वपापैःप्रमुच्यते शाकल्यनगरेरम्येसोमशर्माद्विजोत्तमः सर्वदादुःखितोदीनोद्रव्यहीनोबुभुक्षितः तस्यकन्याद्वयंजातंसौंद
र्यंशुभलक्षणं रूपलावण्यसंपन्नागृहार्चनरतासदा ज्येष्ठारूपवतीनामकनिष्ठाचस्वरूपिणिका वत्सानांपालनार्थायजग्मतुस्तेसरोवरं हंस
कारंडवाकीर्णंचक्रतुस्तेसरोवरं कदलीपारिजातैश्चचंपकैर्बिल्वकैस्तथा तीरेजलगतंमध्येलिंगंतत्रैवतिष्ठति तदार्चनरतानांचअप्स -
राणांकदंबकं ददर्शतासमूहंचअदृश्यंसुमनोहरं आवाहनंकृतंस्नानंताभ्यांतत्रसरित्तटे महादेवव्रतंदिव्यंक्रियतांममसन्निधौ
एवंसंतुष्टमात्रेणसर्वान्कामानवाप्नुयात् पूज्यतांश्रीमहादेवःस्वभद्रेकन्यकेशिवां षोडशग्रंथिसंयुक्तंकरेबध्वास्वदोरकं दूर्वांकुरैःषो
डशभिर्देवस्योपरिविन्यसेत् पुष्पाक्षतादिधूपैश्चसर्वंमौनेनकारयेत् एवंविधिसमायुक्तंपूजयस्वमहेश्वरं नैवेद्यंतुकृतंदानंव्रतंता
भ्यांगृहीतवान् दध्योदनंचतन्मध्यान्निक्षिप्त्वाचसरित्तटे फलानिपिष्टलड्डुकंस्वगृहेयातिगृत्यतां ततःप्रभातसमयेनैवेद्यंतुसम
र्पितं तत्सर्वंहेमसंजातंव्रतस्यास्यप्रभावतः तद्दृष्ट्वामहदाश्चर्यंपितातस्याःपिकंपितः रूपवत्यातदाप्रोक्तंव्रतस्यास्यप्रभावतः न
भेतव्यंत्वयातातगृहीतंतुमयावने द्वितीयेऽह्निपुनस्ताभ्यांवत्सानीताःसरित्तटे वनेतुकन्यकेभ्रामन्तत्रराजाउपागतः प्रतापमुकु
टोराजामृगयासक्तमानसः श्रांतस्तृषितवान्प्राप्तोयत्रास्तेकन्यकाद्वयं राजाअपृच्छतांकन्यास्वुदकंनवसन्निधौ इत्युक्तवतिराजेंद्रे

रूपवत्याप्युदान्वितं आनीतंशीतलंवारि ओदनंदधिसंयुतं ततोभुक्त्वातुराजासौपरिवारेणसंयुतः पुनःप्रष्टुंसमारेभेकस्यकन्यासुलो
चने रूपवत्युवा० सोमशर्मापिताराजन्जानासियदिवानवा तस्यकन्याद्वयंराजन्वनेचागतवत्यहं इत्याकर्ण्यततोराजागतवान्म
दिरंप्रति दूतान्संप्रेषयामासकन्यार्थीविप्रसन्निधौ अथजग्मुस्ततोदूताः सोमशर्मागृहंप्रति राजाआहूयतेशीघ्रंगच्छविप्रम
हीपतिं ततोगत्वासमंदूतैस्तैराज्ञः संनिवेदितः राज्ञातुप्रार्थिताज्येष्ठारूपवत्यभिधायिनी पुण्यमाणवकायैवकनिष्ठान्वसुपर्णिका
पाणिग्रहस्तदातत्रजातेःकन्यकयोस्तयोः देवस्याराधनंत्यक्तंरूपवत्यामदेनच व्रतस्यत्यागदोषेणराज्यलक्ष्मीगताभवत् क
निष्ठायागृहेचैवराज्यंप्राप्तप्रवृत्तमं तस्यावेश्मनिसंप्राप्ताज्येष्ठाभिक्षुगृहंप्रति तांदृष्ट्वादुःखिताजाताकनिष्ठामत्युवाचह कि
मिदंतवदारिद्र्यंराज्यकुम्भगततव साब्रवीत्परसैन्यैश्चसर्वंजित्वादुरात्मभिः लुंठितंसर्वस्वमस्माकंतन्नास्तिइतिभुज्यते व्रतभंगप्र
भावेनदारिद्र्यंसमुपागतं इत्याकर्ण्यसुपर्णासौधनकुंभंददौतदा धनकुंभंगृहीत्वासाज्येष्ठागच्छद्गृहंप्रति मार्गेचौरैस्ततोनीतोध
नकुंभोमनोहरः दुःखंतदातुसंप्राप्तशोकाकुलितमानसा कनिष्ठायागृहंपश्चाज्जगामअतिदुःखिता पुनर्ददर्शतांज्येष्ठांकरु
णासक्तमानसा वंशयष्टिंसमादायतस्यांस्वर्णंनिधायच ददौज्येष्ठांसुपर्णासाविससर्जगृहंप्रति शनैःशनैस्ततागच्छतींचोरा
स्तत्रसमागताः वंशयष्टिंगृहीत्वातेजग्मुस्तत्रयथागतं ज्येष्ठातुशोकसंपन्नासुपर्णासमुपागमत् दुःखंवक्तुंसमारेभेकुपितः

शंकरोमम स्रूपर्णानद्वचः श्रुत्वादंडवत्प्रणिपत्यच स्रूपर्णोवा॰ धन्याहंद्रूपयादेवयदालोकितवानसि त्वत्प्रसादान्महादेवमुच्यतेद्रू
र्मबंधनात् रक्षरक्षजगन्नाथत्राहिमांभवसागरात् स्रूपर्णांदेवदेवेशोमाभैर्माभैरभाषत पुनःस्रूपर्णाइत्याहश्रूयतांजगदीश्वर
ज्येष्ठामेभगिनीपापाप्रवतंत्यक्त्वंतवेश्वर रक्षितव्याजगन्नाथयदितुष्टोसिशंकर ईश्वरउ॰ तद्भगिन्यात्वजानंत्यात्रतभंगोमहान्क
तःसर्वंतदस्तुसंपूर्णंत्वद्भक्त्यामत्प्रसादतः इत्युक्त्वादेवदेवेशोराज्यंदत्वादिवंययौ पुनर्व्रतप्रभावेनराज्यंप्रापमनोरमं नंदिकेश्वरउ॰
देवकेनप्रकारेणव्रतस्योद्यापनंवद कथ्यतांश्रीमहाभागव्रतसंपूर्णहेतवे स्कंदउवा॰ वर्षेषोडशसंपूर्णेकुर्यादुद्यापनंबुधः आदौम
ध्येतथाचांतेकुर्यादुद्यापनंबुधः मासेभाद्रपदेशुक्लेपक्षेप्रतिपदातिथौ मंडपंकारयेत्तत्रकदलीस्तंभमंडितं नानापुष्पैश्चशोभाढ्यं
मरवरंतत्रकारयेत् तन्मध्येलिंगतोभद्रंपंचरंगैःसमन्वितं कलशंस्थापयेत्तत्रहेमपात्रसमन्वितं भवानीसहितंशंभुंस्रूवर्णेनचकार
येत् पुष्पैर्धूपैश्चदीपैश्चनानाफलसमन्वितं पलानिपिष्टपक्वानिदद्यात्कुमायषोडश तांबूलंदक्षिणोपेतंयथाशक्त्यातुदापयेत् प्र
सीददेवदेवेशचराचरजगद्गुरो ईशानायनमस्तुभ्यंव्योमव्यापिन्नमोस्तुते इतिक्षमाप्यदेवेशंभक्त्यातत्परमानसः रात्रौजागरणंकु
र्याद्गीतवाद्यादिमंगलैः ततःप्रभातेउत्थायस्नानंकृत्वाविधानतः होमस्तत्रप्रकर्तव्योतिलाज्येनसमन्वितः मूलमंत्रेणहोतव्यमष्टो
त्तरशतंबुधैः आचार्यंपूजयेद्भक्त्यावस्त्रालंकारभूषणैः धेनुंदद्यात्सवत्सांचवस्त्रालंकारसंयुतां पयस्विनींकांस्यदोहांनानालंकारसं

युनां ततः शैवान्संपूज्याथषोडशैस्तांस्तपोधनान् कौपीनास्तु प्रदातव्यास्तथादद्यात्कमंडलून् भक्त्याक्षमाप्यतान्सर्वान्व्रतसंपू-
र्णाहेतवे भोजनंतत्रदातव्यंलेह्यपेयसमन्वितं दक्षिणांचततोदद्याद्वित्तशाठ्यंनकारयेत् एवंविधिसमायुक्तःकरोतिव्रतमुत्तमं राज्यं
चलभतेलोके पुत्रपौत्रैःसमन्वितः सर्वपापविनिर्मुक्तोसर्वदोषविवर्जितः भुक्त्वाभोगान्यथाकाममंतेगच्छेत्परंपदं लभतेपरमांमु
क्तिंशिवलोकेमहीयते ९२ इतिश्रीभवि॰मौनव्रतोद्यापनंसंपूर्णं अथपंचधान्यलक्षपूजालिख्यते देव्युवा॰ देवदेवजग
न्नाथभवसागरतारक सर्वकारणदेवेशसर्वसिद्धिप्रदायक अहमेकंमहागुह्यंप्रष्टुमिच्छामिशंकर मासाहंकेनपुण्येनलामाश्च
कथयस्वमे ईश्वरउ॰ शृणुदेविप्रवक्ष्यामियद्यंयत्वयामिये पुण्यात्पुण्यतरंश्रेष्ठमिहमोक्षप्रदायकं त्वयायल्लक्षपूजाख्यंह
तंतत्पूर्वजन्मनि तेनमासासिमांदेविसर्वैश्वर्यानुभाविनि पार्वत्युवा॰ महाश्चर्यकरंगुह्यंदेवदेवजगत्पते विस्तरेणव्रतंसर्वमाख्या
मेकथयप्रभो ईश्वरउवा॰ धान्यानांवैलक्षपूजाविधिंवक्ष्येचपार्वति लोकानामुपकारार्थंसर्वसंपत्करंशुभं श्रावणेकार्तिकेवा
पिमाघेवामाधवेपिवा शुभेवाप्यथवान्यस्मिन्यदाभक्तिःशिवेनृणां चित्तंवित्तंभवेद्यस्मिन्कालेचैवार्चयेच्छिवं नित्यकर्मसमा
प्यादौशुचिर्भूत्वासमाहितः समभ्यर्च्यविधानेनलक्षपूजांसमाचरेत् पंचाक्षरेणमंत्रेणात्र्यंबकेणतथैवच शिवनाम्नाथवा
कुर्यात्पूजनंपार्वतीपतेः तंडुलानांमुष्टिमात्रंमुद्गानांमुद्गानिलस्यच ग्रासार्धमात्रमान्नानांयवमष्टोत्तरंशतं तथासंख्याकृतंधान्यं-

समूहंतंडुलादिकं यवगोधूममुद्गाश्चतंडुलाश्चैतिलाःक्रमात् पंचधान्यमितिप्रोक्तंशांतिकेदेवपूजने तंडुलैश्चप्रकुर्वंतिलक्षपूजाविधिं
नराः तेषांस्वर्गंचमोक्षंचप्रददातीहशंकरः एवंतिलैःप्रकुर्वंतिलक्षपूजाविधिंनराः तेजस्विनोमहाभागाःकुलेनचशतेनवै श्रीकामे
नप्रकर्तव्यंगोधूमैःपूजनंमहत् उत्तमांस्त्रियमाप्नोतिप्रसादाच्छंकरस्यच पुत्रकामेनकर्तव्यंयवैःपूजनमुत्तमं अंतेसायुज्यमा
प्नोतिनात्रकार्याविचारणा वशीकामेनकर्तव्यंमुद्गैःपूजनमुत्तमं देवदानवगंधर्ववशीभवतिनान्यथा पूजांकुर्यात्प्रयत्नेन य
द्यशक्तोभवेत्तदा कारयेद्ब्राह्मणद्वाराविधिनासर्वमानवैः पूजेयंपंचधान्यानांसर्वकामार्थसिद्धिदा पूजयेत्पार्वतीनाथंभक्ति
युक्तेनचेतसा यंयंचिंतयतेकामंतंतंप्राप्नोतिमानवः समाप्तौधान्यपूजायाउद्यापनविधिंचरेत् आचार्यंवरयेत्तत्रवेदवेदांगपारगं
पुष्पमंडपिकांकृत्वापूजास्थानेसमाहितः सुवर्णप्रतिमांकृत्वापार्वत्याःशंकरस्यच यथाशक्त्यानंदिनंचरौप्यकेनसमन्वितम्
अभिषिच्यमहादेवमुमयासहितंशिवं नवांबरेसितेशुद्धेस्थापयेत्पार्वतीपतिं समभ्यर्च्यद्विजैःसार्धमहापूजांसमाचरेत्
यवगोधूममुद्गैश्चतिलैर्हाटकनिर्मितैः रौप्येणतंडुलंकृत्वाभक्तिभावपुरःसरः सुवर्णरौप्यधान्यानिकृत्वाशंभोःसमर्पयेत् य
त्रधान्यार्पणंकुर्यात्तत्रैवंपूजनंस्मृतं लक्षसंख्याकृतंधान्यंसमूहंतंडुलादिकं सुवर्णरौप्यसहितंब्राह्मणायनिवेदयेत् अर्चनस्य
दशांशेनब्राह्मणान्भोजयेत्ततः अशक्तश्चेन्नरोयस्तुपंचाशत्पंचविंशतिः शक्तोसत्यांनकुर्याच्चेत्पूजनंनिष्फलंभवेत् तद्दशांशेन

वेद्दोमं कुर्याच्चरुतिलाज्यकैः आचार्यं च सपत्नीकं तोषयेद्दक्षिणादिभिः येकुर्वंतिनराभक्त्याशिवपूजांविधानतः भुक्त्वेहसकलान्भोगानं
तेसायुज्यमेवच एतत्तेकथितंशुद्धं ममसांनिध्यकारकं पुत्रपौत्रधनायुष्यसंपत्तिसुखवर्द्धनं तथा कांताचसुभगातस्य भवेद्धर्ममतिः सदा
ब्रह्महामद्यपस्तेयीनश्यैवगुरुतल्पगः सद्यः पूतोभवेल्लुप्तपूजनात्पार्वतीपतेः इतिश्रीभ० पंचधान्यलक्षपू० विधिःसंपू० अथशिवामु
ष्टिव्रतं बाल्यावस्थायांस्त्रीणामुक्तंभविष्ये देव्युवाच देवदेवजगन्नाथजगदानंदकारक कौतुकेनस्मितोकिंचिद्धर्मप्रश्नंकरोम्यहं
श्रुतानिदेवदेवेशव्रतानिनियमास्तथा तीर्थानिपुण्यक्षेत्राणियज्ञदानान्यनेकशः नास्तिमेनिश्चयोदेवस्वामिताहत्वयापुनः कथय
स्वमहादेवयद्गोप्यंव्रतमुत्तमं केनत्वंहिमयाप्राप्तस्तपोदानव्रतादिना अनादिमध्यनिधनोभर्ताचैवजगत्प्रभुः शिवउ० श्रुणुदे
वि प्रयत्नेनव्रतानामुत्तमंव्रतं शिवामुष्ट्यभिधानंचसर्वोपद्रवनाशनं सुखसंपत्करंचैवपुत्रराज्यसमृद्धिदं शंकरप्रीतिजनकंशि
वस्थानप्रदायकं स्वभर्त्रासहनारीणांमहास्नेहकरंपरं तेनव्रतप्रभावेनप्राप्तासमर्थासनंप्रिये इतिहासंपुरावृत्तंश्रुणुवेत्वंसमाहिता
पुरासरस्वतीतीरेविमलाख्यामहापुरी तत्रचंद्रप्रभुर्नामराजाभूद्धनदोपमः तस्यस्त्रीरूपलावण्यसौंदर्यस्मरविभ्रमा सहिचंद्र
प्रभूराजाकौतुकेनसमन्वितः माहात्म्यंशिवपूजायाः पत्नींप्रत्यवदत्तदा महादेविविशालाक्षिभार्येबालमृगेक्षणे राज्ञश्च कस्य
चित्सप्तपुत्रास्तानाविशारदाः तेषांमध्येकश्चिदेकस्तस्यभार्यापतिव्रता तस्याःकालेहिसंजातौद्वौपुत्रौलक्षणान्वितौ एककन्याम

सूतासासर्वलक्षणसंयुता अभिप्रायस्वामिनेजाता साराज्ञीवनमागता साकदाचिद्वनंगत्वाचारयंतीगवांगणं तत्रशार्दूलवाराहवनमाहिषकुं-
जरान् दृक्षाभयेनव्यथितामूर्छितानिपपातह उत्थायचैवबभ्रामतृषार्त्ताविपिनंमहत् चकोरचक्रकारंडवंचरीकशताकुलं उत्फुल्लपद्म
कल्हारकुमुदोत्पलमंडितं राजपत्नीतदापूर्वंददर्शाप्सरसांगणं समासाद्यसरस्तीरंपीत्वाजलमनुत्तमं शिवंचोमामर्चयंतंददर्शाप्सर
सांगणं किमेतदितिपप्रच्छताऊचुर्योषितंमानि शिवामुष्टिव्रतमिदंक्रियतेस्माभिरुत्तमं सर्वसंपत्करंस्त्रीणांतत्कुरुष्वपतिव्रते राजप
त्न्युवाच विधानंकीदृशंब्रूतकिंफलंचास्यतन्मम ताऊचुर्योषितःसर्वाः श्रावणेचेंदुवासरे प्रारब्धव्यंव्रतमिदंशिवोर्च्यःपंचवत्सरान्
तच्छ्रुत्वासापिजग्राहव्रतंनियतमानसा चतुर्ष्विंदुवारेषुफलैरन्यैःप्रपूजयेत् प्रथमेइंदुवारेन्हिपूजयेच्चशिवापतिं तंडुलैर्गोधूमानिलै
मुद्गैरन्यैःप्रपूजयेत् धान्यानांसार्धमुष्टिंचफलैःसहप्रपूजयेत् नारिकेरंमातुलिंगंरंभाकर्कटिसंभवं उमामहेश्वरौमूर्तिस्थावेशीत्वस
पूजयेत् ततस्तद्व्रतमाहात्म्यात्प्रीतिःप्रियतराभवेत् ततोप्याप्यव्रतंभक्त्याशिवमभ्यर्चयेत्सदा पूजयेद्बहुपुष्पैश्चगंधधूपैश्चदीप
कैः नानाप्रकारैर्नैवेद्यैः पूजयेच्चउमापतिं शैप्येणतंडुलंकृत्वानारिकेरेणसंयुतं गोधूमातिलमुद्गाश्चहाटकेनविनिर्मिताः मातुलिं-
गंचकेरंचकर्कटीसहपूजयेत् एवंविधैर्धान्यफलैर्मंत्रेणानेनपूजयेत् ॐनमःशिवायशांतायपंचवक्त्रायशूलिने नंदिभृंगिम
हाकालगणयुक्तायशंभवे ब्राह्मणान्भोजयेत्तत्रयथाशक्त्याचभूरिशः भर्त्रासहकथांश्रुत्वाभक्तियुक्तेनचेतसा यंयंचिंत-

यनेकामंतंतंमाप्नोतिभामिनी देव्युवाच उद्यापनविधिंब्रूहिशिवस्तुष्ट्याःसुरेश्वर भक्तितःश्रोतुमिच्छामिव्रतसंपूर्णहेतवे महादे
वउवाच उद्यापनविधिंवक्ष्येव्रतराजस्यशोभने यस्यानुष्ठानमात्रेणसंपूर्णंहिव्रतंभवेत् तस्माद्व्रतमिदंदेविस्त्रीभिःकर्तव्यमद्भु
तं श्रावणेमासिसोमेषुचतुर्षुव्रतमाचरेत् प्रातरुत्थायसुस्नातासंकल्प्यव्रतमुत्तमं पंचमेवत्सरेमासेकुर्यादुद्यापनंव्रती चतुस्तं-
भंचतुर्द्वारंकदलीस्तंभमंडितं घंटिकाचामरच्छत्रकदलीरूपशोभितं चंदनागरुकर्पूरैर्लेपितंमंडपंशुभं मध्येवितानंबध्नीयात्पं
चवर्णैरलंकृतं तन्मध्येस्थापयेल्लिंगंपूजयेत्कुसुमार्पणैः सुवर्णरौप्यधान्यैश्चफलैस्तैश्चपूजयेत् ब्राह्मणान्भोजयेत्पश्चाद्वस्त्रा
लंकारभूषणैः अन्येभ्योविप्रवर्येभ्योदक्षिणांचप्रयत्नतः भूयसींपरयाभक्त्याप्रदद्याच्छिवतुष्टये उद्दिश्यपार्वतीशंचसर्वं
कुर्यादतंद्रितः बंधुभिःसहभुंजीतपतिपुत्रजनैःसह एवंयाकुरुतेनारीव्रतराजंमनोहरं सौभाग्यमखिलंतस्याःसप्तजन्मन्य
संशयः एतत्तेकथितंदेविव्रतंवार्यव्रतमुत्तमं कोटियज्ञकृतंपुण्यमस्यानुष्ठानमात्रतः जायतेनात्रसंदेहोऋषिभिःपरिकीर्तिता
त् येश्रृण्वंतिचिमांभक्त्याकथांपापहरांशुभां व्रतजन्माप्नुवंतीहनेहिपुण्यनसंशयः इतिश्रीभ० गौरीशंकरसंवादेशिवामु
ष्टिव्रतोद्यापनंसंपूर्णं अथहस्तगौरीव्रतं कुंत्यांवनादुपेतायाकरिणापुरमुत्तमं मानितायांनरेंद्रेणतनयैःपंचभिःसह १
तस्याःकुशलमन्वेष्टुमाजगामसमाधवः अभिवंद्यसुखासीनंदेवदेवंजनार्दनं उवाचकुंतीसानंदासम्यक्प्रश्नमिदंवचः कुं

त्युवा॰ धन्यास्मिकृतकृत्यास्मिसनाथास्मिपरंतप अहंसंभावितायस्मात्त्वयायदुकुलेश्वर यदिमेसुप्रसंनोसि तदाचक्ष्वव्रतंम
मे यद्विधानात्सुखराज्यंमाप्नुयांननयैःसह कृष्णउ॰ कुंतितेकथयिष्यामिव्रतानामुत्तमंव्रतं यत्कृत्वासुखसंतानधनधान्य
समन्विता विधूतदुष्कृतापुण्यासपुत्राराज्यमाप्स्यसि हस्तगौरीव्रतंभद्रेकुरुषस्वस्थमानसा यत्कृतावभक्तिभावेनलभ्यतेवां
छितफलं कुंत्युवा॰ यदुक्तंतेव्रतंनाथविधानंतस्यकीदृशं केनपूर्वंकृतंवीरतन्मेब्रूहिजनार्दन श्रीकृष्णउ॰ कैलासशिखरेपूर्वं
हस्तसंस्थेदिवाकरे दिवामस्वपितागौरीस्वमेशंभुंददर्शह अर्धदेहंहृषार्धेनअर्धचंद्रकलान्वितं प्रबुद्धासातदागौरीशिवसन्नि
धिमागमत् प्रणम्यदेवदेवेशमिदमाहशुचिस्मिता देवखंडितदेहोयस्त्वमेदृष्टस्त्वमप्रभो किमिदंतन्ममयाचक्ष्वतप्यतेमानसंमम
म ईश्वरउ॰ देविपूर्वंनिषिद्धोसिहस्तनक्षत्रगतेरवौ स्वापस्तुविहितस्तत्रदृष्टंतस्यफलंत्वया शृणुदेवित्वयानेनखंडितोह
विलोकितः त्वयारब्धंव्रतंदेविममाराधनकाम्यया अपूर्णंचत्वयात्यक्तंममनापिसमर्पितं अपूर्णव्रतभावेनदृष्टोहंतादृशस्त्वया
तत्कुरुष्वाधुनादेविहस्तगौरीव्रतंशुभे येनपूर्णव्रतानारीसंपूर्णव्रततामियात् लभतेसर्वसंपत्तिंपुत्रपौत्रसुखानिच देव्युवाच
आरभ्यतेव्रतंनाथविधानेनमहेश्वर आरंभोस्यकदाकार्यःकोविधिःकस्यपूजनं ईश्वरउवा॰ यस्मिन्नहनिहस्तर्क्षेउदयंप्रा
प्यतेरविः तस्मिन्कुर्यात्प्रयत्नेनसौवर्णकुंजरोत्तमं कांचनीप्रतिमागौर्याहेरंबस्यहरस्यच तस्योपरिनिधातव्यासर्वालंकारभू

पिना अन्वहंकांचनैःपुष्पैःपूज्यामुक्ताफलैःशुभैः नैवेद्यैश्चंदनैश्चैववस्त्रैःशृणुयात्सत्यहंकथां दिनेचतुर्दशीमासेस्नाताशुचिमानसा शु
क्लवस्त्रधरादांताभानवेर्घ्यंनिवेद्यच पूजागृहेसुसंलिप्तेस्थापयेत्प्रतिमांशुभां स्वर्णभाजनयुग्मंचपक्वान्नैःपाचितैःशुभैः सार्ध
त्रयोदशभिस्तैर्नैवेद्यमुपकल्पयेत् फलमूलानिचान्यानिशुभानिसमुदाहरेत् पूजयेत्स्वर्णकुसुमैःपुष्पैश्चान्यैःसुगंधिभिः देवींचं
दनपुष्पैश्चतथाधूपाक्षतैःशुभैः ध्यायेच्चहृदयेगौरींहरहेरंबसंयुतां दक्षिणांचततोदत्वानत्वादेवींविसर्जयेत् सार्धत्रयोदशशतं
दीपिकाःश्रद्धयान्वितः पतिव्रत्यैस्त्रियैदद्यात्तावतीःस्वयमाहरेत् व्रतंसमाप्तिकेदेवंयावद्वर्षत्रयोदश स्वर्णभाजनयुग्मंचप्रतिवर्षंवि
सर्जयेत् ततश्चतुर्दशेवर्षेतदुद्यापनमाचरेत् हेरंबशंभुगौरीणांवक्ष्यांस्वनीगजपृष्ठके पूर्वोक्तविधिमापूज्यावासराणित्रयोदश चतुर्दश
दिनेप्राप्तेसंयुताप्रातरुत्थिता कृतोपवासनियमास्नाताशुद्धवेश्मनि स्थापयित्वाततोदेवींनक्तंकुर्यात्ततोर्चनं सप्तविंशतिपद्मानि
पूर्वोक्तेनविधानतः पूर्वोक्तमेवपक्वान्नंविन्यसेच्चपृथक्पृथक् अन्यानिफलमूलानिपक्वान्नानिचकल्पयेत् धूपदीपाक्षतैःपुष्पैश्चंदनै
र्वरवाससा भक्त्यासमर्चयेद्देवींप्रतिमांप्रतिपादयेत् त्वंकथंपूजयामीतिमात्वंचित्तेकथांकुरु अनादिव्रतमेतद्धिनात्रकार्याविचार
णा देव्युवाच सौवर्णीप्रतिमाहस्तिपात्रपुष्पाणिकल्पयेत् यस्यानशक्तिःसानारीकथंकुर्याद्व्रतंविभो ईश्वरउवाच अशक्तोमृद्गजः
कार्यःप्रतिमाचापिमृन्मयी पात्राणिवेणवान्येवपुष्पाणिऋतुजानिच अक्षतैस्तंडुलैश्चैवश्रद्धयाफलमाप्यते श्रीकृष्णउवाच

ततश्चक्रेव्रतंगौरीत्वलभद्वांछितंफलं पूर्णव्रताच्चसाजाताभाग्यसौभाग्यसंयुता त्वमप्येतद्व्रतंकुंतीकुरुश्रद्धासमन्विता अथहस्तिव्रतंकुंतीसा
भिमानाकरोद्व्रतं गांधारीचापितच्छ्रुत्वाचक्रेतद्व्रतमादरात् तस्याःपुत्रशतैश्चापिआनीताशुभ्रमृत्तिका कृत्वावारणगांगौरींसपु
त्रांसशिवांतथा व्रतंत्वरितमारेभेनिशाम्यचविषादिनी तच्छ्रुत्वाशोकसंतापोकुंत्याभून्मानसोज्वरः कुंतीवाक्यमुवाचेदंगांधारीपुण्यका
रिणी यस्याःपुत्रशतंशक्तंशासनेवर्ततेसदा ममपंचसुतास्तेपिनशक्ताःक्वापिकर्मणि श्रुत्वातदर्जुनःप्राहमामातर्विमनाभव किंमृदः
मतिमांकार्यात्वरयासमुपाहरे साक्षादिहहरंगौरीऐरावतमिमंतथा कृत्वातत्पूजनंमातःसम्यक्फलमवाप्स्यसि इत्युक्त्वात्वरितं
पार्थोगंगातीरसमाहृतैः तत्रतुष्टावगौरीशांसूक्तैःस्तुतिसमीरितैः तस्यतुष्टोभवच्छंभुःसमायाचेवरंततः अर्जुनउ॰ देवदेवग
जासीनगौरीहेरंबसंयुतः गृहाणपूजामागत्यमममातुर्गृहेभव तथेत्युक्त्वाहरस्तस्यतार्द्ध्योहरआगतः साष्टांगंप्रणतागौरींकुंतीपू
जामथाकरोत् पंचोपचारैःसंपूज्यनैवेद्यादिभिरुत्तमैः तुष्टत्वभक्तिभावेनसागौरीचततोब्रवीत् कुंतितेपरितुष्टास्मिवरंवरयसुव्र
ते कुंत्युवाच॰ देहिमेसर्वसंपत्तिंसर्वसौख्यंसदोत्सवं प्रयच्छममपुत्राणांसदाराज्यमनामयं ममास्त्वव्याहताभक्तिस्त्वयिजन्मनिज-
न्मनि व्रतमेतत्तुयःकुर्यात्तवलोकमवाप्स्यति नदारिद्र्यंनवैधव्यंनशोकोनापिदुष्कृतं कृच्छ्रंनापकृतमिदंकदाचित्संभविष्यति तथेत्यु
क्त्वाततोगौरीसगजांतरधीयत एतद्व्रतंसकलदुःखविनाशदक्षंसौभाग्यराज्यफलसाधनमाचरंत्यःयायोषितःसुखमनंतमिहो

प्रभुज्य गौरीसमीपमुपयांति हि देहनाशे इति श्रीभ॰ हस्तगौरीव्रतोद्यापनं सं॰ अथ हस्तगौरीपूजा देशकालौ संकीर्त्य ममइ
हजन्मनि जन्मांतरे चाखंडसौभाग्यप्राप्तये पुत्रपौत्रराज्यकामनया हस्तगौरीव्रतांगत्वेन गौरीमहेश्वरप्रीत्यर्थं हेरंबशंभुगौरीपूजनं
करिष्ये तदंगत्वेन गणपतिपूजनस्वस्तिपुण्याहवाचनमाचार्यादिवरणंच करिष्ये हस्तगौरीं सदा वंदे हृदये भक्तवत्सलां शिवार्धां
गस्थितामेकदंतपुत्रेण शोभितां ध्यायामि आगच्छ भो हस्तगौरि ऐरावतगजोपरि शंभुना च गणेशेन पार्षदैः स्वसखीगणैः आवा॰
आसने स्वर्णरत्नाढ्ये सर्वशोभासमन्विते उपविश्य जगन्मातः प्रसादाभिमुखी भव आसनं इदं गंगाजलं सम्यक् सुवर्णकलशे स्थि
तं पाद्यार्थं ते प्रयच्छामि क्षालयामि पदांबुजे पाद्यं॰ गंधपुष्पाक्षतारक्तपुष्पैस्तोयसमन्वितं सुवर्णपात्रे सर्वांगि गृहाणार्घ्यं नमोस्तु ते अ
र्घ्यं कर्पूरैलामृगमदैः सुवासैरुपशोभितं आचम्यतां महादेवि शिशिरं विमलं जलं आचम॰ नदीनदसमुद्भूतं पवित्रं निर्मलं जलं
स्नानार्थं ते प्रयच्छामि प्रसीद जगदंबिके स्नानं पंचामृतेन स्नपनं करिष्ये भक्तवत्सले पयोदधिघृतं चैव माक्षिकं शर्करायुतं पंचामृत॰
मंदाकिन्याः समानीतं हेमांभोरुहवासितं स्नानार्थं ते मयानीतं गृहाण जगदंबिके शुद्धोदकस्नानं कौशेयवसनं दिव्यं कंचुक्या च-
समन्वितं उपवस्त्रेण संयुक्तं गृहाण परमेश्वरि वस्त्रं यज्ञोपवीतं इदं गंधं महद्दिव्यं कुंकुमेन समन्वितं विलेपनं मया दत्तं गृहाण व
रदा भव गंधं कज्जलं चैव सिंदूरं हरिद्राकुंकुमानि च भक्त्यार्पितं मया गौरि सौभाग्यं च गृहाण भो सौभाग्यद्रव्याणि नानाविधानि

माल्यानिसुगंधीनिहरिप्रिये गृहाणसुमनानीशेप्रसादाभिमुखीभव पुष्पाणि धूपंमनोहरंदिव्यंसुगंधंसुमनोहरं दशांगसहितंदेवि
धूपंमेप्रतिगृह्यतां धूपं दीपंतमोहरंज्योत्स्नंज्ञानसंबोधकंसदा दीपंगृहाणमातस्त्वमपराधशतापहे दीपं नानाविधानिभक्ष्याणि
व्यंजनानिहरिप्रिये गृहाणदेविनैवेद्यंसुखदंसर्वदेहिनां नैवेद्यं गंगोदकंसमानीतंमयाचमनहेतवे तेनाचम्यमहादेविवरदाभवचं-
डिके आचम० करोद्वर्तनं रंभाफलंदाडिमंचमातुलिंगंचखर्जुरं नारीकेरंचजंबीरंफलान्येतानिगृह्यतां फलानि पूगीफलमितितांबू°
हिरण्यगर्भेतिदक्षिणां नीराजयामिदेवेशिकर्पूराद्यैश्चदीपकैः गृहाणमंगलान्दीपान्वरदाभवशोभने नीराजनं यानिकानिचपापा°
नि० प्रदक्षिणाः नानाविधानिदिव्यानिबिल्वपत्रयुतानिच दूर्वांकुरैःसंयुतानित्वंजलिस्थानिगृह्यतां मंत्रपुष्पं अपराधसह० नमस्का°
रस्त्वस्मृत्येतिप्रार्थना उपायनमितिवायनं इतिभ० हस्तगौरीपूजाविधिःसमाप्तः अथकूष्मांडीव्रतंलिख्यते युधिष्ठिरउ०
कृष्णकृष्णमहाभागब्रह्मरुद्रादिवंदित व्रतधर्मास्त्वयाप्रोक्ताःश्रुतास्तेसकलामया इदानींश्रोतुमिच्छामिव्रतमेकंकृपानिधे य
त्कृत्वासर्वपापानिविलयंयांतितत्क्षणात् संततिर्वर्धतेनित्यंसौभाग्यंचधनादिकं अल्पायासंमहापुण्यंसर्वकामसमृद्धिदं कथय-
स्वेदृशकांतकृपायदिममोपरि श्रीकृष्णउ० साधुपृष्टंमहाराजत्वयाकुरुकुलोद्भव वच्मिसर्वविधानेनतच्छृणुष्वजगद्धितं व्रत
स्यानामहापुण्यंकूष्मांडाख्यानमुत्तमं तच्छृणुष्वमहाभागस्त्रीणांचापिसुखोदयं सर्वसंपत्करंराजन्पुत्रपौत्रप्रवर्धनं नारदे

नसमाख्यातंचंद्रसेनायभूपते आर्यावर्तेपुराकश्चिच्चंद्रसेनोमहीपतिः नारदंपरिपप्रच्छपुत्रपौत्रप्रदंव्रतं चंद्रसेनउ॰ देवर्षेसर्वधर्मज्ञ-
सर्वलोकनमस्कृत त्वत्समोनास्तिलोकेषुहितवक्तापरोनृणां अद्यमद्भाग्ययोगेनसंजातंदर्शनंतव पृच्छाम्येकमिदानींत्वामात्मश्रेयस्क
रंपरं दानंधर्मंव्रतंवापिवदसत्पुत्रदायकं इदंराज्यंधनंवापिविनापुत्रेणमेप्रभो निष्फलंमुनिशार्दूलकृपयावदमेविभो कृष्णउवा॰ इ
तिनृपवचनंश्रुत्वानारदोमुनिसत्तमः चंद्रसेनमुवाचेदंव्रतंगोप्यंसुरैरपि नारदउ॰ चंद्रसेनमहाभागकुरुष्वप्रिययासह व्रतंकुरुम
यामोक्तंकूष्मांड्याःसर्वसिद्धिदं यत्कृत्वासर्वराजेंद्रभविष्यंतिमहाबलाः सत्पुत्राःपरधर्मज्ञावीर्यवंतोबहुश्रुताः आयुष्मंतोतिकुशलाराज्य
पालनतत्पराः श्रीकृष्णउ॰ तच्छ्रुत्वानारदेनोक्तंचंद्रसेनोतिधार्मिकः व्रतंचकारकूष्मांड्याःपुत्राणांप्राप्तयेकिल अष्टौजाताःसुतास्तस्य
दिक्पालसमतेजसः सुरूपःसुमुखःशांतःसुप्रसादोथसोमकः चंद्रकेतुःसुदानंदोसुतंतुश्चयथाक्रमात् पुत्रैस्तैःसहधर्मात्मासुरु
च्याभार्ययासह संतोषपरमंप्रापदेवब्राह्मणपूजकः कूष्मांडीव्रतमाहात्म्याद्यत्पुरामनसीप्सितं तत्सर्वंप्राप्यराजेंद्रः कृतकृत्योबभूवह
श्रीकृष्णउ॰ त्वमपीदंव्रतंराजन्समाचरयथाविधि द्रौपद्यासहधर्मज्ञसर्वान्कामानवाप्स्यसि युधिष्ठिरउ॰ कर्तव्यंतुकदाकृष्णवि-
धिंतस्यवदस्वमे कस्मिन्मासेतिथौकस्यांरोपणीयाथवाभवेत् श्रीकृष्णउ॰ वैशाखस्यासितेपक्षेचतुर्दश्यांनराधिप शक्तोदेशेस्थ
लंशोध्यकूष्मांडींरोपयेदथ षण्मासंपूजयेन्नित्यंषण्मंत्रैर्नामभिःसह ब्रह्मणानिर्मितासित्वंसावित्र्यापतिपालिता ईप्सितंममदेवि

त्वंदेहिसौभाग्यमेवनः सौभाग्यायै॰ आषाढे पूजयिष्येत्वांमातःसर्वसुखायहि आशांकुरुष्वसफलांसर्वकामप्रदेनमः सर्वकामदायै॰
श्रावणे पूजयिष्यामि भक्तविघ्नविनाशिनि कूष्मांडीबहुबीजाढ्यांपुत्रदेत्वांनमोस्तुते पुत्रदायै॰ भद्रेभाद्रपदे शुभ्रे भद्रपीठोपरिस्थिते पू
जयिष्यामिमातस्त्वांधनदायैनमोनमः धनदायैन॰ आश्विनेपूजयिष्यामिबहुबीजप्रपूरिते कूष्मांडीनामसंयुक्ते फलदेत्वांनमोनमः कू
ष्मांड्यै॰ कार्तिके पूजयिष्यामिसफलांसकलांशुभां सफलायै॰ सुखदेशुभदेमातर्मोक्षदेत्वांनमोनमः षण्मासंपूजयेदेवंकूष्मांडींध
र्मनंदन मोक्षदायै॰ ततःस्वर्णमयींकृत्वाकूष्मांडींसफलांशुभां परितःपूजयेद्देवान्लोकपालांश्चमंडले मंडलेपूजयेत्तत्रसर्वतोभद्र
देवताः कूष्मांडींपूजयेत्कुंभेवस्त्रालंकारभूषितां सौभाग्यद्रव्यसंयुक्तांपुष्पमालाभिरावृतां तन्मूलेसंप्रतिष्ठाप्यचतुर्दश्यांप्रपूजये
त् मंडपंकारयेत्तत्रतोरणैरुपशोभितं चतुर्द्वारसमायुक्तंपताकाभिरलंकृतं तन्मूलेवेदिकांचैवचतुरस्रांतुकारयेत् एवंकृत्वामहारा
ज आचार्यंवरयेत्ततः सपत्नीकंसुशीलंचवेदवेदांगपारगं वरणात्पूर्वमेवेहकारयेत्स्वस्तिवाचनं सर्वत्रमंडपंकुर्याद्रंगवल्यामनोह
रं तदग्रेसर्वतोभद्रंनानारंगैस्तुकारयेत् अव्रणंकलशंस्थाप्यवस्त्रयुग्मेनवेष्टयेत् महाफलेनसंयुक्तंपंचरत्नसमन्वितं जलप्रपूरितं
कृत्वापुष्पपल्लवसंयुतं ब्रह्माणंचैवसावित्रींपूजयेद्विधिवद्व्रती पंचामृतेनसंस्नाप्यततःकुर्याच्चपूजनं षोडशैरुपचारैश्चपूजयेत्परमे
श्वरीं पूजयेत्पुरुषसूक्तेनमूलमंत्रेणवाव्रती कूष्मांड्यैकामदायिन्यैब्रह्माण्यैव्रतहेतवे नमोस्तुशिवरूपिण्यैसकलंकुरुमेव्रतं एवंकृत्वा

महाराजपूजनंसर्वकामदं रात्रौजागरणंकृत्वागीतवाद्यादिमंगलैः कथांश्रुत्वाविधानेन यथोक्तांराजसत्तम ततःप्रभातेपूर्णायांहोमंकु
र्याद्यथाविधि भणोदेवीतिमंत्रेणजुहुयात्तिलसर्पिषा अष्टोत्तरशतंहोमंकुर्यात्तस्य यथाविधि होमशेषंसमाप्याथस पत्नीकंतुतोष
येत् वस्त्रादिभिरलंकारैस्तोषयेच्चसपत्निकं षड्गुणाश्चाथसंपूज्यादक्षिणावस्त्रभूषणैः ततोदानंचकुर्वीतकूष्मांड्याःपीठसंयु
तं दानमंत्रः कूष्मांडींबहुबीजाढ्यांवस्त्रालंकारभूषितां हेमबीजसमायुक्तांगृहाणद्विजसत्तम कूष्मांडीव्रतसिद्ध्यर्थंकुर्यांद्गोदानमु
त्तमं व्रतसंपूर्तिसिद्ध्यर्थमाचार्यायनिवेदयेत् ततश्चशक्त्याविप्रेंद्रान्भोजयेद्भक्तिसंयुतः दक्षिणांचततोदद्याद्व्रतसंपूर्णहेतवे एवंकृ
तेमहाराजव्रतेसर्वसुखप्रदे ईप्सितांल्लभतेकामान्नात्रकार्याविचारणा इतिश्रीपद्मपु॰ कूष्मांडीव्रतोद्यापनंसंपूर्णं अथकर्क
टीव्रतंलिख्यते ऋषयऊ॰ कथितानित्वयासाधोश्रेयांसिसुबहून्यपि आख्यातानिविचित्राणिचतुर्वर्गफलान्यपि पुण्यानिचव्र
तान्यादौनतफलान्यपिभागशः स्वर्गसाधनभूतानिनिःश्रेयसकराण्यपि तत्रयद्व्रतमोक्तंयोषिद्वैधव्यनाशनं पुत्रपौत्रादिजनकं-
भर्तुरारोग्यदायकं कामभोगप्रदंचान्यद्व्रतमस्तीतिचोक्तवान् तद्व्रतंनकंपुण्यंवक्तुमर्हस्यशेषतः येनचीर्णेनसर्वज्ञनवैधव्यमवाप्नु
यात् ईप्सितांल्लभतेकामान्भर्तुरायुश्चशाश्वतं एवंनिशम्यमुनिवर्यवचोभिःशेषंसुमत्प्रहृष्टवदनःसुतस्सूतस्सूनुः आनंदयन्मुनिस
दःसुवचोमृतोदैः प्रोवाचशौनकमिदंबहुदीक्षितान्यं सूतउवा॰ साधुपृष्टोमहाभागाभवद्भिर्यद्दुदाहृतः तद्वक्ष्येचयथाज्ञानंशृ

तंवोजनकाध्रुवं योषिन्मूलोहिसंसारोपुंसः श्रेयोविधानकः योषितोपिमहाभागास्तारयंतिनिजंपतिं आपद्योनरकेभ्यश्चपातिव्रत्यपरा-
यणाः सीमंतिन्योधारयंतिभुवनत्रयमंडपं पातिव्रत्येनधर्मेपादमेननियमेनच भानुर्बिभेतिसततंकरैःस्प्रष्टुंपतिव्रतां साचेद्द
र्हृयुतासाध्वीतारयेद्भुवनत्रयं देवादपिविमुक्तास्याद्दशःचिरत्तुसदैवहि अमंगलेभ्यःसर्वेभ्योभासोवैधव्यमंगना जलहीनायथा
गंगाप्राणहीनायथातनुः दर्भहीनायथासंध्याधर्महीनायथाक्रिया सत्यहीनायथावाणीनृपहीनायथापुरी भर्तृहीनातथानारीभा
तिलोकेनकुत्रचित् तस्माद्वैधव्यशांत्यर्थंयत्नःकार्योहियोषिता नभयत्नैर्बहुविधैर्वैधव्यंयांतियोषितः विनापुण्यैर्व्रतैर्वापिभूरिदा
नैरहर्निशं तस्मादेकंव्रतंविप्रायोषिद्वैधव्यनाशनं कथयामीष्टफलदंसंवादंशिवयोःशुभं पुरावंतीपुरेत्यासीद्धरिदीक्षितसंज्ञकः
वेदवेदांगसंपन्नःकौशिकोद्विजसत्तमः यज्वाविदिततत्वार्थोज्ञानदीपोभवार्णवे तस्यभार्यागुणवतीसतीसर्वगुणान्विता पतिशु
श्रूषणरतातत्पदांबुनिषेविनी भर्तुःसकाशात्प्रासासाकन्यारत्नानिसप्तवै वत्सरेवत्सरेसावैवरिष्ठासर्वयोषितां ताःकन्यारूपसंप
न्नावहृद्धुःपितृवेश्मनि इलामृताशुचिःशांतागुणाज्ञामालिनीध्रुवा रूपलावण्यसंपन्नाकन्यास्ताश्चारुहासिनीः दृष्ट्वाननंदतुष्टोहिदं
पतीपरयामुदा ददौपितासुनंदायइलांसत्यायधीमते विवाहमकरोद्यत्नात्प्रीत्यापरमयायुतः जातेपरिणयेसोथसत्वःपितृगृहे
वसन् कालधर्ममुपेयायशीतज्वरप्रपीडितः दिनानिपंचषट्चैवभुक्त्वाविषयजंसुखं मृतेथजामातरिसोपिदीक्षितोवत्सेतिचुक्रो

शस्त्रदुःखपीडितः हाहेतिकिंतेभगवन्विचेष्टितंदिनेशदुःखंमयिपातितंत्वया विलपन्निति विप्राग्र्योजामातुः समकारयत् और्ध्वदेहिक

संस्कारंददौचापितिलांजलिं इत्यावैधव्यसंपन्नापन्नगीवश्वसन्मुहुः समूर्छांचक्षणंबालाबालवैधव्यपीडिता षडेवंचापितनाः सर्वावैध

व्यंप्रतिपेदिरे मातुः शोकतश्चैववैधव्येनप्रपीडिताः पाणिपीडनवेलायांचरमायांद्विजोत्तमः चिंतादुःखार्णवेमग्नः कर्तव्यंनाध्यपद्य

त यस्ययस्याश्चनिलयेआगमद्वीरदीक्षितः ध्रुवांदातुंनशक्तोभूत्सत्यंसत्यभयात्पुमान् वयोवृद्धिंध्रुवायाश्चवीक्ष्यचिंतामवापसः

इत्थंमनसिसंचिंत्यस्वयंगमत्काननंद्विजः ध्रुवमादायस्तश्रोणींगतोरण्यंमहत्ध्रुवं रुतानिपक्षिणांयस्मिन्नसंतिनचमानवाः तद्व

नंनार्ककिरणायस्मिन्शक्ताःप्रकाशितुं अनेकमृगसंकीर्णंशार्दूलमृगसेवितं अन्यैश्चविविधैःसत्वैःसेव्यमानमहर्निशं तत्रोपलं

महानीलंअपश्यच्चद्विजाग्रणीः चिंतयित्वामनस्येवमश्मनेप्रददौसुतां वेदोक्तेनैवविधिनापाणिग्राहमकारयत् त्वंधर्मचारिणीत्वा

स्यसतेभववभयंत्यज भर्तृबुध्याभजस्वैनासुपलंफलमाप्स्यसि इतिदत्वासुतांतस्मैसद्विजोगात्स्वमंदिरं कंदमूलफलानांचाभिषे

णैवजगामसः गतेपितरिसाबालादुःखशोकाकुलाभवत् कांतारेकुररीयद्वच्चुक्रोशभृशदुःखिता चिंतयित्वामनस्येवंभर्तृबुध्या

महोपले दधारहृदभावज्ञानन्नसोमेपतिर्ध्रुवं ननुदेवाःप्रयच्छंतिशिलामानिमसंस्थिताः वांछितार्थान्मनुष्याणांभावोहिफलदायकः

एतस्मिन्नंतरेकालेजगादोच्चैःपुरंदरः पपातचाशनिस्तस्मिन्महत्युपलमस्तके सभिन्नोवज्रघातेनचूर्णीभूतोततःक्षणात् दृष्ट्वाध्रुवा

पितत्सर्वंपुनर्निंदांचकारसा एतस्मिन्नेवकालेतुपार्वत्यात्रिपुरांतकः युक्तोयदृच्छयागच्छन्व्योमयानेनमंदिरं पार्वत्युवाच भगवन्कथमद्य
स्त्रीरुदतीवेह्रूपानिये दीनादीनतरानित्यंतत्सर्वंमेवदप्रभो इतिदेव्यावचः श्रुत्वाप्रोवाचगिरिशःशिवां महादेवउ० देविकौशिकदायादो
हरिदीक्षितसंज्ञकः तस्येयमात्मजासाध्वीवैधव्यमगमत्ध्रुवं प्रासोमरणधर्मंयःपाषाणोपतिजानिहि एवमन्याःसोदरास्याःषडती
वमनोहराः वैधव्यमापुःसर्वास्ताःपाणिग्रहणमात्रतः पित्रादत्तामुनींद्राणांपुत्रेभ्योविपदंगताः आसांललाटगारेखादेवाद्वैधव्यदायि
नी तांनिराकर्तुकामोयंभस्तरायसमर्पयत् सोपिपंचत्वमापन्नोदेवीरेखाबलीयसी सर्वज्ञस्यवचःश्रुत्वाहृपाक्रांताब्रवीदुमा पार्व०
त्युवाच कर्मणाकेनभगवन्वैधव्यंप्रापिताःसुताः मुनेरनुत्तमंब्रूहितत्त्वापूर्वजन्मजं कथंवाशुभजन्मासांभवेन्द्भवदनुग्रहात् गिरि
जावचनंश्रुत्वाप्राहशंभुर्यथोदितं पूर्वमेवंमुनेःपुत्र्यःसप्तासन्गुणशालिने पित्रादत्तामुनींद्रायमुनयेविधिपूर्वकं मुनींद्रंप्राप्यभर्तारं
सप्तासन्दुष्टचेतसाः सापत्न्यभावादुष्टास्तानित्यंकलहतत्पराः परस्परेर्षयानित्यंभर्तुःसेवांनचक्रिरे स्वयंमिष्टान्नभोजिन्योभर्तृ
द्वेषणतत्पराः तेनतापेनसंतप्तोगतोवैस्वर्गमुत्तमं सप्तापिचसपत्न्यस्ताःभत्ययातायमालयं यामिनीयातनांप्राप्यचिरंदुःखिताःपुनरागताः
ताः इहजन्मनिकस्यापिकौशिकस्यसुताभवन् रूपलावण्यसंपन्नावैधव्यंप्रतिपेदिरे प्रलंभितःपतिःपूर्वंतेनदोषेणवंचिताः पत०
योवंचयांचक्रुः कृत्वावैपाणिपीडनं इतिशंभोर्वचःश्रुत्वाहिमाद्रितनयाब्रवीत् पार्वत्युवाच भवंत्येवंविधाःसर्वाभर्तृद्वेषणतत्पराः

अस्मद्दृग्गोचरीत्वेयंनोपेक्ष्याकरुणानिधे एवमाकर्ण्यपार्वत्यावचनंत्रिपुरांतकः वैधव्यभंजनंलोकेकथयामासतद्व्रतं येनचीर्णेनपौरं
ध्रोवैधव्यंप्राप्नुवंतिहि उमेशृणुव्रतंकर्क्योषिद्वैधव्यनाशनं तारणंसर्वपापानांयोषितांचविशेषतः कर्कटीद्युमणौकल्केवल्लीशीघ्रं
दयत्फलं कर्कटीसफलात्वेषांवांछितार्थप्रदायिनी तद्व्रतंतेविधास्यामिशृणुसुश्रोणिसादरं कर्कटीव्रतपुण्येनसर्वान्कामानवाप्नु
यात् योषिद्वापुरुषोवापिनात्रकार्याविचारणा त्वमप्येतद्व्रतंस्कन्दकुरुष्वममसर्वगा कर्कटस्थेरवौनारीश्रावणेमासिभामिनी चंद्र
वारेविशेषेणस्त्रीभिःकार्यमिदंशुभं प्रातःशुक्लतिलैःस्नात्वादंतशुद्धिंविधायच त्यक्त्वाचशतगंडूषान्मुखदुर्गंधिनाशने पंचग
व्यंगृहीत्वाथव्रतसंकल्पमाचरेत् आचार्यंवरयेत्प्राज्ञंशांतंदांतंकुटुंबिनं सर्वलक्षणसंपूर्णंवस्त्रैराभरणैस्तथा मंडपंकारयेत्पश्चाच्च
तुर्द्वारंसतोरणं तन्मध्येभद्रपीठस्थांपूजयेद्द्रुमयासह सौवर्णीप्रतिमांकृत्वावृषभंरजतस्यच कर्कटींपूजयेद्धृत्वात्सफलांकांचनींशु
भां वस्त्रयुग्मेनसंवेष्ट्यकुंभोपरिनिधायच कल्पवल्लिमहाभागेसदासौभाग्यदायिनि प्रार्थयिष्येव्रतादौत्वांपूर्तिंश्रेयोभिवृद्धये इ
तिसंपूज्यतांतत्रकर्कटींचशिवंतथा उपचारैःषोडशभिर्भक्तिभावसमन्वितः नैवेद्यंसफलंदत्वाप्रार्थ्यतांसंतोष्यशोभने एकादशफलानां
वैवाणकंचप्रदापयेत् वेणुपात्रेणसहितंसतांबूलंसदक्षिणं कर्कटीनामयावल्लीविधात्रानिर्मितापुरा भवंतितत्प्रदानेनसफलाश्चमनोर
थाः गीतैर्वाद्यैश्चनृत्यैश्चपुराणपठणादिभिः रात्रौजागरणंकुर्यात्सपत्नीकोद्विजैःसह प्रभातेविमलेस्नात्वाप्रातःसंध्यांविधायच

स्वशाखोक्तविधानेनहोतव्यंकर्मसिद्धये प्रधानंपायसंसर्पिः सतिलंजुहुयाद्व्रती अष्टोत्तरसहस्रंतुशतमष्टोत्तरंतुवा कद्रुद्रायेतिमंत्रेण
जुहुयाद्रुद्रतुष्टये गौरीर्मिमायेतितथापार्वत्याःप्रीतयेहुनेत् होमकर्मसमाप्याथहुनेत्पूर्णाहुतिंतथा आचार्यंपूजयेत्तस्माद्वस्त्रालं
कारभूषणैः गौर्देयातुसवत्साचवस्त्रालंकारभूषिता आचार्यायप्रदातव्याव्रतसंपूर्णहेतवे दशदानानिकुर्वीतशक्त्यावित्तानुसार
तः सवस्त्रप्रतिमाकुंभमाचार्यायनिवेदयेत् यथाशक्त्याप्रकुर्वीतवित्तशाठ्यविवर्जितः दानमंत्रः गृहाणेमांकर्कटींत्वंद्विजस्व-
र्णेननिर्मिताम् संपूर्णमेव्रतंचास्तुदानेनानेनशंकर इमंमंत्रंसमुच्चार्यदद्यात्कर्कटिकांद्विजे ब्राह्मणान्भोजयेत्तस्माद्रुद्रसंख्याप्रितांस्त
था आशिषोप्रतिगृह्णीयाद्द्विजानांसफलाप्तये व्रतमेतद्वरंकांतेभोगस्वर्गापवर्गदं ध्रुवांकथयसाध्वित्वंव्रतंवैधव्यभंजनं इतितस्य
वचःश्रुत्वाविमानादवरुह्यच ध्रुवांसाकथयामासकृपांकृत्वाव्रतंशुभं स्वर्गगतामहेशानीअनुकंप्यद्विजात्मजा ध्रुवापिचव्रतंचक्रे
कांतारेऋषिमंडले तद्दैवद्दिव्यपुरुषःपाषाणाद्दाशकस्मभवाः सोपिद्विजः पूर्वपतिस्तस्याएवमृगीदृशः वरयामासतांबालांतदद्भुतमि
वाभवत् शापेनकस्यचित्सोपिपाषाणत्वमुपागतः तौदंपतीबहून्वर्षान्भुक्त्वाभोगान्यथेप्सितान् पुत्रपौत्रसमृद्धिंचप्राप्यांतेपिपरं
पदं एवंरहस्यंपरमंकथितंवोमुनींद्रकाः कथाश्रवणमात्रेणनारीसौभाग्यमाप्नुयात् कर्तव्यंतुप्रयत्नेनचतुर्वर्णाभिरुत्तमं ९४ इ
तिश्रीस्कंदपु॰ कर्कटीव्रतोद्यापनंसंपूर्णम् अथकर्कटीपूजनं तिथ्यादिसंकीर्त्यममअखंडसौभाग्यप्राप्त्यर्थंपुत्रपौत्रादिसंतत्यै

कर्कटीव्रतांगत्वेनकर्कटीपूजनंकरिष्ये पंचवक्त्रंत्रिनयनंसुमयासहितंशिवं शुद्धस्फटिकसंकाशंचिंतयेद्भक्तवत्सलं ध्यानं आवाहयामि
देवत्वांअस्मिन्स्थानेस्थिरोभव कर्कटीव्रतहेतोर्हि पार्वतीसहितप्रभो आवा० आसनंमणिसंयुक्तंचतुरस्त्रंसमंततः भक्त्यानिवेदितंतु
भ्यंगृहाणसुरसत्तम आसनं देवदेवनमस्तेस्तुभक्तानामभयप्रद पाद्यंगृहाणदेवेशपार्वतीसहितप्रभो पाद्यं गौरीवल्लभदेवेशत्रि
पुरांतकशंकर भालनेत्रनमस्तेस्तुगृहाणार्घ्यंममप्रभो अर्घ्यं कांचनेकलशेसंस्थंसुगंधंचसुशीतलं आचम्यतांमहादेवपार्वत्यास
हितप्रभो आचमनीयं पयोदधिघृतंचैवमधुशर्करयायुतं पंचामृतेनस्नपनंकरिष्येभक्तवत्सल पंचा० गंगागोदावरीरेवासमुद्भूतंसुशीत
लं स्नानार्थंतेमयानीतंगृहाणजगदीश्वर स्नानं आचमनं चंद्ररश्मिसमंशुभ्रंकार्पासेनविनिर्मितं देहसंरक्षणार्थायवस्त्रंशंकर
गृह्यतां वस्त्रं त्रिवृत्त्यात्रिवृतंशुभ्रंविधात्रानिर्मितंपुरा ब्रह्मण्यरक्षणंसूत्रंउपवीतंगृहाणभो उपवीतं श्रीखंडंचंदनंदिव्यंगं० गंधं०
अक्षताश्चसुरश्रेष्ठा० अक्षतान् नानाविधानिपुष्पाणिबिल्वपत्रयुतानिच पूजार्थंतेप्रयच्छामिगृहाणपरमेश्वर पुष्पाणि वनस्पति
रसोद्भूतो० धूपं साज्यंचेतिदीपं अन्नंचतुर्विधंस्वादु० नैवेद्यं० उत्तरापोशनं करोद्वर्तनं इदंफलंमहादेवकर्कटीसंभवंशुभं गृ
हाणवरदोभूत्वापूजांमेसफलांकुरु फलं पूगीफलमितितांबूलं हिरण्यगर्भेतिदक्षिणां चक्षुर्दंसर्वलोकानांतिमिरस्यनिवारणम्
सर्वसौख्यकरंदेविआर्तिक्यंप्रतिगृह्यतां नीराजनं नमोस्तुकर्कटीदेविसर्वसौभाग्यदायिनी मंत्रपुष्पंगृहाणेदंसुमयासहितप्र-

